# SĀHITYA DARPANA

OF

## KAVIRAJA VIŚVANĀTHA MAHĀPĀTRA

With

TWO OLD COMMENTARIES

VIZ:

(1) Locana by the Author's Son Ananta Dāsa

&

(2) Vijñapriyā by Bhaṭṭācārya Maheśvara Tarkālaṅkāra

EDITED WITH NOTES

*BY*

**Pt. KARUṆĀKAR KAR, M. A.,**

**Kāvya-Vyākaraṇa Tīrtha.,**

Principal, Government Sanskrit College,

PURI (ORISSA)

PUBLISHED BY

**MOTILAL BANARSIDASS**

**Booksellers & Publishers,**

**Saidmitha, LAHORE.**

***1938.***

श्रीमदालङ्कारिकचक्रवर्तित्रिकलिङ्गगजपतिसाम्राज्यसान्धि-
विग्राहिकमहापात्रविश्वनाथकविराजप्रणीतः

# साहित्यदर्पणः

ग्रन्थकृदात्मभुवा साहित्यार्णवसुधाकरेण श्रीमदनन्तदासेन
विरचितया लोचनाख्यया भट्टाचार्यश्रीमहेश्वरतर्कालङ्कार-
प्रणीतया प्राचीनया विज्ञप्रियासमाख्यया च
व्याख्यया समलङ्कृतः

राजकीयसंस्कृतमहाविद्यालयप्रधानाध्यापकेन काव्यव्याकरणतीर्थो-
पाधिकेन "एम्, ए" इत्युपाधिधारिणा श्रीकरुणाकरकरशर्मणा
सङ्कलितः

तेनैव निर्मितैरुपोद्घातटिप्पण्यनुक्रमणिकादिभिः
समुद्भासितश्च ।

स चायं
लवपुरीयपञ्जाबसंस्कृतपुस्तकालयाध्यक्षैः
मोतीलाल बनारसीदास
इत्येतैः स्वीये 'मुम्बई संस्कृत' इत्याख्ये मुद्रणालये
सम्मुद्राप्य प्रकाशितः

प्रथमावृत्तिः ]    १९३८    मूल्यम् { आवरणबद्धस्य ४॥)
साधारणस्य ४) }

# निवेदनम् ।

अन्तरायतिमिरप्रभाकरं शङ्कराय ददतं मुदा करम् ।
तं शयामृतविचुम्बिपुष्करं संश्रयामि सततं गणेश्वरम् ॥ १ ॥

येनोपदेशाञ्जनसम्प्रदानात् प्रकाशितं ज्ञानमयं महो मे ।
ख्यातः क्षितौ यो व्रजबन्धुनामा पितामहं तं गुरुमानतोऽस्मि ॥

विस्मृत्यात्मसमग्रसौख्यमनिशं सांसारिकं सर्वथा–
पत्यस्नेहगुणावरुद्धहृदयो योऽपालयत् कृच्छ्रतः ।
आबाल्याज्जननीवियोगवशतः सद्धर्मकर्मव्रती
देयादेष गयाधरः स जनकः श्वःश्रेयसायाशिषः ॥ ३ ॥

नीलाद्रिकन्दरचरं च चराचरेशं
भद्रारिभद्रपरिभासितपार्श्वदेशम् ।
सारस्वतीकरसरोरुहसेविताङ्घ्रिं
निर्वाणपण्यविपणीं प्रणमामि देवम् ॥ ४ ॥

भूविख्यातसमस्ततीर्थमहितश्रीक्षेत्रधामाश्रयन्
निर्विघ्नेन समाप्तिमस्य हि फलं संप्रेप्सुरीशेच्छया ।
कष्टाब्ज्ञभ्रदुरूहणाच्चरमयीर्हङ्माथिनीर्मातृका
दर्शे दर्शमहं व्यधामवसितिं यास्कान्ववायप्रधीः ॥ ५ ॥

विनायासं विबोधाय बालानां प्राणतोषणीम् ।
विवेकमनतिक्रम्य विदधेऽमुष्य टिप्पणीम् ॥ ६ ॥

सुविदितमेव सर्वेष्वलङ्कारग्रन्थेषु साहित्यदर्पणस्यैव सर्वविषयोपपादनपरतया सर्वत्र प्रथमतया पठनपाठनादरः समुपलभ्यत इति । एवं लब्धप्रतिष्ठस्याप्यस्य ग्रन्थस्य काठिन्यमध्येतॄणां चेतो यथा न समावर्जयति तथैवाध्यापकानामपि पण्डितवर्याणां बहुषु स्थलेषु सम्मोहमापादयति । प्राचीनव्याख्यानां तथा विशुद्धपाठानामभाव एव तस्य दुरवगाहतायां हेतुरिति प्रतिभाति ।

परं प्रकाशितेऽस्मिन् साहित्यदर्पणे प्राचीनप्रधानटीकाद्वयं समावेशितमास्ते । एका लोचनाख्या ग्रन्थकृत्तनुजनुषानन्तदासविरचिता, अपरा च तर्कालङ्कारमहेश्वरभट्टाचार्यप्रणीता विज्ञप्रिया नाम ।

तत्र प्रथमायां ग्रन्थकृत्-स्वपितृमुखश्रवणादनन्तदासेन यथायोग्यग्रन्थार्थसंयोजनं समुचितप्रमेयार्थप्रदर्शनञ्च सम्यगकारि। पूर्वापरसङ्गतिप्रदर्शनपुरःसरं समपेक्षितार्थविवरणकरणात् संक्षिप्तोक्त्या प्रकृतार्थप्रतिबोधनाच्च ग्रन्थममुमधिजिगमिषूणामन्तेवासिनामनया महोपकार आपत्स्यत इत्यत्र यत्नो मया व्यधायि।

द्वितीयायाञ्च भट्टाचार्येण कारिकाभागस्तथा वृत्तिभागश्च, सविशदपदार्थसमुन्मेषणाय समन्वयशैल्या विवृत्य परिष्कृतः। न्यायरीतिमनुसृत्य, तत्तद्भागयोर्विशेषणांशानां व्यावृत्त्या सार्थकताविधानादेतदध्येतॄणां सविशेषव्युत्पत्त्याधायकगुणयोगाच्च नितरामियमुत्कृष्टा प्रतिभाति। अस्यामध्यवसायिनां पाठकानां प्रायेणान्यालङ्कारग्रन्थेष्वनायासप्रवेशः सम्भविष्यतीति धिया बहुश्रममूरीकृत्य लोकोपकृतये मूलग्रन्थेन साकमियं समयोजि।

व्यवहारसौकर्यार्थं पाठान्तरसूचीपत्रादीनां सन्निवेशोऽपि न विस्मृतः।

आशास्यते च समुचितटीकाद्वयोपेतेन प्रकाशमानेनानेन साहित्यदर्पणग्रन्थेनालङ्कारसारसंजिघृक्षूणां मनीषिणां महोपकारः सम्भविष्यतीति।

सुदूरे चैतद्ग्रन्थस्य मुद्रणात्तदवसरे बहुश्रमं स्वीकृत्य संशोधनकार्यं निर्वहद्भ्यः "एम्. ए.एम्.ओ. एल्" इत्युपाधिधारिभ्यः श्रीजगदीशशास्त्रिभ्यो बहवो धन्यवादाः समर्प्यन्त इति

निवेदकस्य

श्रीकरुणाकरकरशर्मणः।

# विषयानुक्रमणिका

## चतुर्थपरिच्छेदे

# भूमिका

साहित्यदर्पणेत्यभिधानभूषितोऽयमलङ्कारग्रन्थो मुख्यतमेष्वलङ्कृतीनिबन्धेष्वेकतमः सहृदयहृदयावर्जकतया काव्यरसास्वादविदामत्यादरास्पदम् । सत्स्वपि बहुषु निबन्धेषु पीयूषपरिस्पर्धिहृद्यरससम्मितपदावलीभिर्दुरूहविषयाणामपि सुखसंवेद्याकारतापादनमत्र कश्चनातिशयः । प्राक्तनैरत्नुरणकतिपयाविषयाणामप्याविष्करणं काव्यकलाकौशलोपलम्भकं हि शास्त्रमलङ्करणम् । पदज्ञानव्युत्पित्सूनां व्याकरणमिव निरवद्यकाव्यनिर्म्माणशक्तिसमुन्मेषकृत्तादिदमलङ्कारशास्त्रं विविधभाषारसविन्यासविशेषाध्यायकं चेति नातिवेदनीयं तद्विदाम् । प्राचीनैरालङ्कारिकैः शास्त्रस्यास्य काव्यालङ्कारनाम्नो व्यपदेशः कृत इति भामहवामनादिकृतानां ग्रन्थानां नाम्नैव प्रतीयते । परमस्मिन् शास्त्रे यमकोपमादीनां भूयोविषयतया तेषां प्रधानतया च तत्प्रतिपादनादिदं शास्त्रमलङ्कारशास्त्रमिति व्यपदिश्यते ।

ये तावद् भामहरुद्रटवामनप्रभृतयः प्राचीना अलङ्कारशास्त्रप्रणेतारः आसन्, तैर्ध्वन्यमानमर्थं वाच्योपस्कारकतयाऽलङ्कारपक्षनिक्षिप्तं मन्यमानैरलङ्कारस्य काव्ये प्राधान्यं स्वीकृतम् । ततः "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायादस्य शास्त्रस्यालङ्कारशास्त्रमिति व्यपदेशः कृतः । परमर्वाचीनैरानन्दवर्द्धनाचार्य्यप्रभृतिभिर्ध्वन्यमानस्यार्थस्य प्राधान्ये तथाऽलङ्काराणामप्राधान्ये संस्थापितेऽपि प्राचीनव्यपदेशगौरवनियन्त्रणाच्छास्त्रस्यास्यालङ्कारनाम्नैव व्यपदेशः स्वीकृतः ।

दण्डिप्रभृतिप्राचीनालङ्कारिकप्रणीतानां ग्रन्थानां काव्यादर्शप्रभृतीनामलङ्कारशास्त्रत्वव्यपदेशाभावेऽपि तत्रालङ्काराणां बहुलतया विचारात्तेषामप्यलङ्कारशास्त्रेष्वन्तर्भावः स्वतः समापतति ।

अलङ्कारशब्दस्याऽर्थो द्विविध इति वामनेन प्रतिपादितम् । अलङ्क्रियते अनेन इति करणव्युत्पन्नोऽलङ्कारशब्दो रूपकोपमादिबोधकः, परमलङ्कृतिरलङ्कार इति भावव्युत्पन्नोऽलङ्कारशब्दस्तु सौन्दर्य्यपरः ।

द्वितीयार्थ एवालङ्कारशब्दस्य शास्त्रे व्यपदेशः कृत इति वामनेनोक्तम् । यथा—"काव्यं ग्राह्यमलङ्कारात् ।" सौन्दर्य्यमलङ्कारः ( का. सू. ) अलङ्कृतिरलङ्कारः । करणव्युत्पत्त्या पुनरलङ्कारशब्दोयमुपमादिषु वर्त्तते । ( वृत्तिः )। योऽयमलङ्कारः काव्यग्रहणहेतुत्वेनोपन्यस्यते तद्व्युत्पादकतया शास्त्रमपि अलङ्कारनाम्ना व्यपदिश्यत इति । शास्त्रस्यालङ्कारत्वेन प्रसिद्धिः प्रतिष्ठिता स्यादिति सूचयितुमयं विन्यासः कृतः । "काव्यं ग्राह्यमलङ्काराद्"ति कामधेनुः ।

एतदलङ्कारशास्त्रं साहित्यशास्त्रत्वेनापि व्यवह्रियते । साहित्यशब्दस्य काव्यार्थ एव प्राचीनाः प्रयोगाः परिदृश्यन्ते । यथा—

**सङ्गीतसाहित्यरसानभिज्ञः साक्षात्पशुः पुच्छविषाणहीनः ।**

अलङ्कारशास्त्रार्थे साहित्यशब्दस्य प्रयोगस्त्वर्वाचीन एव ।

**"पदवाक्यप्रमाणेषु तदेतत्प्रतिबिम्बितम् ।**
**यो योजयति साहित्ये तस्य वाणी प्रसीदति ॥** ("अभिधावृत्तिः")

"व्याकरणमीमांसातर्कसाहित्यात्मकेषु चतुर्षु शास्त्रेषूपयोगात्" ( मुकुलः ) पञ्चमी साहित्यविद्येति यायावरीयः । सा च चतसृणामपि विद्यानां निष्यन्द ( काव्यमीमांसायां राजशेखरः ); इत्यादिप्रयोगदर्शनात् साहित्यपदस्यालङ्कारशास्त्रार्थे प्रयोगो नवमशताब्द्याः पूर्वतो जातः । कदा पुनस्तस्य तादृशार्थे प्रयोगः समजनीत्येतन्निश्चेतुं नैव शक्यते ।

हितेन सह वर्त्तते इति सहितं तस्य भावः कर्म वा साहित्यमिति केचित्साहित्यशब्दस्य निरुक्तिमामनन्ति । परं यौगपद्यार्थात्सहितशब्दादेव साहित्यस्य भवति निष्पत्तिः । यदा "शब्दार्थौ सहितौ काव्यमि"ति काव्यस्य लक्षणं जातं तदा साहित्यशब्दस्यालङ्कारशास्त्रार्थे प्रयोगो जातः । शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या इति काव्यमीमांसायामेव साहित्यपदस्य व्युत्पत्तिर्दर्शिता ।

काव्ये तु प्रभुसम्मितवेदादिशास्त्रवन्न शब्दस्य प्राधान्यं नापि सुहृत्सम्मितपुराणादिवदर्थस्य प्राधान्यम् । परं शब्दार्थयोरुभयोरेव प्राधान्यम् । तथा चोक्तम् ।

**"रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।**
**न कान्तमपि निर्भूषं विभाति वनिताननम् ॥**
**रूपकादिमलङ्कारं [illegible]ते परम् ।**
**सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥"**
**तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।**
**शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥**

अतः सहितयोः शब्दार्थयोस्तत्र प्रयोगात्साहित्यपदं शब्दार्थयोः सहभावमेव द्योतयति
'साहित्यं तुल्यकक्षत्वेनान्यूनातिरिक्तत्वम् ।' (व्यक्तिविवेकटीका) ॥
'शब्दार्थौ सहितौ काव्यम् ।' (भामहः)
"शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥" ( शिशुपालवधम् )

इत्यादिप्रयोगदर्शनात्सहितशब्दादेव साहित्यस्य निरुक्तिरिति पूर्वोक्तं सिद्ध्यति ।

अलङ्कारशास्त्रमिदं कदा केन प्रथममाविष्कृतमिति निर्णेतुं नैव शक्यम् । परं बहूनां निबन्धकाराणां नामान्युपलभ्यन्ते तेषां कृतिस्तु नैवोपलभ्यते । काव्यमीमांसायां राजशेखरेणोक्तम्—'तत्र कविरहस्यं सहस्राक्षः समाम्नासीत् । औक्तिकमुक्ति-

गर्भः, रीतिनिर्णयं सुवर्णनाभः, आनुप्रासिकं प्राचेतायनः, यमकानि चित्रं चित्राङ्गदः, शब्दश्लेषं शेषः, वास्तव्यं पुलस्त्यः, औपम्यमौपकायनः, अतिशयं पाराशरः, अर्थश्लेषमुतथ्यः, उभयालङ्कारिकं कुबेरः वैनोदिकं कामदेवः, रूपकनिरूपणीयं भरतः, रसाधिकारिकं नन्दिकेश्वरः, दोषाधिकारिकं धिषणः, गुणौपादानिकमुपमन्युः, इत्यादि ।

निरुक्ते ग्रन्थे उपमाया द्वादशभेदाः प्रदर्शिताः—

भूतोपमा, कर्मोपमा, रूपोपमा, सिद्धोपमा, लुप्तोपमाऽर्थोपमादयो यास्केन वर्णिताः। अतो वैदिककालेऽपि अलङ्कारशास्त्रस्य चर्चा समजनि ।

उपलब्धेषु साहित्यनिबन्धेषु कस्तावदादिम इत्यपि निर्णेतुमशक्यम् । अग्निपुराणे सर्वस्यापि काव्यप्रपञ्चस्य प्रायशः कथनात्केचिदग्निपुराणमतिप्राचीनमिति कथयन्ति ।

परं तत्तु न विचारसहम् । साहित्यदर्पणकारात्प्राचीनैर्निबन्धकारैरग्निपुराणनामोल्लेखोऽपि न कृतः। दण्डिभामहादिभिः सर्वैरेव निबन्धकारैर्नाट्यशास्त्रमेव प्रमाणत्वेनोपन्यस्तम् । किञ्च काव्यादर्शस्य नाट्यशास्त्रस्य च श्लोका बहवोऽग्निपुराणेऽप्युपलभ्यन्ते । ध्वन्यालोके प्रथमतो विस्तरेण निर्दिष्टो ध्वनिरपि तत्र वर्णितोऽस्ति । अग्निपुराणं पुराणनाम्ना यथातिप्राचीनं प्रतीयते न तथा तदिति निर्णीयते । किञ्च 'भरतेन प्रणीतत्वाद् भारती रीतिरुच्यते' इति तत्रत्या पङ्क्तिरेव तस्य नाट्यशास्त्रप्रणेतुर्भरतादर्वाचीनत्वं स्फुटमवगमयति । अतः सर्वेषु साहित्यनिबन्धेषु भरतस्य नाट्यशास्त्रमेव प्राचीनतमम् । तस्य कालनिर्णयस्तु बहुभिर्बहुधोदितः । महामहोपाध्यायेन हरप्रसादशास्त्रिणा खी० पू० द्वितीयशताब्द्यां नाट्यशास्त्रं रचितमिति निर्णीतम् । सर्वैरालङ्कारिकैः कालिदासेनाऽपि नाट्यशास्त्रस्य नामोल्लेखः कृतः । अतः ख्रीष्टजन्मनः प्रागेवायं ग्रन्थो रचित इति निर्विवादम् ।

बहवो हि अलङ्कारनिबन्धकर्त्तारः । अधुनोपलब्धेषु निबन्धेषु यथाक्रमं दण्डिभामहभट्टोद्भटरुद्रटभट्टनायकवामनमुकुलप्रतीहारेन्दुराजानन्दवर्द्धनमहिमभट्टवक्रोक्तिकारहृदयदर्पणकाराभिनवगुप्तशौद्धोदनिवाग्भटरूय्यकभोजराजमम्मटहेमचन्द्रपीयूषवर्षविद्यानाथविश्वनाथकेशवमिश्राप्पय्यदीक्षितजगन्नाथप्रभृतीनां नामान्युपलभ्यन्ते ।

तेषु दण्डिनः काव्यादर्शस्तु अतीव प्राचीनः ।

अयं तु रीतिमार्गव्यवस्थापकः । स नर्म्मदोपकूलवास्तव्यो दाक्षिणात्य आसीदिति तस्य वर्णनादनुमीयते—

"त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः ।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥"

इति शार्ङ्गधरपद्धत्यां राजशेखरस्योक्तेरेव दशकुमारचरितस्य छन्दोविचितेः कलापरिच्छेदस्य च ग्रन्थकर्त्तायमिति प्रतीयते ।

शूद्रकविरचिते मृच्छकटिके विद्यमानस्य 'लिम्पतीव तमोऽङ्गानि' इत्यादिपदस्य काव्यादर्शे दर्शनात् शूद्रककवेरर्वाचीनोऽयम् ।

**"नीलोत्पलदलश्यामां विज्जकां मामजानता ।**
**वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥"**

इति शार्ङ्गधरपद्धतौ विज्जकायाः पद्यादयं विजकायाः प्राचीन एव । "दृष्टिं हे प्रतिवेशिनि" "धन्यासि या कथयसि" इत्यादिपद्यानां रचयित्री विज्जका नारी कविरासीत् ॥

**"सरस्वतीव कार्णाटी विजयाङ्का जयत्यसौ ।**
**या विदर्भगिरां वासः कालिदासादनन्तरम् ॥"**

( राजशेखरः )

विज्जकाया विजयभट्टारिकेति नामान्तरम् । सा तु द्वितीयपुलकेशिनो राज्ञोऽपत्यस्य चन्द्रादित्यस्य राज्ञी आसीत् । स ६६० खीष्टाब्दे सप्तमशताब्द्या मध्यभागे आसीदिति दानपत्राद् बहुभिरनुमीयते । अतोऽयं दण्डिकविः षष्ठशताब्द्याः प्रागेव जातः ।

भामहस्य काव्यालङ्कारस्तु षड्भिरेव परिच्छेदैः समाप्तिं गतः । स तु अलङ्कारमार्गप्रवर्त्तक आसीत् । प्रथमपद्येऽप्युक्तम्

**"अवलोक्य मतानि सत्कवीनामवगम्य स्वधिया च काव्यलक्ष्म ।**
**सुजनावगमाय भामहेन ग्रथितं रक्रिलगोमिसूनुनेदम् ॥"**

रक्रिलगोमी तु भामहस्य जनक आसीत् । अयं भामह आलङ्कारिकेषु प्राचीनतमः । अतः प्रतापरुद्रयशोभूषणे विद्यानाथेन "पूर्वेभ्यो भामहादिभ्यः सादरं विहिताञ्जलि-" रित्युक्तम् । उक्तञ्च रुय्यकेणालङ्कारसर्वस्वे "भामहोद्भटप्रभृतयश्चिरन्तनालङ्कारकाराः" इति ।

"तथा विवक्षितान्यपरवाच्यस्यैव शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यप्रकारसमाश्रयेण नवत्वम् । यथा "धरणीधारणायाधुना त्वं शेषः ।" ( हर्षचरितम् ) इत्यादौ ॥

**"शेषो हिमगिरिस्त्वं च महान्तो गुरवः स्थिराः ।**
**यदि लङ्घितमर्य्यादाश्चलन्तीं बिभ्रते भुवम् ॥"** ( भामहः )

इत्यादिषु सत्स्वपि तस्यैवार्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यसमाश्रयेण नवत्वम् । ( ध्वन्यालोकः ) । एतेन बाणकवेर्भामहादर्वाचीनत्वं स्फुटमेव । अतो भामहः षष्ठशताब्द्याः परत आसीदित्यनुमीयते ।

दण्डिभामहयोरर्वाचीनत्वनिर्णयेऽपि मतभेदो दृश्यते ॥

उद्भटस्तु षड्भिर्वर्गैर्विभक्तस्यालङ्कारसारसंग्रहस्य निबन्धस्य कर्त्ता । तस्य वृत्तिस्तु प्रतीहारेन्दुराजेन रचिता । उद्भटेन कुमारसम्भवाख्यं काव्यमपि रचितम् । तदुक्तं वृत्तौ प्रतीहारेन्दुराजेन—"अनेन ग्रन्थकृता स्वोपरचितकुमारसम्भवैकदेशोऽत्र उदाहरणत्वेनोपन्यस्तः" इति ।

"विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः।
भट्टोभूदुद्भटस्तस्य भूमिभर्त्तुः सभापतिः॥"

इति राजतरङ्गिण्यां कल्हणोक्तेः काश्मीरदेशीयोऽयमुद्भटस्तावद् जयापीडस्य राज्ञः पण्डितसभायां सभापतिरासीदिति ज्ञायते ॥

राज्ञो जयापीडस्य राज्यकालोऽष्टमशताब्द्यामेवासीत्। अतो भट्टोद्भटस्तु अष्टम-शताब्द्याः प्रान्तभाग आविरासीत्। ध्वन्यालोके तु बहुशस्तन्मतमुट्टङ्कितम्।

"विद्वदग्रयान् मुकुलकादधिगम्य विविच्यते।
प्रतीहारेन्दुराजेन काव्यालङ्कारसंग्रहः॥"

इति श्लोकः प्रतीहारेन्दुराजोक्तः स्वस्य मुकुलशिष्यत्वं प्रतिपादयति। मुकुलस्तु पञ्चविंशत्युत्तरनवमशताब्द्याम् (९२५) आसीत्। अतस्तस्य शिष्यो दशमशताब्द्याः प्रथमार्धे बभूवेति सम्भाव्यते।

वामनस्तु काव्यालङ्कारसूत्रस्य तद्वृत्तेश्च कर्त्ता। तत्र तेनैवोक्तम्।

"प्रणम्य परमं ज्योतिर्वामनेन कविप्रिया।
काव्यालङ्कारसूत्राणां स्वेषां वृत्तिर्विधीयते॥"

इति। अनेनैव प्रथमतोऽलङ्कारशास्त्रं सूत्राकारेण लिखितम्। तत्सूत्राण्यधि-करणत्रयेण विभक्तानि। अयं तावद् रीतिमार्गव्यवस्थापकः। अस्य निबन्धस्तु लुप्तप्राय एवासीत्। भट्टमुकुलेनायमेकस्मादादर्शादुद्धृत इति।

"वेदिता सर्वशास्त्राणां भट्टोऽभून्मुकुलाभिधः।
लब्ध्वा कुतश्चिदादर्शं भ्रष्टाम्नायं समुद्धृतम्।
काव्यालङ्कारशास्त्रं यत् तेनैतद् वामनोदितम्॥"

इति काव्यालङ्कारसूत्रटीकाकृत्सहदेवोक्तेः सुस्पष्टं प्रतीयते॥

राजतरङ्गिण्याम्—

"मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः॥"

लभ्यमानात् श्लोकादस्माद् वामनस्य जयापीडराजमन्त्रित्वं सिध्यति। अतोऽसौ उद्भटस्य समकालीन एवासीत्। अतो वामनोऽपि अष्टमशताब्द्याः प्रान्तभाग एवासीत्।

रुद्रटस्तु काव्यालङ्कारस्य रचयिता। ग्रन्थोऽयं रुद्रटालङ्कारनाम्नाऽपि व्यपदिश्यते। आर्य्याछन्दसा रचितोऽयं निबन्धः षोडशभिरध्यायैर्विभक्तोऽलङ्कारमार्गस्य व्यवस्था-पकः। तस्य विवरणादिकं किमपि सम्यङ् न ज्ञायते। परं तद्ग्रन्थटीकाकृता निमिसाधुनोक्तम्॥

"शतानन्दापराख्येन भट्टवामुकसूनुना।
साधितं रुद्रटेनेदम् ॥"

अतो ज्ञायते रुद्रटस्य शतानन्द इति नामान्तरम्, वामुकभट्टस्तु तस्य पिता। काव्यमीमांसायां राजशेखरेण "काकुवक्रोक्तिर्नाम शब्दालङ्कारोऽयमिति रुद्रटः" इत्यादिना रुद्रटस्योल्लेखः कृतः। प्रतीहारेन्दुराजेन ध्वन्यालोकेऽप्युद्भटस्योल्लेखः कृतः। अतोऽयं नवमशताब्द्याः परं न जात इति प्रतीयते। अस्य ग्रन्थस्य व्याख्याकारो निमिसाधुस्तु श्वेताम्बरजैनः शालिभद्रशिष्य आसीत् (११२५) विक्रमाङ्के (१०६८–६९ ख्रीष्टाब्दे) व्याख्यानं रचितमिति तेनान्ते वर्णितम्। यथा—

"पञ्चविंशतिसंयुक्तैरेकादशसमाशतैः।
विक्रमात्समतिक्रान्तैः प्रावृषीदं समर्थितम् ॥"

रुद्रभट्टेन शृङ्गारतिलकमपि विरचितम्।

रुद्रटरुद्रभट्टयोरेकव्यक्तित्वं नामसाम्यादनुमीयते कैश्चित्। रुद्रटेनालङ्कारपक्षपातिनाऽलङ्कारनिर्णयः कृतः। रुद्रभट्टेन तु रसस्य काव्ये निरूपणं कृतम्। उक्तं तेनैव।

"प्रायो नाट्यं प्रति प्रोक्ता भरताद्यै रसस्थितिः।
यथामति मयाप्येषा काव्यं प्रति निगद्यते ॥"

तयोर्विषयनिर्णय एव भेदो दृश्यते। उभययोः साम्यमपि कुत्राऽपि न दृश्यते॥

**ध्वन्यालोकः**—ध्वन्यालोकस्य ध्वनिस्थापनार्थं प्रवृत्तत्वान्नेह तदतिरिक्तालङ्कारादिप्रपञ्चनं वर्त्तते। अत एव ध्वनिस्थापनमलङ्कारनिबन्धेषु सङ्कलितमभूत्।

व्याकरणे पाणिनेः सूत्रमिव वेदान्ते वेदान्तसूत्रमिवालङ्कारनिबन्धेषु ध्वन्यालोकस्य मतमविसम्वादि प्रमाणं च "ध्वनिकृतामालङ्कारिकसरणिव्यवस्थापकत्वात्।" ध्वन्यालोकस्य भागद्वयं वर्त्तते। कारिका तद्वृत्तिश्चेति। कारिकाकारौ वृत्तिकृत्तो भिन्न इति लोचनाभिधतट्टीकाप्रणेतुरभिनवगुप्तस्य मतम्। अतएव मूलकारिका साक्षात्तन्निराकरणार्था न श्रूयते।

वृत्तिकृत्तु निराकृतमिति प्रमेयसंख्यापूरणाय कण्ठेन तत्पक्षमनूद्य निराकरोति येपीत्यादिना।

तेनात्र प्रथमोद्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम्। द्वितीयोद्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान्। तदाशयानुसारेण वृत्तिकृदत्रैवोद्योते मूलविभागमवोचत्। अस्मादेव सन्दर्भाद् 'आनन्दवर्द्धनः वृत्तिकारः कारिकाकारस्तु ततोऽन्यः' इति लोचनकृदभिप्रायो व्यज्यते।

कस्तावत्कारिकाकार इति यथार्थतो निश्चेतुं नैव शक्यते। ध्वन्यालोकस्य सहृदयालोक इति नामान्तरमस्ति। तत एव कारिकाकारः सहृदयनामेति कैश्चिदनुमीयते।

**सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते ।**

इति लोचनकारस्य उक्तिरेव । तथाहि—तत्र विवक्षितान्यपरता सहृदयैः काव्यवर्त्मनि निरूपिता इत्यभिधामातृकाकृदुक्तेः । कैश्चित् सहृदयैर्ध्वनिर्नाम व्यञ्जकभेदात्मा काव्यधर्म्मोऽभिहितः इति मुकुलोक्तिश्च तत्र प्रमाणम् । सहृदयस्तु कारिकाकारस्य नामासीदित्यनुमीयते । कारिकाकारेण कारिकासु बहुशः सहृदयपदप्रयोगात्तस्य तन्नामत्वमवसीयते । यथा निचुलकवेः । परं वृत्तिकारस्यानन्दवर्द्धनस्य यशसा कारिकाकारस्य नामापि निगूहितम् । अतो ध्वनिकारनाम्ना आनन्दवर्द्धन एव व्यपदिश्यतेऽर्वाचीनैरालङ्कारिकैः । अत एवोक्तं राजशेखरेण—

**ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना ।**
**आनन्दवर्द्धनः कस्य नासीदानन्दवर्द्धनः ॥**

इति सूक्तिमुक्तावल्याम् ।

**मुक्ताकणः शिवस्वामी कविरानन्दवर्द्धनः ।**
**प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ॥**

इति राजतरङ्गिण्याः पद्यादानन्दवर्द्धनः काश्मीरराजस्याऽवन्तिवर्म्मणः (८५५–८८३) खीष्टाब्दे वर्त्तमानस्य सभापण्डितो रत्नाकरस्य समकालीनश्चासीदिति ज्ञायते । रत्नाकरेण तदा हरविजयाख्यं महाकाव्यं रचितम् । आनन्दवर्द्धनेनापि अर्जुनचरितम्, विषमबाणलीला, देवीशतकञ्चेति निबन्धत्रयं निबद्धम् । ध्वन्यालोकस्य प्राचीना बहवो व्याख्यातार आसन् । परमधुनाऽभिनवगुप्तस्यैव व्याख्योपलभ्यते । सा तु सहृदयालोकलोचननाम्ना ध्वन्यालोकलोचननाम्ना च परिचीयते ।

तेनैवोक्तम्—

**किं लोचनं विना लोको भाति चन्द्रिकयाऽपि हि ।**
**तेनाभिनवगुप्तेन लोचनोन्मीलनं व्यधात् ॥**

इति चन्द्रिकानाम्न्यपरा व्याख्याभिनवगुप्तस्य पूर्वपुरुषैः कृता । लोचने चन्द्रिकाव्याख्याया मतं खण्डितं वर्त्तते । उद्धृतात् श्लोकादपि तदवबुद्ध्यते । अभिनवगुप्तेन विंशतेः परे निबन्धा रचिताः । उद्भटालङ्कारस्य व्याख्याता प्रतीहारेन्दुराजस्तस्य गुरुरासीदिति तेनैवोक्तम् ।

'यथा वास्मदुपाध्यायस्य विद्वत्कविसहृदयचक्रवर्त्तिनो भट्टेन्दुराजस्य ।' इति ।

अभिनवगुप्तस्तु दशमशताब्द्याः प्रान्तभागे एकादशशताब्द्याः प्रथमभागे ९६०–१०२० खीष्टाब्दे च जीवित आसीत् । तेन १०१५ खीष्टाब्दे बृहती वृत्तिर्लिखितेति "नवतितमेऽस्मिन् वत्सरेऽन्त्ये युगांशे । तिथिशशिजलधिस्थे मार्गशीर्षावसाने ४११५ गतकलिकाले" इत्यस्मात्पद्यात्प्रतीयते ।

अयं च दशमशताब्द्याः प्रथमभाग एव आविरासीत् । अनेन काव्यमीमांसा विरचिता । तत्र ज्ञातव्यविषया बहवो वर्त्तन्ते । अनेन च यायावरवंशोद्भवेन कवि-

राजेन बालरामायणप्रचण्डपाण्डवकर्पूरमञ्जरीप्रभृतीनि नाटकानि विरचितानि । अयं च महाराष्ट्रीयः ( ९१७ ) ख्रीष्टाब्दे कान्यकुब्जराजस्य महेन्द्रपालस्य गुरुरासीत् । राजशेखरस्येदृशी प्रशस्तिः ।

**समधिकगुणशालिन्यः प्रसन्नपरिपक्त्रिमाः ।**
**यायावरकवेर्वाचो मुनीनामिव वृत्तयः ॥** ( तिलकमञ्जरी )

**हृदयदर्पणः**—अयञ्च ग्रन्थो भट्टनायकेन विरचितः । अयं च हृदयदर्पणः ध्वनिवादनिराकरणपरो ग्रन्थः । लोचने एतन्मतस्य खण्डनादभिनवगुप्तात्प्राचीनोऽयं कविर्दशमशताब्द्यामासीदिति ज्ञायते । रसनिरूपणे भट्टनायकस्य मतमभिनवमेव, तद्यथा—

**अभिधा भावना चान्या तद्भोगीकृतिरेव च ।**
**अभिधाधामतां याते शब्दार्थालङ्कृती ततः ॥**
**भावनाभाव्य एषोऽपि शृङ्गारादिगणो मतः ।**
**तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान्नरः ॥**

**अभिधामातृका** । इयं हि मुकुटभट्टेन विरचिता ।

**अनुग्रहाय लोकानां भट्टाः श्रीकल्लटादयः ।**
**अवन्तिवर्म्मणः काले सिद्धा भुवमवातरन् ॥** ( राजतरङ्गिणी )

मुकुलभट्टो भट्टकल्लटस्य पुत्रः । मुकुलभट्टस्तु प्रतीहारेन्दुराजस्य गुरुरासीदिति प्रागेव कथितम् । अतः स दशमशताब्द्याः प्रथमभाग एव आसीत् । परं ग्रन्थेस्मिन् ग्रन्थकारकृतया वृत्त्या युक्ताः पञ्चदशैव कारिका वर्त्तन्ते ।

**वक्रोक्तिजीवितम्** । कुन्तलनाम्नापि परिचितेन कुन्तकेन कृतमिदमलङ्कारसर्वस्वसाहित्यदर्पणादिषु बहुश उद्धृतम् ।

**'काव्यकाञ्चनकषाश्ममानिना कुन्तकेन निजकाव्यलक्ष्मणि ।**
**यस्य सर्वनिरवद्यतोदिता श्लोक एष स निदर्शितो मया ॥'**

एतया महिमभट्टोक्त्या कुन्तकेन स्वेनैव रचितं लक्षणमुदाहरणं च तत्र प्रदत्तम् । ग्रन्थकारोऽयं ध्वनिवादं निरस्य वक्रोक्त्यां तस्यान्तर्भावं प्रदर्शितवान् । तन्मतं तु वक्रोक्तिः काव्यजीवितमिति ।

यद्यपि वक्रोक्तिजीवितहृदयदर्पणकारावपि ध्वनिकारानन्तरभाविनावेव, तथापि तौ चिरन्तनमतानुयायिनावेवेति तन्मतम् ।

इत्यलङ्कारसर्वस्वविवरणोक्तेः कुन्तक आनन्दवर्द्धनादर्वाचीन एव । व्यक्तिविवेककारेण महिमभट्टेनैतन्मतालोचनादयं महिमभट्टात् प्राचीनः । अतोऽयं दशमशताब्द्याः प्रान्तभाग एवासीत् ।

**दशरूपकः**—अयं च ग्रन्थो धनञ्जयस्य । भरतमन्तरा प्राचीनैः आलङ्कारिकैर्नाटक-

स्यैव रसस्यापि चर्चा न कृता धनञ्जयेन तु नाटकस्य रसस्यात्र विचारः कृतः। धनञ्जयस्तु कारिकाकारः विष्णोः पुत्रः। स च ९७४–९९४ खीष्टाब्दे वर्त्तमानस्य मुञ्जनगरपतेः सभामलङ्कृतवान्। रसनिर्णये तस्य मतम्–

"न रसादीनां काव्येन सह व्यङ्ग्यव्यञ्जकभावः। किं तर्हि भाव्यभावकसम्बन्धः, काव्यं भावकम्। भाव्या रसादयः।" धनिकेन दशरूपकस्य अवलोकाख्यं व्याख्यानं रचितम्। तेनापि काव्यनिर्णयो नाम्ना ग्रन्थो विरचितः। तस्यापि पिता विष्णुरेव। अतः स ग्रन्थकारस्य धनञ्जयस्य भ्राता इत्यनुमीयते।

**व्यक्तिविवेकः—**

अयं च राजानकमहिमभट्टस्य। स्वेनैव ग्रन्थस्योद्देश्यमित्थमुक्तम्।

**अनुमानान्तर्भावं स्वस्यैव ध्वनेः प्रकाशयितुम्।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्॥**

एतस्य मतं तु साहित्यदर्पणे खण्डितम्।

अलङ्कारसर्वस्व एतन्मतस्य सारः प्रदत्तः। अतः साहित्यदर्पणकारादलङ्कारसर्वस्वकाराच्चायं प्राचीनः। वक्रोक्तिकारस्य लोचनकारस्य च मतमनेन समालोचितम्। अतस्तयोरयमर्वाचीनः। अतोऽयं एकादशशताब्द्याः प्रथमभाग एवासीत्।

स तु काश्मीरवास्तव्य आसीदिति राजानकोपाधिनानुमीयते। तेनापि तत्त्वोक्तिकोषाख्योऽपरोऽलङ्कारनिबन्धो विरचितः।

**इत्यादिप्रतिभातत्त्वमस्माभिरुपपादितम्।**
**शास्त्रे तत्त्वोक्तिकोषाख्ये इति नेह प्रपञ्चितम्॥**

इति श्लोकादवसीयते। उक्तं चानेन

"स्वकृतिष्वयन्त्रितः कथमनुशिष्यादन्यमयमिति न वाच्यम्। वारयति भिषगपथ्यादितरान्स्वयमाचरन्नपि।"

**सरस्वतीकण्ठाभरणम्।**

इदं च भोजस्य। अग्निपुराणमतमेवानुसृतमनेन। रामायणचम्पूशृङ्गारप्रकाशादीनां बहूनां निबन्धानां रचयिताऽयं मालवदेशस्य राजासीत्।

**"शब्दानामनुशासनं विदधता पातञ्जले कुर्वता**
**वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके।**
**वाक्चेतोवपुषां मलं फणभृतां भर्त्रेव येनोद्धृतं**
**तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः॥"**

(राजमार्त्तण्डः)

अयं धारानगरीनाथो महाविचक्षणः कविः कविवल्लभश्चासीत्। करणग्रन्थो राजमृगाङ्कः ९६४ शकाब्दे १०४२ खीष्टाब्दे प्रणीतस्तेन। अतो भोजराज एकादश-

शताब्द्याः प्रथमार्द्धे एवासीत् । एतदपि भोजराजस्य उत्तराधिकारिणो जयसिंहस्य लिपेर्ज्ञायते ।

**औचित्यविचारचर्चा, कविकण्ठाभरणञ्च ।**

क्षेमेन्द्रस्य । काश्मीरवास्तव्येन व्यासदासापराह्वेन क्षेमेन्द्रेण भारतमञ्जरी-बृहत्कथामञ्जरीप्रभृतयो बहवो ग्रन्थाः प्रणीताः । बृहत्कथामञ्जर्याम् "श्रुत्वाभिनवगुप्ताख्यात्साहित्यं बोधवारिधेः ॥" लभ्यमानादस्मात् पद्याद् अभिनवगुप्तस्य साहित्ये शिष्योऽयमिति ज्ञायते । तेन समयमातृका पञ्चविंशतितमे लौकिककाले ( १०५० ) विरचिता ।

"राज्ये श्रीमदनन्तराजनृपतेः काव्योदयोऽयं कृतः । औचित्यविचारचर्चा" इत्यत्र वर्णितो हि अनन्तराजनृपतिः । १०२८ खीष्टाब्दादारभ्य १०६३ खीष्टाब्दं यावत् काश्मीरस्य नरपतिरासीत् । तस्य राजत्वकाले च प्रणीतोऽयं ग्रन्थः । औचित्यमेव रसस्य जीवितमिति तस्य गतम् ।

**"औचित्यस्य चमत्कारकारिणश्चारुचर्वणे ।**
**रसजीवितभूतस्य विचारं कुरुतेऽधुना ॥"**

**काव्यप्रकाशो** मम्मटस्य । मम्मटेन काव्यप्रकाशः परिकरालङ्कारावधिरेव रचितः। अवशिष्टांशस्तु अल्लटसूरिणा पूरितः । तदुक्तं निदर्शनाख्यायां काव्यप्रकाशव्याख्यायामानन्दकविना ।

**कृतः श्रीमम्मटाचार्य्यवर्य्यैः परिकरावधिः ।**
**प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा ॥** इति ।
**इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत् ।**
**न तद् विचित्रं यदमुत्र सम्यग् विनिर्मिता संघटनैव हेतुः ॥**

इत्यस्य काव्यप्रकाशान्तिमश्लोकस्य व्याख्यानावसरे माणिक्यचन्द्रेणोक्तम्—"अथ चायं ग्रन्थोऽन्येनारब्धः, परेण च समर्थित इति द्विखण्डोऽपि संघटनावशादखण्डायते" इति ।

अयं महिमभट्टोऽनुपमः पण्डितः । तत्प्रणीतः काव्यप्रकाश 'आकर' इति व्यवह्रियते टीकाकारैरालङ्कारिकैश्च । अनेन शब्दव्यापारपरिचर्य्याऽपि रचिता । अवगतसर्वशास्त्रोऽपि मुख्यतयाऽयं वैयाकरणः । अतश्चायं भीमसेनेन सुधासागरे वाग्देवतावतारत्वेन वर्णितः । वेदान्ते शारीरिकभाष्यमिव व्याकरणे महाभाष्यमिव साहित्येऽयं काव्यप्रकाशोऽतीव प्रमाणम् । दृश्यकाव्यमन्तरा सर्वे साहित्यशास्त्रस्य विषया अत्रान्तर्भाविताः । अस्येतिवृत्तं नैव किञ्चिद् यथायथमासाद्यते । सुधासागरे भीमसेनेन 'अयं मम्मटः काश्मीरदेशीयो वाराणस्या-

मधीतसर्वशास्त्रः जय्यटपुत्रः पातञ्जलमहाभाष्यटीकाकृत् कैयटस्य वेदभाष्यकारौ वटस्य च ज्येष्ठभ्राता” इति वर्णितम् ।

.. इदं भीमसेनोक्तं प्रमाणत्वेन ग्रहीतुं नैव शक्यते । औवटेन स्वभाष्ये वज्रटपुत्रत्वेन स्वस्योल्लेखात् ।

अयं च मम्मटः श्रीहर्षस्य नैषधकारस्य मातुल आसीदिति काश्मीरपण्डितानां किंवदन्त्यपि श्रूयते ।

अनेन अभिनवगुप्तस्य भोजराजस्य च पाठांश उद्धृतः । अतोऽयं तयोरर्वाचीनः । भोजस्तु एकादशशताब्द्याः मध्यभागे आसीत् । माणिक्यचन्द्रेण तु १२१६ शकाब्दे ( ११५६-) ६० ख्रीष्टाब्देऽस्य व्याख्या सङ्केताख्या विरचिता । अतो द्वादशशताब्द्याः मध्यभागात् प्राग् एकादशशताब्द्याः अन्तिमभागे रचितोऽयं ग्रन्थः । ग्रन्थोऽयं सर्वांशे उत्कर्षमावहतितराम् । परं त्वत्रायमेको महान् दोषो यदयं विद्वद्भिरपि दुरधिगमः। किं पुनरधिकम् । एकेन यदंशस्य योऽर्थः प्रतिपादितोऽपरेण विदुषा तदंशस्यैव तद् विपरीतार्थो विधीयते ।

अत एवास्य ग्रन्थस्य बहवो व्याख्यातारो जाताः । उक्तं च महेश्वरभट्टाचार्य्येण “काव्यप्रकाशस्य कृता गृहे गृहे टीकास्तथाप्येष तथैव दुर्गम” इति । साहित्यदीपिकायामपि—“टीकाः काव्यप्रकाशस्य कामं सन्तु परश्शताः ।” अलङ्कारसर्वस्वकारेण रुय्यकेण सङ्केताख्या व्याख्या कृता । साहित्यदर्पणकारेण विश्वनाथेनापि काव्यप्रकाशदर्पणाख्या काप्यपूर्वा व्याख्यास्याविष्कृता ।

काव्यप्रकाशस्य शेषांशपूरयितारमल्लटं केचिदलकनाम्नाऽपि व्यपदिशन्ति । अनेनैवालङ्कारसूरिणा हरविजयकाव्यस्य विषमपदोद्योताख्या व्याख्या रचिता । स तु काश्मीरदेशीय एवासीदिति नाम्नैव परिचीयते ।

## अलङ्कारसर्वस्वम्

रुय्यकस्य । ध्वनिवादं स्थापयतानेन अलङ्कारप्रकरणमेवात्र ग्रन्थे प्रतिपादितम् । ग्रन्थकारोऽयं राजानकरुय्यकनाम्नापि परिचीयते ।

“निजालङ्कारसूत्राणां वृत्त्या तात्पर्य्यमुच्यते” इति व्याहरन् कविः स्वस्य सूत्रकृत्त्वं वृत्तिकृत्त्वं च व्यवस्थापयति । परं त्रिवांड्रमप्रकाशितग्रन्थशेषे श्लोकोऽयं वर्त्तते—

**इति मङ्खुको वितेने काश्मीरक्षितिपसान्धिविग्रहिकः।**
**सुकविमुखालङ्करणं तदिदमलङ्कारसर्वस्वम् ॥**

लभ्यमानादस्मात्, पश्चात्सूत्रकारो रुय्यको मङ्खुकस्तु वृत्तिकार इत्यनुमीयते कैश्चित् । मङ्खुकप्रणीतात् श्रीकण्ठचरिताद् रुय्यको मङ्खुकस्य गुरुरिति ज्ञायते । शिष्यसाहचर्य्येण रुय्यको विरचितवानिमं निबन्धमिति दाक्षिणात्यपाठादवगम्यते ।

परं तु "निजालङ्कारसूत्राणां वृत्त्या तात्पर्य्यमुच्यते" अनया स्वोक्त्या रुय्यक एव सूत्राणां वृत्तेश्च रचयितेति ज्ञायते । अयं च अलङ्कारानुसरणी काव्यप्रकाशसङ्केत-नाटकमीमांसाव्यक्तिविवेकविचारश्रीकण्ठस्तवसहृदयलीलासाहित्यमीमांसाहर्षचरितव्या-ख्याप्रभृतिग्रन्थानां विरचयिताऽऽसीत् । मङ्खुकः काश्मीरराजजयसिंहस्य सान्धि-विग्रहिक आसीत् । रुय्यकस्तु तस्य गुरुः ।

जयसिंहस्तु ११२८–११४६ खीष्टाब्दे काश्मीरस्य नरपतिरासीत् । ११६० खीष्टाब्दे रचितायां काव्यप्रकाशव्याख्यायां माणिक्यचन्द्रेण अलङ्कारसर्वस्वस्य मतमुत्थापितम् । अतोऽलङ्कारसर्वस्वं द्वादशशताब्याः प्रथमभाग एव विरचितमासीत् । साहित्यदर्पणकारेण दशमपरिच्छेदे रुय्यकस्य मतं गृहीतं समालोचितं च ।

वाग्भट्टालङ्कारस्य कर्त्ता वाग्भटस्तु जैनो द्वादशशताब्या मध्यभागे जयसिंहस्य राज्ञः सभायामासीत् ।

**काव्यानुशासनम् ।**

हेमचन्द्रस्य । तस्य टीकाऽपि निबन्धकारेणैव कृता अत्र प्राचीनानां मतमेव संगृहीतं विद्यते । नैव किञ्चिन्नूतनत्वमस्ति । हेमचन्द्रोऽपि जैन आसीत् । तेन शब्दानुशासनप्रभृतयो बहवो ग्रन्था रचिताः । जयसिंहः कुमारपालश्च चालुक्यवं-शीयौ राजानौ तस्य शिष्यौ बभूवतुः ।

तस्य कार्य्यजातं मेरुतुङ्गकृतप्रबन्धचिन्तामणौ वर्णितमस्ति । अयं १०८८ खीष्टाब्दे धण्डुकायां संजातः । ११७२ खीष्टाब्दे चोपरतः ।

**चन्द्रालोकः ।**

पीयूषवर्षापरनाम्ना जयदेवेन ग्रन्थोऽयमनुष्टुप्छन्दसा रचितः । तस्य पिता महादेवो माता तु सुमित्रा । प्रसन्नराघवनाटककर्त्तुर्जयदेवस्य पिता महा-देवो माता तु सुमित्रा । अतोऽयं जयदेवो गीतगोविन्दकाराज्जयदेवाद्भिन्न एव । कविरयं महान् नैयायिकः ।

पक्षधर इत्यस्यापरं नाम च । काव्यप्रकाशटीकायाः शिरोमणिग्रन्थटीका-याश्च कर्त्ताऽयं कविः । "कदली कदली" इत्यादि प्रसन्नराघवीयश्लोकस्य साहित्यद-र्पणकारेणोदाहृतत्वादयं जयदेवः साहित्यदर्पणकारात्प्राचीन इति निश्चीयते । अतो-ऽयं त्रयोदशशताब्यामासीत् ।

**एकावली ।**

इयं विद्याधरस्य कृतिर्मल्लिनाथस्य तरलाख्यया व्याख्यया सहिता प्रकाशितास्ति । उत्कलराजस्य नरसिंहस्य प्रशस्तिः कविनैतेनारचिता उदाहरण-त्वेनोपन्यस्ता च । तत्र तावन्नरसिंहस्तु "यवनावनिवल्लभ" हम्मीर ( अमीर ) मद-मर्दकः । इत्येवं वर्णितः । वङ्गसागरसीमनि गङ्गातरङ्गधवलः इत्यादिना राज्ञो नरसिंहस्य

वङ्गप्रदेशे यवनविजयो वर्णितः। परं लाङ्गुलानरसिंहस्तु यवनानामुच्छेदक आसीत्। ग्रतस्तस्य समये १२३८ खीष्टाब्दात् परत एवायमासीत्।

**प्रतापरुद्रयशोभूषणम्।**

विद्यानाथस्य काकतीयराजस्य प्रतापरुद्रस्य प्रशस्तिरत्रोदाहरणत्वेनोपन्यस्ता। मल्लिनाथस्य' पुत्रेण कुमारस्वामिनास्य व्याख्या कृता। प्रतापरुद्रस्तु त्रयोदशशताब्द्याः प्रान्तभागे चतुर्दशशताब्द्याः प्रथमभागे राजासीदिति लेखतो ज्ञायते। अतो ग्रन्थोऽयं चतुर्दशशताब्द्याः प्रथमे पादे रचितः।

**साहित्यदर्पणः।**

विश्वनाथस्य। जम्बुराजधान्यां १४४०शकाब्दे १३८४खीष्टाब्दे लिखितः साहित्यदर्पणः समुपलभ्यते। अतोऽयं ग्रन्थस्ततः प्रागेव रचित इत्यत्र नास्ति विचिकित्सालेशोपि।

**"सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः।**
**आल्लावद्दीननृपतौ न सन्धिर्नच विग्रहः॥"**

एतस्मिन् साहित्यदर्पणीयश्लोके यवनराजस्य आल्लावद्दीनस्य नामोल्लेखो वर्त्तते। "सुलतान् आल्लाउद्दीन् खिल्जि" ( Sultan Allauddin Khilji) इति नाम्ना प्रसिद्धिं गतो यवनराज एव। अयं च यवनराजो विषप्रयोगेण १३१६ खीष्टाब्दे एव व्यापादितः। "सुलतान्" शब्दस्तावत् सुरत्राणरूपेण संस्कृतभाषायामत्र व्यवहृतः। गङ्गाम्भसि सुरत्राण" इत्यस्मिन् श्लोकव्याख्याने तदेव प्रदर्शितं टीकाकारेण महेश्वरभट्टाचार्य्येण। "सन्धौ सर्वस्वहरणम्" इत्यादिसाहित्यदर्पणश्लोके आल्लावद्दीननृपस्य नामोल्लेखनाद् विश्वनाथस्य तत्समकालीनत्वं त्रयोदशशततम ( १३०० ) खीष्टाब्दोद्भवत्वं तत्परवर्त्तित्वं वा समापतति।

१३८४ खीष्टाब्दे लिखितस्य ग्रन्थस्य समुपलम्भाद् विश्वनाथ आल्लावद्दीनसमकालीन इत्यनुमीयते। साहित्यदर्पणकरणादनन्तरमनेन नरसिंहविजयाख्यं खण्डकाव्यं व्यरचि।

तत्रत्याः कतिपये श्लोका लोचनटीकायां विश्वनाथकृतायां काव्यप्रकाशस्य दर्पणाख्यायां व्याख्यायां चोद्धृता दृश्यन्ते।

उत्कृष्टकलाजालसमुद्भासितत्वादुत्कल इत्यन्वर्थं नाम भजमाने कलिङ्ग इत्यपरेण नाम्नापि सर्वत्र प्रसिद्धिमासादिते देशे नरसिंहनामानो बहवो राजानो जननं भेजिरे। तेषु कस्यचिन्नरसिंहस्य सभायामेतस्य कवेः पितामहो नारायणः परां प्रतिष्ठां सम्प्राप्यासीदिति।

"श्रीकलिङ्गभूमण्डलाखण्डलमहाराजाधिराजश्रीनरसिंहदेवसभायां धर्म्मदत्तं स्थगयन्तः सकलसहृदयगोष्ठीगरिष्ठकविपण्डितास्मत्पितामहश्रीमन्नारायणपादाः" इति पाठादवगम्यते काव्यप्रकाशटीकायां दर्पणाभिधायां स्वकृतायां तादृशोऽपि पाठः समुल्लसति।

परं तु मुद्रितानां साहित्यदर्पणानां तृतीये परिच्छेदे "तत्प्राणत्वं चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम्" इत्येवंविधः पाठो दृश्यते। अत्र वृद्धप्रपितामह इति पाठस्तु भ्रममूलक एव। यदि नारायणस्तस्य पञ्चमपुरुषः वृद्धप्रपितामहः स्यात्तर्हि विश्वनाथः कस्यापि नरसिंहनृपतेः सभायां नैव सम्भवेत्। तस्य जनिस्तु पञ्चदशशताब्द्यां समापतेत्।

साहित्यदर्पणशेषे "श्रीमन्नारायणचरणारविन्दमधुव्रत" इत्याद्युक्त्या चन्द्रकलायाः प्रारम्भे "नारायणचरणारविन्दमधुकरीभूतः इत्युक्त्या च पितामह एव स्मृतः कविनेत्यप्यायाति। विश्वनाथेन विजयनरसिंहाख्यं काव्यमेकं विरचितम्। तदुक्तं तस्य पुत्रेणानन्तदासेन लोचन्याम्। यथा मम तातपादानां विजयनरसिंहे।

**निःश्वासोद्धातवातप्रसरधुतकुलाहार्य्यमुद्धातदंष्ट्रा-**
**जातज्योतिःस्फुलिङ्गप्रकरविरचितोल्कानिकायाभिशङ्काः।**
**अर्धे पारीन्द्रमर्धे नरमहह महालोकमालोक्य लोकाः**
**स्तोकास्तोकावशेषाः शरणमुपययुर्वारिधिं वारिधिं वा॥** इति।
**आहवे जगदुद्दण्डराजमण्डलराहवे।**
**श्री-सिंहमहीपाल स्वस्त्यस्तु तव बाहवे॥** इति च।

अतो विश्वनाथेन कस्यापि नरसिंहपतेः प्रशस्ती रचिता। अतएव ज्ञायते विश्वनाथः कस्यापि नरसिंहाख्यस्य राज्ञः सान्धिविग्रहिक आसीत्। तत्पितामहस्तु नारायणदासोऽपि कस्यचिन्नरसिंहाह्वस्य राज्ञः सभायामासीदिति।

परं विश्वनाथस्य पिता चन्द्रशेखरो भानुदेवनृपतेः सान्धिविग्रहिक आसीदिति। यथा तातपादानां चतुर्दशभाषाविलासिनीभुजङ्ग महाकवीश्वरश्रीचन्द्रशेखरसान्धिविग्रहिकाणाम्—

दुर्गालङ्घितविग्रहो...राजत्युमावल्लभ इत्यत्र प्रकरणेनाभिधेये उमावल्लभशब्दस्य उमानाम्नी महादेवी तद् वल्लभे भानुदेवनृपतिरूपेऽर्थे नियन्त्रिते, व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोद्धयते। भानुदेवनृपतेः प्राकरणिकत्वात्तस्यैव राज्ञः, प्रशस्तिपरोऽयं श्लोकः।

परं भानुदेवनामानो बहवो नृपतय उत्कलस्य सिंहासनमलञ्चक्रुः। अतस्तेष्वन्यतमस्य भानुदेवस्य सान्धिविग्रहिकोऽयम्। तत एवानेन महापात्रोपाधिर्लब्धः। चन्द्रशेखरश्चतुर्दशसु भाषासु पण्डितः महाकविश्चासीत्। अनेन भाषार्णवो नाम भाषाप्रतिपादको ग्रन्थः कृतः। पुष्पमालाभिधाना नाटिका चास्यैव कृतिः। तत्कृतग्रन्थोक्ता बहवः श्लोकाः साहित्यदर्पणे उदाहरणत्वेनोपन्यस्ताः समुपलभ्यन्ते। विश्वनाथेन पितुरेवाष्टादशसु भाषासु पाण्डित्यं समासादितमिति "निजजनकसमधिगत साहित्यतत्वस्य" इति चन्द्रकलानाटिकान्तःपातिनी स्वकीयैवोक्तिः प्रतिपादयति। महापात्रोपाधिस्तु न तत्कुलपारम्पर्य्यक्रमागतः किन्तु लोकोत्तरपाण्डित्यबललब्धः

स एव उपाधिर्विश्वनाथस्य तदीयजनकस्य च। तस्य पितामहादयो दाससंज्ञका एवासन्। ते च नारायणदासचण्डीदासानन्तदासादयः। अतो विश्वनाथेनैव पिता महाअत्रोपाधिकत्वेन पितामहस्तद्भ्राता च नारायणचण्डयभिधानौ दासोपाधिकत्वेन संकीर्त्तिताः। अधुनाप्युत्कलप्रदेशे महापात्र इति राजप्रदत्तोपाधिभूषिता ब्राह्मणा दृश्यन्ते, परं तदुपाधिस्तु एतेषामिदानीं कौलिकः संजातः। साम्प्रतं सामन्तापरनामानो महापात्रोपाधिभूषिताः कौशिकदासा उत्कलप्रदेशे वर्त्तन्ते। परमयन्तु कपिञ्जलदास आसीत्। तदुक्तं तत्पुत्रेणानन्तदासेन

"**आसीत्कपिञ्जलकुलक्षीराकूपारचन्द्रमाः।**
**त्रिकलिङ्गाधिपधराधामर्धीसचिवः कृती॥** इति।

अधुनाप्येतस्मिन्प्रदेशे कपिञ्जलसगोत्रा दाससंज्ञका ब्राह्मणा वर्त्तन्ते।

विश्वनाथो निश्शङ्कभानुदेवनरपतेः सान्धिविग्रहिक आसीदिति तदीयचन्द्रकलानाटिकातः सुस्पष्टं विज्ञायते। तद्यथा

"आर्य्ये! पश्य पश्य—अयमिदानीं यवनपुरन्ध्रीवर्गनिर्गलदविरलनयनजलधारानिर्धौतगिरिकन्दरो निजभुजप्रतापतपनसमुत्सादितारातितिमिरनिकरश्चोलकोशललवङ्गट्टावङ्गकोचकाञ्चीगौडकालमच्छम्लेच्छनटकर्णाटप्रमुखराजराजीवराजिरजनीकरः सकलगुणरत्नरत्नाकरो निखिलानवद्यविद्यानिधिरर्थिकुलकल्पद्रुमः सभामध्यास्ते गजपतिर्महाराजाधिराजस्त्रिकलिङ्गभूमण्डलाखण्डलः श्रीमान् निश्शङ्कभानुदेवः

**आच्छन्ने धर्मधाम्नि प्रखरहयखुरक्षुण्णपृथ्वीरजोभिः**
**क्षिप्ते नक्षत्रलक्षे नभसि करिवरोद्धूतगङ्गापयोभिः।**
**ज्योत्स्नाभिः कीर्त्तिचन्द्रे धवलयति जगज्जैत्रयात्रावकाशे**
**गौडक्ष्मापालल्क्ष्मीर्व्यरचयदचिरादेव यस्याभिसारम्॥**

तस्मादस्माकमिदानीं चतुर्दशभाषाविलासिनीभुजङ्गमहाकविनिखिलानवद्यविद्यामहोदधिराजहंसमहापात्रश्रीचन्द्रशेखरतनूजन्मनः श्रीमन्नारायणचरणारविन्दमधुकरीभूतचेतसो निजजनकसमधिगतनिखिलसाहित्यतत्त्वस्य नाट्यवेददीक्षागुरोः सहृदयैकबान्धवस्य गजपतिमहाराजसान्धिविग्रहिकमहापात्रश्रीविश्वनाथकविराजस्य कृतिमभिनवां चन्द्रकलानामनाटिकामभिनेतुमुचितोऽयं समयः।" इति।

निश्शङ्कोपाधिको भानुदेवनृपतिर्विश्वनाथस्य परिपोषक आसीत्। तत्पुत्रेणानन्तदासेनापि निश्शङ्कभानुदेवनृपतेः प्रशस्तिवर्णनं कृतम्। तदुक्तं सप्तमपरिच्छेदे लोचने—यथा मम—

**प्रौढामाश्रय भीतिं मनसि सरभसं प्राप्य लोकापकीर्त्तिं**
**नैव स्त्रीका अप्यपेक्षाऽक्रियत पथि पथि प्राङ्गनासु प्रियासु।**
**श्रीमन्निश्शङ्कभानोः समरपरिसराद्भीमनिस्सीमसेना-**
**निश्शाणस्वानशङ्काकुलमपसरता पञ्चगौडेश्वरेण॥**

इति दशमपरिच्छेदे रूपकालङ्कारव्याख्यानेऽपि—

**अस्ति स्वस्त्ययनं श्रियः सुचरितं द्राघीयसः श्रेयसः**
**सौन्दर्यस्य रसायनं निरवधेः शीलस्य लीलायितम्।**
**विद्यानामधिदैवतं निरुपधेः शौर्यस्य विस्फूर्जितं**
**श्रीभानुस्त्रिकलिङ्गमङ्गलपदं गङ्गान्वये भूपतिः॥**

इति च विश्वनाथेन तत्पुत्रेणानन्तदासेन च नृपतिनिश्शङ्कभानुदेवस्य प्रतापो वर्णितः। तस्य गौडराजपराजयस्तूभाभ्यामेव प्रदर्शितः। कलिङ्गनृपतेर्निश्शङ्कभानुदेवस्य गौडेन्द्रविजयं विषयीकृत्य राजा कण्टकं शोधयति इत्ययमेव प्रवादस्तदानीं प्रादुरभूत्। अतस्तेन राज्ञः कीदृशी प्रसिद्धिरभूदितीत्यत एवावगम्यते। किञ्च रूढौ सारोपगौण्या लक्षणलक्षणाया उदाहरणत्वेन तदेव वाक्यमुपन्यस्तं विश्वनाथेन।

कलिङ्गाः साहसिकाः इत्यपि प्रवादो यवनराजविजयमूलक एव। एतदपि वाक्यं रूढौ लक्षणाया उदाहरणत्वेन तेनैवोपन्यस्तम्। तदानीं गौडदेशो यवननृपतिभिः शासितोऽभूत्। यवनानां कलिङ्गे प्रवेशो नासीत्। कलिङ्गस्तदा स्वाधीनानां हिन्दु-नृपतीनां छत्रच्छायाश्रित एवावर्त्तत। अतः कलिङ्गस्य स्वाधीनताहरणे यवननृपतीनां यत्नस्तु गरीयानासीत्। कलिङ्गनृपतिभिरपि बाहुबलेनैव स्वाधीनता रक्षिता। परं यवननृपतिभिः साकं कलिङ्गानां सर्वदैव विग्रहोऽभूत्, अतो गौडदेशशासितारो नृपतयः कण्टकत्वेनैव व्यपदिष्टाः कलिङ्गनृपतिभिः।

अतएव तद्विजेतुः कलिङ्गनृपतेर्निश्शङ्कभानुदेवस्य गौडेन्द्रविजयं विषयीकृत्य, 'राजा कण्टकं शोधयति' इत्ययमेव प्रवादस्तदानीं प्रादुरभूत्। इत्यत एव भानु-देवस्य यवनराजजयेन कीदृशी प्रतिष्ठाभूदिति सुस्पष्टं ज्ञायते।

किञ्च रूढौ सारोपगौण्या उदाहरणत्वेन तदेव वाक्यमुपन्यस्तं विश्वनाथेन। 'कलिङ्गाः साहसिकाः' इत्यपि प्रवादो यवनराजजयमूलक एव। एतदपि वाक्यं रूढौ लक्षणाया उदाहरणत्वेन तेनैवोपन्यस्तम्।

विश्वनाथेन नरसिंहस्य निश्शङ्कभानुदेवस्य चोभयो राज्ञोर्वर्णनात्स तयोः सान्धि-विग्रहिको महापात्र आसीत्।

द्वितीयनरसिंहस्य नृपतेः पुत्रो द्वितीयो भानुदेवः निश्शङ्कभानुनाम्नाऽपदिश्यते। द्वितीयनरसिंहस्तु १३०६ खीष्टाब्दे यावद् राजाभूत्। ततः परं तस्य पुत्रो द्वितीयो भानुदेवो राजाऽभूत्। उभयो राज्ञोर्बहूनि दानपत्रादीन्युपलभ्यन्ते। तदानीं सुलतान् अल्लाउदीन् महम्मदसाखिलाजि" यवननरपतिरासीत्। तदानीं नरसिंहेन नरपतिना गौडेन्द्रो यवनराजः पराजितः। चतुर्थनरसिंहनृपतेर्दानपत्राज्ज्ञायते यद् द्वितीय-भानुदेवेन गियासुद्दीन्यवनराजः पराजितः। यवनराजोऽयं 'गियास-उद्दीन्नामा तदानीं गौडेन्द्र आसीत्। अतो विश्वनाथेन तत्पुत्रेणाऽपि

निश्शङ्कभानुदेवस्य गौडविजयो यवनराजजयश्च दर्शितः । अयं द्वितीयो भानुदेवः पराक्रमेण निश्शङ्क आसीदिति तस्य निश्शङ्क इति सार्थक उपाधिरासीत् ।

अतो विश्वनाथस्त्रयोदशशताब्द्या अन्तिमे भागे द्वितीयनरसिंहनृपतेः चतुर्दश-शताब्द्याः प्रथमे भागे द्वितीयभानुदेवस्य निःशङ्कोपाधिकस्य च सान्धिविग्रहिकमहापात्र आसीदिति नास्ति शङ्कावकाशः ।

तस्य पित्रा चन्द्रशेखरेणापि भानुदेवस्य वर्णनं कृतम् ।

स तु प्रथमो भानुदेवः १२६४ शताब्द्याः परं बभूव । विश्वनाथस्य पितामहो नारायणदासः प्रथमनरसिंहस्य सभायामासीत् ।

स च १२६४ खीष्टाब्दं यावदुत्कलप्रदेशस्य नृपतिरासीत् ।

तेन सुप्रसिद्धं कारुकलोद्भासितं कोणार्के सूर्य्यमन्दिरं निर्मितम् । स तु लोके लाङ्गुलानरसिंह इति ख्यातः । तेनापि बहवो यवननृपतयः पराजिताः ।

एतेषां चतुर्णामुत्कलनरपतीनां प्रशस्तिर्वर्णिता वासुदेवरथसोमयाजिना गङ्ग-वंशानुचरितचम्पूकाव्ये यथा—

**तस्मादासीन्नृसिंहो नृपतिरतिकृती कोपनो यत्र दुष्टे**
**स्पष्टं लांगूलमाविर्भवति स च ततो नाम तत्पूर्वमाप ।**
**यस्यारीणां चरोक्रैर्महमभि सरुषो गाढमापीड्यमानं**
**मुष्टिद्वन्द्वं न्यमज्जत्किल भुजवलिनोट्टङ्कितं राजपट्टे ॥**
**श्रीशप्रासादबन्धाद्भुतकृतिकृतिनाऽनङ्गभीमेन राज्ञा**
**बद्धस्पर्द्धोऽतिमात्रोऽपरमवनितले कीर्त्तिसम्पत्तिलिप्सुः ।**
**कोणार्कक्षेत्रपृष्ठे विपुलतमपृथूच्छ्रायमुत्साहशाली**
**सौरं प्रासादमेकं व्यरचयदचिरान्नारसिंहोऽवतारः ॥**
**दृप्यद्दुर्जनसंघसंहृतिपटुः प्रत्यर्थिनिर्ग्रन्थने**
**दक्षो दक्षिणसत्तमो गुणिगणे सम्भूतसम्भावनः ।**
**पुत्रान् प्राणपणं पितेव परमप्रेम्णा प्रजाः पालयन्**
**क्ष्मापृष्ठेभसमाः समाः समतनोत्साम्राज्यमत्यूर्जितम् ॥**
**पादं कुर्वन् क्षमाभृत्कुलशिरसि वहन् मण्डलं रज्यमानं**
**दोःशुष्मोष्मातिरेकी दिशि दिशि जनयन् यः करोदश्चनानि ।**
**सोऽसौ भुक्त्वैव भोगानृतुनयनमितान् वत्सरान् साङ्कमासान्**
**चण्डिम्ना स्वेन पङ्कानिव रिपुकुभुजोऽशोषयद् वीरभानुः ॥**
**तस्माद्दुद्दामबाहुद्रविणविदलितानन्तसामन्तनारी-**
**शुम्भद्वक्षोजकुम्भप्रसृमरमकरीप्रोञ्छनप्रौढलीलः ।**
**लिम्पन् दिक्चक्रवालं धवलतरयशश्चन्दनाम्भश्छटाभि-**
**र्भूपृष्ठं तातपादैः समसमयमशाद् भीमपूर्वो नृसिंहः ॥**

पत्तं कञ्चन नेक्षते रणमुखे चापं च नापेक्षते
नैवाशंसति दंशनं वितनुते सेनारसे नादरम् ।
उद्यद्दुर्दमदोर्द्वयीस्फुटतरास्फोटावधूतद्विषो
यस्यासीदुपयोगशून्यमखिलं साङ्ग्रामिकं वस्तु यत् ॥
तस्मान्निःशङ्कभानुः परमुदयमधाद् दानशौण्डाधिकारे
यश्चासीदग्रगण्यो गुणिगणगणने यं पुरो भावयन्ति ।
यद्दोर्दण्डप्रतापादवनितलमभूत्सर्वथा निष्प्रकम्पं
गायत्रीवर्णसंख्याः स जगति शरदश्चक्रवर्त्तित्वमाच्छैत् ॥

श्रीहर्षस्य नैषधचरिताद्बहवः श्लोकाः, प्रसन्नराघवरचयितुर्जयदेवस्य 'कदली कदली' इत्यादिश्लोकः, गीतगोविन्दकारस्य जयदेवस्यापि 'हृदि बिसलताहारो नायं भुजङ्गमनायकः' इति श्लोकोऽप्येतेनोदाहरणत्वेन प्रदर्शिताः । एते सर्वेऽपि कवयो द्वादशशताब्द्यामेवासन् । पञ्चदशशताब्द्याः प्रारम्भकाले सम्भूतेन कुमारस्वामिना नामोल्लेखनपूर्वकं साहित्यदर्पणात्पाठ उद्धृतः । अतो विश्वनाथकविराजश्चतुर्दशशताब्द्यामासीदिति नास्त्यत्र शङ्कालेशोऽपि । 'यावत्प्रसन्नेन्दुनिभानना' इत्यन्तिमश्लोकस्य 'श्रीमन्नारायणचरणारविन्दमधुव्रत' इत्यस्य च दर्शनाद् विश्वनाथकविराजं वैष्णव इति केचित् सम्भावयन्ति । परमसौ यथार्थतो न सम्प्रदायभुक्तो वैष्णवः । उत्कले ब्राह्मणाः प्रायशः पञ्चानां देवानामुपासकाः । विश्वनाथकविराजोऽपि तथैवासीत् ।

अतस्तेन 'मूर्धव्याधूयमान' इति श्लोके शिवस्य स्तुतिः कृता । चन्द्रकलारम्भेऽपि—

जीयासुः शफरायमाणशशभृल्लेखास्खलत्कैरव-
व्रातोद्भ्रान्तमधुव्रतव्रजमिषादुत्क्षिप्तनीलांशुकाः ।
बिभ्रत्यो गिरिजाकटाक्षपतनादादित्यजासङ्गमं
नृत्यद्भर्गकिरीटकोटिचपलाः स्वर्गापगावीचयः ॥

इत्यस्मिन् श्लोके शिवस्य वर्णनं कृतम् ।

विश्वनाथकविराजादर्वाचीना बहवोऽलङ्कारनिबन्धकारास्तद् व्याख्यातारश्च दृश्यन्ते । तेषु तावत्केशवमिश्रः अप्पय्यदीक्षितः जगन्नाथश्च प्रधानाः ।

केशवमिश्रस्तु माणिक्यचन्द्रनृपतेरनुरोधेनैव अलङ्कारशेखराख्यं ग्रन्थं प्रणीतवान् । अयं केशवमिश्रः शौद्धोदनिकृतानि कारिकारूपाणि सूत्राणि मूलत्वेनोपसंगृह्य तदुपरि वृत्तिं निर्बबन्ध । तदुक्तमलङ्कारशेखरे तेनैव—'अलङ्कारविद्यासूत्रकारो भगवान् शौद्धोदनिः परमकारुणिकः स्वशास्त्रे प्रवर्तयिष्यन् प्रथमं काव्यस्वरूपमाह' इति ।

माणिक्यचन्द्रस्तावत् १५६३ ख्रीष्टाब्दे कलिङ्गदेशे नृपतिरासीत् । अतः षोडशशताब्द्या अन्तिमभागे रचितोऽयं ग्रन्थः केशवमिश्रेण । अप्पय्यदीक्षितेन संस्कृतभाषायां परःशता ग्रन्था विरचिताः । तेन वृत्तिवार्त्तिकं, कुवलयानन्दः,

चित्रमीमांसा चेति निबन्धत्रयमलङ्कारे कृतम्, तेन कुवलयानन्दे वेङ्कटपतिर्वर्णितः। विजयनगरस्य प्रथमवेङ्कटपतिना १६०१ खीष्टाब्दे प्रदत्तं दानपत्रमुपलभ्यते। अतोऽयं दाक्षिणात्यः षोडशशताब्द्याः प्रान्तभागे सप्तदशशताब्द्याः प्रथमभागे चासीत्। अप्पय्यदीक्षितस्य कनीयान् भ्राता अच्चादीक्षितस्य नप्ता नीलकण्ठदीक्षितः ४७३८ गतकलिकाले १६३७—१६३८ खीष्टाब्दे नीलकण्ठविजयकाव्यमरचयत्। एतेनापि अप्पय्यदीक्षितः सप्तदशशताब्द्याः प्रथमार्द्धे आसीदिति प्रतीयते। अप्पय्यदीक्षितेन सिद्धान्तलेशाख्यग्रन्थसमाप्ताविदं लिखितम्।

**विद्वद्गुरोर्विश्वजिदध्वरस्य श्रीसर्वतोमुखमहाजितयाजिसूनोः।**
**श्रीरङ्गराजमखिनः श्रितचन्द्रमौलिरप्पय्यदीक्षित इति प्रथितस्तनूजः॥**

**तन्त्राण्यधीत्य सकलानि सदावदात-**
**व्याख्यानकौशलकलाविशदीकृतानि।**
**आम्नाय मूलमनुरुध्य च सम्प्रदायं**
**सिद्धान्तभेदलवसंग्रहमित्यकार्षीत्॥**

सर्वतन्त्रस्वतन्त्रैस्तैरेव केषाञ्चित्स्वकृतानां ग्रन्थानां नामानि प्रदत्तानि।

**श्रीवीरवेङ्कटपतिक्षोणीपालस्य साज्ञतः।**
**कृतः कुवलयानन्दश्चित्रमीमांसया सह॥**
**अभिधालक्षणावृत्तिर्विवृत्तिर्वृत्तिवार्त्तिकम्।**
**यावदाभ्युदयाख्याया व्याख्यानं च कृतं कृतेः॥**
**नामसंग्रहमाला च व्याख्या तस्याश्च विस्तृता।**
**काञ्चीवरदराजस्य दिव्यविग्रहवर्णनः॥**
**व्याख्या तस्य च संक्लृप्ता नातिसंक्षेपविस्तरा।**
**सर्वपापप्रशमनी श्रीकृष्णध्यानपद्धतिः॥**
**सर्वदुर्गतितरणी दुर्गाचन्द्रकलास्तुतिः।**
**आदित्यस्तोत्ररत्नं च तद् व्याख्यानं च विस्तृतम्॥**
**नानापद्यात्मकचतुर्मतसारार्थसंग्रहः।**
**न्यायमुक्तावली तद्वन्माध्वाचार्य्यमतानुगा॥**
**मयूखमालिका हृद्या लक्ष्मणाचार्य्यवर्त्मना।**
**श्रीकण्ठाचार्य्यपद्धत्या निर्मिता मणिमालिका॥**
**शङ्कराचार्य्यदृष्ट्या च प्रक्लृप्ता नयमञ्जरी।**
**न्यायमुक्तावलीव्याख्या नातिविस्तरसंग्रहा॥**
**अद्वैतशास्त्रसिद्धान्तलेशसंग्रहनामकः।**
**न्यायरक्षामणिः सर्वसूत्रतात्पर्य्यवर्णकः॥**
**तथा परिमलः कल्पतरुगूढार्थवर्णकः।**

श्रीकण्ठभाष्यव्याख्या च शिवार्कमणिदीपिका ॥
श्रीशिवानन्दलहरी शिवाद्वैतविनिर्णयः ।
रत्नत्रयपरीक्षा च पञ्चरत्नस्तवस्तथा ॥
तथा शिखरिणीमाला ब्रह्मतर्कस्तवादयः ।
शिवतत्त्वविवेकश्च शिवकर्णामृतं तथा ॥
शिवार्चनप्रकाशार्थचन्द्रिका बालचन्द्रिका ।
मीमांसायाश्चित्रपुटस्तथा विधिरसायनम् ॥
मीमांसान्यायनिगूढ उपक्रमपराक्रमः ।
एते चान्ये च बहवः प्रबन्धाः प्राग्विनिर्मिताः ॥

प्राणप्रयाणकालेऽपि—

चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं
　　सुताश्च विनयोज्ज्वलाः सुकृतयश्च काश्चित् कृताः ।
वयांसि मम सप्ततेरुपरि नैव भोगस्पृहा
　　न किञ्चिदहमर्थये शिवपदं दिदृक्षे परम् ॥

आभाति हाटकसभानटपादपद्म-
ज्योतिर्मयो मनसि मे तरुणारुणोऽयम् ।

शिवरूपमेवं चिन्तयन् स्वर्गं प्रयातः । अपरिसमाप्तस्य श्लोकस्य पूरणं स्वपुत्रेणैवं कृतम् ।

नूनं जरामरणघोरपिशाचकीर्णा ।
संसारमोहरजनी विरतिं प्रयाता ॥

रसगङ्गाधरो जगन्नाथस्य । नागेशभट्टप्रणीतया व्याख्यया समेतोऽयं ग्रन्थः प्रकाशं प्रापितः । तेनात्र स्वीयान्युदाहरणानि उपन्यस्तानि । तदुक्तं तेनैव

निर्माय नूतनमुदाहरणानुरूपं
　　काव्यं मयात्र विहितं न परस्य किञ्चित् ।
किं सेव्यते सुमनसां मनसापि गन्धः
　　कस्तूरिकाजनकशक्तिभृता मृगेण ॥

उत्तरालङ्करणं यावद् ग्रन्थोऽयं रचितः । स तु तैलङ्गीय आसीत् ।

रसगङ्गाधरप्रारम्भे—

पाषाणादपि पीयूषं स्पन्दते यस्य लीलया ।
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम् ॥

इत्यस्मिन् श्लोके पित्रोर्नाम स्वेनैव निर्दिष्टम् ।

श्रीमज् ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।

देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं
शेषाङ्कप्राप्तशेषामलभणितिरभूत्सर्वविद्याधरो यः ॥

अयं हि जगन्नाथः रसगङ्गाधरमनोरमाकुचमर्दनगङ्गालहरीसुधालहर्यमृतलहरी-करुणालहरीलक्ष्मीलहरीयमुनावर्णनचम्पूरतिमन्मथनाटकवसुमतीपरिणयनाटकाश्वधाटीकाव्यप्राणाभरणकाव्यचित्रमीमांसाखण्डनजगदाभरणकाव्यासफविलासभामिनीविलासादीनां कर्ता। भामिनीविलासे तेनोक्तम्—

दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः।

तत एव दिल्लीसम्राजः साजाहानाभिधानात्तेन पण्डितराजोपाधिर्लब्धः। तेन जगदाभरणे साजाहानपुत्रस्य दाराभिधानस्य प्रशस्तिर्वर्णिता। तस्य सभासदः "नवाब आसफखां" इत्याह्वस्य प्रशस्तिः "आसफ् विलासे" वर्णिता। १६२८ खीष्टाब्दतः १६५७ खीष्टाब्दं यावत्साजाहानेन सिंहासनमधिष्ठितम्। जगन्नाथस्तु तदानीन्तन एव। अतोऽयं सप्तदशमध्यभाग आसीत्।

अप्पय्यदीक्षितस्यान्तेवासिना सिद्धान्तकौमुदीकारेण भट्टोजीदीक्षितेन साकं शास्त्रविचारकाले म्लेच्छ इति सम्बोधितः क्रुद्धो जगन्नाथो म्लेच्छवत्तव मनोरमायाः ( सिद्धान्तकौमुदीव्याख्यायाः ) कुचमर्दनमहं करोमीति प्रतिश्रुतवान्। तदर्थमेव तेन मनोरमाकुचमर्दनं विरचितम्। यथा—

दप्यद्द्राविडदुष्टदुर्ग्रहवशान् म्लिष्टं गुरुद्रोहिणा
यन्म्लेच्छेति वचोऽविचिन्त्य सदसि प्रौढेऽपि भट्टोजिना।
तत् सत्यापितमेव धैर्यनिधिना यत् सोऽप्यमृद्नात्कुचं
निर्बध्यास्य मनोरमामवशयन्नप्यालपयाद्यान्स्थितान् ॥

ततः प्रभृति भट्टोजिदीक्षितस्य गुरोरप्पय्यदीक्षितस्योपरि क्रुद्धेन जगन्नाथेन तन्मतखण्डनार्थं चित्रमीमांसाखण्डनादिकं व्यरचि। तदुक्तम्

अप्पय्यदीक्षितदवानलदग्धशेषं
साहित्यमङ्कुरयते सरसैर्निबन्धैः।
सूक्ष्मं विभाव्य मयका समुदीरिताना-
मप्पय्यदीक्षिताकृताविह दूषणानाम् ॥

निर्मत्सरो यदि समुद्धरणं विदध्यात्
तस्याहमुज्ज्वलमतेश्चरणौ वहामि।

दिल्लीनरेन्द्रकृपापात्रतां प्राप्तस्य तारुण्यातिमिरतिरस्कृतविवेकालोकस्य जगन्नाथपण्डितस्य बभूव कस्याञ्चन यवनयुवत्यामासक्तिः। सा च कियत्कालानन्तरं पञ्चत्वं

गता । ततस्तद्विरहातुरः पण्डितो दिल्लीं परित्यज्य पण्डितैरनादृतो गङ्गाप्रवाहे झम्पमदाद् इत्याद्या नानाविधा जनश्रुतयः श्रूयन्ते । परं तत्र तादृशं सुदृढं प्रमाणं नास्तीति ता उपेक्ष्यन्ते एवास्माभिः ।

अतः परतो न कोऽप्युल्लेखयोग्यो निबन्धकार आसीदित्यत्रैव परिसमाप्यते प्राचीनानां विवृतिः ।

सर्वेष्वलङ्कारनिबन्धेषु ध्वन्यालोककाव्यप्रकाशसाहित्यदर्पणरसगङ्गाधरा एव नायकायन्ते । तत्रापि ध्वन्यालोकस्य ध्वनिस्थापनार्थमेव प्रवृत्तत्वान्न तत्र दोषगुणालङ्काराः प्रपञ्चिताः । काव्यप्रकाशोऽतीव दुरूहो विदुषामपि दुर्बोधतां गतः । नैयायिकसरणिमनुसरन् रसगङ्गाधरोऽतिसूक्ष्मविचारणचर्चायां प्रवृत्तत्वाद् दुरधिगमो भीषयते सर्वान् । परं साहित्यदर्पणोऽतीव सुगमः । ध्वन्यालोककाव्यप्रकाशादिषु प्रतिपादितानामर्थानां प्रतिपादकेऽप्यस्मिन् साहित्यदर्पणे बहुषु स्थलेषु नवीनत्वमनुभूयते । अत्रैव साहित्यराज्यसम्राजो मम्मटस्य मतखण्डनेन रसस्य काव्यात्मत्वं प्रतिपादितम् । इतः प्राचीनेषु भरतशास्त्रदशरूपकभिन्नेष्वलङ्कारशास्त्रेषु दृश्यकाव्यस्य चर्चापि नासीत् । परमत्र दृश्यकाव्यं तथा नायकनायकादिकमपि विस्तरेणैव प्रपञ्चितम् । काव्यप्रकाशवत् साहित्यदर्पणोपि कारिकावृत्त्युदाहृतिभिस्त्रिधा विभक्तो निरूपितः । तत्र कारिकावृत्तयश्च स्वीया एव । उदाहृतयस्तु स्वीयाः परकीयाश्च । अत्र प्रमेयाणामुपपादनं प्रायेण प्राञ्जलमेव । यत्तु क्वचिद् गहनं तद्विषयनिबन्धमूलकं । नतु लेखकाठिन्यमूलकम् । साहित्यशास्त्रस्य दुरधिगमा दुर्बोधाश्चापि विषया अत्र तथा प्राञ्जलं प्रकटीकृता यथा सुकुमारमतीनामपि विद्यार्थिनां सुबोधाः सुगमाश्च भवेयुः । अतोऽलङ्कारशास्त्रे व्युत्पित्सूनामेकमेवालम्बनमेतच्छास्त्रम् । ग्रन्थावसाने कविनापि तथोक्तम्—

**साहित्यदर्पणममुं सुधियो विलोक्य ।**
**साहित्यतत्त्वमखिलं सुखमेव वित्त ॥**

तस्य पुत्रेणानन्तदासेन लोचनारम्भे एतदेवोक्तम्—

**आसीत् कपिञ्जलकुलक्षीराकूपारचन्द्रमाः**
**त्रिकलिङ्गाधिपधराधामधीसाचिवः कृती ।**
**अशेषभाषारमणीभुजङ्गः साहित्यविद्यार्णवकर्णधारः ।**
**ध्वन्यध्वनिप्रौढधियां पुरोगः श्रीविश्वनाथः कविचक्रवर्ती ॥**
**स्वल्पाक्षरः सुबोधार्थः प्रध्वस्ताशेषदूषणः ।**
**साहित्यदर्पणो नाम ग्रन्थस्तेन विनिर्मितः ॥**
**पारं साहित्यविद्याब्धेर्गन्तुं वाञ्छन्ति ये क्षितौ ।**
**कृतिरेषा तरिस्तेषां विश्वनाथमहाकवेः ॥**
**श्रव्याभिनेयालङ्कारतत्त्वं सत्कविसम्मतम् ।**
**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥**

सकलप्रयोजनमौलिभूतः समनन्तरमेव रसास्वादसमुद्भूत आनन्द एव काव्यस्य प्रयोजनम् । तत्र प्रयोजनं नाट्यशास्त्रे भरतेन सम्यक् प्रतिपादितम् । तथाहि–

**वेदविद्येतिहासानामर्थानां परिकल्पनम् ।**
**विनोदकरणं लोके नाट्यमेतद् भविष्यति ॥** ( नाट्यशास्त्रे)

"तथापि प्रीतिरेव प्रधानम् । प्राधान्येन आनन्द एवोक्तः, प्रीत्यात्मा च रसस्तदेव नाट्यम् । नाट्यमेव च वेद इत्यस्मदुपाध्यायः" ( ध्वन्यालोकलोचने ) अत एवानन्दः काव्यस्य मुख्यं फलम् । अवान्तरप्रयोजनानि तु ग्रन्थकारैस्तत्तत्स्थलेषु प्रतिपादितानि । साहित्यदर्पणेऽपि चतुर्वर्गफलावाप्त्यादिकं तत्फलमिति सम्यक् सिद्धान्तितम् । काव्यप्रयोजने कस्यापि निबन्धकारस्य विमतिर्नैव दृश्यते । सर्वेषामेवालङ्कारशास्त्राणां काव्यप्रतिपाद्यमिति तदुपयोगितया सर्वत्रैव दोषगुणालङ्काराः निरूपिताः। रसादयस्तु क्वचिन्निरूपिताः क्वचिच्च न । तथाहि वाग्भटालङ्कारादौ रसो निरूपितः वामनवृत्त्यादौ तु न । वामनवृत्तौ शब्दशुद्धिर्निरूपिता परं नान्यत्रालङ्कारशास्त्रे । वाग्भटालङ्कारे काव्यप्रकरणप्रणाली लिखिता, नान्यत्र । चन्द्रालोके काव्यधर्मो न्यरूपि, नान्यत्र । काव्यप्रकाशादौ अभिधालक्षणाव्यञ्जनावृत्तयो निरूपिताः,नतु वाग्भटालङ्कारादौ। साहित्यदर्पणे दृश्यकाव्यादिकं न्यरूपि, नान्यत्र कुत्रचित् । दोषगुणालङ्काराश्च सर्व एव न सर्वत्र समानाः । वामनभोजादिमते अलङ्कारदोषा नैव स्वतन्त्राः वर्त्तन्ते । मम्मटादिमते तद्वैपरीत्यमेव । दण्डिमते दोषा दशैव । भोजमते पदवाक्यवाक्यार्थगता दोषाः प्रत्येकं षोडश ।

वामनमते गुणाः शब्दगता अर्थगताश्च प्रत्येकं दश । भोजमते चतुर्विंशतिः । एवं दोषा भावरूपा वैशेषिकनामानो बहवः ।

मम्मटविश्वनाथादिमते न शब्दार्थगता गुणाः किन्तु रसगतास्त्रय एव । दण्डिभोजादिमते प्रहेलिकादयोऽलङ्काराः । न वक्रोक्त्यादयः । मम्मटविश्वनाथादिमते तु तद्वैपरीत्यमेव ।

काव्यलक्षणे निबन्धकाराणां विप्रतिपत्तिर्दृश्यते । यथैव येन काव्यस्यात्मा निरूपितस्तथैव तेन काव्यस्य लक्षणं कृतम् । तेषु कानिचिल्लक्षणानि केवलं काव्यस्य स्वरूपवर्णनपराण्येव । केषाञ्चिदालङ्कारिकाणां काव्यलक्षणानि प्रदर्श्यन्तेऽत्र ।

**(१) शब्दार्थौ सहितौ काव्यम् ।** (भामहः)
**(२) ननु शब्दार्थौ काव्यम् ।** (रुद्रटः)
**(३) तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ।**(मम्मटः)
**(४) शब्दार्थौ निर्दोषौ प्रायः सालङ्कारौ काव्यम् ।** (वाग्भटः)
**(५) अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम् ।** (हेमचन्द्रः)

**(६) शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ।** (दण्डी)
**(७) इष्टार्थव्यवच्छिन्ना पदावली काव्यम् ।** (अग्निपुराणम्)
**(८) वाक्यं रसात्मकं काव्यम् ।** (विश्वनाथकविराजः)
**(९) निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।**
**रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिश्च विन्दति ॥**
**(१०) काव्यं रसादिमद्वाक्यं श्रुतम् ।** ( भोजः )
**(११) सुखविशेषकृत्तत् ।** ( शौद्धोदनिः )
**रमणीयार्थप्रतिपादकः शब्दः काव्यम् ॥** ( जगन्नाथः )

इत एव काव्यलक्षणे आलङ्कारिकाणां मतानि विभिन्नानीति स्फुटं प्रतीयते। अलङ्कारशास्त्रेऽपि विभिन्नानि मतानि वर्त्तन्ते। तेषु पञ्चमतानि समुद्रबन्धे प्रदत्तानि ।

यथा—

इह विशिष्टौ शब्दार्थौ काव्यम् । तयोश्च वैशिष्ट्यं धर्ममुखेन व्यापारमुखेन व्यङ्ग्यमुखेन चेति त्रयः पक्षाः । आद्येप्यलङ्कारतो गुणतो वेति द्वैविध्यम् । इह पञ्चसु पक्षेषु आद्य उद्भटादिभिः, द्वितीयो वामनेन, तृतीयो वक्रोक्तिजीवितकारेण, चतुर्थो भट्टनायकेन, पञ्चमश्चानन्दवर्द्धनेन स्वीकृतः ।

अत्र रसस्योल्लेखो नास्ति ध्वनेरन्तर्भूतत्वात्तस्य पञ्चमान्तःपातित्वमेव स्वतः समापतति । जयरथेन विमर्शिन्यां द्वादशध्वनेः प्रतिपक्षा दर्शिताः । यथा—

"तात्पर्यशक्तिरभिधालक्षणानुमिती द्विधा ।
अर्थापत्तिः क्वचित्तन्त्रं समासोक्त्याद्यलङ्कृतिः ॥
रसस्य कार्यता योगो व्यापारान्तरबोधनम् ।
द्वादशेत्थं ध्वनेरस्य स्थिता विप्रतिपत्तयः ॥"

तदेतत्सर्वमालङ्कारिकाणां मतमलङ्कारसर्वस्वे प्रदर्शितम् । यथा–

'इह हि तावद् भामहोद्भटप्रभृतयश्चिरन्तनालङ्कारिकाः प्रतीयमानमर्थं वाच्योपस्कारतयाऽलङ्कारपक्षनिक्षिप्तं मन्यन्ते । तथाहि पर्य्यायोक्ताप्रस्तुतप्रशंसासमासोक्त्याक्षेपव्याजस्तुत्युपमेयोपमानन्वयादौ वस्तुमात्रं वाच्योपस्कारकत्वेन 'स्वसिद्धये-पराक्षेपः परार्थं स्वसमर्पणम्' इति यथायोगं द्विविधया भङ्ग्या प्रतिपादितं तैः । रुद्रटेन तु भावालङ्कारो द्विधैवोक्तः । रूपकदीपकापह्नुतितुल्ययोगितानामुपमाद्यलङ्कारे वाच्योपस्कारत्वेनोक्तिः । उत्प्रेक्षा तु स्वयमेव प्रतीयमाना कथिता । रसवत्प्रेयःप्रभृतौ रसवदादिर्वाच्यशोभाहेतुत्वेनोक्तेः । तदित्थं त्रिविधमपि प्रतीयमानमलङ्कारतया ख्यापितमेव । वामनेन तु सादृश्यनिबन्धनाया लक्षणाया वक्रोक्त्यलङ्कारं ब्रुवता कश्चिद्

ध्वनिभेदोऽलङ्कारतयैवोक्तः। केवलं गुणविशिष्टपदरचनात्मिका रीतिः काव्यात्मत्वेनोक्ता। उद्भटादिभिस्तु गुणालङ्काराणां प्रायशः साम्यमेव सूचितम्। विषयमात्रेण भेदप्रतिपादनात्संघटनाधर्मत्वेन चेष्टः। तदेवमलङ्कारा एव काव्ये प्रधानमिति प्राच्यानां मतम्।

वक्रोक्तिजीवितकारः पुनर्वैदग्ध्यभङ्गिभणितिस्वभावां बहुविधां वक्रोक्तिमेव प्राधान्यात्काव्यजीवितमुक्तवान्, व्यापारस्य प्राधान्यञ्च काव्यस्य प्रतिपेदे। केवलमुक्तिवैचित्र्यजीवितं काव्यं न व्यङ्ग्यजीवितमिति तदीयं दर्शनं व्यवस्थितम्। भट्टनायकेन तु व्यङ्ग्यव्यापारस्य प्रौढोक्त्याऽभ्युपगतस्य *काव्यांशत्वं ब्रुवता न्यग्भावितशब्दार्थस्वरूपस्य व्यापारस्यैव प्राधान्यमुक्तम्। तत्राप्यभिधाभावकत्वलक्षणव्यापारद्वयोत्तीर्णो रसचर्वणात्मा भोगापरपर्यायो व्यापारः प्राधान्येन विश्रान्तिधामतयाऽङ्गीकृतः। ध्वनिकारः पुनरभिधातात्पर्य्यलक्षणाख्यव्यापारत्रयोत्तीर्णस्य ध्वननद्योतनादिशब्दाभिधेयस्य व्यञ्जनव्यापारस्यावश्याभ्युपगमत्वाद् व्यापारस्य च वाक्यार्थत्वाभावाद् वाक्यार्थस्यैव च व्यङ्ग्यरूपस्य गुणालङ्कारोपस्कर्त्तव्यत्वेन प्राधान्याद् विश्रान्तिधामत्वाद् आत्मत्वं सिद्धान्तितवान्। व्यापारस्य विषयमुखेन स्वरूपप्रतिलम्भात्तत्प्राधान्येन प्राधान्यात् स्वरूपेण विदितत्वाभावाद् विषयस्यैव समग्रभरसहिष्णुत्वम्। तस्माद् विषय एव व्यङ्ग्यनामा जीवितत्वेन वक्तव्यः, यस्य गुणालङ्कारचारुत्वप्रतिग्रहसाम्राज्यम्। रसादयस्तु जीवितभूता नालङ्कारत्वेन वाच्याः।

अलङ्काराणामुपस्कारकत्वाद् रसानां च प्राधान्येनोपस्कार्यत्वाद् व्यङ्ग्य एव वाक्यार्थीभूतः काव्यजीवितम् इत्येष पक्षो वाक्यविदां सहृदयानामावर्जकः। व्यञ्जनव्यापारस्य सर्वैरनपह्नुतत्वात्तदाश्रयेण च पक्षान्तरस्याप्रतिष्ठानात्। यत्तु व्यक्तिविवेककारो वाच्यस्य व्यङ्ग्यं प्रति लिङ्गतया व्यञ्जनस्यानुमानान्तर्भावमाख्यत्तद्वाच्यस्य प्रतीयमानेन सह तादात्म्यतदुत्पत्त्यभावादविचारिताभिधानम्। तदेतत्कुशाग्रधिषणैः क्षोदनीयमतिगहनमिति नेह प्रतन्यते। इत्येवं विभिन्नानि प्राचीनानां मतानि निरस्य काव्यस्यात्मा ध्वनिरिति व्यवस्थापितं ध्वनिकारेण। परं कविराजेन विश्वनाथेन ध्वनिवादमवालम्ब्य ध्वनेः प्रकारविशेषस्य रसस्यात्मत्वं प्राधान्यं च काव्ये निर्णीतम्।

प्रथममेव भरतेन नाट्यशास्त्रे रसस्य प्राधान्यमात्मत्वं च प्रतिपादितम्। "वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्" इत्यनेनाग्निपुराणेऽपि काव्ये रसस्यात्मत्वमङ्गीकृतम्। "रस आत्मा" इत्यनेन काव्यमीमांसायां राजशेखरेण स्वीकृतम्।

"अलङ्कारास्तु शोभायै रस आत्मा परं मनः।" इत्यादिना शौद्धोदनिनापि रसस्यात्मत्वमङ्गीकृतम्। प्राचीनैरलङ्कारमार्गप्रवर्त्तकैरपि काव्ये रसस्य प्राधान्यमुपवर्णितम्। यथा—

"युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक् ।" इति महाकाव्यलक्षणे भामहः ।

"कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति ।' इति दण्डी । "तस्मात्कर्त्तव्यं यत्नेन महीयसा रसैर्युतमि"ति रुद्रटः । तेन रस एव वस्तुत आत्मा । वस्त्वलङ्कार-ध्वनी तु सर्वथा रसं प्रति पर्य्यवस्येत इति वाच्यादुत्कृष्टौ तौ इत्यभिप्रायेण ध्वनिः काव्यस्यात्मा इति सामान्येनोक्तम् ।

'प्राथमिकानामभ्यासार्थिनां यदि चित्रेण व्यवहारः । प्राप्तपरिणतीनां तु ध्वनिरेव काव्यमिति स्थितमेतत् ।' (ध्वन्यालोकलोचने)

अतो बहुभिरालङ्कारिकैः काव्ये रसस्य प्राधान्यमङ्गीकृतं, परं न केनापि प्राचीनालङ्कारिकेण काव्ये रसस्य प्राधान्यं प्रतिपादितम् । विश्वनाथकविराजेन साहित्य-दर्पणे प्रथममेव ध्वनेः प्रकारविशेषस्य रसस्य काव्ये प्राधान्यमात्मत्वं च व्यवस्थापितम् ।

"एतच्च चित्रं कवीनां विशृङ्खलागिरां रसादितात्पर्य्यमपेक्ष्यैव काव्यप्रवृत्तिदर्शनादस्माभिः परिकल्पितम् । इदानीन्तनानां तु न्याय्ये काव्यनयव्यवस्थापने क्रियमाणे नास्त्येव ध्वनिव्यतिरिक्तः काव्यप्रकारः । यतः परिपाकवतां कवीनां रसादि-तात्पर्य्यविरहे व्यापार एव न शोभते ।" ( ध्वन्यालोकः )

अतो विश्वनाथेन कविराजेन रसादितात्पर्यविरहात्काव्यस्य भेदोऽपि चित्राख्यो नैव परिकल्पितः । इयांस्तु विशेषो ग्रन्थस्यास्य ।

यद्यपि विश्वनाथकविराजस्य नाखिलाः प्रबन्धा अस्माभिरवलोकितास्तथापि विद्यते एतदेव प्रबन्धरत्नं यदतिभीषणेन समयपरिवर्त्तनक्रकचेन विदारितप्रायायामपि संस्कृतभाषाकल्पलतिकायामेकमात्रमप्यवशिष्टं समुद्भासयत्यशेषान् साहित्यानुशासनप्रबन्धान्, प्रत्याययति बुद्धिवैशद्यं सान्धिविग्रहिकमहापात्रस्य श्रीविश्वनाथकविराजस्यानुबोधयति च सौभाग्यं संस्कृतभाषायाः, प्रकाममानन्दयति च तदेकतानमनसः सुविमलयशसः कविप्रवरान् । यच्चैकमप्यनवरतं हृदयसन्निहितं संस्कृतभाषायां सम्यक् प्रवेशयेच्छात्रं प्रापयेत्प्रावीण्यं प्रकृतकठिनायां साहित्यचर्चायाम् ।

ततः किलास्य पूर्वजानामप्रतिहता पाण्डित्यशक्तिरप्रतिमा प्रतिभा निरुपमा च काव्यसम्पदनुमातुं शक्या । अयं किलात्मनः "कविराजः सान्धिविग्राहिकमहापात्र"श्चेत्युपाधिद्वयं प्रयुङ्क्ते । स चोपाधिरस्य काव्यमवलोक्य सुप्रीतमनसा त्रिकालिङ्गेश्वरेण प्रादायीति निश्चीयते । न किल कोऽप्यात्मनः स्वयमुपाधिं प्रयोक्तुं वाञ्छति । विशिष्टतरप्रदत्तस्यैव तस्य प्रयोगः प्रशंसास्पदत्वमवगमयति । अस्य पितुरपि सान्धिविग्रहिकमहापात्रोपाधिः परिदृश्यते ।

लब्धकविराजोपाधिस्त्वयं विश्वनाथो नूनमसामान्यः कविः । अस्मादेकस्मादेव ग्रन्थादस्य कविराजस्य व्याकरणे तथा न्यायशास्त्रे च सम्यधिकः परिचय आसीदित्यनुमीयते ।

कविशिरोमणिना ह्येतेन साहित्यदर्पणस्य पञ्चमपरिच्छेदेऽनुमान एव व्यञ्जना-

वृत्तिमन्तर्भावयतां नैयायिकानां मतमनूद्य सम्यक् खण्डितम्। परिनिष्णाता मतिरस्य वेदान्तशास्त्रेऽपीति साहित्यदर्पणे तत्र तत्रोपन्यस्तैर्वेदान्तप्रबन्धवचनैरवगम्यते। यथा वेदान्तादिदर्शनेषु कविराजस्यास्य प्रवेशस्ततोऽपि समधिको नाट्यादिषु कलाशास्त्रेषु। तत्र साहित्यदर्पणमेव प्रमाणम्। तत्र च षष्ठपरिच्छेदे दृश्यकाव्यस्य लक्षणानि तदुपयोगीनि नाट्यालङ्कारादीनि सम्यक् निरूपितानि। यत्तु कैश्चित् साहित्यदर्पणे षष्ठः परिच्छेदः श्रीधनञ्जयप्रणीतस्य दशरूपकस्य संक्षिप्तोऽनुवाद इत्यभिधीयते, तदसत्। दशरूपकेऽप्रतिपादितानामपि विषयाणां तत्र स्फुटं परिदृश्यमानत्वात्। तथाहि उपरूपकलक्षणानि दशरूपकेऽवर्त्तमानानि तत्र सप्रपञ्चं निरूपितानि वर्त्तन्ते। किञ्च तत्रापि धनञ्जयस्य मतं बहुशः खण्डितम्। नान्दीलक्षणे चैतिहासिकरीत्या भरतमुनेराधुनिकानां च मतं सम्यक् परिदर्शितम्।

अतोऽनेन "नाट्यशास्त्रदीक्षागुरुः" इति पदवी समासादितेति चन्द्रकलाया उपलभ्यते। अलङ्कारशास्त्रे त्वस्य मतिः परामेव काष्ठामापन्ना। अलङ्कारग्रन्थाश्चानेन बहवः समालोकिताः समालोचिताश्च। अलङ्कारशास्त्रपर्य्यालोचनं चास्य पितृपितामहादिभिः परम्परया कृतम्।

एवमनेकशास्त्रपरिनिष्णातपरिणतप्रतिभावतः श्रीविश्वनाथस्यासामान्यं भूषणं कविभावः। अयं जयदेवकृष्णानन्दादिवत्सरसकोमलपदावलीविन्यासचतुरः प्रसन्नवाग्वैभवः प्रथितपाण्डित्यश्चासीदिति साहित्यदर्पणोदाहृतस्वकीयाशेषपद्यैरवबोद्धुं शक्यम्।

भवन्ति किल भूयांसः पण्डिता ये तु एकामेव संस्कृतभाषां साकल्येनावबुध्यन्ते। विरलास्तु संस्कृतभाषापारङ्गमा ये च द्वित्रा अपि अन्या भाषाः समवगच्छन्ति। विशालमतिवैभवस्तु श्रीविश्वनाथकविराजो न केवलां संस्कृतभाषां नापि वा द्वित्रा अन्या भाषाः परन्तु अष्टादशापि भाषास्तथा बुबोध यथा तासु तास्वपि भाषासु मनोहरान् भाषापाटवपरिचायकान् प्रबन्धान् निर्मातुं प्रबभूव। अतएवासौ "अष्टादशभाषावारविलासिनीभुजङ्ग" इति जेगीयते विपश्चिद्भिः।

"मञ्जुलमणिमञ्जीरे" एष च श्लोकः संस्कृतप्राकृतसौरसेनीप्राच्यावन्तीनागरापभ्रंशेषु एकविध एव। एवमप्येतत्पद्यं प्रत्याययेत् कवेरस्य विविधासु भाषासु प्रावीण्यम्। प्रथमं तावदनेकभाषावगम एव दुष्करस्तत्र पद्यप्रणयनं, तत्र च सरसतापादनम्, तत्रापि एकस्यैव पद्यस्यानेकास्वपि भाषासु समानत्वम्। कविराजेनानेन प्रणीता प्रशस्तिरत्नावली षोडशभिर्भाषाभिरुपनिबद्धा।

एतेन प्रथमतः काव्यनाटकादयः संग्रहीताः। ततश्च साहित्यदर्पणो नाम शास्त्रीयः प्रबन्धः। ततश्च काव्यप्रकाशस्य व्याख्यानम्। बहूनामेतत्प्रणीतानां काव्यप्रबन्धानां नामानि साहित्यदर्पण उपलभ्यन्ते। एतत्प्रणीतेषु ग्रन्थेषु कतमः कदा विरचित इति निश्चित्यावबोद्धुं नास्ति किल कोऽप्युपायः तत्केवलं नामत एव ते प्रबन्धा रसिकेभ्यः समर्प्यन्ते।

१. प्रभावतीपरिणयम् ( नाटकम् )
२. चन्द्रकला ( नाटिका )
३. कुवलयाश्वचरितम् ( प्राकृतकाव्यम् )
४. प्रशस्तिरत्नावली ( षोडशभिर्भाषाभिरुपनिबद्धं करम्भकम् )
५. राघवविलासः ( महाकाव्यम् )
६. नरसिंहविजयः ( खण्डकाव्यम् )
७. काव्यप्रकाशदर्पणः ( काव्यप्रकाशटीका )
८. कंसवधम् ( काव्यम् )

एतद्भिन्ना अपि प्रबन्धाः कविराजेन रचिता इति प्रतीयते। साहित्यदर्पणे बहुषु पद्येषु नोपलभ्यते नाम प्रबन्धस्य। केवलमिदं ममेत्यादिना स्वीयत्वेन निर्दिश्यन्ते पद्यानि। किन्तु महदिदं दौर्भाग्यं भारतवर्षस्य यदेतत्प्रणीता ग्रन्थाः कस्यापि देशहितबद्धादरस्य नयनसरणिमद्यापि नारूढाः।

कविराजस्यास्य पद्येषु रसानुगुणा शय्या, ललितानि प्रसन्नानि च पदानि, समुदारतरं कल्पनाजालम्, अतिपरिप्लुतो मनोहरो रसश्च सर्वत्र गोचरीभवति। किमधिकं, वशंवदैव समभूदेतस्य भगवती देवगवीत्युक्तिरपि नात्युक्तिदोषायेति दिक्। तदानीन्तनैरपि कविभिरसौ तथात्वेनैव प्रतिपन्नः। तदुक्तमनन्तदासेन लोचने—
"यस्येमां प्रशस्तिमाचक्षते विचक्षणाः।

**आः! किं कम्पमुरीकरोषि वसुधे धूरर्दितेवाऽभवत्**
**गोविन्देन तु नन्दमन्दिरकृतक्रीडावतारेण ते।**
**विख्यातः कविराजराज इति यः श्रीविश्वनाथः कृती**
**तस्याकर्ण्य गिरः शिरांसि भुजगाधीशो धुनीतेऽधुना॥"**

साहित्यदर्पणस्य पञ्च प्राचीना व्याख्या दृश्यन्ते। अनन्तदासस्य लोचनम्, महेश्वरभट्टाचार्यस्य विज्ञप्रिया, रामचरणतर्कवागीशस्य टीका, गोपीनाथस्य प्रभा, तच्छिष्यस्य प्रभास्फूर्त्तिश्च। तासु तावद् रामचरणतर्कवागीशस्य व्याख्या प्रकाशिता वर्त्तते। अनन्तदासस्तु विश्वनाथकविराजस्य पुत्रो लोचनाख्यं व्याख्यानमकरोत्। तस्य लोचने बहुशो "यथा मम पितु" रित्यादिना विश्वनाथकविराजस्य श्लोकानामुद्धारः कृतः। ग्रन्थावसाने च—

**आस्तामनन्तकृतिना कृत एष धीरै-**
**रासाद्य तातचरणाम्बुरुहप्रसादम्।**
**आचन्द्रमातरणिकोविदवृन्दवन्द्यः**
**साहित्यदर्पणविवेकवचःप्रपञ्चः॥**

श्रीविश्वनाथकविराजात्मजश्रीमदनन्तदासकृतौ इति कथनाद् विश्वनाथकविराजस्य पुत्रोऽनन्तदास इति ज्ञायते। एतट्टीका तु नातीव विस्तृताऽपि प्रमेयांशविचारे

प्रौढिं प्रकटयति ग्रन्थं च सम्यग् योजयति। कवेरभिप्रायस्तु यथार्थतो ज्ञायतेऽस्माद् व्याख्यानात्। एतद् व्याख्यानमतीव सुबोधम्। अतस्तु "लोचनेन विहीनस्य दर्पणः किं करिष्यति" इति प्रवादस्यार्थं लोचनाख्यव्याख्यानपरतया योजयन्ति प्राचीना विद्वांसः। अनन्तदासेन ध्वन्यालोके लोचनव्याख्यानवत् साहित्यदर्पणस्य लोचनाभिधं व्याख्यानं रचितम्। अनन्तदासस्य भानुदेवप्रशस्त्या स चतुर्दशशताब्द्यां मध्यभागे आसीदिति प्रागेव प्रतिपादितम्। पञ्चानां तालीपत्रपुस्तकानां साहचर्य्येण मया व्याख्यानस्यैतस्य मूलशुद्धिर्विहिता।

तर्कालङ्कारमहेश्वरभट्टाचार्यस्य विज्ञप्रिया टिप्पणी तु अतीव विस्तृता। काव्यप्रकाशपक्षपातिनानेन सम्यग् ग्रन्थार्थं प्रकटय्य बहुषु स्थलेषु काव्यप्रकाशस्य मतं समर्थितम्। परं ग्रन्थस्यालोचनं सम्यक् कृतम्। अस्य भाषा तु सुबोध्या। अनेन काव्यप्रकाशस्यापि व्याख्यानं कृतम्। षष्ठपरिच्छेदे स्वस्य ग्रन्थस्य नामोल्लेखादयमपि तारावतीचन्द्रशेखरनाटकस्य कर्त्ता। साहित्यदर्पणस्यापि बहवोंऽशा दुर्बोधाः संवृत्ताः। अतोऽत्र मया प्राचीनं व्याख्यानद्वयं समावेशितम्। तयोः साहचर्य्येण सर्वं तावत् छात्राणामपि सुबोध्यं भविष्यति। विज्ञप्रियाव्याख्यानस्य प्रयोजनं ग्रन्थावसाने सम्यक् प्रतिपादितं महेश्वरभट्टाचार्य्येण यथा—

**सुश्लिष्टसंस्कृतवशेन सुखाधिरोहा**<br>
**वैषम्यदुस्तरतरङ्गविभेददत्ता।**<br>
**साहित्यदर्पणमहार्णवमुत्तरीतुं**<br>
**टीकेयमस्ति तरणिर्न बिभीत धीराः॥**<br>
**दर्पणे प्रतिबिम्बन्ते पदार्था इति नाद्भुतम्।**<br>
**चित्रं ममैतद् व्याख्याने दर्पणः प्रतिबिम्बते॥**

व्याख्यानकारेण व्याख्यानस्य यादृशी प्रौढिर्दर्शिता व्याख्याने तादृशी प्रौढिर्यथार्थतो वर्त्तते। तत्सर्वं पाठात् परतः सुधीभिरवधारणीयम्। एतस्य व्याख्यानकर्त्तुः कालनिर्णयः कर्त्तुं नैव शक्यते। परमसौ रामचरणात्प्राचीन एव। रामचरणेन प्रथमपरिच्छेदे केचित्तु (१२ पृ) इत्यादिना महेश्वरस्य व्याख्यानमुद्धृत्य दूषितम्। रामचरणेन १७०१ खीष्टाब्दे व्याख्या कृतेति ग्रन्थान्तिमश्लोके लिखितम्। उदाहरणचन्द्रिकाकारेण वैद्यनाथेन नाम्ना महेश्वरमुल्लिख्य तत्कृतात् काव्यप्रकाशदर्पणाद् बहुशस्तस्य मतमुद्धृत्य निराकृतम्। वैद्यनाथेन "वियद्वेदमुनिक्ष्माभिर्मिते' १७४० विक्रमाब्दे १६८४ खीष्टाब्दे उदाहरणचन्द्रिका रचिता। अतस्तर्कालङ्कारो महेश्वरभट्टाचार्यः सप्तदशशताब्द्या मध्यभागे आसीदिति प्रतीयते। माहेश्वरस्य व्याख्यानस्य चतुर्णां पुस्तकानां साहचर्य्येण संशुद्धिर्विहिता।

मयाप्यत्र दुर्बोधेषु स्थलेषु बोधोदयाय संक्षेपेणैव टिप्पणी दत्ता। साहित्यदर्पणस्य मुद्रितपुस्तकेषु बहवोऽपपाठा आसन्। यथा—दशमपरिच्छेदे अस्वरसोत्थापिता भ्रान्तिर्नायमलङ्कार इति पाठो दृश्यते।

परं स्वरसोत्थापिता इति भवितुमुचितम् । रामचरणेनापि स्वाभाविकीति तस्य व्याख्यानात् । "न स्वरसोत्थापिता शुक्तिकारजतवत्' अलङ्कारसूत्रात् ।

**"अनेन लोकगुरुणा सतां धर्मोपदेशिना ।**
**अहं व्रतवती स्वैरमुक्तेन किमतः परम् ॥"**

अत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्यग्योषिति बलात्कारोपभोग इति पाठो मुद्रितपुस्तकेषु, परं तैर्थिकयोषिति इति भवितुमुचितम् । उत्प्रेक्षायामपि—

'पर्य्यवसाने तु जलधितीरे शैवलस्थितेः । सम्भावनानुपपत्तेः सम्भावनोत्थानमित्युत्प्रेक्षा ॥'

अत्र सम्भवोपपत्तेरिति भवितुं युक्तम् । कारणं विज्ञाप्रियायां द्रष्टव्यम् । 'तथाप्युपमानस्य प्रकृते उत्प्रेक्षायां पर्य्यवसानम्' इत्यलङ्कारसर्वस्वेऽपि दर्शनात् ।

षष्ठपरिच्छेदे—'यः सामान्यगुणोद्रेकः स गुणातिशयो मतः' एवं पाठो दृश्यते—परं 'योऽसामान्यगुणोद्रेकः स गुणातिशयो मतः', इति भवितुमर्हति ।

'दृप्तादीनां भवेद् भ्रंशो वाच्यादन्यतरद् वचः'एवं मुद्रितपुस्तकपाठस्तु व्याकरणविरुद्धः । अतो 'वाच्यादन्यत्र यद् वचः' इति भवितुं युक्तम् । निश्चयालङ्कारे—

'एककोट्यनधिके ज्ञाने तथा समीपगमनासम्भवाद्'इत्यत्र 'एककोट्यनधिके ज्ञाने तथा समीपगमनसम्भवादि'ति भवितुं युक्तम् ।

अभेदे भेदाध्यवसायमूलातिशयोक्तौ—'तत्रापि ह्यन्यदेवाङ्गलावण्यमन्यत्वेनाध्यवसीयते' एवं पाठः सर्वत्र दृश्यते । अत्रापपाठस्तु पठनादेवावगम्यते—'तत्रापि ह्यनन्यदेवाङ्गलावण्यमन्यत्वेनाध्यवसीयते' इत्येव भवितुमुचितम् ।

ततोऽयमतीव दुर्बोधः सञ्जातः । टीकाकारयोः पाठसाहचर्येण प्राचीनानां दशानां पुस्तकानामपि साहचर्येण मूलपाठस्तु यथार्थत उद्धृतोऽत्र मया । परिशेषे च विज्ञाप्यते, शास्त्रान्तरापेक्षया प्रतिभाप्रतिभातसाहित्यशास्त्रविच्छित्तिरनेकरूपत्वात् स्वरूपतो ह्यनिर्वचनीया । तत एव प्रतिविषयं विप्रतिपद्यन्ते स्म प्रतिभानवन्तोऽपि सूरिशिरोमणयः किमुत पुनरधुनातनानां पूर्वाचार्यपरिशीलितपथपथिकजनानामस्मादृशाम् । सम्प्रति तु यथास्थितविषयाणां केवलसङ्गतिपुरःसरलक्ष्यसमन्वयाय स्विज्ञमनीषाऽत्र भ्राम्यति श्राम्यति च । का कथा पुनरत्र स्वमतिगवेषणयाऽदृष्टाज्ञातार्थपरिस्फुटेन ।

अतोऽहं यथाशक्ति स्वविवेकेन पुरातनीं प्रकृतार्थसंयोजिनीं टीकाद्वयीं लक्ष्यसङ्गतिदृष्ट्या संशोध्य दुर्बोधस्थलेषु ह्यकृतार्थेषु पाठकानां सुबोधायैव स्वकृतटिप्पणीं संयोज्य सहृदयकाव्यविदां पुरत उपस्थापयामि । चिरन्तरत्नद्वयसमुद्धरणाय मत्कृतोऽयं श्रमस्तदेषिणामन्तरात्मानमानन्दयिष्यतीति जागर्त्ति मे परमाऽऽशा न पुनरात्मन आलङ्कारिकत्वाभिमानधिया नवतया ग्रन्थस्यास्य प्रकाशनपराग्रहः । यदीतः सहृदयाः पाठकसूरयः पूर्वप्रकाशितग्रन्थान्तरापेक्षया कियतीमप्युपकृतिमुपलप्स्यन्ते तदात्मश्रमं सफलं संमंस्य इति शम् ।

श्रीः

श्रीमद्विश्वनाथकविराजप्रणीतः

# साहित्यदर्पणः ।

## प्रथमः परिच्छेदः ।

'ग्रन्थारम्भे निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामो वाङ्मयाधिकृततया[1] वाग्देवतायाः साम्मुख्यमाधत्ते—(क, अ) * ।

---

अविघ्नमस्तु ।

(वि, क) वीक्ष्य कौस्तुभगतं निजबिम्बं हृद्गतान्यवनिताजनबुद्ध्या ।
मानमाश्रितवतीं निजकान्तां चिन्तयाम्यनुनयन्तमनन्तम् ॥ १ ॥
दृष्ट्वा भूरितरध्वनिप्रभृतिकालङ्कारशास्त्रं मुहु-
स्तन्मूलञ्च विसृष्टमर्थमखिलं काव्यप्रकाशस्य च ।
साहित्योत्तरदर्पणं विशदयन्नानन्दयन् सज्जनान्
भट्टाचार्य्यमहेश्वरो वितनुते [illegible] टिप्पणीम् ॥ २ ॥

शरदिन्दिव्त्यादि स्वीयश्लोकं ग्रन्थकृदुत्थापयति—ग्रन्थारम्भ इति । ग्रन्थस्य प्रकृत-ग्रन्थस्य साहित्यदर्पणाख्यस्य, आरम्भे आरम्भकाले, वाग्देवतायाः साम्मुख्यमाङ्-

---

विघ्नेश्वराय नमः ।

(लो, अ) प्रणमामि परां देवीं मूलाधारधृतोदयाम् ।
यद्विवर्त्तमिमं कृत्स्नं प्रपञ्चं परिचक्षते ॥ १ ॥
आसीत् कपिञ्जलकुलक्षीराकूपारचन्द्रमाः
त्रिकलिङ्गाधिपधराधामधीसचिवः कृती ॥ २ ॥

---

* अङ्गसक्तविचित्रभूषणततिस्त्रैलोक्यरक्षातति-
वैदीदेश्मविनोदविस्तृततिर्देवेन्द्रदत्तानतिः ।
इन्द्रद्युम्नकृपाविभावितमतिर्भक्तौघगीतस्तुति-
र्भूयाद् भासुरनन्दिघोषवसतिर्लक्ष्मीपतिर्वो गतिः ॥

1 वाग्मयाधिकृतायाः (क) ।

**शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी ।**
**अपहृत्य तमः सन्ततमर्थानखिलान् प्रकाशयतु ॥१॥ (ख, आ)**

---

कूल्यमाधत्ते जनयतीत्यर्थः । अत्र ग्रन्थकृदेव कर्त्ता बोध्यः । आरम्भकालस्य स्थूलत्वाद् योग्यतावशात् तत्पूर्वकाले एव साम्मुख्याधानं बोध्यम् । न च श्लोके साम्मुख्याधानबोधकाभावात् कथमिदमाभाषितमिति वाच्यम्, शरदिन्द्वित्यादि तत्सौन्दर्य्यकथनरूपस्तुत्या, स्वचेतसि तमोनाशाऽर्थप्रकाशनप्रार्थनया च तल्लाभात्, स्तुतस्यानुकूलत्वनियमात् तदानुकूल्यं प्रत्येवाभीष्ठप्रार्थनाच्च । चेतस्यर्थप्रकाशे सत्यपि विघ्नाद् ग्रन्थस्य समाप्तिर्न भवतीत्यते निर्विघ्नपरिसमाप्तिरपि तत्साम्मुख्यात् कामनीयेत्यत आह–**निर्विघ्नेने**ति । समाप्तिमात्रस्य लौकिककारणाधीनत्वेऽपि तद्विघ्नविघातो देवतानुकूल्यादेवेति विघ्नाभावविशिष्ठसमाप्तिकामनयापि विघ्नाभावरूपविशेषणांशो विषयीक्रियते अहं सुखी स्यामिति कामनया सुखांश इव । प्रारिप्सितग्रन्थपरिसमाप्तिरूपे फलेऽन्यदेवतापेक्षया तस्याः शीघ्रकारित्वप्रतिपादनाय तद्विशेषणमाह–**वाङ्मये**ति–स्वार्थे मयट् । वागधिकृताया इत्यर्थः । वस्तुतस्तु वाङ्मयाधिकृततयेति प्रामाणिकः पाठः । तथा च वागात्मकस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तिरूपं फलं वागधिकारिण्या शीघ्रं दातुं शक्यमेवेति दर्शितम् ।

**(वि, ख) शरदिन्द्वि**त्यादि । शरदिन्दुवत् सुन्दररुचिः, सा प्रसिद्धा गिरां देवी सर-

---

अशेषभाषारमणीभुजङ्गः साहित्यविद्यार्णवकर्णधारः ।
ध्वन्यध्वनिप्रौढधियां पुरोगः श्रीविश्वनाथः कविचक्रवर्त्ती ॥ ३ ॥
स्वल्पाक्षरः सुबोधार्थः प्रध्वस्ताशेषदूषणः ।
साहित्यदर्पणो नाम ग्रन्थस्तेन विनिर्मितः ॥ ४ ॥
पारं साहित्यविद्याब्धेर्गन्तुं वाञ्छन्ति ये क्षितौ ।
कृतिरेषा तरिस्तेषां विश्वनाथमहाकवेः ॥ ५ ॥
श्रव्याभिनेयालङ्कारतत्त्वं सत्कविसम्मतम् ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥ ६ ॥
अस्य सत्कविवाग्गुम्फजीवातोः कृतिनां मुदे ।
मया विधीयते टीका दुर्बोधार्थ-विबोधिनी ॥ ७ ॥

इह खलु सूत्राणामेवार्थं वृत्त्या विशदीकुर्वन् ग्रन्थादौ विघ्नविघाताय अविगीतसदाचारपरम्पराप्राप्ततया स्वाभीष्टदेवताराधनेन सम्मुखीकरणसूचिकां कारिकामवतारयति–**ग्रन्थे**ति । विघ्नः प्रतिबन्धकदुरितसद्भावः प्रवर्त्तकसुकृतविरहो वा, तस्य अभावः–निर्विघ्नम्, अव्ययीभावः। प्रारिप्सितं प्रारब्धुमिष्टं दृश्यश्रव्यकाव्यनिरूपकं प्रमेयजातम्, तस्य परिसमाप्तिर्यावद्-विवक्षितार्थस्यास्खलनपूर्वकं समापनम् । वाङ्मयेत्यनेन स्वशास्त्रविधेयभागवैभवदातृतया ब्रह्मादिदेवाराध्यत्वेन भगवत्याः प्रकृतार्थनिर्वाहकत्वं सूचितम् । देवतेत्यनेन जडरूपवाङ्मात्रवैलक्षण्येन तदधिष्ठातृत्वं सूचितम् ।

**(लो, आ) शरदी**त्यादि–शरदिन्दुसुन्दररुचिरेव शरदिन्दोः सुन्दररुचिरित्यध्य-

अस्य ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्त्व*मिति काव्यफलान्याह—

**चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।**
**काव्यादेव यतस्तेन तत्-स्वरूपं निरूप्यते ॥ २ ॥**

चतुर्वर्गफलप्राप्तिर्हि काव्यतो रामादिवत् प्रवर्त्तितव्यं, न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशद्वारेण + सुप्रतीतैव ॥ (ग, इ)

---

स्वती, मे, मम चेतसि सन्ततं विस्तृतं, तमः तमस्तुल्यमज्ञानम्, अपहृत्य, अखिलान् मया वक्ष्यमाणान् अर्थान् प्रकाशयत्वित्यर्थः। अत्राद्ये पादे लुप्तोपमामहिम्ना शरदिन्दोरपि सुन्दररुचित्वं सन्ततं तमःपदार्थान्धकारनाशकत्वं घटपटाद्यखिलार्थप्रकाशकत्वं च सिद्ध्यति। तथा च एभिः साधर्म्यैः, शरदिन्दुर्गादेव्योरुपमानोपमेयभाव इति बोध्यम् ।

(वि, ग) **काव्याङ्गतये**ति—काव्यविचारकत्वेन तदङ्गता। चतुर्वर्गो धर्मार्थकाममोक्षाः, तद्रूपस्य फलस्य प्राप्तिरित्यर्थः । काव्यस्य चतुर्वर्गफलप्रापकत्वं दर्शयति—**रामादिवदि**ति। **प्रवृत्तिनिवृत्त्युपदेशद्वारेणे**ति—प्रवृत्त्युपदेशेन प्रवृत्तस्य धर्मोत्पत्तिः साक्षादेव, निवृत्त्युपदेशेन निवृत्तस्य धर्मोत्पत्तिः प्रतिबन्धकदुरितानुत्पत्त्या च, द्वेधापि तेषां प्रापकत्वम् । प्रवृत्तिजन्यधर्मात्त साक्षादेवार्थादयः ।

---

वसाना । सेति तच्छब्दाच्चतुराननादिवाग्वैभवादिदातृतया प्रसिद्धा । तमोऽज्ञानमन्धकारश्च, अर्थान्-विवक्षितप्रमेयान् घटपटांश्च ।

(लो, इ) "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते" इति निबध्यमानकाव्यपरीक्षाशास्त्रस्य प्रयोजने वक्तव्ये "अङ्गिनः फलेनैवाङ्गस्य फलवत्ता" इति न्यायात् उक्तां काव्यफलप्रतिपादिकां द्वितीयकारिकामवतारयति—**अस्ये**ति । काव्याङ्गत्वं काव्यपरीक्षाशास्त्रत्वात् । चत्वारो वर्गाः धर्मार्थकाममोक्षाः । कृत्याकृत्यप्रवृत्तीत्यनेन काव्यस्य शास्त्रत्वं प्रदर्शितम् । यदाहुः

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमिति कथ्यते ॥

ननु कथं कविनोपादिदेतीतिवृत्तानां मालतीमाधवरत्नावलीमृच्छकटिकादीनां

---

* यथा दर्शपौर्णमासाङ्गानां प्रयाजादीनां दर्शपौर्णमासफलेनैव फलवत्त्वं तथा काव्याङ्गस्य काव्यपरीक्षाशास्त्रस्यास्य काव्यफलैरेव फलवत्त्वमिति भावः ।

धर्मादर्थोऽर्थतः कामः कामात् सुखफलोदयः ।

+ कृत्ये प्रवृत्तिः अकृत्याच्च निवृत्तिः—रामादिवत् प्रवर्त्तितव्यं ( पितृभक्त्यादौ ) न रावणादिवत् प्रवर्त्तितव्यं (परदारहरणादिषु) इत्युपदेशं च यथायोगं कवेः सहृदयस्य च करोति । (काव्यप्र.)

उक्तं च[1]—"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्त्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥" इति ।

किंच । काव्याद्धर्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना, 'एकः शब्दः सुप्रयुक्तः सम्यग्[2] ज्ञातः स्वर्गे लोके[3] कामधुग् भवति' इत्यादिवेदवाक्येभ्यश्च सुप्रसिद्धैव । अर्थप्राप्तिश्च प्रत्यक्षसिद्धा । कामप्राप्तिश्चार्थद्वारैव[4] । मोक्षप्राप्तिश्चैतजन्यधर्मफलाननुसन्धानात्, मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वाच्च । (च, ई] + ।

---

(वि, घ) कला वैदग्धी, वैचक्षण्यं तत्र प्रवर्त्तकं ज्ञानं प्रवृत्त्युपदेशात्, एतज्जन्यफलाननुसन्धानादिति—तत्र फलं काशीप्राप्तिर्योगाभ्यासश्च, व्युत्पत्त्याधायकत्वादिति—

---

स्वाभिधेयेषु प्रामाण्यम्? नचाप्रमाणरूपस्य शब्दस्य शास्त्रत्वमिति चेदत्राह—
"सुविदग्धप्रमा काव्यं प्रमाणं सर्वमेव नः ।
स्वप्रकाशरसास्वादप्रमितिप्रभवं यतः" ॥ इति ।

ननु प्रकारभेदाः प्रहेलिका व्यङ्ग्यार्थविशिष्ठा नीरसा वाक्यविशेषाः । यथा—
के दारपोषणरताः का शीतलाम्बुवाहिनी गङ्गा ।
कं संजघान कृष्णः कं बलवन्तं न बाधते शीतम्" इति ।

अत्र हि प्रश्नरूपोऽर्थो वाच्यः, उत्तररूपश्च व्यङ्ग्यः । तथाविनिबद्धविभावादिज्ञानस्य बाष्पारोपितधूमज्ञानादेस्तात्त्विकधूमध्वजादिज्ञापकत्ववत् रसप्रमित्यनुपपादकत्वमिति चेत्तत्राप्याह—

"शरीरादिविविक्तात्मतत्त्वभावनया यथा ।
तत्त्वतोऽप्रमयास्पष्ट-तत्त्वसाक्षात्कृतिः प्रमा ॥
असत्यमुल्लिखन्त्याऽपि विभावादिधियाऽमुया ।
तद्वदेव रसादीनां व्यक्तिः प्रकरणादिषु" ॥ इति ।

---

+ फलस्य अननुसन्धानात्—अभिलाषाभावात्, निष्कामेण क्रियमाणं कर्म मोक्षाय कल्पते, "तद् यथेह कर्मचितो लोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते।" (छान्द. उप)

छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात् ।
युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन ॥ (रुद्रटः)

1 खपुस्तके नास्ति ।
2 सुज्ञातः (गपुस्तके) ।
3 च (घपुस्तके)
4 द्वारेणैव (कपुस्तके) ।

**चतुर्वर्गफलप्राप्तिर्हि[1] वेदशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते । परमानन्द-सन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव । ( ङ, उ ) + ।**

---

काव्यस्थसंस्कृतदर्शनाद् व्युत्पत्तेः । एतानि च फलानि काव्यविशेषाणामेव । तथा च समस्तकाव्यप्रयोजनम्–"काव्यं यशसेऽर्थकृते" इति यत् काव्यप्रकाशकारेणोक्तं तच्च "करोति कीर्त्तिं प्रीतिं च" इत्यत्रैवोक्तम्, समस्तकाव्यफलेन तेनैवास्य फलवत्त्वं बोध्यम्,

**( वि, ङ )** ननु चतुर्वर्गफलसाधके वेदशास्त्रे सति किमर्थं लोकः काव्ये प्रवर्त्ततामित्यत आह–**चतुर्वर्गफलप्राप्ति**रिति ।

---

इह च न्यायोऽयमन्वाचयः, प्रकरणादि प्रमाणं रसास्वादजनकत्वात् काव्यत्वाद् वा, यदेवं तदेवं, यथा रामायणादि, तथा चेदं, तस्मात्तथेति । न यदेवं न तदेवं यथा प्रहेलिकेति । ननु रसरूपप्रमाणत्वेपि प्रकरणादेः रत्यास्वादानन्तरमसद्भूतत्वेनार्थो-नर्थोपदेशनाभावाद्धिताहितप्रवृत्तिनिवृत्तिकारित्वप्रयोजितं कथं हि शास्त्रत्वमिति न वाच्यम् । तथा हि–

"लोकप्रसिद्धो व्युत्पादो नाटकाद्यवलोकनात् ।
कार्य्यदर्शनतस्तस्यानुगुणा हेतुकल्पना"

इति न्यायेन सत्यासत्यत्वं वर्णनाबलात् ॥

"स्फुरता, तेन वृत्तेन व्युत्पत्तिर्जायते नृणाम् ।
सत्यासत्यत्वजिज्ञासा रसादेश्चरितेष्वपि ॥
व्युत्पत्तिकालेनैवास्ति तया पाश्चात्यया त्वलम् ।
"काकोऽस्ति वाटिकामध्ये" इति बालविभीषिका ॥
स्वार्थप्रामाण्यहीनाऽपि न किं व्युत्पत्तिसाधनम् ।
रसस्य ज्ञानरूपत्वं तादात्म्यादिति वक्ष्यते ॥
नचाप्रमारसज्ञानं शुक्तौ रजतधीरिव ।
तस्मिन् न जायते बाधो यस्मादौत्तरकालिकः,"॥

**( लो, ई )** सुप्रयुक्तः व्याकरणाविरोधेनोक्तः । मोक्षोपयोगिवाक्यं श्रुत्यादि । तत्र व्युत्पत्त्याधायकत्वं पदपदार्थसम्बन्धबोधकत्वात् ।

**(लो, उ)** सुखादित्यादि विवृणोति–**चतुर्वर्गे**ति । परमानन्दो रसादिरूपः तत्सन्दोहो विगलितवेद्यान्तररसततिस्तज्जनकत्वाद्युपचारात् । सुकुमारमतयः सुखैकप्रवणाः राजपुत्रप्रभृतयः । परिणतबुद्धयः श्रुत्याद्यभ्यासलब्धक्लेशाः ।

---

+ —यथा वेदशास्त्रपुराणादेर्हितप्राप्तिरहितनिवृत्तिश्च तथा तदाश्रयात् काव्यादपि । इयान् विशेषः—काव्यात् कर्त्तव्यताधीः सरसा अन्यत्र न तथा । (प्रतापरुद्रीयः)

1 चतुर्वर्गप्राप्तिर्हि ( खपुस्तके )

ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु किमिति[1] काव्ये यत्नः करणीय इत्यपि न वक्तव्यम्। कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात्। *

किंच—'काव्यस्योपादेयत्वमाग्नेयपुराणेऽप्युक्तम्—

नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा॥' इति + (ऊ)

'त्रिवर्गसाधनं नाट्यम्' § इति च। विष्णुपुराणेऽपि[3]—

'काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः' इति।

तेन हेतुना तस्य काव्यस्वरूपं निरूप्यते। एवं[4] चाभिधेयं च प्रदर्शितम्। (च० ऊ) ×

---

(वि, च) **एवं चाभिधेयं चेति।** निरूपणार्थं काव्यस्य एतद्ग्रन्थाभिधेयत्वात्।

---

(लो, ऊ) शक्तिः कवित्वबीजरूपः संस्कारविशेषः यां विना काव्यं न प्रसरेत्, प्रसृतं वा उपहसनीयं स्यात्। नाट्यमभिनेयं नाटकादि।

---

*—**ननु** इति—ये सुकुमारमतयोऽतिसुखस्वभावा राजकुमारादयः नीरसे नीतिशास्त्रे प्रवर्तयितुमशक्यास्तान् काव्यं कान्तेव सरसतापादनेनाऽभिमुखीकृत्य उपदेशं ग्राहयति—गुडजिह्विकया शिशूनिवौषधम्। (प्रदीपः)

यथा सुस्वादुद्रव्येण रोगप्रतीकारसम्भवे रोगिणः कटुभेषजमपहाय सुस्वादु द्रव्यमेव भोक्तुं प्रवर्त्तन्ते तथा सर्वे नीरसदुर्बोधतया वेदादिशास्त्रमपहाय सरसतया काव्येषु प्रवर्त्तन्ते।

स्वादुकाव्यरसोन्मिश्रं काव्यशास्त्रं च भुञ्जते।
प्रथमालीढमधवः पिबन्ति कटु-भेषजम्॥

+—शक्तिः-प्रतिभेत्यपरैरुदिता।

मनसि सदा सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः॥ (रुद्रटः)

काव्यघटनानुकूलशब्दार्थोपस्थितिः। (जगन्नाथः)

§—तौर्य्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम्। (अमरः)

×—स्वरूपं-स्वं लक्ष्यपदार्थः रूप्यते लक्ष्यतेऽनेनेति व्युत्पत्त्या स्वरूपं लक्षणमित्यर्थः।

1 काव्येषु किमिति यत्नः (खपु.)
2 आग्नेयपुराणे (खपुस्तके)
3 "अपि"—इति छजपुस्तकयोर्नास्ति
4 एतेनाभिधेयं च (ख, ग, ङ, च, पु.) "च" भपुस्तके।

तत् किं स्वरूपं तावत् काव्यमित्यपेक्षायां कश्चिदाह[1]—"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि", इति । एतच्चिन्त्यम् । (छ ऊ)

तथा हि—यदि दोषरहितस्यैव काव्यत्वाङ्गीकारस्तदा[2]—

'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥ इति[3] (ज, ऋ)*

---

**(वि, छ)** कश्चिदिति काव्यप्रकाशकार इत्यर्थः ।

**(वि,ज) न्यक्कारो ह्ययमेवे**ति—श्रीरामाक्रान्तलङ्कस्य रावणस्य विषादोक्तिरियम्,

---

काव्यपरीक्षणं दिदर्शयिषुः प्राचीनकाव्यलक्षणेषु प्रमेयविरोधं दर्शयन्नाह—तत् किं स्वरूपमित्याह—" **तददोषावि**ति " तादिति काव्यम्, दोषाः श्रुतिकटुत्वादयः, गुणा माधुर्यादयः, क्वाप्यनलङ्कृतीत्यनेन सर्वत्र सालङ्कारौ शब्दार्थौ काव्यम्, क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिरिति ।

**(लो, ऋ) न्यक्कार** इति—एतद्रामभद्रेणाभिभूयमानस्य रावणस्य निर्वेदवाक्यम्। क्षुद्रो ग्रामो ग्रामटिका । विलुण्ठनं विधूननम् ।

---

अभिधेयं विषयः, तेन अनुबन्धचतुष्टयं कथितम्—

"तत्रानुबन्धो नामाऽधिकारिविषयसम्बन्धप्रयोजनानि" । ( वेदान्तसारः )

प्रयोजनम् प्राक् प्रदर्शितम्, अधुना विषयः प्रदर्श्यते। सम्बन्धस्तावत् विषयप्रयोजनयोः कार्य्यकारणभावरूपः साक्षादायाति ।

* 'मम अरय इति बहुवचनेन शत्रुमद्भावो ममानुचित इति सम्बन्धानौचित्यं क्रोधविभावो व्यज्यते, तपो विद्यते यस्येति पौरुषकथाहीनत्वं तद्धितेन मत्वर्थीयेन अभिव्यक्तम्, तत्र अपिशब्देन निपातसमुदायेन तापसस्य सतः शत्रुताया अत्यन्तासम्भाव्यमानत्वमभिव्यक्तम्, मत्कर्तृका यदि जीवनक्रिया तदा हननक्रिया तावदनुचिता, तस्यां च स कर्ता, अपिशब्देन मानुषमात्रकः, अत्रैवेति मदधिष्ठितो देशोऽधिकरणम्, विलुण्ठनशब्दे विशब्दस्य उपसर्गस्य निर्दयावस्कन्दव्यञ्जकत्वं वृथाशब्देन स्वात्मपौरुषनिन्दा व्यज्यते, भुजैरिति बहुवचनेन प्रत्युत भारमात्रमेतत् इति व्यज्यते, (हेमचन्द्रः काव्यानु० )

1 "आह" इति (क,गपुस्तकयोर्नास्ति),
2 "काव्यत्वं तदा" इति ( गपुस्तके )
3 "इति" इति ( खचपुस्तकयोर्नास्ति )

अस्य श्लोकस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात्। प्रत्युत ध्वनित्वेनोत्तमकाव्यतास्याङ्गीकृता। तस्मादव्याप्तिर्लक्षणदोषः। (भ, अ)

---

मे यदरयः अयमेव न्यक्कारः। तपस्विभक्षकस्य मम एकस्तापसोऽरिरिति, अत्यन्तन्यक्कारत्वात्, आस्तां सोऽपि सिन्धोरुदीचीतीरे खरदूषणादिहन्ता, सोऽप्यत्रैव निहन्ति राक्षसकुलं ननु द्वित्रिराक्षसान्। अहो आश्चर्यमेवं न्यक्कारोऽपि रावणो जीवतीति।, भवतु वा मम दैवस्य प्रातिकूल्यादेवं, शक्रस्य जेतारम् अर्थात् मेघनादं मम पुत्रं धिक् धिक्, तथा प्रबोधितवता प्रबोधितं प्रबोधः तद्वता भावक्तान्तत्वेन प्रबोधवता कुम्भकर्णेन वा किं फलमित्यर्थः। नत्वत्र क्तवतुः, तस्य कर्मण्यनभिधानात्, तथा मम भुजैर्वापि किम्? कीदृशैः, मम विलुण्ठने स्वर्गोऽपि ग्रामटिका स्वल्पग्रामः, तद्विलुण्ठनेन वृथोच्छूनैः निष्फलमुद्भटैः।

(वि, भ) **विधेयाविमर्शे**ति—विधेयस्य न्यक्कारस्योद्देश्यादरिमत्त्वात् पूर्वनिपातात् "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इति नियमात्। अनुभवबलादेष नियमः। काव्यत्वं न स्यादिति—नत्विष्टापत्तिरित्यत आह—**प्रत्युते**ति। अङ्गीकृतेति सर्वैरिति शेषः। न केवलं काव्यप्रकाशकृता, परं सर्वैः। काव्यप्रकाशकृता काव्यप्रकाशे, "इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः" इत्यनेन लक्षणेन ध्वनियुक्तत्वादस्य उत्तमकाव्यत्वस्वीकारात्, तस्मादव्याप्तिदोष इति—अत्र दोषसामान्याभावो लक्षणघटक इति तदभिप्रायमुन्नीय इदमुक्तम्, तस्य तु शाब्दबोधविघटकदोषसामान्याभाव एवाभिप्रायः। अन्यथा "तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयाम्" इत्यादिश्लोकः काकुसहकृतध्वन्युदाहरणतयोक्त्वा कथं तेनैव न्यूनपदत्वदोषे उदाहृतः। कथं वा "कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकम्" इत्यादिश्लोकः रौद्ररसोदाहरणत्वेनोक्त्वाऽपि पुनरुक्तदोषत्वे उदाहृतः। तस्मादव्याप्तिप्रदर्शनं तदभिप्रायानवधानादेव।

---

(लो, अ) विधेयाविमर्शोऽविमृष्टविधेयांशः। वृथोच्छूनैरित्यत्र भुजानामुच्छूनतया वृथात्वस्य तत्कालमात्रजातत्वाभिप्रायेण विधेयतां नेतुमुचितस्य तत्पुरुषसमासेन कविना गुणीभावं नीततया पूर्वसिद्धत्वात् अनुवाद्यत्व-प्रतीतिरिति विधेयस्य प्राधान्येनाऽविमर्शः, अनिर्देशः। अस्य श्लोकस्याङ्गीकृता पूर्वाचार्यैरिति शेषः। ध्वनित्वं यत्र प्रतिपदमेवावभासते। तथा हि, अयमेवेत्यन्ययोगव्यवच्छेदसूचकस्य एवकारस्य, मे इति काकुपदस्य, अरय इति बहुवचनस्य, अत्रैवेति सर्वनाम्नः, निहन्ति जीवतीति तिङः, अहो इत्यव्ययस्य, रावण इति तत् तत् विशेषार्थान्तरसंक्रमितवाच्यपदस्य, धिक् धिक् इति द्विरुक्तेः, शक्रजितमिति ताच्छील्यविहितक्विप्प्रत्ययस्य, ग्रामटिकेति करूपतद्धितस्य, विलुण्ठनेति व्युपसर्गस्य, भुजैरिति बहुवचनस्य तद्व्यञ्जकविशेषत्वात् असंलक्ष्यक्रमो ध्वनिश्चात्र स्वावमानना निर्वेदाख्यः संचारिभावः। तस्मादव्याप्तिः।. ध्वनिकारादिभिः ध्वनित्वेनोत्तमकाव्यत्वस्याङ्गीकारात् समनन्तरश्लोके तददोषाविति लक्षणाऽव्यापनात्।

ननु कश्चिदेवांशोऽत्र दुष्टो न पुनः सर्वो[1]ऽपीति चेत्तर्हि यत्रांशे दोषः सोऽकाव्यत्वप्रयोजकः, यत्र ध्वनिः स उत्तमकाव्यत्वप्रयोजकः, इत्यंशाभ्यामुभयत आकृष्यमाणमिदं काव्यमकाव्यं वा किमपि न स्यात्। न च क[2]श्चिदेवांशं काव्यस्य 'दूषयन्त[3]ः श्रुतिदुष्टादयो दोषाः, किं तर्हि सर्वमेव काव्यम्। तथा हि—काव्यात्मभूतस्य रसस्यानपकर्षकत्वे तेषां दोषत्वमपि नाङ्गीक्रियते। अन्यथा नित्यदोषानित्यदोषत्वव्यवस्थापि न स्यात्। (अ, लृ)

यदुक्तं[4] ध्वनिकृता—

---

(वि, अ) स्वदत्तदोषं च स्वोद्भावितसिद्धान्तेन उद्धर्तुमाशङ्कते—**नन्विति**। तद्दूषयति—**चेत्तर्हीति**। नन्वंशविशेषास्थितेन दोषेण अपरांशादूषणात्तदंशे काव्यत्वं दोषवदंशे चाकाव्यत्वं स्यादत आह—**न चेति**। किं तर्हि समस्तमेवेति, समस्तस्यैव दूषणे युक्तिमाह—**तथा हि**-**अन्यथेति**। काव्यात्मभूतरसाद्यदूषणेऽपीत्यर्थः। **नित्यदोषाऽनित्यदोषेति**। च्युतसंस्कारादयः समस्तरसापकर्षकत्वान्नित्याः, श्रुतिदुष्टत्वं तु कतिपयशृङ्गारादिरसापकर्षत्वादनित्यमित्यभियुक्तकृतां व्यवस्थापि न स्यात्, तन्मते रसापकर्षकत्वस्य दोषत्वप्रयोजकत्वादित्यर्थः।

---

(लो, लृ) कश्चिदेवांशः, वृथोच्छूनैरिति भावः। इदं पद्यम्, ननु पदैकस्यैव विषयस्य विरुद्धधर्मयोगः स्यात्। इह तु दोषस्य यदङ्गस्य दूषकत्वं तस्याकाव्यत्वम्, ध्वनेश्च यस्योत्कर्षकत्वं तस्योत्तमकाव्यत्वमिति द्वयोर्न विरोधः इत्याशङ्क्याह—**न चेति**। कथमङ्गमात्रनिष्ठस्य दोषस्य काव्यापकर्षकतेत्यत आह—**तथा हीति**। रसापकर्षकाणामेव दोषत्वात्, कथमेवेत्याह—**अन्यथेति**। रसापकर्षकत्वेऽप्यदोषत्वे, नित्यदोषाश्च्युतसंस्कृतप्रभृतयः, तेषां सकलरसापकर्षकत्वात्। अनित्यदोषाः श्रुतिकटुप्रभृतयः तथा हि रौद्रादिरसे प्रकृढश्रुतिकटुत्वस्य गुणत्वम्, यथा मम तातपादानां विजयनरसिंहे—

> 'निःश्वासोद्घातवातप्रसरधुतकुलाहार्य्यमुद्घृष्टदंष्ट्रा-
> जातज्योतिःस्फुलिङ्गप्रकरविरचितोल्कानिकायाभिशङ्काः।
> अर्द्धेपारीन्द्रमर्द्धेनरमहह महालोकमालोक्य लोकाः
> स्तोकास्तोकाविशेषाः शरणमुपययुर्वारिधिं वारिधिं वा॥'

---

1 "सर्व एवेति" [ख, ग, छ, ज, पुस्तकेषु]
2 "किञ्चिदेवांशं" [ख पुस्तके]
3 "दूषयन्ति" [घ, च, पुस्तकयोः]
4 'उक्तं हि' इति (गपुस्तके)।

'अतिदुष्टादयो दोषा अनित्या ये च दर्शिताः ।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥ इति[1] ।

किं चैवं काव्यं प्रविरलविषयं निर्विषयं वा स्यात्, सर्वथा निर्दोषस्यैकान्तमसम्भवात् । (ट, ए)

नन्वीषदर्थे नञः प्रयोग* इति चेत्तर्हि 'ईषद्दोषौ शब्दार्थौ काव्यम्' इत्युक्ते निर्दोषयोः काव्यत्वं न स्यात् । (ठ, ऐ)

सति सम्भवे 'ईषद्दोषौ' इति चेत्, एतदपि काव्यलक्षणे[2]ऽवाच्यम् । रत्नादिलक्षणे कीटानुवेधादिपरिहारवत् । न हि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशाः किं तूपादेयतारतम्यमेव कर्त्तुं, तद्वदत्र[3] अतिदुष्टादयोऽपि काव्यस्य ।

---

(वि, ट) ध्वन्यात्मन्येवेति—ध्वनिकाव्यस्यात्मभूते शृङ्गारे इत्यर्थः। शृङ्गारपदं चात्र माधुर्य्यवद्रसोपलक्षकम् । तेन करुणशान्तरसयोश्च ते हेया इत्यर्थः । ननु नित्यत्वानित्यत्वप्रयोजकमेव रसापकर्षकानपकर्षकत्वं, दोषताप्रयोजकं तु न रसापकर्षकत्वं, किन्त्वभियुक्तोक्ततत्तत्स्वरूपमेव तत्प्रयोजकमित्यत आह—किंचेति ।

(वि, ठ) ईषदर्थे नञ इति—अदोषाविति नञ इत्यर्थः। निर्दोषयोरिति शब्दार्थयोरित्यर्थः । प्रौढदोषयोस्तु काव्यत्वाभावस्य इष्टत्वादिति भावः ।

तथा च न्यक्कार इत्यादावव्याप्तिर्न दोषः । तयोः प्रौढदोषवतोः काव्यत्वाभावादिति भावः । लक्षणस्य दोषविशेषाभावघटितत्वेन कश्चिद्दोष इत्युक्तमवधेयम् ।

---

(लो, ए) ध्वन्यात्मनि ध्वनिस्वरूप इत्यर्थः । ननूत्तमकाव्यत्वेनाङ्गीकृतानामपि सदोषत्वे काव्यत्वं माभूत् इत्याशङ्क्याह—किञ्चेति । एवम् अदोषशब्दार्थयोरेकवाक्यत्वे ।

(लो, ऐ) नञः—अदोषावितिपदस्थितस्य । निर्दोषयोः क्वचित् कदाचित् कविनाऽदोषभावेन निर्मितयोः काव्यत्वं न स्यात्, ईषद्दोषत्वकाव्यलक्षणस्य तत्रासम्भवात् ।

---

* ईषदर्थे नञः इति—

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥'

ईषदर्थे यथा—अनुदरा कन्या—अल्पोदरा । तद्वत्—अत्रापि अदोषौ अल्पदोषयुक्तौ—इति चेत् ।

1 'इति' इति (घपुस्तके नास्ति ) ।
2 'न वाच्यम्' इति (घपुस्तके) ।
3 'तथात्र' इति (ग, घ पुस्तकयोः) ।

उक्तञ्च—'कीटानुविद्धरत्नादिसाधारण्येन काव्यता ।
दुष्टेष्वपि मता यत्र[1] रसाद्यनुगमः स्फुटः॥' इति[2] (ङ, ओ)*

किञ्च शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नम् : गुणानां रसैकधर्मत्वस्य[3] 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः' इत्यादिना तेनैव प्रतिपादितत्वात्। रसाभिव्यञ्जकत्वेनोपचारत उपपद्यत इति चेत्, तथाप्ययुक्तम् । ( ढ, औ )

तथा हि—तयोः काव्यस्वरूपत्वे[4]नाभिमतयोः शब्दार्थयो रसोऽस्ति, नवा । नास्ति चेत् , गुणवत्त्वमपि नास्ति । गुणानां तदन्वयव्यतिरेकानुविधायित्वात्। अस्ति चेत्, कथं नोक्तं रसवन्ताविति विशेषणम् । ( अ )

---

(वि,ङ) **सति सम्भव** इति—स्फुटदोषरहिते कदाचिद्दोषद्दोषस्य सम्भवे सतीत्यर्थः । **उक्तञ्चे**ति—यत्र रसादीनामसंलक्ष्यक्रमाणाम् अनुगमः स्फुटः तत्र दुष्टेष्वपि कीटानुविद्धरत्नादिसाधारण्येन काव्यता मता इत्यर्थः ।

( वि, ढ ) एवमदोषाविति विशेषणं दूषयित्वा सगुणाविति विशेषणं दूषयितुमाह-**किञ्चे**ति। तेन गुणाश्रयरसव्यञ्जकत्वरूपपरम्परासम्बन्धेन शब्दार्थयोर्गुणवत्त्वोपचार इत्यर्थः । तथाप्युक्तं गुणवत्त्वविशेषणमित्यर्थः ।

---

(ओ) **कीटानुविद्धे**ति–साधारण्येन सामान्येन काव्यतादुष्टेष्वपि मतेति संबन्धः।

(लो, औ) एवमदोषत्वस्य काव्यलक्षणत्वं दूषयित्वा सगुणत्वस्यापि दूषयति । अनुपपन्नम् असम्भवीत्यर्थः । रसैकधर्म्मत्वस्य रसमात्रधर्मत्वस्य । तेनैव काव्यप्रकाशकारेणैव। **रसाभिव्यञ्जकत्वेने**ति। अयमर्थः–शब्दार्थौ खलु प्राचीनोक्तरीत्या निर्मितौ रसाभिव्यञ्जकौ भवतोऽप्यनुमतौ; तेन रसादिरूपव्यङ्ग्यरूपाणामपि माधुर्य्यादीनां व्यञ्जकरूपशब्दार्थधर्मत्वेनोपचारः । यदाह स एव

"गुणवृत्त्या पुनस्तेषां स्थितिः शब्दार्थयोर्मता" इति ।

मैवमित्याह–**तथापी**ति। उपचारतः सगुणौ शब्दार्थौ काव्यमिति यदुच्यत इत्यर्थः।

( लो, अ ) कुतोऽयुक्तमित्याह—**तथा ही**ति । तयोरुपचारतः । सगुणयो रसोऽस्ति नवेति, अयमर्थः–रसस्य सद्भावे एव काव्यत्वं तदभावे वेति । आदौ तुच्छतया द्वितीयं निराकरोति–**नास्ति चेदि**ति । तदन्वयेति समानधर्मत्वादिति भावः । रसोऽ-

---

* यथा प्रभातिशयेन दोषतिरोधानात् न रत्नस्वरूपभङ्गः तथा काव्येऽपि व्यङ्ग्यवैचित्र्येण रसबोधे सति रसचमत्कारितया दोषतिरोधानात् न काव्यत्वहानिरिति भावः ।

1 'अन्यत्र' इति (ङ ज पुस्तकयोः) ।
2 'इति' इति ( गपुस्तके नास्ति ।)
3 " धर्मत्वात् " (इति ग पुस्तके ।)
4 " स्वरूपेण " इति (ग० पु० ।)

गुणवत्त्वान्यथानुपपत्त्यैतद्दृश्यत इति चेत्, तर्हि सरसावित्येव वक्तुं युक्तम्, न सगुणाविति। नहि प्राणिमन्तो देशा इति वक्तव्ये शौर्य्यादिमन्तो देशा इति केनाप्युच्यते। (ण, आ)

**(वि, ण)** चेत्तर्हीत्यत्र चेत्तथापीत्यर्थः। **नहि प्राणिमन्त** इति। शौर्य्याद्याश्रयप्राण्याश्रये देशेऽनया परम्परया शौर्य्यादिमन्तो देशा इति केनापि नोच्यते इत्यर्थः। इदं च ग्रन्थकृताऽऽरोपबीजानवधानादेवोक्तम्; तथा हि परम्पराघटकस्य मध्यभूतसम्बन्धिनो बहिरिन्द्रियप्रत्यक्षत्वे सत्येव नैवमारोपः। यत्र तु परम्पराघटकमध्यभूतसम्बन्धी न बहिरिन्द्रियप्रत्यक्षस्तत्रत्वेवमारोपो दृश्यत एव। यथा शीतो वायुरुष्णं जलं सुगन्धिर्वायुरित्यत्र परम्परासम्बन्धघटकानां मध्यभूतजलाग्निपुष्पावयवानां सूक्ष्मत्वेनाऽप्रत्यक्षत्वात् तादृश आरोपः। प्रकृतेऽपि बहिरिन्द्रियाऽप्रत्यक्षस्य रसादेश्च परम्परासम्बन्धघटकत्वात् सम्भवत्येव गुणवत्तारोपः शब्दार्थयोरिति। अत एव शब्दतारत्ववदाकाशमिति नारोपः। तत्र परम्परासम्बन्धघटकस्य शब्दस्य बहिरिन्द्रियप्रत्यक्षत्वात्। नन्वेवं ज्ञानत्ववानात्मा इत्यारोपापत्तिः। तत्र परम्परासम्बन्धघटकस्य ज्ञानस्य बहिरिन्द्रियाप्रत्यक्षत्वादिति वाच्यम्। यदि च तादृशारोपो नास्ति तदा कारणान्तराभावस्यैव तत्र कल्पनीयत्वात्। अत एवोदयनाचार्य्यैरुक्तम्, "आरोपे सति निमित्तानुसरणं न तु निमित्तमस्ति इत्यारोपः" इति। यस्तु जवाकुसुमस्य बहिरिन्द्रियप्रत्यक्षत्वेऽपि लोहितः स्फटिक इत्यारोपः तत्र जवाकुसुमं नेदृशपरम्पराघटकं जवाकुसुमस्य स्फटिकावृत्तित्वात्। किन्तु जवाकुसुमस्य स्वच्छद्रव्यसान्निध्यमेव तद्रहितं पृथगेवारोपनिमित्तमिति सुधीभिरवधेयम्। *

स्तीति प्रथमपक्षं दूषयति—**अस्ति चेदि**ति। कथमिति—अयमाशयः, यदि गुणाभिव्यञ्जकयोः शब्दार्थयोः सतोरेव काव्यलक्षणत्वमभिमतं तदा लक्षणस्य न्यूनपदत्वम्।

**(लो, आ) गुणवत्त्वेति**—सगुणाविति पदेनैव शब्दार्थयोः सरसत्वमुक्तमित्यर्थः, **तर्हीति**—यदि सरसत्वप्रतिपादनाय सगुणावित्युक्तमित्यर्थः। तेन अलङ्काराः कटककुण्डलादिवदिति वचनेन अलङ्कारस्योत्कर्षमात्राधायकत्वात् लक्षणं परास्तमित्यर्थः। किंचात्र, तददोषाविति लक्षणे शब्दार्थाविति वचनमप्यसमीचीनं, तथा हि, काव्यत्वसामान्यस्य किं शब्दार्थयोः संयोगादिवद् व्यासज्यवृत्तित्वम्? उत गोत्वादिवत् प्रत्येकपरिसमाप्तिवृत्तित्वम्? नाद्यः सामान्यत्वादेव। न द्वितीयः शब्दार्थयोः

1 "अपि" इति अ. ग. पु. नास्ति।

* एतत्तु न रुचिरं दूषणम्। स्थूलजलसंयोगेन शीतो वायुः अर्कोपलसंयोगेन उष्णं जलमित्यादौ स्थूलजलार्कोपलसंयोगघटितयोः परस्परयोर्मध्यपदार्थयोः स्थूलजलार्कोपलयोः बहिरिन्द्रियप्रत्यक्षत्वेऽपि विशिष्टाधीनियामकत्वेन सम्बन्धत्वाङ्गीकारात्। चिदानन्दचमत्कारमयस्य रसस्य बहिरिन्द्रियप्रत्यक्षाविषयत्वेन तद्घटितपरम्परायाः

ननु 'शब्दार्थौ सगुणौ' इत्यनेन गुणाभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यावित्यभिप्राय इति चेत्, न। गुणाभिव्यञ्जकशब्दार्थवत्त्वस्यापि काव्ये उत्कर्षमात्राधायकत्वम्, नतु स्वरूपाधायकत्वम् (त)

उक्तं हि—काव्यस्य शब्दार्थौ शरीरम्, रसादिश्चात्मा, गुणाः [1]शौर्य्यादिवत्, दोषाः का[2]णत्वादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलङ्काराः कटककुण्डलादिवत्, इति।

एतेन 'अनलङ्कृती पुनः क्वापि' इति यदुक्तं तदपि परास्तम्। अस्य[3]ह्यर्थः सर्वत्र सालङ्कारौ क्वचित्त्वस्फुटालङ्कारावपि शब्दार्थौ काव्यमिति। तत्र सालङ्कार-

---

(वि, त) इदानीं सगुणत्वविशेषणस्य न लक्षणघटकत्वं किन्तु कव्युपदेशपरत्वमित्याशङ्कते, ननु शब्दार्थाविति दूषयति—चेन्नेति। शब्दार्थवत्वस्यापीत्यत्र तादात्म्यैनवतद्वत्ता शब्दार्थात्मक-काव्यस्य बोध्या।

**न तु स्वरूपाधायकत्वमि**ति स्वरूपं लक्षणम्। न चेदमयुक्तं दूषणं स्वरूपाधायकत्वस्योक्ताशङ्कायामविषयत्वात्, किन्तु कव्युपदेशपरतया एवाशङ्कितत्वादिति वाच्यम्। न तु स्वरूपाधायकत्वमित्यस्य स्वरूपे लक्षणे न निवेशौचित्यमित्येव, अर्थात् कव्युपदेशपरविशेषणस्य लक्षणे दानानौचित्यादित्यर्थः।

(वि, थ) **शौर्य्यादिवदिति**—रसस्योत्कर्षाधायका इति शेषः। कटककुण्डला-

---

प्रत्येकं काव्यत्व-प्रसङ्गात्। एतच्च एतद्ग्रन्थकृता स्वकृतायां काव्यप्रकाशटीकायां लिखितमपि प्राचीनगौरवनियन्त्रितेनात्रोपेक्षितम्। अदोषत्वादीनां तु काव्यलक्षणत्वे प्रमेयार्थविरोधप्रसङ्ग इति तन्निराकृतम्। *

(लो, इ) **एतेनेति** अलङ्कारादीनां कटककुण्डलादिसामान्यता उक्ता।

---

सम्बन्धत्वाङ्गीकारे बाधाभावाच्च। वस्तुतस्तु यत्र परम्परया विशिष्टधीनियामकत्वं तत्रैव तस्याः सम्बन्धत्वं कल्प्यते। यत्र तु विशिष्टधीनियामकत्वं तत्र तु सम्बन्धत्वं न कल्प्यते एव। तेन 'ज्ञानत्ववान् आत्मा' इत्यादौ स्वसमवायिसमवायस्य न सम्बन्धत्वमिति॥ रामचरणतर्कवागीशटीका।

* किं च शब्दार्थयोः प्रत्येकं न काव्यत्वम्। अनर्थकशब्दे शब्दानुपस्थापिते अर्थे च अतिप्रसङ्गात्। किन्तु शब्दार्थसमुदायस्य काव्यत्वं पञ्चभूतसंघातस्य शरीरत्वमिव; समुदायस्य कविव्यापारविषयता एव। अत एव वामनादयोऽपि गुणालङ्कारसंस्कृतयोः शब्दार्थयोः काव्यत्वमाहुः। केचित् काव्यत्वं नाम सामान्यमाहुः, तन्न 'शब्दार्थोभयधर्मतया स्वीक्रियमाणकाव्यत्वं, संयोगादिवत् अनेकाश्रितत्वं व्यासज्यवृत्तित्वं

1 "शौर्य्यादय इव" ख. पु.।

2 "कारणत्वखंजत्वादिवत्" इति ग. त. च. पु.।

3 "अस्यार्थः" इति ख. ग. पु०।

शब्दार्थयोरपि काव्ये उत्कर्षमात्राधायकत्वात् । एतेन 'वक्रोक्तिः काव्यजीवितम्' इति वक्रोक्तिजीवितकारोक्त[1]मपि परास्तम् । वक्रोक्तेरलङ्काररूपत्वात् । (थ, इ,)

यच्च[2] क्वचिदस्फुटालङ्कारत्वे[3] उदाहृतम्—

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥" इति

एतच्चिन्त्यम् । (द, ई)

---

दिवदिति शब्दार्थयोः शोभका इति शेषः । **एतेने**ति । उत्कर्षाधायकविशेषणस्य लक्षणेऽप्रवेश्यत्वेन इत्यर्थः ।

**सालङ्कारशब्दार्थयो**रिति—शब्दार्थयोः सालङ्कारत्वस्येति पर्य्यवसितार्थः ।

**(वि, द)** 'यः कौमारहर' इत्यादिश्लोकम् अस्फुटालङ्कारोदाहरणतया काव्यप्रकाशकार उदाहृतवान्, तत्र स्फुटालङ्कार एवास्तीत्याह—**यच्चे**ति । यः कौमारहर इति । रेवातीरे कृतसङ्केतायाः कुलटायाः स्वगृहे इयं भावना । उत्कण्ठाकरणं मम यद्यपि नास्ति तथापि तत्र कृतसङ्केते रेवारोधसि रेवातीरे वेतसीनामतरुतले सुरतव्यापाररूपलीलाविधिनिमित्तं चेतः समुत्कण्ठते इत्यर्थः । उत्कण्ठाकारणाभावं दर्शयति—**'यः कौमारहर'** इत्यादिना । कौमारं कुमारीत्वम्—अपरिणीतात्वम्, परिणयनेन यस्तद्धरः

---

वक्रोक्तिजीवितकारः, कश्चिदाह—अलङ्काररूपत्वात् । तथा ह्युक्तम्—

'सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्य्यः कोऽलङ्कारोऽनया विना " इति ।

**(लो, ई)** एवं काव्यलक्षणं दूषयित्वा काव्यप्रकाशकृतः स्फुटालङ्कारविरहोदाहरणे स्फुटालङ्कारं दर्शयन्नाह, **यच्चेति**—उदाहृतं काव्यप्रकाशकारैरिति शेषः । 'यः कौमारेति' कौमारं नवयौवनम्, तदकृतकप्रेमाऽसक्तया योऽतिवाहितवान्, स कौमार-

---

व्यासज्यवृत्तिर्वा, गोत्वादिवत् प्रत्येकपरिसमाप्तिर्वा । नाद्यः, सामान्यस्य व्यासज्यवृत्तित्वानङ्गीकारात् । न द्वितीयः, प्रत्येकं काव्यता-प्रसङ्गात् । केचित् प्रमेयत्वं नानार्थानुभवविषयत्वं प्रमेयत्वादिवत् काव्यत्वमुपाधिमाहुः । केचित् मिथुनादिशब्दवत् काव्यशब्दोऽपि संहतधर्मवचनमाहुः । ( ग्रन्थकृतः काव्यप्रकाशटीकायाम् )

1 "मतम्" इति (ख. ग. पु०)

2 "यत्तु" (छ. पु०)

3 "अपि इति अधिकपाठः (ज. पु०)

अत्र हि विभावनाविशेषोक्तिमूलस्य सन्देहसङ्करालङ्कारस्य स्फुटत्वम् ।
( ध, उ )

---

पतिरित्यर्थः । स एव वरः श्रेष्ठः, यथेष्टरतिसमर्थ इत्यर्थः । चैत्रक्षपा अपि सङ्केतस्थल इवात्राप्यविशिष्टा इत्याह–'ता एव' इति । सुगन्धिवायुरप्यत्राप्यविशिष्ट इत्याह 'ते चेति' । कदम्बानिलाः मध्यस्थितकदम्बवनानिला इत्यर्थः । अत एव ते प्रौढाः अपि मन्दत्वपर्य्यवसन्नाः । वनानिलस्य प्रौढत्वेऽपि मन्दत्वं वनबहिर्भावेन । सौगन्ध्यं तु मालत्यधीनमेव । चैत्रे कदम्बपुष्पस्याभाव एव, केचित्तु धूलीकदम्बपुष्पपरतया व्याचक्षते । तन्मते वायोः प्रौढत्वविशेषणानौचित्यापत्तेः अन्ये तून्मीलितमालतीनां ते च प्रौढसुरभयो घ्राणतर्पणगन्धाः, इति व्याचक्षते । तन्न । तदा कदम्बानिला इत्यत्र ते च इत्यस्याभावात् प्रत्यभिज्ञानुपपत्तेः । ते च इत्यस्यानुषंगे प्रक्रमभङ्गदोषापत्तेः, अनुषंगग्राहकाभावाच्च । सा चेति अहमपि तदवस्थैव, उभयत्र इत्यर्थः । इत्थमुत्कण्ठा-कारणं नास्ति, तथापि चित्तस्वभाववैलक्षण्यादुत्कण्ठेत्यर्थः ।

( वि, ध ) **विभावनेति**—उत्कण्ठाकारणाभावेऽपि उत्कण्ठावर्णना विभावना । " विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते" इति तल्लक्षणात् । तथा-नुत्कण्ठाकारणपत्यादिसत्त्वेऽपि उत्कण्ठारूपस्यानुत्कण्ठाभावस्य वर्णनाद् विशेषोक्तिः । " सति हेतौ फलाभावे विशेषोक्तिः" इति च लक्षणस्य वक्ष्यमाणत्वात्; तन्मूलसन्देह-सङ्करस्य तन्मूलसन्देहसङ्करालङ्कारस्य इत्यर्थः । तयोर्न सन्देहः । अविरोधिनोस्तयो-रेकत्र समावेशसम्भवेन सन्देहाभावात् । किन्तु तदुत्थापिताऽद्भुतरसशृङ्गाराभासयो-रङ्गाङ्गिभावसन्देहेन रसवत् प्रेयोऽलङ्कारयोरेव सन्देहः । तथा हि कारणाभावे फलात् कारणसद्भावे फलाभावाच्च विस्मयस्य उत्थापितत्वात्तत् स्थायिभावकोऽद्भुतरसः । स किमुपनायकविषयरत्युत्कण्ठालब्धस्य शृङ्गाराभासस्याङ्गमिति रसवदलङ्कारः ? रसस्या-

---

हरः वरः स्वयंवृतः, नतु पित्रादिभिर्ग्राहितः । चैत्रो वसन्तः, तत्र जातिकदम्बा-भावात्, मालती वासन्तिका । कदम्बो धूलिकदम्ब इति केचित् । संप्रदायविदस्तु स एव वसन्तः ता एव वर्षा इति मन्मथोद्दीपकत्वाविशेषाद् ऋतुद्वयस्याऽपि ग्रह इति व्याचक्षते ।

( लो, उ ) अत्र हीति कारणाभावे कार्य्योत्पत्तिर्विभावना सा चात्रास्फुटा । ये खलु उत्कण्ठायाः कारणानि प्रियसङ्गमाऽभावादयः, तदभावेऽप्यत्र उत्कण्ठोत्पन्नेति; तदभावश्च तद्विरोधिप्रियसङ्गमसद्भावमुखेनोपनिबद्ध इति विभावनाऽस्फुटा । यदि खलु प्रियसङ्गमाभावादीनां कारणानामसद्भावमुखेन वर्णनं तदेव तस्याः स्फुटत्वम् । विशेषोक्तिश्च कारणसामर्ग्र्ये कार्य्यानुत्पत्तिरूपा, साप्यत्रास्फुटा, प्रियसन्निधानादयो धृतेः कारणानि । अत्र च तेषु सत्स्वपि धृतिर्नोत्पन्नेत्युत्कण्ठोत्पत्तिमुखेन वर्णितम्, यदि

एतेन—"अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिं च विन्दति ।"
इत्यादीनामपि काव्यलक्षणत्वमपास्तम् । ( न, ऊ )

यत्तु ध्वनिकारेणोक्तम्—"काव्यस्यात्मा ध्वनिः" इति तत् किं वस्त्वलंकाररसादिलक्षणस्त्रिरूपो ध्वनिः काव्यस्यात्मा? उत रसादिरूपमात्रो वा? [1]नाद्यः । प्रहेलिकादावतिव्याप्तेः । द्वितीयश्चेदोमिति ब्रूमः । ( प, ऋ )

---

ङ्गत्वेन रसवदलङ्कारस्य वक्ष्यमाणत्वात् । किं वा स एव रसाभासोऽद्भुतरसस्याङ्गमिति प्रेयोऽलङ्कारः, आभासस्याङ्गत्वे प्रेयोऽलङ्कारस्य वक्ष्यमाणत्वात्'। अङ्गाङ्गिभावं विना स्वातन्त्र्येण रसद्वयप्रतीत्यभावस्य सर्वालङ्कारिकसम्मतत्वात्। **स्फुटत्वामि**ति—इदं च न रुचिरं दूषणं, तथा हि स्फुटत्वास्फुटत्वे तावत् शीघ्रप्रतीयमानत्वाप्रतीयमानत्वाभ्यामेव, तथा चात्र कारणाभावफलाभावयोर्वाचकस्य नञोऽभावेन तत् कल्पनाया विलम्बेनास्फुटत्वात् एवं तयोरस्फुटत्वाच्च सुतरां तन्मूलदर्शितालङ्कारयोरस्फुटत्वम् ।

**(वि, न)** एतेनेति–अस्मदुक्तदूषणेनेत्यर्थः ।

**(वि, प)** **ध्वनिरिती**ति—व्यङ्ग्यार्थ इत्यर्थः । नतु ध्वनिकाव्यम् । काव्यस्य काव्यात्मत्वासम्भवात्। **प्रहेलिकादावि**ति। न च तदपि काव्यमेवेति वाच्यं व्यङ्ग्यस्यास्वाद्यत्ववशादेव काव्यात्मत्वकथनात् । प्रहेलिकादौ तु व्यङ्ग्यस्याऽबोध्यतायामेव कवेस्तात्पर्य्यात्, अबोध्यत्वादेव तस्य वैचित्र्यम्, नत्वास्वाद्यव्यङ्ग्यत्वम्, तथा हि–

---

धृतिर्नोत्पन्नेत्युच्यते, तदा कार्य्यानुत्पत्तेः स्फुटतयोक्तत्वात् विशेषोक्तिः स्फुटा स्यात् । इह विरुद्धरूपोत्कण्ठोत्पत्तिमुखेन धृतेरनुपपत्तिरुक्ता, अतो विशेषोक्तिरस्फुटा । एवमत्र द्वयोर्विभावनाविशेषोक्त्योरस्फुटार्थत्वात् स्फुटालङ्कारविरह इति काव्यप्रकाशकृतो मतम् ।

तत्राह—**अत्राही**ति, अयमर्थः–अत्र विभावनाविशेषोक्ती अस्फुटे, तथापि तदुभयारब्धसन्देहे सङ्करालङ्कारस्य स्फुटत्वात् कथं स्फुटालङ्कारविरह इति । संसृष्टिसङ्करौ च लौकिकमुकुटाद्यलङ्कारामिश्रणेनेव पृथगलङ्कारत्वेनाभ्युपगतौ ।

**( लो, ऊ )** एतेन–तददोषाविति लक्षणस्य काव्यलक्षणत्वाभावकथनेन । अदोषमित्यादि सरस्वतीकण्ठाभरणोक्तलक्षणम् । विशेषश्चात्र सरसाविति वचने अत्यर्थत्वेन सगुणाविति वचनं समनन्तरोक्तरीत्याऽनर्थकम् ।

**( लो, ऋ )** सम्प्रति रसमात्रध्वनेः काव्यत्वं सिषाधयिषुर्वस्त्वलङ्कारयोस्तन्निरस्यन् आह–**यत्त्विति**। ध्वनिकारः श्रीमदानन्दवर्द्धनाचार्य्यः। वस्तु अर्थमात्रम्, अलङ्कारस्तदेव विच्छित्तियुक्तम् । रसः शृङ्गारादिः, आदिशब्दात् भावतदाभासादयोऽसंलक्ष्यक्रमभेदाः।

---

1 "तत्र नाद्यः" (इति ख. पु० ।)

**ननु यदि रसादिरूपमात्रो[1] ध्वनिः काव्यस्यात्मा ( फ ) तदा—**

**"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसं पलोएहि ।**

**मा पहिअ रत्तिअन्धअ से[2]ज्जाए महें[3]ण मज्जहिसि" । (ब, ऋ)** *

---

'तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः ।

गुरूणां सन्निधानेपि कः कूजति मुहुर्मुहुः ॥'

इत्यत्र यः पूर्णकलशो व्यङ्ग्यस्तस्याऽबोध्यतायामेव कवेस्तात्पर्य्यादत्रैव वैचित्र्येण अलङ्कार एव प्रहेलिका । यत्तु अस्फुटाख्ये गुणीभूते व्यङ्ग्ये कृच्छ्रगम्यत्वं तत्र कृच्छ्रगम्यतायां न कवेस्तात्पर्य्यमतस्तस्य नातिकृच्छ्रगम्यत्वम्, आस्वाद्यत्वं चास्त्येव । प्रहेलिकादावित्यादिपदात् कर्तृकर्मगुप्त्यादिपरिग्रहः। **द्वितीयश्चेदि**ति—स्वीकारे ओंकारः। मयापि 'वाक्यं रसात्मकं काव्यम्' इति वक्ष्यमाणत्वादिति भावः ।

**( वि, फ )** ननु यदि व्यङ्ग्यो रस एव काव्यस्यात्मा तदा वस्तुनो व्यङ्ग्यत्वे कथं काव्यत्वमित्याशङ्कते "**ननु रसादिमात्रे**ति" ।

**(वि, ब) अत्ता एत्थे**ति—

"श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय ।

मा पथिक रात्र्यन्ध शय्यायामावयोर्मङ्क्ष्यसि ॥"

रात्र्यन्धत्वेन कथितात्मानं स्वगृहे कृतावासं पथिकं प्रति स्वयं दूत्या उक्तिरियम् । अत्ता श्वश्रूः देशी । श्वश्रा निमज्जनकथनेन अस्या मृतप्रायत्वं सूचितम् ।

---

प्रहेलिका—व्यङ्ग्यार्थविशिष्टो नीरसो वाक्यविशेषः । यथा—

"के दारपोषणरताः का शीतलाम्बुवाहिनी गङ्गा ।

कं संजघान कृष्णः कं बलवन्तं न बाधते शीतम् ॥"

इत्यत्र प्रश्नरूपोऽर्थो वाच्यः, उत्तररूपश्च व्यङ्ग्यः । तथा हि—दाराणां भार्य्याणां पोषणे रताः के ? शीताम्बुवाहिनी गंगा का ? कं कृष्णः संजघान ? बलवन्तं कं न बाधते शीतम् ? इति प्रश्नः । उत्तरपक्षे केदाराः क्षेत्राणि ।

**(लो, ऋ) अत्ते**ति—दिवसकमिति काले कर्म, अत्र पुंश्चलीवचनेन मत् शय्यास्थानम् अभीतं समागच्छेत्यर्थमात्रस्य ध्वनितम् । कथमेवमादीनां काव्यत्वाभ्युपगम

---

* अत्र गृहे विद्यमानायाः श्वश्र्वा अतिवृद्धतया बधिरनिश्चेष्टत्वादियोगात् अन्यस्य च असत्त्वात् निःशङ्कं व्यवहार इति वक्तृवैशिष्ट्यात् प्रतीयते ।

1 "रसादिमात्ररूप एव" इति. (ख. ग. पु.)

2. " सज्जाए " इति (ख० पु० )

3. " मह णिमंज्जहिसि " इति ( ख. पु. )

इत्यादौ वस्तुमात्रस्य व्यङ्ग्यत्वे कथं काव्यव्यवहार इति चेत्, न[1]। अत्रापि रसाभासवत्तयैव[2] भ्रमः। (भ)

अन्यथा "देवदत्तो ग्रामं याति" इति वाक्ये तद् भृत्यस्य तदनुसरणरूप-व्यङ्ग्यावगतेरपि काव्यत्वं स्यात्। अस्त्विति चेत्, न। रसवत एव काव्यत्वाङ्गीकारात्।

काव्यस्य प्रयोजनं हि रसास्वादमु[1]खपिण्डदानद्वारा[2] वेदशास्त्रविमुखानां सुकुमारमतीनां राजपुत्रादीनां विनेयानां रामादिवत् प्रवर्त्तितव्यम्, न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेश इति चिरन्तनैरप्युक्तत्वात्। (म, ऌ)

तथाचाग्नेयपुराणेऽप्युक्तम्—"वाग् वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्" इति। व्यक्तिविवेककारणाप्युक्तम्—" काव्यस्यात्मनि सं[3]ज्ञिनि रसादिरूपे न कस्यचिद् विमतिः" इति।(ए)

---

(वि, भ) **वस्तुमात्रस्य व्यङ्ग्यत्व** इति। मम शय्यायामागमिष्यसीत्येवं वस्तुमात्रस्य इत्यर्थः। **रसाभासे**ति। उपनायकविषयत्वादाभासः। व्यङ्ग्यान्तरसत्त्वेऽपि रसपर्य्यवसान एव काव्यत्वम्। तथात्वाभावे काव्यत्वस्वीकारे त्वतिव्याप्तिरित्याह—**अन्यथे**ति।

(वि,म)रसवत एव काव्यत्वाङ्गीकारे बीजमाह—**काव्यस्य प्रयोजनमि**ति। कृत्याकृत्येति रसास्वादमुखपिण्डदानदर्शनात्तादृशमुखपिण्डस्यैव मुख्यप्रयोजनत्वमुक्तम्। तादृशोपदेशस्तु यथासम्भवमेवेत्युक्तम्। तथा च—'शून्यं वासगृहमित्यादि' 'यः कौमारहर' इत्यादिश्लोकेषु तादृशोपदेशाभावेऽपि काव्यत्वमनुगणम्।

(वि, य) वाग्वैदग्ध्यमलङ्कारः। संज्ञिनि काव्यसंज्ञावति व्यङ्ग्यार्थसाधारण-

---

इति पूर्वपक्षः। सिद्धान्तमाह—**अत्रापी**ति, रसाभासवत्तयैव। ननु केवलं वस्तुमात्रस्य व्यङ्ग्यत्वेन। रसाभासश्चात्र पुंश्चल्याः परनायकविषयाया रतेः प्रकाशनात्। अथवा नीरसेष्वपि वस्तुमात्रप्राधान्येन काव्यव्यवहारस्वीकारः।

(लो, ऌ) **काव्यस्ये**ति—अयमर्थः, रसास्वाद एव मुखं पिण्डस्य द्वारेण तदुक्तम्—

'स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपयुञ्जते।
प्रथमालीढमधवः पिबन्ति कटु भेषजम्॥' इति

(लो,ए)व्यक्तिविवेककारो हि महिमाचार्य्यः। आत्मलाभः कविसंज्ञाप्राप्तिः तत्सिद्धेः इतिवृत्तलाभात्। आदिशब्देन रसमात्रस्य काव्यजीवात्मत्वाप्रतिपादको वाग्गुम्फः। **ननु**

---

1 'सुस' इति (ख. ग. पु.)

2 'द्वारेण' इति (ख. ग. पु.)

3 'संगिनि' इति (च. छ. पु.) 'आ आङ्गिनि' इति (ङ प्रकाशित पु.)

ध्वनिकारेणाप्युक्तम्—" नहि कवेरितिवृत्तमात्रनिर्वाहेणात्म[1]लाभः । इतिहासादेरेव तत् सिद्धेः" इत्यादि । ननु तर्हि प्रबन्धान्तर्वर्त्तिनां केषांचिन्नीरसानां पद्या[2]नां काव्यत्वं न स्यादिति चेत्, न न, रसवत् पद्यान्तर्गतनीरसपदानामि[3]व पद्यरसे[4]न प्रबन्धरसेनैव तेषां रसवत्ताङ्गीकारात् । यत्तु नीरसेष्वपि गुणक्रि[5]याभिव्यञ्जकवर्णसद्भावाद्दोषाभावादलङ्कारसद्भावाच्च काव्यव्यवहारः स रसादिमत्काव्यबन्धसाम्याद् गौण एव । यत्तु वामनेनोक्तम्—" रीतिरात्मा काव्यस्य" इति तन्न । रीतेः संघटनाविशेषत्वात् । संघटनायाश्चावयवसंस्थानरूपत्वात्, आत्मनश्च तद्भिन्नत्वात् । ( य, ऋ )
यच्च ध्वनिकारेणोक्तम्—

" अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ।" इति ।

अत्र वाच्य[6]स्यात्मत्वं 'काव्यस्यात्मा ध्वनिः' इति स्ववचनविरोधादेवापास्तम् । ( र ) तत्[7] किं पुनः काव्यमित्युच्यते—

**वाक्यं रसात्मकं काव्यम् ॥१॥**

---

स्यार्थस्य काव्यसंज्ञावत्त्वात् । इतिवृत्तं वर्णितार्थः। **गुणक्रिये**ति । यद्यपि वर्णो गुणस्यैव व्यञ्जको न क्रियायास्तथापि अत्र वर्णपदं वर्णादिपरं बोध्यम् ।

**(वि, र) वाच्यप्रतीयमानौ**विति । अत्र वाच्यपदं प्रतीयमानपदाद्व्यङ्ग्यभिन्नपरम्, तेन लक्षणार्थस्यापि परिग्रहः । **स्ववचने**ति । ध्वनिर्व्यङ्ग्यार्थः । तस्यात्मकत्वकथनवाच्यार्थात्मकथनरूपयोः स्ववचनयोर्विरोधादित्यर्थः ।

**(वि, ल)** तत् किं पुनः काव्यमित्यादिप्रश्नः । 'उच्यते' इत्यादि समाधानम् । प्रतिपादितत्वादिति–'देवदत्तो गच्छति' इत्यादिनेत्यर्थः ।

---

**तर्ही**ति—ननु यदि रसवदेव काव्यमित्यर्थः । नीरसानां वर्णितपर्वतादिपात्राणाम् । सिद्धान्तमाह—प्रबन्धरसो महाकाव्यम् । रीतिः पदसंघटना, अवयवाः पदानि ।

**(लो, ऐ)** एवं प्राक्तनलक्षणानां प्रमेयविरोधं दर्शयित्वा स्वलक्षणमवतारयति । **तत् किं पुनरि**ति–यदि नैतानि काव्यलिङ्गलक्षणानीत्यर्थः । रसात्मकमित्यत्र रस-

---

1 'आत्मपदलाभ' इति, (ङ, झ. पु. )
2 'पद्यानां' इति, ग. पु. नास्ति ।
3 'इव' इति, ग. पु. नास्ति ।
4 'पद्यरसे' इति, (ट, पु. )
5 'गुणाभिव्यंजक' इति, (ख. ग. घ. ङ. च, पु. )
6 'वाच्यात्मत्वं' इति, ( ञ पु. )
7 'तत् किं स्वरूपं' इति ( ट, ड. पु. )

रसस्वरूपं निरूपयिष्यामः । रस एवात्मा सार[1]रूपतया जीवनाधायको यस्य[2] । तेन विना तस्य काव्य[3]त्वाभावस्य प्रतिपादितत्वात् । "रस्यते इति रसः" इति व्युत्पत्तियोगाद् भावतदाभासादयोऽपि गृह्यन्ते[4] । तत्र रसो यथा—

(ल, ऐ)

"शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता चिरं बाला चुम्बिता ॥" (व, ओ)

---

(वि.व) **शून्यं वासगृहमि**त्यादि । किंचिदुद्भिन्नयौवनायाः नवोढायाः क्रियावर्णनमिदम् । अत्र विलोक्येत्यादिक्रमेणैव सकलक्रियाणां पूर्वापरभावः क्त्वानिर्दिष्टो बोध्यः । शयनात् किंचिदुत्थानं प्रियजागरणे द्रुतं सम्वरणाय । शनैस्त्वं तु शब्दानुत्पत्तये । पतिमुखचिरनिर्वर्णनं निद्रानिश्चयायानुरागेण च । विश्रब्धं निद्रानिश्चयेन जाताश्वासं, यथा स्यात् तथा चुम्बनक्रियाविशेषणमिदम्, आलोक्य लज्जानम्रमुखी जाता इति शेषः मुखेन बोध्यम् । तदैव क्रियाद्वयैककर्त्तृक्येन क्त्वानिर्देशोपपत्तेः । एतत् पर्य्यन्तक्रियासु बाला कर्त्री, हासप्रियचुम्बनस्य तु कर्म । चुम्बनस्य चिरत्वं नायिकाया भावनिश्चयेन त्रासाशङ्काभावादनुरागाधिक्योत्पत्तेश्च । अत्र व्यङ्ग्यौ परस्पररतिसम्भोगशृङ्गारौ । शून्यवासगृहविलोकनं रतेरेवोद्दीपनविभावः । शय्योत्थानादिमुखनम्रतान्ताः क्रिया नायिकाया रतेरनुभावाः । ता एव नायकरतेरुद्दीपनविभावाः, प्रियेण चुम्बनं तदीयहासश्च तदीयरतेरनुभावौ, तावेव नायिकारतेरुद्दीपनविभावौ, उभयाभिज्ञे सामाजिके रसोत्पत्तिः ।

---

पदेनाऽसंलक्ष्यक्रमभेदानां सर्वेषां परिग्रह इत्याह—**रस्यत** इति । रस्यते आस्वाद्यते, स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भव इत्युक्तप्रकारः, कर्मत्वं रसादीनामुपचारात् । कर्मकर्त्तरि, वा प्रयोगादिति वक्ष्यते । तदाभासाः रसाभासा भावाभासाश्च आदिशब्दात् भावस्य शान्तिरुदयः सन्धिः शबलता च ।

(लो, ओ) **शून्यमि**ति—शून्यं विविक्तं वासगृहं केलिभवनं विलोक्य, शयनात्, शय्यायाः किञ्चिदुत्थाय उत्थिता भूत्वा शनैर्मन्दं निःशब्दमित्यर्थः । बाला निद्राव्याजमुपागतस्य प्रियस्य मुखं सुचिरं निर्वर्ण्य दीर्घकालं विलोक्य सम्यक् परीक्ष्य

---

1 "स्वरूपतया" इति ट, पु०

2 "अस्य" इति ट. पु०

3 "काव्यत्वानङ्गीकारात्". इति ट. पु०

4 "उच्यन्ते" इति ट. ठ. पु०

अत्र हि सम्भोगशृङ्गाराख्यो रसः ।

भावो यथा महापात्रराघवानन्दसान्धिविग्रहिकाणाम्—

"यस्यालीयत शल्कसीम्नि जलधिः, पृष्ठे जगन्मण्डलं
दंष्ट्रायां धरणी, नखे दितिसुताधीशः पदे रोदसी ।
क्रोधे क्षत्रगणः, शरे दशमुखः, पाणौ प्रलम्बासुरो
ध्याने विश्वमसावधार्मिककुलं कस्मैचिदस्मै नमः ॥"

अत्र भगवद्विषया रतिर्भावः । ( श, औ )

---

**(वि, श) यस्यालीयत** इति । अस्मै यत्पदोपस्थापिताय कस्मैचित् अनिर्वचनीयाय अर्थाद्दशावतारिणे नारायणाय नमः ।

तस्य मत्स्यादिदशावतारभेदेन धर्म्मानाह—**यस्येति** । जलधितोऽपि मत्स्यस्य गाढोक्त्या महत्त्वात् तच्छल्कसीम्नि लयः । पृष्ठ इति—इदं कूर्मावतारे । अलीयत इति सर्वत्रान्वयः । जगन्मण्डलं भूमण्डलं पृष्ठस्य महत्त्वात् । दंष्ट्रायामिति वराहावतारे । दितिसुताधीशो हिरण्यकशिपुः, इदं नरसिंहावतारे । रोदसी द्यावापृथिव्यौ, इदं वामनावतारे । क्रोध इति परशुरामावतारे । ध्यानम् इति बुद्धावतारे विश्वध्यायित्वात् । असाविति कल्क्यवतारे असिना म्लेच्छच्छेदनात् ।

---

इत्यर्थः । विश्रब्धं निःशङ्कं यथा स्यात्तथा परिचुम्ब्य आस्वाद्य जातपुलका उत्फुल्लरोमाञ्चाङ्कितां गण्डस्थलीं विलोक्य लज्जानम्रमुखी व्रीडावनतवदना सती हसता प्रियेण चिरं चुम्बितेति सम्बन्धः । नायिका स्वीया, नायकोऽनुकूलः, अत्र नर्मगर्भजातिरलङ्कारः । शून्यमित्यादि, अत्र विलोकनशब्दोऽन्तर्भूतणिजर्थः, तेनालोकनम्, अनयोरेककर्तृकतया पूर्वकालीनक्त्वाप्रत्ययः । इह च नायको नायिका चालम्बनविभावौ । शून्यवासगृहादिरुद्दीपनविभावः । अनुभावा बालागतविलोकनादयः नायकागता व्याजनिद्रादयश्च । निद्राया हि व्याजारब्धतया न व्यभिचारित्वम्, व्यभिचारिणश्च नायिकागताः, विलोकनेन शङ्का, उत्थानेन चपलता । उत्थानस्य शनैस्त्वेन त्रासः, चिरं निर्वर्णनेन सुप्तो न वेति सन्देहप्रभवो वितर्कः, विश्रब्धमित्यनेन निद्रानिश्चयज्ञानेन हर्षः, परिचुम्बनेनौत्सुक्यम्, आलोकनेन चपलता, मुखनमनेन लज्जा निर्दिष्टैव । नायकगता च व्याजनिद्राश्रयेण धृतिः, चिरपरिचुम्बनेनौत्सुक्यं हर्षश्च । एभिश्च साधारण्येनाभिव्यक्तः सामाजिकरतिभावः शृङ्गाररसरूपतां भजते । एवं वक्ष्यमाणोदाहरणेष्वपि विभावादिविवेको बोद्धव्यः ।

**(लो, औ) यस्यालीयते**ति—अत्र भगवतो दशावतारवर्णनम् । अत्रालीयतेति क्रियायाः प्रतिवाक्यमन्वयः । शल्कसीम्नि वल्कलप्रदेशे जलधिरलीयतेति, अनेन मत्स्यः । पृष्ठदेशे जगन्मण्डलमलीयतेति कूर्मः, एवं वराहादयः । कस्मैचिद् विशेषतो निर्देष्टुमशक्यत्वात् ।

रसाभासो यथा—

"मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः ।

शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ।" ( ष, अ )

अत्र सम्भोगशृङ्गारस्य तिर्य्यग्विषयत्वाद्रसाभासः । एवमन्यत् । दोषाः पुनः काव्ये किंस्वरूपा ( आ ) इत्युच्यन्ते—

**दोषास्तस्यापकर्षकाः ॥२॥**

श्रुतिदुष्टापुष्टार्थत्वादयः काणत्वखञ्जत्वादय इव शब्दार्थद्वारेण देहद्वारेणेव व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो मूर्खत्वादय इव साक्षात् काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्यस्यापकर्षका इत्युच्यन्ते* एषां विशेषोदाहरणानि वक्ष्यामः गुणादयः[1] किं स्वरूपा इत्युच्यन्ते—

**उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ॥ ३ ॥**

गुणाः शौर्य्यादिवत्, अलङ्काराः कटककुण्डलादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, देहद्वारेणेव शब्दार्थद्वारेण तमेव[2] काव्यस्यात्मभूतं रसमुत्कर्षयन्तः काव्यस्योत्कर्षका इत्युच्यन्ते । ( स )

इह यद्यपि गुणानां रसधर्मत्वं तथापि गुणशब्दोऽत्र गुणाभिव्यञ्जकशब्दा-

---

**(वि, ष) मधुद्विरेफ** इति—महेशतपोभङ्गायाऽऽकालिके वसन्ते जाते तिरश्चामपि मान्मथक्रियावर्णनमिदम् । अत्र प्रियया साहित्येन मधुपानं प्रियाकण्डूयनं च द्विरेफकृष्णसारयो रतेरनुभावौ । तयोः शृङ्गारयोस्तिर्य्यग्गतत्वेन भासः । **एवमन्यदि**ति । भावाभासादयोऽप्येवम्, ते चाग्रे प्रदर्शयिष्यन्ते ।

**(वि,स) श्रुती**ति—श्रुतिदुष्टादयः अपुष्टत्वादयोऽर्थदोषाः । एते च शब्दार्थद्वारेण रसमपकर्षयन्त इत्यन्वयः । व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयः साक्षादित्यर्थः ।

**उत्कर्षहेतव** इति—काव्यात्मभूतस्य रसस्य उत्कर्षहेतव इत्यर्थः । तद्धेतुता च शब्दार्थद्वारेण इति व्याख्यास्यते । शब्दार्थावुत्कृष्य रसमुत्कर्षयन्तीत्यर्थः ।

---

**(लो, अ)** कुसुमरूपे एकस्मिन् पात्रे ।

**(लो, आ) दोषाः पुन**रिति—येषां सद्भावेन काव्यत्वं खण्डितमित्यर्थः । किंस्वरूपाः किमाकारेण वर्त्तन्ते इति पूर्ववद् व्याख्यानम् ।

---

*यथा काणत्वखञ्जत्वादयः देहद्वारेण आत्मानमपकर्षयन्ति मूर्खत्वादयश्च साक्षात् आत्मानमपकर्षयन्ति तथा श्रुतिदुष्टादयो दोषाः शब्दार्थद्वारेण काव्यस्यात्मभूतं रसमपकर्षयन्ति, व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो दोषाः साक्षात् काव्यस्यात्मभूतं रसमपकर्षयन्ति ।

1 "गुणाः किं" इति (च पु० )

2 "तस्यैव" इति (च पु० )

र्थयोरुपचर्य्यते । अतश्च 'गुणाभिव्यञ्जकाः शब्दा रसस्योत्कर्षकाः' इत्युक्तं भवतीति प्रागेवोक्तम् । एषामपि विशेषोदाहरणानि वक्ष्यामः । (ह, इ)

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापन परमाचार्य्यकविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धि- विग्रहिकमहापात्रश्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे काव्य- स्वरूपनिरूपणो नाम प्रथमः परिच्छेदः ।

---

**(वि, ह)** ननु शब्दार्थद्वारेण रसोत्कर्षकत्वमलङ्काररीतीनां शब्दार्थधर्माणामेव सम्भवति रसमात्रधर्माणामेव गुणानां कथं तद्द्वारकत्वं व्याख्यातमित्यत आह—**इहे**ति। **गुणाभिव्यञ्जकशब्दार्थयो**रिति। यद्यपि वर्णा एव गुणाभिव्यञ्जका इति वक्ष्यन्ते तथापि वर्णेन पदं तेनार्थस्तेन च गुणो व्यज्यते, इत्यभिप्रायेण अर्थस्य गुणाभिव्यञ्जकत्वमुक्तम् । तथा च स्वव्याख्यातार्थ एवानेनोपपादितः स्वयं, तथा व्याख्याने तु गुणानां साक्षाद्रसोपकारकत्वेनैव कारिकार्थः संगच्छते इति बोध्यम् ।

**प्रागेवोक्त**मिति—ननु शब्दार्थद्वारा गुणानां रसोत्कर्षकत्वं प्राङ्नैवोक्तम् । तत् कथमिदमुक्तमिति चेत्, सत्यम् किन्तूत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतय इत्युक्तौ अलङ्काररीत्योः समभिव्याहारेण पाठवशात् तद्रीतिकत्वलाभः । अत उक्तमित्यत्र उक्तप्रायमित्येवार्थः ।

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यविरचितायां साहित्यदर्पण- टीकायां प्रथमपरिच्छेदविवरणम्

---

**(लो, इ) शौर्य्यादिवदि**ति—शौर्य्यादिव्यञ्जकशारीरिकधर्मविशेषवत् । अलङ्काराश्चानुप्रासोपमादयः, ये च तद्धर्मविशेषान्तःपातित्वादिरूपेण प्रतिपादयिष्यमाणाः प्राचीनोक्ताः श्लेषप्रसादादयः तद्युक्तशब्दः चार्थश्च प्राचीनोक्तश्लेषप्रसादादिगुणयुक्तः तयोः रसादिरूपव्यङ्ग्यानां गुणानां व्यञ्जकत्वेन उपचर्य्यते, तदाह काव्यप्रकाशकार एव, " गुणवृत्त्या पुनस्तेषां स्थितिः शब्दार्थयोर्मता"इति । ननु भवन्मते माधुर्य्यादयस्त्रय एव गुणास्ते च रसमात्रनिष्ठाः । प्राचीनोक्ताः श्लेषप्रसादादयः शब्दार्थनिष्ठत्वेन विंशतिप्रकारास्ते च भवद्भिरस्वीकृतत्वेन च निर्देष्टव्याः; तत् कथमिदानीं तद्युक्तयोः शब्दार्थयोर्व्यञ्जकत्वम् ? उच्यते न खलु तेषामस्वीकारः, किन्तु अन्तर्भावित्वादिरूपेण शब्दार्थमात्रनिष्ठत्वात् रसमात्रनिष्ठगुणवैजात्यात् न पृथगुक्तिः। यदाह—'केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः''इति। न वयं तेषां यथासम्भवं रसधर्मत्वेनोक्तानां व्यञ्जकत्वं न स्वीकुर्मः, किन्तु रसधर्मत्वम् । तदुक्तं ध्वनिकृता,

"रौद्रवीररसाविष्टा लक्ष्यन्ते काव्यवर्तिनः ।
तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम् ॥"

इति सर्वमतावदातम् । इति साहित्यदर्पणलोचने प्रथमपरिच्छेदः समाप्तः ।

# द्वितीयः परिच्छेदः ।

वाक्यस्वरूपमाह—( अ )

**वाक्यं स्याद् योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः ॥ २ ॥**

**योग्यता* पदार्थानां परस्परसम्बन्धे बाधाभावः(१) पदोच्चयस्यैतदभावेऽपि वाक्यत्वे वह्निना सिञ्चतीत्यपि वाक्यं स्यात्। ( क ) आकाङ्क्षा+-प्रतीतिपर्य्यवसानविरहः ( २ ) स च श्रोतुर्जिज्ञासारूपः। ( ख ), ( आ )।**

---

**(वि, क)** वाक्यं रसात्मकं काव्यमित्युक्तत्वात् वाक्यलक्षणं वक्तुमाह—**वाक्यस्वरूपमि**ति। बाधाभावो बाधमात्राभावत्वे बाधज्ञानाभावः, तु बाधिते बाधाऽज्ञाने शाब्दबोधानुपपत्तेः । वह्निना सिञ्चतीत्यन्वयबोधजनकस्यैव वाक्यत्वं, सेकं प्रति वह्नेः करणतान्वयबाधान्नान्वयबोधः । नन्वेवमन्वयबोधजनकत्वमेव लक्षणमिति वाच्यम् ? अन्वयबोधजनकसामग्रीप्रदर्शनार्थं तद्घटितलक्षणकरणात् ।

**(वि, ख) आकाङ्क्षे**ति—प्रतीतिपर्य्यवसानविरहमेव व्याचष्टे **सचे**ति । जिज्ञासा च प्रतीतपदार्थातिरिक्तपदार्थः; सा च प्रथमप्रतीतपदार्थान्वयबाधार्थमुत्थिता बोध्या, तेन गौरश्व इत्यादौ दैवादश्वेति जिज्ञासासत्त्वेऽपि नाकाङ्क्षा । चैत्रस्य भ्राता गृहं गच्छतीत्यादौ चैत्रस्य न गृहे आकाङ्क्षा उदेति भ्रातरि जनिताऽन्वयबोधात् । तेन चैत्रस्य गृहमिति न बोधः । "विमलं जलं नद्याः कच्छे महिषश्चरति"इत्यत्र विमलजलेऽन्विताया अपि नद्याः कच्छस्य सम्बन्धिकत्वेनोपस्थितेः नदीरूपे सम्ब-

---

**( लो, अ )** सम्प्रति काव्यलक्षणयोर्वाक्यरसयोः स्वरूपजिज्ञासायां प्रथमोद्दिष्टं वाक्यं द्वितीयपरिच्छेदेन सपरिकरं निरूपयितुकामः तत् सामान्यलक्षणप्रतिपादिकां कारिकामवतारयति—**वाक्यस्वरूपमि**ति । स्वमसाधारणं रूपं स्वरूपम्; इतरव्यावर्तको धर्मः ।

**( लो, आ) वाक्यं स्यादि**ति । एतद् विवृणोति । **योग्यते**ति । **पदार्थाना**मिति । पदानां गौरित्यादीनामर्थाः पदार्थाः । एतदभावे योग्यताया अभावेऽपि गौरित्यादीनां परस्परमाकाङ्क्षाविरहिणां पदानां प्रतीतिपर्य्यवसानविरह इत्येव विशदयति-**श्रोतुर्जिज्ञासा** इति । आकाङ्क्षा आत्मधर्मः श्रोतुर्जिज्ञासारूपत्वेन इच्छारूपत्वात् । योग्यताऽर्थधर्मः स्फुट एव ।

---

1 'इत्याद्यपि' इति ( क. ग. पु. )

* अन्वयप्रयोजकरूपवत्त्वं योग्यता (विश्वनाथस्य–का० टी०) ।

+ आकाङ्क्षेति–समभिव्याहृतपदस्मारितपदार्थजिज्ञासा आकाङ्क्षा ।

**निराकाङ्क्षस्य वाक्यत्वे गौरश्वः पुरुषो हस्तीत्यादीनामपि वाक्यत्वं स्यात् (ग) आसत्तिर्बुद्ध्यविच्छेदः । बुद्धिविच्छेदेऽपि वाक्यत्वे इदानीमुच्चरितस्य देवदत्तशब्दस्य[1] दिनान्तरोच्चारितेन गच्छतीतिपदेन संगतिः स्यात् (*) (घ)**

---

न्धिनि तात्पर्य्यवशात् कच्छान्वयार्थमपि कच्छे जिज्ञासा उदेति इति न तत्राऽव्याप्तिः । वह्निना सिञ्चतीत्यत्र तु करणतायाः कार्यं विना अनुपपत्त्या सेके तत् कार्य्ये उदेति एवं आकाङ्क्षा इति बोध्यम् । एवं चाकाङ्क्षितपरस्परसम्बन्धे बाधविरह एव योग्यता, अन्यथा अनाकाङ्क्षितस्य कालिकसम्बन्धस्य वह्निकरणतासेकयोरपि सत्त्वाद् योग्यता स्यात् ।

**(वि, ग) गौरश्व** इत्यादि । अत्र चाकाङ्क्षाभावादेव आकाङ्क्षितसम्बन्धे बाधविरहरूपा योग्यतैव नास्ति; इत्याकाङ्क्षाया एवाभावान्न वाक्यत्वम् । आकाङ्क्षाभावश्च प्रथमान्तपदार्थस्य प्रथमान्तपदार्थान्तरे भेदेनान्वयार्थं जिज्ञासानुदयस्याऽनुभाविकत्वादेव; अभेदान्वये तु, बाध एव **(वि, घ)** आसत्तिलक्षणमाह—यत् पदबुद्ध्यव्यवधानेन यत् पदबुद्धिस्तेनैव सह तस्यासत्तिरित्यर्थः । अव्यवधानं च तदन्वयानुपयुक्तार्थकसार्थकपदान्तरेण, चिरकालेन वा बोध्यम् । तेन काष्ठैः स्थाल्यामोदनं पचतीत्यत्र स्थाल्यादिपदव्यवधानेऽपि काष्ठपदे पचधातोरासत्तिरस्त्येव, स्थाल्यादिपदार्थानां तदन्वयोपयोगित्वात् । निरर्थकेन व्यवधाने तु अस्त्येवाऽऽसत्तिः—यथा " स वै गच्छति " इत्यत्र वैकारस्तु निरर्थकोऽपि प्रामाणिकप्रयुक्त एव बोध्यः । नतु चकारादिः । तेन तदन्वयानुपयुक्तार्थकेन प्रामाणिकाऽप्रयुक्तनिरर्थकेन चाव्यवधानमर्थः । गिरिर्भुक्तमग्निमान् देवदत्तेन इत्यत्र तु गिर्य्यग्निमत्पदयोर्नासत्तिः । तदन्वयानुपयुक्तभुक्तपदेन व्यवधानात् । कालव्यवधाने तु कालस्य चिरत्वं, तत्पदबुद्धिधारालोपाधिकरणत्वमेव । तत्रासत्त्यभावं दर्शयति—**बुद्धिविच्छेदेऽपी**ति—नच तत्र पूर्वोच्चारितपदार्थस्मृतिर्यद्यस्ति तदेष्वत एव तत्र वाक्यत्वं, नचैतदभावादेव शाब्दबोधानुत्पत्त्या वाक्यत्वाभाव इति वाच्यम्, शब्दबोधजनकत्वस्यासत्तिलक्षणेऽप्रवेशेन तत्पदस्मृत्यभावेन शाब्दबोधाजनकतया वाक्ये

---

एतदभावात् गौरश्वः पुरुषो हस्तीत्यत्र च नान्वयबोधः । साकाङ्क्षवाक्येऽपि अन्वयबोधानन्तरं निराकाङ्क्षत्वव्यवहारात् । प्रकृतान्वयबोधसमानाकारशाब्दबोधाभावोऽपि आकाङ्क्षान्तरम् । अतो 'घटमानय'इति वाक्यम् एकदा अन्वयबोधे जनिते न अन्वयबोधान्तरजनकम् (का—प्र—टी॰विश्वनाथ) । **प्रतीती**ति—प्रतीतेः पर्य्यवसानम् (समाप्तिः) तस्यः विरहः (अभावः) केवलं क्रियाश्रवणे बोधाभावाच्च कारकस्य (प्रथमं कर्त्तुः ततः कर्मप्रभृतीनां) जिज्ञासा स्वत एवोदेति ।

---

* अव्यवधानेनाऽन्वयप्रतियोग्युपस्थितिरासत्तिः । व्यवधानं प्रकृतान्वयविरोधिना कालेन च बोध्यम् । तत्र गिरिर्भुक्तमग्निमान् देवदत्तो नेत्यत्र नान्वयबोधः । भुक्तपदस्य

1 'पदस्य' (ग. पु.)

[1]अत्राकाङ्क्षायोग्यतयोरात्मार्थधर्मत्वेऽपि पदोच्चयधर्म्मत्वमुपचारात्। * (ङ)

**वाक्योच्चयो महावाक्यम्॥ २॥**

**योग्यताकाङ्क्षासक्तियुक्त एव[2]।**

**इत्थं वाक्यं द्विधा मतम्॥ ३॥**

इत्थमिति वाक्यत्वेन[3] महावाक्यत्वेन च। उक्तं च—

---

तत्रातिव्याप्तिप्रदर्शनस्य औचित्यादेव।

**(वि, ङ)** ननु बाधज्ञानाभावरूपाया योग्यताया जिज्ञासारूपाया आकाङ्क्षाया-श्चात्मार्थवृत्तित्वात् कथं पदोच्चयस्य तद्युक्तत्वम् इत्यत आह–**आकाङ्क्षायोग्यतयोरि-**ति—उपचारो विषयतासम्बन्धेन वृत्तिः। सा च बाधविरहस्य प्रतियोगिनो बाधज्ञानस्य विषये पदोच्चये तद् विषयता साक्षादेव।

**(वि, च)** वाक्यस्य द्वैविध्यमाह—**वाक्योच्चय** इति। क्वचित् वाक्यमात्रस्य क्वचिच्च महावाक्यस्य वाक्यत्वेन, द्वयोरपि लक्षणकथने आकाङ्क्षासत्त्वात् महावाक्य-लक्षणेऽपि योग्यतादिकं विशेषणमित्याह—**योग्यताकाङ्क्षे**ति। तत्रार्द्रकाष्ठे वह्नि-र्ज्वलति तेन सिञ्चतीत्यत्र महावाक्यत्वापत्त्या तद्वारणाय योग्यतायाः, चैत्रः पचति, मैत्रो गच्छति, इत्येतद् वारणायाकाङ्क्षायाः, दिनान्तरोच्चारितवाक्यद्वयस्य विरोधि-वाक्यव्यवहितयोः साकाङ्क्षयोग्यवाक्ययोर्वारणायाऽऽसत्तेरुपादानम्।

---

**(लो, इ)** महावाक्यस्यापि काव्यत्वे आचार्य्यसम्मतिं दर्शयति—**तदुक्तमि**ति। अङ्गाङ्गित्वेन प्रबन्धेषु विशकलितान्यपि वाक्यानि, अन्योऽन्यमङ्गाङ्गिभावं विना तु वातुलप्रलापवदसम्बन्धतां भजन्ते। संहत्य समेत्य वाक्यमहावाक्ययोरित्यादिषु प्रत्येकं व्यवच्छेद इत्यन्वयः। साकाङ्क्षाणि अनेकपदानि, यथा देवदत्तो दण्डेन ग्रामम्। अनेक-वाक्यानि च संहत्य समुदितार्थबोधनार्थम् इतरवाक्यसापेक्षाणि प्रबन्धेषु प्रसिद्धानि। तथाभूतानां हि पदानां वाक्यानां च विशकलितानेकार्थबोधन एव भट्टमते सामर्थ्यं नत्वेकार्थबोधने।

---

व्यवधानात्। कालव्यवधानं दर्शयति–**इदानीमि**ति—बुद्धेः पदार्थोपस्थितेरविच्छेदः अव्यवधानम्; अव्यवहितपदार्थोपस्थितेरित्यर्थः।

* अत्र आकाङ्क्षाया आत्मधर्मत्वेऽपि योग्यताया अर्थधर्मत्वेऽपि तयोर्यत्पदोच्चय-धर्मत्वमुक्तं तदुपचारात्।

1 'तत्र' इति (ग. पु०)

2 'इत्येव' इति (ट. पु०)

3 'वाक्यमहावाक्यत्वेन' इति, (छ, ज, पु०)

" स्वार्थबोधे[1] समाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥" इति * ( ङ )

तत्र वाक्यं यथा—"शून्यं वासगृहम्" इत्यादि। ( च ) महावाक्यं यथा—रामायणमहाभारतरघुवंशादि ।

पदोच्चयो वाक्यमित्युक्तं, तत्र[2] किं पदलक्षणमित्यत आह—

**वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः ॥ ४ ॥ ( छ )**

यथा घटः। प्रयोगार्हेति प्रातिपदिकस्य व्यवच्छेदः ( ज )। अनन्वितेति वाक्यमहावाक्ययोः ( झ )।

---

**शून्यं वासगृहमि**त्यादि—अत्र सर्वपदार्थानामेव उत्तरत्र साकाङ्क्षत्वेन कस्यापि स्वार्थबोधसमाप्त्यभावात् न महावाक्यत्वम् ।

( वि, छ )—**वर्णाः पदमि**ति—प्रयोगार्हाश्च तेऽनन्वितैकार्थबोधकाश्चेति कर्मधारयः। एकार्थबोधका इत्यत्र एकैकार्थबोधका इत्यर्थः । तेन वाक्यस्थ-पदेषु मिलनेन अनेकार्थबोधकेषु नाव्याप्तिः । एकैकार्थवत्त्वं हि स्वसमसं-ख्यार्थत्वम्; अर्थस्य एकैकत्वस्य वक्तुमशक्यत्वात्। न च त्रिविधा सुरा इत्यत्र एकसुरा-शब्दस्य गौडीपैष्टीमाध्वीत्रयबोधकत्वात्तत्राव्याप्तिरिति वाच्यम्, तत्र गौडी सुरा पैष्टी सुरा माध्वी सुरा इत्येवमावृत्त्यैवान्वयबोधस्वीकरणे सुरापदत्रयस्य स्वसमसंख्यार्थबोधकत्वे-नाव्याप्त्यभावात्। न च चैत्र-मैत्र-देवदत्ताः सुन्दरा इत्यत्र एकसुन्दरपदेन सुन्दरत्रि-तयबोधनात् तत्राव्याप्तिरिति वाच्यम्; अर्थपदस्यार्थतावच्छेदेकपरत्वेन सौन्दर्य्य-स्यैकत्वादेव । न च तथापि त्रिविधा सुरा इत्यत्राव्याप्तिरिति वाच्यम् अर्थतावच्छे-दकानेकत्वे आवृत्तेरेव स्वीकारात् ।

( वि, ज ) **प्रातिपदिकस्ये**ति—तन्मात्रस्येत्यर्थः । विभक्त्यन्तस्यैव पदत्वस्वीकारात्, नहि विभक्तिं विना शुद्धप्रातिपदिकस्य प्रयोगार्हता। नचानन्वितैकार्थपदे नैव तद्वारणमिति वाच्यम्; अभिहितान्वयवादे तस्यानन्विताभिधायित्वादेव ।

(वि, झ) **वाक्यमहावाक्ययो**रिति—व्यवच्छेद इत्यत्रान्वयः । तयोः परस्परमन्वितार्थबोधकत्वादेव । अत्र च वाक्यस्यान्वितानेकार्थबोधकत्वादेकार्थबोधकत्वे-नैव तद्वारणसम्भवेऽपि तद् विशेषणादानमन्विताभिधानवादोऽस्माभिर्नाद्रियते इत्य-भिप्रायसूचनायैव इत्यवधेयम् ।

---

* **स्वार्थबोधे**ति—स्वार्थबोधने समाप्तानां स्वमर्थं बोधयित्वा निराकाङ्क्षाणां वाक्यानामङ्गाङ्गित्वव्यपेक्षया गौणमुख्यपर्य्यालोचनया पुनः संहत्य (परस्परम्) समेत्य एकवाक्यत्वं जायते ।

1 'स्वार्थबोधसमाप्तानां' इति ( ट. ठ. पु० )
2 " तत् इति " ( ख. पु. )

**एकेति साकाङ्क्षानेकपदवाक्यानाम् ( ञ )**

**अर्थबोधका इति क-च-ट-त-पेत्यादीनाम्[1] । वर्णा इति बहुवचनमविवक्षितम् । ( ट, ई )**

**अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः ॥ ५ ॥**

**एषां[2] स्वरूपमाह—**

**वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।**
**व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः ॥ ६ ॥**

(ठ) (उ)

---

**(वि, ञ) साकाङ्क्षानेके**ति—साकाङ्क्षानि अनेकानि पदानि यत्र तादृशवाक्यानां व्यवच्छेद इत्यर्थः । अत्र च वाक्यानामित्येव विवक्षितं; वाक्यत्वेनैवानेकपदत्वपरस्परसाकाङ्क्षत्वयोः प्राप्तेः । स्वरूपाख्यानपरत्वादेव तयोरुपादानस्य, न चान्न्वितार्थबोधकत्वविशेषणादेवान्वितार्थबोधकवाक्यानृत्तिरिति वाच्यम्; परस्परान्वितार्थकवाक्यद्वयस्य मिलित्वा पदत्वापत्तिवारणपरत्वादेव वाक्यानामित्युक्तेः । अनन्वितार्थेत्यादिना तु एकैकवाक्यस्यैव वारणम् ।

**(वि, ट) क-च-ट-त-पेत्यादीनामि**ति—ननु प्रयोगार्हेत्यत्र प्रयोगो नोच्चारणमात्रं, तदा प्रातिपदिकवारणापत्तेः । किन्तु अर्थबोधनार्थमुच्चारणमेवावश्यं वाच्यम् । प्रातिपदिकमात्रस्य तदर्थमनुच्चारणात् । तथा च प्रयोगार्हपदादेव निरर्थक-क-च-ट-त-पादीनां वारणं स्यादिति चेत्, सत्यम् । अर्थबोधकत्वाऽनुपादानेऽर्थविशेषणस्यानन्वितेत्यस्यानुपादानमनायत्यैव पर्य्यवस्यति । ततश्च तदनुपादाने वाक्यमहावाक्ययोरतिव्याप्त्यापत्त्या तद्वारणायाऽनन्वितेत्यस्य दानावश्यम्भावे तदनुरोधेन तद्विशेषस्यार्थस्य बोधकत्वमुपादेयम् । अत एव क-च-ट-त-पेत्यादेरपि वारणमित्यभिप्रायात् । कचटतपादयश्च पदैकदेशवर्णा एव बोध्याः, नतु ब्रह्मादिवाचकैकवर्णाः, तेषां सार्थकत्वात् पदत्वाच्च । अत एव वर्णा इत्यत्र बहुत्वाविवक्षामाह—**वर्णा** इति ।

**(वि, ठ)** योग्यताकाङ्क्षयोरर्थघटितत्वेन अर्थस्य प्रभेदमाह—**अर्थ** इत्यादि । स्वरूपं लक्षणम् । शक्तयो वृत्तयः ।

---

**(लो, ई) वर्णा** इति । बहुवचनमविवक्षितं तेनैकस्य वर्णस्य द्वयोरपि च परिग्रहः एवं च मयि सानुग्रहो भवेत्यत्र अकारस्य एकवर्णस्य वासुदेवसम्बन्धोक्तस्य न पदत्वहानिः । **तत्रे**ति—यथासम्भवं पदवाक्ययोः ।

**(लो, उ)** तत्राभिहितान्वयवादिनां मते वाक्यार्थोऽपि पदाभिधेय इति वक्ष्यते । अन्विताभिधानवादिनां मते च वाक्याभिधेयः, लक्ष्यश्च पदमात्रस्यार्थः । व्यङ्ग्यश्च

---

1 " कचटतपानां " इति ( ख. ग. पु० )

2 'तत्र एषां' इति ( च. छ. पु० )

ता अभिधाद्याः ।

**तत्र संकेतितार्थस्य बोधनादग्रिमाभिधा*** ॥ ७ ॥ ( ड )

· **उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य "गामानय" इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य " सास्नादिमत्पिण्डानयनमर्थः " इति प्रथमं**

---

**(वि, ड)** तत्राभिधालक्षणमाह–**तत्र संकेतितार्थस्ये**ति। अभिधेति अभिधीयते बोध्यते इति योगार्थ एव लक्षणम्; तत्र कस्यार्थस्य बोधनात्तादृशो योगार्थ इत्यत्राह **संकेतिते**ति। संकेतो वृत्तिर्न त्वभिधा, आत्माश्रयापत्तेः। ततस्तद् ग्रहार्थे कारितम्। तत्र कर्मणि क्तप्रत्ययेन गृहीतवृत्तिकस्यार्थस्येत्यर्थः । एवं चागृहीतवृत्तिकार्थबोधिका व्यञ्जना वारिता। न च व्यङ्ग्यार्थवाचकशब्दान्तरस्य गृहीतवृत्तिकमर्थं बोधयन्ती व्यञ्जना कथं वारितेति वाच्यम् । गृहीततद्वृत्तिकस्येत्यर्थात्: ततश्च लक्षणायामतिव्याप्तिः स्यादित्यत आह—**अग्रिमे**ति । प्रथमगृहीतेत्यर्थः । लक्षणा तु शक्तिग्रहोत्तरं बाधावतारे सत्येव गृह्यते । अत एव व्याख्यास्यति–शक्त्यन्तरानन्तरितेति । केचित्तु तिसृणां वृत्तीनाम् अग्रोक्तेत्यग्रिमपदार्थं व्याचक्षते । तन्न । तद्भङ्ग्याभिधाभिधेत्येवमनन्वयापत्तेः; शक्त्यन्तरानन्तरितेति व्याख्यानुपपत्तेश्च ।

**(वि, ढ)** तत्र वृद्धव्यवहारदर्शनार्थः संकेतग्रहः; तत् प्रकारं दर्शयति–**उत्तमे**ति। मतमाश्रित्य व्याचष्टे–**उत्तमे**ति । मध्यमं वृद्धम् । बालो व्युत्पित्सुः । वाक्यस्याखण्डस्येत्यर्थः । सास्नादिमत् पिण्डानयनमस्य खण्डार्थः । नतु प्रत्येकं गोशब्दस्य सास्नादिमान् पिण्डः । आनयनस्य आहरणमिति प्रतिपद्यते जानाति ।

---

वर्णपदवाक्यादीनाम् । ये चान्विताद्यो लक्ष्ये वाक्यार्थे इति ऊचुः तन्मते तत्पर्य्यवृत्तिरेव वाक्यार्थबोधिका, द्वितीयलक्षणेत्यपरं नाम । ननु तत्र गङ्गायां घोष इत्यादौ तटार्थबोधिका वक्ष्यमाणलक्षणा वृत्तिः। गौण्याश्च लक्षणायामन्तर्भावनीयत्वादेव गौणार्थस्य न पृथङ्निर्देशः । इह व्यञ्जनाया अभिधालक्षणयोः साहचर्य्यकथनप्रस्तावात् शब्दमात्रशक्तित्ववचनमुपलक्षणम् । व्यञ्जनाप्रस्तावे लक्षणाप्रस्तावे तु भट्टमते 'सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च' इति वक्ष्यति ।

**(लो, ऊ)** क्रमेणाभिधादीनां स्वरूपमाह–**तत्रे**ति एतत् कारिकार्थमन्विताभिधान-

---

*–संकेतं करोति ( बाधयति ) संकेतयति ( संकेत+णिच् )। संकेतो हि शब्दार्थयोः प्रतिपाद्यप्रतिपादकलक्षणः सम्बन्धः । अस्मात् शब्दात् अयमर्थो बोद्धव्य इत्याकारक आप्ताभिप्रायो वा । "अस्मात् पदात् अयमर्थो बोद्धव्य इतीश्वरेच्छासंकेतशक्तिः इति नैयायिकमतं मे युक्तम्। संकेतग्राह्यं शक्त्याख्यपदार्थान्तरमभिधा इति मीमांसकवैयाकरणानां मतम् ॥

**प्रतिपद्यते। अनन्तरं च "गां बधान, अश्वमानय" इत्यादावावापोद्वापाभ्यां गोशब्दस्य "सास्नादिमानर्थः"। आनयनशब्दस्य[1] च "आहरणमर्थं" इति संकेतमवधारयति। (ढ) (ऊ) +**

---

**अस्य वाक्यस्ये**ति। अनेन प्रथमं वाक्यवाक्यार्थयोः शक्तिग्रहो दर्शितः। आवापः प्रतिज्ञा, उद्वापः उद्धारः। आवापोद्वापौ श्रुतपदत्यागेन तत्स्थाने पदान्तरश्रुतिः।

---

अयमर्थः—शब्दतदर्थयोर्वाच्यवाचकत्वे व्युत्पन्नानामेव वाक्यार्थप्रतीतिः, व्युत्पत्तिश्च वृद्धप्रयोगादेव, स च वाक्यरूप एव, वाक्यं चान्वितबोधनियतम्। ततश्चोपदेशकालेऽन्वित एव सम्बन्धग्रहणमिति। ननु तर्हि वाक्यभागरूपेषु पदेषु पदार्थबोधव्यतिरेकेण भिन्नवाक्यनिष्ठेषु पदेषु कथमर्थावबोध इत्यत आह—**अनन्तरं चे**ति। अयमाशयः—यद्यपि वृद्धव्यवहारपूर्विकैव सर्वा व्युत्पत्तिः, वृद्धव्यवहारश्च वाक्येनैव, तथापि यस्य पदरूपस्य वाक्यभागस्य बोधे यस्यार्थभागस्यावापः, यदुद्धारे चोद्धारस्तस्मिन् पदार्थे तस्य पदस्य शक्तिरावापोद्धारदर्शनेनैवानुगृहीततयाऽर्थापत्त्याऽवगम्यत इति। एवं चात्र पक्षे प्रत्ययानुमानार्थापत्तिभिः प्रमाणैः संकेतग्रह इति सूचितम्। यदाहुः—

> 'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति।
> श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया॥
> अन्यथानुपपत्त्या च बोधेच्छक्तिं द्वयात्मिकाम्।
> अर्थापत्त्या च बुध्येत सम्बन्धं त्रिप्रमाणकम्॥' इति

अस्य ह्यर्थः—शब्दो गामानय इत्यादिवाक्यम्, वृद्धौ प्रयोजकप्रयोज्यौ, अभिधेयो गवानयनादिः। तान् श्रोता प्रत्यक्षेण पश्यति जानाति। अनुमितिशरीरं च—येयं प्रयोज्य **वृद्धस्य** प्रवृत्तिः सा एतदनुगुणबुद्धि पूर्विका; प्रवृत्तित्वात्; मदीयैवंविधप्रवृत्तिवत्। सा च प्रवृत्तिरेतत्प्रयोगजन्या; एतदन्वयव्यतिरेकानुविधानादिति द्वयमाश्रयभूतस्य वाक्यस्य वाचकत्वनियमनं, विषयभूतस्य वाच्यत्वनियमनम् आत्मा-स्वरूपं यस्याः तथाभूतां शक्तिं वाचकवाच्यत्वरूपं सम्बन्धम् अन्यथानुपपत्त्या अर्थात् प्रयोजकवृद्धप्रवृत्तेर्जानाति। नन्वेवं भिन्नवाक्ययोगात् प्रतिवाक्यं व्युत्पत्तिरेवेक्षणीया, साऽवाच्या दुरुपपाद्येति शब्दव्यवहारोच्छेदे इत्यत आह—**अर्थापत्त्या च** इति। अत्र चकारेण बोधे तु शक्तिं द्वयात्मिकामित्यस्य

---

+ आवापोद्वापाभ्याम्—अन्वयव्यतिरेकाभ्याम्। प्रथमतः शक्तिग्रहश्च वृद्धव्यवहारादेव भवतीति दर्शयति—बालः 'गामानय' इति उत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य गवानयनं दृष्ट्वा अश्वमानय गां बधान इति वाक्यान्तरं च मध्यमवृद्धस्य कार्य्यजातमवेक्ष्य अन्वयव्यतिरेकाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिः अश्वपदस्य अश्वत्वविशिष्टे शक्तिरिति व्युत्पद्यते इति भावः।

(1) "पदस्य" इति (ग. घ. पु.)

**क्वचिच्च प्रसिद्धपद[1] समभिव्याहारात् † यथा—**
**'इह[2] प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति।"**
**इत्यत्र। क्वचिदाप्तोपदेशात्। यथा—**
**"अयमश्वशब्दवाच्यः"। इत्यत्र। ( ऋ )**

**तं च सङ्केतितमर्थं बोधयन्ती शब्दस्य शक्त्यन्तरानन्तरिता ( ॠ ) * शक्तिरभिधा नाम। (ण)**

---

(वि, ण) **क्वचिच्चे**ति—समभिव्याहारोऽन्वयित्वेनैकवाक्ये निर्देशः। **प्रभिन्ने**ति—अत्र मधुपदं पिबतिपदं च प्रसिद्धम्। केनापि कृतोप्यगृहीतशक्तिकस्य मधुकरपदस्य समभिव्याहृतमधुपानान्वयित्वात् भ्रमरे शक्तिर्गृह्यते। **तं च सङ्केतितामि**ति-तत्तद्ग्राहकगृहीतवृत्तिकमित्यर्थः। **शक्त्यन्तरानन्तरिते**ति—शक्तिवृत्तिस्तद्ग्रहानन्तरितेत्यर्थः। इयम् अग्रिमपदव्याख्या।

---

परामर्शः। अवबुध्यते इति पाठे त्वर्थत एव तत् परामर्शः। एवं चायमर्थः; गृहीतसंकेतवाक्यभागरूपस्य तदर्थद्वयात्मिकां शक्तिं वाच्यवाचकसम्बद्धाम् अवापोद्धारदर्शनानुगृहीततया अर्थापत्त्या जानातीति। अर्थस्तु वाक्यवाक्यार्थयोः वाच्यवाचकत्वसम्बन्धिनि बोधने एकार्थापत्तिः। पदतदर्थयोश्चापरेति द्वयोरप्यर्थापत्त्योः सामान्यत एकतयाऽगणनम्।

( लो, ॠ ) क्वचिदेकैनवोपमानेन प्रमाणेन संकेतग्रहं दर्शयति—**क्वचिच्चे**ति। अयमर्थः—त्रिधा खलु उपमानप्रमाणव्यवस्थितिः; यदाहुः—"सादृश्यं धर्ममात्रं च वैसादृश्यं च भेदतः" इति; तत्र सादृश्ये गोसदृशो गवयः। वैसादृश्ये काकविसदृशः कोकिलः। धर्ममात्रे प्रकृतमेव। उपादेयाद्युदाहरणम्—अत्र हि प्रभिन्नकमलोदरे मधुपातृत्वधर्मप्रतिपादकैः पूर्वावधारितसंकेततया प्रसिद्धैः पदैः समभिव्याहारात् मधुकरपदार्थो भ्रमर इति सङ्केतमवधारयति। एतच्च उपलक्षणं; तेन गोसदृशो गवयः काकविसदृशः कोकिल इत्यनयोरुपमानप्रमाणेन सङ्केतग्रहः सूचितः। क्वचित् शब्दप्रमाण इत्यत

---

† शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥
अतः अन्यानपि सङ्केतग्रहोपायान् दर्शयति।

* अन्या शक्तिः शक्त्यन्तरं ( लक्षणाव्यञ्जने ) तेन न अन्तरिता ( व्यवहिता )। अभिधा तु लक्षणां व्यञ्जनां च अनपेक्ष्य प्रवर्त्तते। लक्षणा व्यञ्जना च अभिधामनपेक्ष्य न प्रवर्त्तते।

1 'प्रसिद्धार्थ' इति ( छ. ज. पु० )
2 'इह' इति छ. पु. नास्ति।

**सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च ॥ ८ ॥**

जातिर्गोपिण्डादिषु गोत्वादिका (×) गुणो विशेषाधानहेतुः (*) सिद्धो वस्तुधर्मः । शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्त्तयन्ति । द्रव्यशब्दा एकव्यक्तिवाचिनो हरि-हर-डित्थ-डवित्थादयः । क्रियाः साध्यरूपा वस्तुधर्माः पाकादयः । एषु हि अधिश्रयणावश्रयणान्तादिपूर्वापरीभूतो[1] व्यापारकलापः पाकादिशब्दवाच्यः+ ।

---

(वि, त) ननु संकेतितोऽर्थः किं धर्मी धर्मो वा इत्यत्राह-**सङ्केतिते**ति । शब्दभेदेन संकेतग्रहविषयोऽर्थो भिन्न इत्युक्तक्रमेण । विशेषाधानमितरतो वैलक्षण्यबोधजनकम्; एतद् रूपो यो वस्तुधर्मः स सिद्धो नित्य इत्याह-**सिद्धो वस्तुधर्म** इति—एतन्मते गुणा अपि नित्या एव—उत्पत्तिविनाशप्रतीतिस्त्वाविर्भावतिरोभावरूपैव । गुणानां विशेषाधानं ग्राहयति-**शुक्लादयो हि** इति—व्यावर्त्तयन्ति विलक्षणतया बोधयन्ति । **हरिहरे**ति । इदं च बाल्याद्यवस्थाभेदेन व्यक्तिभेदानङ्गीकारे । तदङ्गीकर्त्तॄणां मते तु अयमपि जातिशब्द एव । आकाशविन्ध्यमन्दरादिशब्दा एकैकव्यक्तिद्रव्यवाचका बोध्याः । **क्रिया**

---

आह—**कश्चिदि**ति । आप्तो विश्वस्तः, स च निर्द्धारितवचनः । तेनायमश्वशब्दवाच्य इत्युक्तोऽप्यश्वार्थं संकेतं गृह्णाति ।

( लो, ऋ ) **अग्रिमे**ति—कारिकापदार्थः शुद्धसंकेतग्रहणादिति । तेन लक्षणाव्यञ्जनयोरस्य वैपरीत्यं सूचितम् । लक्षणा हि अभिधान्तरितैव; व्यञ्जना यत्र लक्षणा नास्ति तत्राभिधान्तरिता । तद्द्वितीयान्तरिता, यद् वा, अग्रिमेत्यनेन यन्नामा यत्र चैत्रादिः तन्नामाविषयतयापि स इत्युक्तप्रकारादाश्रित चैत्रेत्यादिनाम्ना विषयादेरिव सान्तरायसंकेतिताऽद्वैतलक्षणं सूचितम् ।

(लो, लृ) इह केचिदाहुः; जातिरेव पदार्थः, केचित् जातिव्यक्ती, केचिद् व्यक्त्याकृतिजातय इत्यादीनि मतान्तराणि परिहृत्य सर्वेषां वाङ्मयानां व्याकरणमूलत्वात् अलङ्कारग्रन्थेषु च प्रायेण तदनुगतत्वेनैव व्यवहाराच्च महाभाष्यकारमतमाश्रित्याह—**सङ्केत** इति । गुणपदार्थं विवृणोति-**गुण** इति । विशेषाधानहेतुरिति जातेर्व्यवच्छेदः । सिद्ध इति क्रियायाः । गुणानां विशेषाधानहेतुत्वोपपत्तिमाह—**शुक्लादय** इति ।

---

× जातित्वं च 'नित्यत्वे सत्यनेकसमवेतत्वम्' । तत्र प्रमाणमनुगतबुद्धिरेव । बुद्धेरनुगतत्वं च नानाविशेषत्वे सत्येकप्रकारकत्वम् ।

* विशेषः-सजातीयेभ्यो व्यावर्त्तनम् ( शिष असर्वोपयोगे इति धात्वर्थात् ) तस्य आधानं प्रत्ययस्तस्य हेतुरित्यर्थः ।

+ अधिश्रयणं चुल्यां स्थाल्या आरोपणम्, अवश्रयणं-स्थाल्या अवरोपणं, अधिश्रयणम् च अवश्रयणम् अधिश्रयणावश्रणे, आदिश्च अन्तश्च=अन्तादी(राजदन्ता-

1 "पूर्वापरीभूतव्यापारकलापः" इति. (छ. ज. झ. पु. )

**एष्वेव हि व्यक्तेरुपाधिषु सङ्केतो गृह्यते न व्यक्तौ; आनन्त्यव्यभिचारदोषा-**

---

इति—साध्यरूपाः जन्यरूपा महाप्रलये परमाणूनामपि निष्क्रियत्वेन क्रियाया न नित्यत्वम्, अतस्तस्या जन्यत्वमेवेत्यतस्तस्याऽनाविर्भावतिरोभावकल्पना। अपाकजरूपाणि परमाणुवृत्तीनि—नित्यान्येव इत्यतस्तद्वृत्तिपदार्थविभाजकोपाधिमत्त्वरूपं नित्यत्वं सर्वगुणानामेवेत्यभिप्रायः। **एष्वेवे**ति—एषु क्रियारूपवस्तुधर्मेषु बोध्येषु पाकादिशब्द-वाच्योऽधिश्रयणावश्रयणान्तादिक्रियाकलाप इत्यर्थः। अन्यथाऽनेकक्रियाघटितपाके का क्रियापदधात्वर्थः स्यादिति भावः। **एष्वेवे**ति—द्रव्यं विना एषु व्यक्तेरुपाधिषु

---

गवादिकं जात्या लब्धगोव्यवहारयोग्यताकम्। **द्रव्ये**त्यादि। हेतुं विनापि अयं डित्थः डवित्थ इत्यादिरूपेण शृङ्गग्राहिकया वक्तृसंकेतेन व्यक्तिषु सन्निवेशितः। सजातीय-शून्ये डित्थाद्यर्थोपस्थापकः शब्दः संकेतस्य विषय इति। पूर्वापरीभूतः प्रधानक्रि-याया अवयवरूपतया कार्य्यकारणभूतेन सन्तानीभूतः। **एष्वेवे**ति—एषु जात्यादिषु। इह च द्रव्यस्योपाधिविषयत्वासम्भवेऽपि तत्संज्ञायाः उपाधित्वेन तत्त्वमुपचारात्। डित्थाद्यर्थे चानन्त्यव्यभिचाराभावात् उपाधिं विनैव सम्भवति वाच्यवाचकसम्बन्धस-मयग्रह इति नोपाधिरपेक्ष्यते। वक्तृस्वेच्छाकल्पितस्य संज्ञाशब्दस्य स्वप्रवृत्तावुपाध्यु-

---

दिषु परमिति पूर्वनिपातः) अधिश्रयणावश्रयणे अन्तादी यस्य सः; स चासौ पूर्वा-परीभूतश्चेति अधि......भूतः। अत्र मुख्यो धात्वर्थस्तु फलं, यथात्र पचेर्विक्लित्तिः; अत्र पूर्वः अधिश्रयणादिः अपरः अवश्रयणादि। तौ च पाकक्रियावयवरूपौ तत्र पूर्वस्य परं प्रति साधनत्वम् अपरस्य पूर्वं प्रति साध्यत्वम् अस्ति। अतः अवयवानां पूर्वा-परीभावो भवति। ततो बहवो व्यापारा मिलित्वा एका क्रिया भवन्ति।

'यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधियते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥'



पातात् । ( त, ल ) +

---

इत्यर्थः । **आनन्त्ये**ति--गवादिव्यक्तीनाम् आनन्त्येन तत्र सर्वत्र शक्तिग्रहाऽसम्भवादित्यर्थः । यदि च एकव्यक्तावेव संकेतग्रह इत्युच्यते तदाह-**व्यभिचारे**ति । यद्व्यक्तौ संकेतो गृहीतस्तदभिन्नस्तत्सजातीयव्यक्तावपि स्वरूपोद्बोधात् कारणं शक्तिग्रहं विनापि कार्य्यबोधाद् व्यभिचारदोष इत्यर्थः ।

---

पगमे पुनरात्माश्रयदोषः । तथापि द्रव्यसंज्ञाया अप्युपाधित्वं प्रतीत्यनुरोधेनोक्तम् । अत एव गुणद्रव्यक्रियासु चेति द्रव्याक्रियासु चेति द्रव्यस्य संकेतविषयत्वमुक्तं, तत्राऽनन्त्यव्यभिचारदोषापाताभावात् । **आनन्त्ये**ति-व्यक्तीनामनन्तत्वात् प्रत्येकं च रेखोपरेखादिसंस्थानविशेषस्य च भिन्नत्वात् तत्राऽशक्यः समयग्रह इति । नन्वेवं गवादिपदेन संकेतितत्वात् जातावन्तर्हितायां कथं व्यक्तिप्रतीतिः । अविनाभावस्यानुसन्धानमन्तरेणाक्षेपकत्वाभावात् । यथा वा धूमादिगतस्य वह्न्यादेरविनाभावानुसन्धानं चात्रानुपलब्धिबाधितं; तत्राऽनुपयोगितया व्यक्तेः शाब्दबोधितत्वं विना शाब्देऽन्वये प्रवेशाऽसम्भव इति जात्यभिधायके शब्दे तद्बोनार्थं व्यञ्जनैव वृत्तिरुपासितुमुचितेति रहस्यम् । एवं च जातिमात्रसङ्केतपक्षे च निर्विवादम् । किं च संशयापगमार्थम् उपात्तानि पदानि संसर्गस्य मुख्याङ्गं संसृज्यमानं व्यक्तिरूपं साक्षान्न बोधयन्ति, बहिरङ्गन्तु तदुपाधिभूतं सामान्यमेव बोधयन्ति, इत्यसङ्गतम् । ये त्वाहुः, 'व्यक्तिसध्रीचीनायामेव जातौ सङ्केत' इति तैरपि प्रकृतस्य लक्षणस्याऽसङ्केतितत्वात् सङ्केतितभेदानामभावात्, प्रकृतसंसर्गयोग्यव्यक्तिप्रतीतौ शक्त्यन्तरमवश्यमभ्युपेयम् । सामान्यस्य सर्वविशेषत्वाङ्गीकारात् सङ्केतेन सर्वविशेष्यज्ञाने तु सर्वस्यापि सर्वज्ञत्वापत्तिः । प्रथमोद्देशकाले तु सर्वव्यक्तीनां साम्मुख्याङ्गीकारतया सामान्यलिङ्गितया प्रत्यङ्गीकारे पुनराधुनिकस्यापि स्वलक्षणस्य प्रथमोपदेशकालवत् सम्मुखीकारेणैव प्रतीतिः स्यात् । ततश्चान्वयोपपादिकायाः साक्षात् प्रतीतेः पदस्य शक्त्यन्तरं विना किं बीजमित्यलं बहुना ।

---

+---ननु व्यवहाराद्धि सङ्केतग्रहः । स च व्यक्तिनिष्ठ एव, अतः व्यक्तावेव संकेत उचित-इत्यादिकं व्यक्तिसंकेतपक्षं निराकरोति-**आनन्त्ये**ति । अनन्तानां व्यक्तीनामनुपस्थितेः संकेतस्याऽशक्यत्वाद् व्यक्तौ संकेतः ग्रहीतुं न शक्यत इत्यर्थः । **व्यभिचारे**ति-एकव्यक्तिविशेष्यकशाब्दग्रहं प्रति तद्व्यक्तिविशेष्यकसंकेतग्रहस्य कारणत्वं यत् क्लृप्तं तत्र कारणं विना कार्य्योत्पत्तौ व्यभिचारात् इत्यर्थः । अतो व्यक्तेरुपाधिषु प्रकारीभूतजातिगुणद्रव्यक्रियारूपेषु गृह्यते । व्यक्तिप्रतीतिस्त्वाक्षेपादिद्वारेण ।

अथ लक्षणा[1]—

मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते ।
रूढेः प्रयोजनाद् वासौ लक्षणा शक्तिरर्पिता ॥ ६ ॥
( थ, प ) *

(वि, थ) लक्ष्यो लक्षणाया ग्राह्यः इत्युक्तत्वाल्लक्षणाया लक्षणमाह—**मुख्यार्थे**ति । मुख्यार्थः शक्यार्थः, तत्रापरपदार्थस्यान्वयबाधे ज्ञाते सतीत्यर्थः । गङ्गायां घोष इत्यादौ मुख्यार्थस्य गङ्गाया अबाधात्; किन्तु अपरपदार्थस्य घोषान्वयस्यैव बाधात् । तद्युक्तो मुख्यार्थसम्बद्धः अन्यो मुख्यार्थादन्यः । यथा वृत्त्या ज्ञातया इति शेषः । न केवलं मुख्यार्थबाधज्ञानाधीनं तज्ज्ञानं, अपि तु **रूढेः प्रयोजनाद् वापी**ति । —रूढिः भूरिकालप्रयोगः । तथा च एतत्त्रितयज्ञापितया यया वृत्त्या मुख्यार्थादन्यो मुख्यार्थसम्बद्धोऽर्थः प्रतीयते असौ शक्तिर्वृत्तिर्लक्षणेत्यर्थः । सा चार्पिता वक्तृपुरुषेण लक्ष्यार्थविषयतया जनितेत्यर्थः, तथा च वक्तृतात्पर्य्यात्मिकैव सा बोध्या । ननु

(लो, प) **अथे**ति—अथाभिधानन्तरं लक्षणोद्देशक्रमप्राप्ता लक्षणा निरूप्यत इति शेषः । **मुख्यार्थे**ति—मुख्यार्थो गङ्गादिशब्दस्य जलमयादिः तस्य च आधेयपदार्थान्तरेऽन्वयानुपपत्तौ, न च यतः कुतश्चित् यदेव तदेव लक्ष्यते—अतिप्रसङ्गादित्यत आह—**तद्युक्त** इति । तेन मुख्यार्थेन येन केनचित् सम्बन्धेन सम्बद्धः अन्योऽर्थः तटादिः यया शब्दशक्त्या प्रतीयते बोध्यते; न च सम्बन्धमात्रादपि लक्ष्यार्थप्रतीतिः अपि प्रसङ्गादेव इत्याह—**रूढेः प्रयोजनाद् वा** । क्वचिद् रूढेः अनादिवृद्धव्यवहार-

*—**मुख्यार्थबाध** इति—मुख्यार्थः—अभिधेयार्थः, वाच्यार्थः। तस्य बाधः पदार्थान्तरे अन्वयानुपपत्तिः । तस्मिन् सतीत्यर्थः । तदुक्तं—

"वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तिकः ।
तत् सम्बन्धवशप्राप्तस्याऽन्वयाल्लक्षणोच्यते" ॥

**तद् युक्त** इति । तत् पदेन समासे गुणीभूतस्याऽपि मुख्यार्थस्य परामर्शः । तेन मुख्यार्थेन युक्तः संयोगादिसम्बन्धेन सम्बद्धः । ( एतेन मुख्यार्थबाधमुख्यार्थसम्बन्धयोर्लक्षणाबीजत्वं सूचितम् ) अन्यः मुख्यार्थाद् भिन्नः अर्थः यया वृत्त्या प्रतीयते प्रतिपाद्यते असौ क्रियाव्यापारः लक्षणा नाम । निमित्तभेदेन लक्षणाया द्वैविध्यमाह—**रूढेरि**ति । रूढिः प्रसिद्धरचनादिप्रयोगः। प्रयोजनं लक्षणास्वीकारफलम् (अत्र ल्यब्लोपे पञ्चमी ) रूढिं प्रयोजनं वा उद्दिश्य इत्यर्थः। **अर्पिते**ति—शब्दार्थयोः स्वाभाविकः सम्बन्धः सङ्केत इति येषां (मीमांसकानां) मतं तेषां मते अर्पिता स्वाभाविकेतरा—स्वाभाविकव्यापारात् ( सङ्केतात् ) अन्या । तादृशी ईश्वरेच्छा सङ्केत इति येषां (नैयायिकानां) मतं तन्मते ईश्वरानुद्भाविता ईश्वरेण अनाविष्कृता इत्यर्थः ।

1 "निरूप्यते" इति ( ग. घ. पु. अधिकपाठः )

**"कलिङ्गः साहसिकः" इत्यादौ कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थे असम्भवन् यया [1]शब्दशक्त्या स्वसंयुक्तान् पुरुषादीन् प्रत्याययति, यया च 'गङ्गायां घोषः' इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृते 'असम्भवन् स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति, सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम । पूर्वत्र हेतू रूढिः**

---

नैयायिकोक्तशक्यसम्बन्धरूपा; तस्या वक्त्राऽन्येन वाऽर्पितत्वाभावात् । या तु व्यङ्ग्यार्थे तात्पर्य्याख्या वृत्तिर्ध्वनिकेनोक्ता या च पदार्थद्वयसंसर्गे तात्पर्य्याख्या वृत्तिः प्राचीननैयायिकैरुक्ता सा नैतात्रितय-ज्ञापिता; इत्यतो भिन्नैव सा । मुख्यार्थेऽपरपदार्थान्वयबोधेऽपि तात्पर्य्यविषयस्य तादृशान्वयस्य मुख्यतावच्छेदकरूपेण बोधानुपपत्तिरेव; तेन छत्रिणो गच्छन्ति कुन्ताः प्रविशन्तीत्यत्र मुख्यार्थयोः छत्रिकुन्तयोः गमनप्रवेशान्वयसत्त्वेऽपि निरुक्तमुख्यार्थबाधसत्त्वान्नाऽव्याप्तिः । छत्रिसार्थवाहित्वेन कुन्तित्वेन च रूपेणान्वयस्य तात्पर्य्यविषयस्य मुख्यतावच्छेदकच्छत्रित्वकुन्तत्वाभ्यामनुपपत्तेः । अत्र च तात्पर्य्यविषयत्वानुपादाने तु छत्रिकुन्तयोर्गमनप्रवेशान्वयस्य मुख्यतावच्छेदकच्छत्रित्वकुन्ताभ्यामुत्पद्यमानत्वात्–तत्राव्याप्त्यापत्तेः। एवं मुख्यतावच्छेदकरूपेण इत्यनुपादानेऽपि तयोरेवाव्याप्तिः स्यात् । तात्पर्य्यविषयस्य छत्रिसार्थवाहिनो गमनान्वयस्य कुन्तिनः प्रवेशान्वयस्य च लक्षतावच्छेदकच्छत्रिसार्थवाहित्वकुन्तित्वाभ्यामुपपत्तेः । अन्योऽर्थ इत्यत्रापि मुख्यतावच्छेदकान्यधर्मावच्छिन्न इत्यर्थः । तेन घटपदस्य नीलघटे लक्षणायां तस्य घटान्यत्वाभावेऽपि नाव्याप्तिः । मुख्यतावच्छेदकघटत्वाऽन्यनीलघटत्वावच्छिन्नत्वात् ।

( वि, द ) व्याचष्टे—**कलिङ्ग** इति । **स्वाभाविकेतरे**ति । गवादिशब्दस्य स्वभावसिद्धा वृत्तिः शक्तिस्तद्भिन्ना । स्वाभाविकस्यापि पुनरुक्तत्वगौरवादाह—ईश्वरमात्रनियमितेतरेत्यर्थः । मात्रगर्भत्वाकरणे वक्तृतात्पर्य्यस्यापि ईश्वरनियतत्वात्तस्य च

---

प्रसिद्धेः क्वचित् प्रयोजनात् पावनत्वाद्यतिशयं प्रयोजनमुद्दिश्य । अर्पितपदार्थश्च वृत्तावेव सुव्यक्तः । एवं चात्र लक्षणायां हेतुत्रयं मुख्यार्थबाधः; च तत् सम्बन्धः, क्वचित् रूढिः क्वचित् प्रयोजनं चेति ।

(लो, पे) उदाहरणदर्शनपूर्वकं कारिकार्थं वृत्त्या विशदयति—**कलिङ्ग** इति । स्वार्थे वाच्यरूपेऽसम्भवन् देशविशेषादिरूपार्थस्याऽचेतनतया साहसिकाद्यर्थेनाऽन्वयानुपपत्त्याऽनुपपद्यमानप्रयोगः कुत इत्याह—जलमयादिरूपार्थस्य वाचकत्वात् । अयमर्थः—गङ्गादिशब्दो यस्मात् जलमयादिरूपमेवार्थं समयस्मरणाकातरः सन् स्मारयति,

---

1 'शब्दस्य' इति (ख. ग. पु०)

प्रसिद्धिरेव । उत्तरत्र 'गङ्गातटे घोष' इति प्रतिपादनाद्[1]लभ्यस्य शीतत्व-पावनत्वातिशयस्य बोधनरूपं प्रयोजनम्। हेतुं विनापि यस्य कस्यचित् सम्बन्धिनो लक्षणेतिप्रसङ्गः स्यादित्यत उक्तम्—'**रूढेः प्रयोजनाद्वासौ**[2]' इति ।

( द ) ( ऐ )

केचित्तु 'कर्मणि कुशल' इति रूढावुदाहरन्ति । तेषामयमभिप्रायः 'कुशं[3] लाति' इति व्युत्पत्तिलभ्यः कुशग्राहिरूपो मुख्योऽर्थः प्रकृते असम्भवन् विवेचकत्वादिसाधर्म्यसम्बन्धसम्बन्धिनं * दक्षरूपार्थं[4] बोधयति । तदन्ये न मन्यन्ते, कुशग्राहिरूपार्थस्य व्युपत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात् ।

---

तद्भिन्नत्वानुपपत्तेः । ईश्वरानङ्गीकर्त्तृमीमांसकमते तु शक्तिरूपादतिरिक्तपदार्थान्तरादितरेत्यर्थः । शाक्तिर्वृत्तिः । **पूर्वत्रे**ति—कलिङ्गः साहसिक इत्यत्रेत्यर्थः । प्रसिद्धिरिति भूरिकालप्रयोग इत्यर्थः । **अतिप्रसङ्ग** इति—इयं कविप्रयोगार्हा लक्षणा व्युत्पाद्यते । रूढिप्रयोजनशून्या, लक्षणा तु नेयार्थ इति वक्ष्यते, सा च काव्ये दोष एव । तत्रातिप्रसङ्गः स्यादित्यर्थः ।

**(वि, ध)** काव्यप्रकाशकृदुक्तं रूढिलक्षणोदाहरणं दूषयितुमुत्थापयति—**केचित्तु** इति। **प्रकृते असम्भवन्नि**ति—कर्मणीत्यस्य लौकिककर्मपरत्वेन तन्निमित्तं कुशग्रहणमसम्भवदित्यर्थः ।

---

तस्माद् वाच्यरूपस्य जलाद्यर्थस्य घोषाद्यर्थेन सहान्वयानुपपत्त्या प्रकृते वाचकत्वेन तस्य प्रयोगो न घटत इति । स्वस्यात्मीयस्य वाक्याद्यर्थस्य जलमयादेः, तस्याक्षेपमाकृष्योपनयनम् । सम्बन्धस्यान्वयस्य, तद्धि तटशब्दार्थं यया बोधयतीति सम्बन्धः। भट्टमते स्वाभाविकी अभिधा, तदन्या पदस्य शक्तिर्व्यापारः, तेषामीश्वराऽनादरात् संकेतस्यानादिव्यवहारप्रवृत्तिस्वीकारात् । ईश्वरानुद्भावितेति नैयायिकमतम् । तदनयोरेकतरा स्वाभाविकी, इतरा ईश्वरानुद्भावितेति द्विधा व्याख्यातम्। पूर्वत्र कलिङ्गः साहसिक इत्यत्र, उत्तरत्र गङ्गायां घोष इत्यादौ । गङ्गातट इत्यादौ तटस्य गङ्गाशब्देन प्रतिपादनात् गङ्गातादात्म्यप्रतीतेः गङ्गार्थनिष्ठानां तटार्थनिष्ठातिशायितानां शीतत्वपावनत्वादीनां प्रतीतिर्लक्षणायाः फलमित्यर्थः ।

**(लो, ओ) केचित्त्वि**ति—प्रकृते कर्मणि कुशल इत्यनेनापि अर्थतयाऽसम्भ-

---

*—प्रकृते—कर्मणि घटनादिव्यापारे अयोग्यत्वात् अन्वयानुपपत्तेः । एकत्र च परिहारेण अन्यतरोपादानम् अत्र विवेचकत्वम्। कुशग्राहिणः तृणादिपरिहारेण दर्भोपादा-

1 'प्रतिपादनालभ्यस्य' इति छ. ज. पु० ।
2 'वापि' इति छ. ज. पु० ।
3 'कुशान्' इति छ. ठ. पु० ।
4 'रूपमर्थं' इति ट. ठ. पु० ।

अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तम् अन्यच्च प्रवृत्तिनिमित्तम् । व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे ' गौः शेते ' इत्यत्रापि लक्षणा स्यात् " गमेर्डोः " ( उ. र. ६७ ) इति[1] गम्धातोर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि[2] प्रयोगात्× ।
( ध ) तद् भेदानाह । ( श्री )

---

**दक्षस्यैव मुख्यार्थत्वादि**ति—भूरिप्रयोगेण दक्षत्वस्य लघुत्वेन च, तदवच्छि-न्नस्यैव शक्यत्वेन मुख्यत्वादित्यर्थः । **अन्यद्धि** इति—व्युत्पत्तिर्योगार्थबोधः । प्रवृत्तिः प्रयोगः । तथा च तेनैव निमित्तेन शब्दस्य प्रवृत्तेस्तदवच्छिन्न 'एव मुख्यार्थ' इत्यर्थः । लक्ष्यार्थे क्वचित् प्रयोगस्तु तात्पर्य्यविशेषसत्वे एव; यथा 'दक्षे शक्तस्य कुशलपदस्य गृहविशेषे शक्तस्य मण्डपपदस्य च दैवकर्मणि कुशल इति रोगी मण्डप इति च तयो-दवकर्मरोगिपदसमभिव्याहारस्य तात्पर्य्यग्राहकत्वात् । गौः शेते इत्यत्र शेते इति सुप्तगोः-प्रदर्शनार्थमेव । गौरस्तीति सुप्तगवि प्रयोगेऽपि लक्षणा स्यादिति बोध्यम् । अयं च प्रतिबन्धः न सर्वसम्मतः। उणादिप्रत्ययानां व्युत्पत्तेः प्रायिकत्वेन तया प्रयोगाभावात् । अत एव चिन्तामणिकृतोक्तं " पञ्चपादिकालभ्यान् उणादिप्रत्ययान् " एकेनैव ' उणा-दयो बहुलम्' इति सूत्रेण वदतः पाणिनेः अयमभिप्रायो यदुणादिप्रत्ययानां प्रायिक्येव व्युत्पत्तिरिति, तथा च न तया प्रयोगः । तथा च गोत्वेनैव रूपेण रूढिशक्त्या गोपदं स्वपदगच्छद् गोसाधारण्येन प्रयुज्यते, न उणादि-प्रत्ययव्युत्पत्त्या इति ।

---

वन् अनुपपत्तिर्बाधितः । विवेचकरूपस्य मुख्यार्थत्वादित्यनेन मुख्यार्थबाधाभावादत्र कथं लक्षणेत्यर्थः ।

गोशब्दो यद्यपि गमनार्थो व्युत्पत्तिनिमित्तं तथापि गोत्वापत्तिक्रियैव प्रवृत्ति-निमित्तम् अत एव गच्छत्यागच्छति गवि गोशब्दप्रयोगः । यदाह, घटशब्दप्रसंगे— 'घटनं च तदात्मत्वापत्तिरूपा क्रिया मता' इति। **तद्भेदानि**ति;—तयोः रूढिप्रयोजनाभ्यां द्विधोक्तयोर्लक्षणयोर्भेदान् विशेषान् भिद्यतेऽनेन इति भेद इति व्युत्पत्त्या ।

---

नाद् विवेचकत्वम् । दक्षस्याऽपि प्रकृतानुपयुक्तपरिहारेण प्रकृतोपयुक्तग्रहणाद् विवेच-कत्वमुभयोः साधर्म्यम् । विवेचकत्वादि यत् साधर्म्यं समानधर्मवत्ता तद्रूपः यः सम्बन्धः तेन सम्बन्धिनम् ।

×—अत्र लाधातोरादाने कर्तृविहितप्रत्ययस्य कर्त्तरि शक्तत्वेन कुशग्राहित्वस्य व्युत्पत्तिलभ्यत्वेऽपि न मुख्यार्थत्वम् । रूढिरियम् । वाचकशब्दस्त्रिविधः—रूढो, योगरूढो यौगिकश्चेति । अवयवशक्तिनैरपेक्ष्येण समुदायशक्त्याऽनादिप्रयोगविषयत्वं रूढत्वं यथा मण्डपादिशब्दाः । औणादिकास्तु रूढा एव; अवयवशक्तेरभावात् । अवयवशक्तिसा-

1 'इति' इति क. पु. नास्ति ।
2 'शयनकालेऽप्रयोगात्' इति ( ट. ठ. पु० )

**मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।**
**स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥ १० ॥ ( न )**

**रूढावुपादानलक्षणा यथा—'श्वेतो धावति'। प्रयोजने यथा—'कुन्ताः प्रविशन्ति'। अनयोर्हि श्वेतादिभिः कुन्तादिभिश्च अचेतनतया केवलैर्धावनप्रवेशनक्रिययोः कर्तृतयाऽन्वयमलभमानैरेतत्सिद्धये आत्मसम्बन्धिनोऽश्वादयः पुरुषादयश्चाक्षिप्यन्ते । ( प )**

---

(**वि, न** ) तद्भेदानाह—**मुख्यार्थस्ये**ति । वाक्यार्थे बोध्ये, मुख्यार्थस्य तात्पर्य्यविषयान्वयसिद्धये इतरस्य अमुख्यार्थस्याक्षेपः प्रत्यायनमित्यर्थः । अन्वयवाक्यार्थयोरभेदात् वाक्यार्थे मुख्यार्थस्यान्वयसिद्धये इति नान्वयः । अत्रापि यथेति शेषः । अस्या उपादानसंज्ञाव्युत्पत्तिमाह—**स्यादात्मनोऽपी**ति । आत्मनो मुख्यार्थस्यापि । अत्र तात्पर्य्यविषयत्वं यदि अन्वयविशेषणं न क्रियते तदा छत्रिणो गच्छन्ति कुन्ताः प्रविशन्ति इत्यादिषु अव्याप्तिः स्यात्; अत्र तात्पर्य्यविषयस्य शुद्धशक्यार्थस्यान्वयसिद्धिसम्भवेन तदर्थमितरेषामच्छत्रिकुन्तादीनामनाक्षेपात् । इतरसाहित्येनाऽन्वये तात्पर्य्यवशादेव शुद्धमुख्यान्वयस्य बाधोऽवधेयः । तद्बाधोऽपि मुख्यतावच्छेदकरूपेणासम्भवरूप एव; लक्ष्यतावच्छेदकरूपेण तु नासम्भव इति बोध्यम् ।

(**वि, प** ) लक्षणासामान्यलक्षणोक्तं रूढिप्रयोजनान्यतरहेतुकत्वमत्र घटयन्नुदाहरति—**रूढावुपादाने**ति । श्वेतः श्वेतगुणवान् । कुन्ता इति कुन्तवन्त इत्यर्थः अनयोर्मुख्यार्थान्वयबाधं दर्शयति ।

**अनयोरि**ति । श्वेतादिभिरित्यादिपदात् नीलादिगुणानां कुन्तादिभिरित्यादिपदात् अस्त्रान्तराणां च परिग्रहः । **अचेतनतये**ति । इदमेतदुदाहरणाभिप्रायेणोक्तम् । वस्तुतस्तु छत्रिणो गच्छन्ति इत्यत्र छत्रिणश्चेतनत्वेऽपि तात्पर्य्यविषयच्छत्र्य-

---

(**लो, औ**) **मुख्यार्थे**ति—मुख्योऽभिधेयोऽर्थः तस्य इतरः प्रकृतनिर्वाहोपायिकः, तस्याक्षेपः आकृष्य उपनयनम् । अन्वयसम्बन्धस्य सिद्धये निर्वाहाय । आत्मनोऽप्युपादानात्, अयमर्थः, इह खल्वभिधया बोधितस्यापि श्वेतकुन्ताद्यर्थस्य

---

चिव्येन समुदायशक्त्याऽनादिप्रयोगविषयत्वं योगरूढत्वं यथा पङ्कजरथकारादिशब्दाः । यत्र रूढ्यर्थयोगार्थयोरेकत्र धर्मिणि समावेशस्तत्र रूढेन योगापहारित्वं यथा पङ्कजादि । यत्र तु तयोर्विरोधस्तत्र योगापहारित्वं यथा मण्डपादि । तत्र हि मण्डपानकर्तृत्वरूपयोगार्थस्य गृहविशेषविषयसमुदायशक्त्या प्रतिरोधः । अत एव रूढिर्लब्धात्मिका योगमपहरतीति प्रवादः । रूढेर्लब्धात्मकत्वमवयवशक्त्यनुसन्धानं विना जायमानत्वम् । रूढिरनादिप्रयोग इति । अवयवशक्तिपुरस्कारेण स्वारसिकप्रयोगविषयत्वं यौगिकत्वं यथा पाचकादिशब्दः । रूढेर्योगापहारित्वात् कुशलपदं न यौगिकं दक्षार्थे रूढमेव ।

पूर्वत्र प्रयोजनाभावात् रूढिः । उत्तरत्र तु कुन्तादीनामतिगहनत्वं प्रयोजनम्। अत्र च मुख्यार्थस्यात्मनोऽप्युपादानम्; लक्षणलक्षणायान्तु परस्यैवोपलक्षणमित्यनयोर्भेदः। इयमेव "अजहत् स्वार्था" इत्युच्यते+। (फ) (औ)

**अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।**
**उपलक्षणहेतुत्वादेषा लक्षणलक्षणा ॥ ११ ॥ × (ब)**

रूढिप्रयोजनयोर्लक्षणलक्षणा यथा—'कलिङ्गः साहसिकः'; 'गङ्गायां घोष'

---

न्वयस्यालाभ एव सर्वसाधारणो मुख्यार्थबाधो बोध्यः । अश्वादय इत्यादिपदाच्छ्वेतगवादेः, पुरुषादयः इत्यादिपदात् कुन्तधारिवत् इतरस्य परिग्रहः।

**(वि, फ) प्रयोजनाभावादि**ति—रूढिसत्त्वादेव प्रयोजनाऽननुसन्धानात् तदभावः। प्रयोजनं प्रयोजनीभूतज्ञानविषयः। एवं रीत्यैव पावनत्वादिरपि प्रयोजनपदार्थो बोध्यः। **लक्षणलक्षणायामि**ति—वक्ष्यमाणायामिति शेषः । परस्यैवेति एवकारान्मुख्यार्थव्यवच्छेदः। उपलक्षणमुपस्थापनम्।

**(वि, ब)** लक्षणलक्षणामाह—**अर्पणमि**ति। अत्र अर्पणमित्यत्र परत्रैवेति शेषः, स्वस्य परमात्रविषयता इत्यर्थः । नतु मुख्यार्थविषयतापीत्यर्थः। उपादानलक्षणायां तु मुख्यार्थस्यापि विषयता इति भेदः । स्वस्येत्यत्र यस्या इति शेषः । तथा च वाक्यार्थे बोध्ये परस्य अमुख्यार्थस्य अन्वयसिद्धये अन्वयबोधाय यस्या लक्षणायाः स्वस्य अर्पणं परमात्रविषयता; एषा लक्षणलक्षणेत्यर्थः। वाक्यार्थान्वययोरभेदाद्वाक्यार्थे परस्यान्वयसिद्धये इति तु नान्वयः। तादृशसंज्ञाव्युत्पत्तिमाह—**उपलक्षणे**ति। मुख्यार्थं विहायाऽमुख्यार्थमात्रबोधनम् उपलक्षणं स्वस्य तद्धेतुत्वादित्यर्थः।

**(वि, भ)** अत्र रूढिप्रयोजनहेतुकत्वे यथासंख्यमुदाहरणद्वयमाह—**कलिङ्ग**

---

पुनः पुरुषादेर्विशेषणतया लक्षणीयत्वेन उपादानमिति । अतिगहनत्वं—कुन्तयुक्ताः पुरुषाः प्रविशन्तीति अभिधानालभ्यम्। उच्यते—परैरिति शेषः।

**(लो, अ)** अर्पणं स्वस्य गङ्गादेः। परस्याङ्गस्य तटादिरूपलक्षणहेतुत्वात् सम्बन्धमात्रस्य इत्यर्थः।

---

+—स्वार्थाऽपरित्यागेन परार्थलक्षणमुपादानमित्यर्थः। स्वार्थ-परित्यागेन परार्थलक्षणं लक्षणम्। अजहत् स्वार्थो या-सा अजहत् स्वार्था।

×—यत्र वाच्यार्थस्य अन्वयस्तत्र उपादानलक्षणा। यत्र च वाच्यार्थस्य अन्वयाभावस्तत्र लक्षणलक्षणा। ननु काकेभ्यो दधि रक्षतामित्यादौ मुख्यार्थस्य अन्वयसिद्धये नेतराक्षेपः। इत्याक्षेपं विना अन्वयसद्भावात्। इति चेन्न—तत्र हि काकप्रतियोगिकदधिरक्षणं न वाक्यार्थ. । किन्तु काकाऽकाकसाधारणदध्युपघातकमात्रप्रतियोगिकं रक्षणम्। तत्र काकमात्रस्य न अन्वयायोग्यता इति दध्युपघातकत्वेन लक्षतावच्छेदकेन अन्येषां लक्षणा भवति इति अत्रापि उपादानलक्षणा।

इति च। अनयोर्हि पुरुषतटयोर्वाक्यार्थेऽन्वयसिद्धये कलिङ्गगङ्गाशब्दावात्मानमर्पयतः। ( भ, अ ) यथा वा—

"उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे! सुखितमास्स्व ततः शरदां शतम्॥" *

अत्रापकारादीनां वाक्यार्थेऽन्वयसिद्धये उपकृतादयः शब्दा आत्मानमर्पयन्ति। अपकारिणं प्रत्युपकारादिप्रतिपादनान्मुख्यार्थबाधो वैपरीत्यलक्षणः सम्बन्धः; फलमप्यपकारातिशयः। इयमेव "जहत्स्वार्था" इत्युच्यते। ( म, आ ) +

---

इत्यादि। अत्र कलिङ्गः साहसिक इति न पाठः। किन्तु कलिङ्गः साहसं करोति इत्येव पाठः। साध्यवसानालक्षणाया उदाहरणप्रसङ्गे व्यक्तिर्भविष्यतीत्यर्थः। उभयत्रैव मुख्यार्थं कलिङ्गरूपं देशं प्रवाहरूपां गङ्गां च विहाय तद्देशस्थपुरुषतत्तीरयोः परयोरन्वयप्रबोधाय पुरुषतीर-रूप-मात्र-विषयता लक्षणायाः। तद्दर्शयति—**अनयोर्हीति**। वाक्यार्थे बोध्ये पुरुषतटयोरन्वयसिद्धये इत्यन्वयः। समर्पयत इत्यत्र परमात्र इति शेषः। परमात्रं—विषयीकुरुत इत्यर्थः। कलिङ्गगङ्गाशब्दौ इत्यत्र कलिङ्गगङ्गाशब्दपदं तन्निष्ठलक्षणाद्वयपरं यथा व्याख्यातार्थानुसारेण बोध्यम्। एवमुत्तरत्रापि व्याख्येयम्।

**(वि,म)** प्रयोजनहेतुकत्वे उदाहरणान्तरमाह-**यथा वा—उपकृतमि**ति। अपकारित्वेन अन्यतो ज्ञातं प्रतीयमुक्तिः। त्वया बहु उपकृतं तत्र किमुच्यत इत्यर्थः। यत्रेति पाठे तु तत्रेति पूरणीयम्। **अपकारादीनामि**ति—अत्रादिपदाद् दुर्जनतादुःखितयोः परिग्रहः। फलम् अपकाराद्यतिशय इति फलीभूतज्ञानविषय इत्यर्थः। एवमुत्तरोत्तरमपि बोध्यम्। इदं च न रुचिरभुक्तम्। लक्ष्यार्थातिशयस्य प्रयोजनत्वे रूढिलक्षणायामपि तत्सम्भवात् विशेषाभावापत्तेः। किन्तु अपकारदुर्जनत्वलक्षणयोः फलं सम्बोध्यस्य कौटिल्यं दुःखितलक्षणायास्तु कौटिल्यफलत्वम्।

---

**(लो, आ)** अपकारादीनामित्यादिशब्देन दुर्जनत्वदुःखितत्वे उपकृतादय इत्यादिशब्देन सुजनत्वसुखितत्वे। अपकाराद्यतिशयः-स्वशब्दाभिधानालभ्यः।

---

* बहुभिरपकारैः तप्यमानस्य उक्तिरियम्—यत् त्वया बहु उपकृतं, तद् विषये किं वाच्यम्? बहुत्वात् उपकाराणां वक्तुं न शक्यते इत्यर्थः। भवता परं केवलं सुजनता प्रथिता प्रकटीकृता। हे सखे तस्मात् ईदृशमेव सदा विदधत् कुर्वन् शरदां वर्षाणां शतं सुखितं सुखयुक्तं यथा स्यात्तथा आस्स्व तिष्ठ इति मुख्योऽर्थः।

+ स च प्रकरणादिना अपकारिणि बाधितः सन् विपरीतम् अपकाराद्यर्थं लक्षयति तद् यथा—उपकृतम्—अपकृतं, सुजनता, दुर्जनता, सखे—शत्रो, सुखितं—दुःखितमित्यर्थः।

**आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा ॥१२॥ ( य )**

ताः पूर्वोक्ताश्चतुर्भेदलक्षणाः[1] ।

**विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ।**

**सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका ॥१३॥**

विषयिणा अनिगीर्णस्य विषयस्य तेनैव सह तादात्म्यप्रतीतिकृत् सारोपा । इयमेव रूपकालङ्कारस्य बीजम्[2] । ( र, इ ) +

रूढावुपादानलक्षणा सारोपा यथा—'अश्वः श्वेतो धावति' । अत्र हि

---

**(वि, य)** उपादानलक्षणालक्षणाद्वयं रूढिप्रयोजनद्वयहेतुकत्वेन चतुर्विधमुक्तम् । अधुना तच्चतुष्टयस्य द्वैगुण्येनाष्टविधमाह—**आरोपे**ति । लक्ष्यार्थे प्रथमतः शक्यार्थाऽभेदारोप आरोपः । तस्यारोपस्य उत्कटत्वमध्यवसानम् ।

**(वि, र)** ते कीदृशत्वे सति भवत इत्यत्राह—**विषयस्ये**ति । विषय आरोपाधिकरणं लक्ष्यार्थः । तस्य अनिगीर्णस्य अनाच्छादितस्य अर्थात् स्ववाचकनामपदेन उक्तस्य अन्यतादात्म्यं शक्यार्थाभेदः । तत्प्रतीतिकृल्लक्षणा सारोपा स्यादित्यर्थः । निगीर्णस्य विशिष्य स्ववाचक-नामपदेन अनुक्तस्य तु साध्यवसानिका मतेत्यर्थः । अन्यतादात्म्यप्रतीतिश्च लक्षणाज्ञानतः पूर्वं बोध्या । तत्प्रतीतिकृच्च यद्यपि समानविभक्तिकपदद्वयमेव, न तु लक्षणा; तथाप्यन्यतादात्म्यप्रतीतिपूर्वकप्रतीतिकृदित्येवान्यतादात्म्यप्रतीतिकृदित्यस्यार्थः । न च साध्यवसानायां स्ववाचकनामपदेनाऽनिर्देशे समानविभक्त्यन्तपदाभावात् कथं तादात्म्यप्रतीतिकृदिति वाच्यम्, आख्यातेन लक्ष्यार्थस्योक्तौ तत् प्रतीतेः; तच्चाग्रे दर्शयिष्यते ।

**(वि, ल) अश्वःश्वेत** इति—अत्र श्वेतगुणवानश्वः लक्ष्योऽर्थोऽनिगीर्णोऽश्व-

**(लो, इ)** एवं चतुर्विधापि लक्षणा प्रत्येकं सारोपा साध्यवसाना इत्यष्टविधेत्याह—**आरोपे**ति । अनिगीर्णस्वरूपसामान्यतादात्म्यप्रतीतिरारोपः । विषयनिगरणेऽभेदप्रतिपत्तिर्विषयिणोऽध्यवसानम् । एवं स्वशब्दार्थनाम्ना गतार्थेऽपि स्फुटीकरणाय लक्षणेन निर्दिशति—**विषयस्ये**ति ।

**(लो, ई)** अश्व आरोपविषयः । स्वसमवेत इत्यनेन समवायरूपस्य लक्षणाहेतोः

---

+ विषयः—आरोपाधिकरणं वाहीकादिरित्यर्थः । विषयी आरोप्यमाणो गवादिः । विषयविषयिणोः भेदेन उपन्यासः आरोपः । तत्राद्ये रूपकालङ्कारे विषयविषयिणोरुपादानात् सारोपा । विषयिणा विषयस्य तिरोभावः—अध्यवसानम् । तत्र विषयिमात्रोपादानादतिशयोक्त्यलङ्कारे साध्यवसाना । निगरणं भेदकधर्मस्याग्रहणम् ।

1 'ताः पूर्वोक्ताश्चतुर्भेदलक्षणाः' इति ग. पु. नास्ति।

2 'विषयिणेत्यादिर्बीजमित्यन्तश्च पाठः ख. ग. प. पु. नास्ति ।

श्वेतगुणवानश्वोऽनिगीर्णस्वरूपः स्वसमवेत[1]गुणतादात्म्येन प्रतीयते ।

प्रयोजने यथा—'एते कुन्ताः प्रविशन्ति' । अत्र सर्वनाम्ना कुन्तधारिपुरुष-निर्देशात् सारोपात्वम्[2] ( ल, ई )

रूढौ लक्षणलक्षणा सारोपा यथा—'कलिङ्गः पुरुषो युध्यते' । अत्र कलिङ्ग-[3]पुरुषयोराधाराधेयभावः सम्बन्धः। प्रयोजने यथा-आयुर्घृतम् । अत्रायुष्कारणमपि घृतं कार्य्यकारण[4]भावसम्बन्धसम्बन्ध्यायुस्तादात्म्येन प्रतीयते । अन्यवैलक्षण्ये-नाव्यभिचारेणायुष्करत्वं प्रयोजनम् । *

यथा वा राजकीये पुरुषे गच्छति "राजासौ गच्छति" इति । अत्र स्वस्वामिभावलक्षणः सम्बन्धः । यथा वा [5]अग्रमात्रेऽवयवे हस्तोऽयम् ।

---

शब्देनैवोक्तत्वात् । श्वेतगुणाश्वयोः समानविभक्त्या तादात्म्यप्रतीतिः। **प्रयोजने यथा**—इति उपादानलक्षणेति शेषः । **एते कुन्ता** इति; कुन्तानामविरलत्वमत्र प्रयोजनम् । कुन्तवान् लक्ष्यार्थः । एतत् पदेनोक्तत्वात् अनिगीर्णः । **अत्र सर्वनाम्ने**ति—काव्यप्रकाशे तु सर्वनाम्ना लक्ष्यार्थनिर्देशे विशिष्य स्ववाचककुन्तादिपदेनाऽनुपादानात् साध्यवसानैव सेत्युक्तम् । विशिष्य स्ववाचकपदनिर्देश एव सारोपत्वात् ।

**(वि, व) कलिङ्गः पुरुष** इति—अत्र पुरुषपदेन लक्ष्यार्थोपादानात् अनिगीर्णत्वम् । कलिङ्गत्वेन लक्षणा । **प्रयोजने यथे**ति—लक्षणलक्षणेति शेषः । अन्यवैलक्षण्येनाव्यभिचारेणेति, अव्यभिचारः अन्यवैलक्षण्यं च हेतुरुक्तः ।

---

स्वसम्बन्धस्य निगरणं श्वेतगुण आरोप्यमाणः । प्रयोजन इत्यनन्तरं पूर्वोक्ता उपादानलक्षणा सारोपेति अनुषज्यते । एवमुत्तरोदाहरणेष्वपि । सर्वनाम्ना तत् शब्दरूपेण ।

---

* **कार्य्यकारणभावसम्बन्धसम्बन्ध्यायुस्तादात्म्येने**ति—कार्य्यकारणभावसम्बन्धेन सम्बन्धि (कार्य्यतासम्बन्धवत् ) यत् आयुः, तस्य तादात्म्येन अभेदेन प्रतीयते । एतेन कार्य्यतारूपः सम्बन्धो दर्शितः। अन्यवैलक्षण्येन जनकान्तरक्षीरादि-वैसादृश्येन कार्य्यकारित्वम् । अव्यभिचारेण घृतं क्षीरादिवत् आयुष्यं प्रति न व्यभिचारात् इति अव्यभिचारेण नियमेन कार्य्यकारित्वम् ।

1 'श्वेत' इति ग. घ. पु अधिकः पाठः ।

2 'सारोपत्वम्' इति (ग. घ. पु०)

3 'पुरुषकालिङ्गशब्दयोः इति (भ्क. ञ. पु०)

4 'कार्य्यकारणसम्बन्धादायुस्तादात्म्येन' इति (ग. पु०)

5 'हस्ताग्रमात्रेऽवयवे' इति (भ्क. ट. ठ. पु०).
'अग्रमात्रे हस्तावयवे भागे' (भ्क. ट. ठ. पु०)

**अत्रावयवावयविभावलक्षणः[1] सम्बन्धः । ब्राह्मणेऽपि[2] "तक्षासौ" । अत्र तात्कर्म्यलक्षणः सम्बन्ध[3]: । इन्द्रार्थासु स्थूणासु "अमी इन्द्राः" । अत्र तादर्थ्यलक्षणः सम्बन्धः । एवमन्यत्रापि । ( व )**

**निगीर्णस्य पुनर्विषयस्य अन्यतादात्म्यप्रतीतिकृत्साध्यवसाना । अस्याश्चतुर्षु भेदेषु पूर्वोदाहरणान्येव । तदेवमष्टप्रकारा[4] लक्षणा ( श, उ )**

काव्यप्रकाशे तु आयुर्घृतमिति सारोपायामन्यवैलक्षण्यम् । आयुरिदमिति साध्यवसानायामव्यभिचार इति द्वयोः पृथक् प्रयोजनद्वयमुक्तम् । कार्य्यकारणभावरूपसम्बन्धेन सारोपां लक्षणामुक्त्वा सम्बन्धान्तरैरपि तां दर्शयति—**राजकीयेना**ति । अत्र असावितिपदेन लक्ष्यार्थे पुरुषे निर्दिष्टे राज्ञोऽभेदारोपात् सारोपा । एवमुभयत्रापि सर्वनाम्ना लक्ष्यार्थनिर्देशे तथात्वं बोध्यम् । स्थूणाः स्तम्भा इन्द्रध्वजरूपाः । तादर्थ्यलक्षणः तत्पूजार्थतालक्षणः, अत्र इन्द्रवत् पूज्यत्वं प्रयोजनम् ।

**(वि, श)** इत्थं सारोपामुक्त्वा 'निगीर्णस्य मता साध्यवसानिका'इति कारिकाञ्चलं व्याचष्टे-**निगीर्णस्य पुनरि**ति । अस्याश्चतुर्ष्विति रूढिप्रयोजनद्वये उपादानलक्षणाद्वयं तद्द्वये लक्षणलक्षणाद्वयं चेति साध्यवसानायाश्चत्वारो भेदाः । पूर्वोदाहरणान्येवेति रूढावुपादानलक्षणायाः—'श्वेतो धावति' इति प्रयोजने उपादानलक्षणायाः 'कुन्ताः प्रविशन्ति'इति यद्द्वयमुदाहृतं रूढौ लक्षणलक्षणायाः 'कलिङ्गः साहसं करोति'इति प्रयोजने लक्षणलक्षणायां तु राजकीये पुरुषे गच्छति 'राजासौ गच्छति'इति यदुदाहृतं तत्र इदं पदत्यागेन उदाहरणमित्यत एतानि चत्वारि साध्यवसानाया उदाहरणानीत्यर्थः । राजा गच्छतीत्यत्र राजवत् परिचारकवेष्टितत्वं प्रयोजनम् । एतेषु चतुर्षु हि कर्त्र्या ख्यातेनैव कर्तृलक्ष्यार्थस्य उपस्थापनात् नामपदेन तु अनुपस्थानान्निगीर्णता । तस्मिंश्च प्रथमं शक्यार्थतादाम्यारोपात् साध्यवसानत्वमिति बोध्यम् । प्रथमान्तोक्तकारके प्रथमान्तपदार्थस्याऽभेदान्वयव्यु-

---

**(लो, उ)** एवमारोपे रूढिप्रयोजनयोरुदाहरणे चतुष्टयं दर्शयित्वा विषयव्याप्त्यर्थं सम्बन्धभेदेन उदाहरणान्याह-**यथा वे**त्यादि—राजासौ इत्यत्र पूर्ववत् अदः शब्देन विषयप्रकटनम् । **अग्रे**ति । अत्र हस्तावयवेऽग्रेऽपि हस्तशब्दप्रयोगः, एकदेशदाहेऽपि ग्रामो दग्ध इति वत् । अत्र इदंशब्दो राजा असौ इत्यत्र च अदः शब्दवत् ।

साध्यवसानालक्षणं विवृणोति—**निगीर्णस्ये**ति—पूर्वोदाहरणानि श्वेतो धावति, कुन्ताः प्रविशन्ति, कलिङ्गः साहसिकः, गङ्गायां घोषः ।

---

1 'भाव' इति ग. घ. पु० नास्ति ।

2 'ब्राह्मणेऽपि' इति (ट. ठ पु०)

3 'सम्बन्धः' इति ट. ठ. पु० नास्ति ।

4 'तदेव इत्यादि' ग. घ. पु० नास्ति ।

**साहश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि।**
**साहश्यात्तु मता गौण्यस्तेन षोडशभेदिताः ॥१४॥ (ष, ऊ)**

**ताः पूर्वोक्ता अष्टभेदा लक्षणाः। साहश्येतरसम्बन्धाः कार्य्यकारणभावादयः। अत्र शुद्धानां पूर्वोदाहरणान्येव । ( स ) रूढावुपादानलक्षणा सारोपा गौणी यथा—"एतानि तैलानि हेमन्ते सुखानि"। अत्र तैल-शब्दस्तिलभवस्नेहरूपं मुख्यार्थमुपादायैव सार्षपादिस्नेहेषु[1] वर्त्तते। + ( ऋ )**

---

त्पत्तेः। गङ्गायां घोष इति तु लक्षणलक्षणोदाहरणं यद्दर्शितं तत्तु न साध्यवसानोदाहरणम्। तत्र लक्ष्यार्थे तीरे प्रवाहतादात्म्याऽनारोपात्। एवं च रूढौ लक्षणलक्षणोदाहरणं कलिङ्ग इत्यादिकं यदुक्तं तत्र साहसिक इति प्रामादिकः पाठः। नामपदेन साहसिक इत्यनेन लक्ष्यार्थस्य पुरुषस्योपादानात् सारोपात्वेन साध्यवसानत्वाऽभावात्। किन्तु कलिङ्गः साहसं करोति इत्येव तत्र पाठः। इत्थमुपादानलक्षणालक्षणलक्षणयोः रूढिप्रयोजनहेतुकत्वेन चतुर्विधयोः सारोपासाध्यवसानिकारूपत्वेन द्वैगुण्यात् अष्टविधत्वम्।

**( वि, ष )** षोडशभेदानाह—**साहश्येतरे**ति। साहश्येतरसम्बन्धाः कार्य्यकारणभावादिरूपाः पूर्वदर्शिताः सकला अष्टविधा अपि शुद्धाः शुद्धपरिभाषिताः। साहश्यसम्बन्धात्तु ता अष्टविधा गौण्यः साहश्यघटकरूपशक्यगुणयोगरूपयोगार्थेन गौण्यो गौणीपरिभाषिता इत्यर्थः। षोडशभेदिता अष्टद्वैगुण्यात्।

**( वि, स ) पूर्वोक्तोदाहरणान्येव** इति—श्वेतो धावतीत्यादीनि, इन्द्रार्था स्थूणा इत्यन्तानि सकलानि एव। तेषु एकत्रापि साहश्यसम्बन्धाभावात्।

**(वि, ह) तिलभवस्नेहरूपं मुख्यार्थमि**ति। तिलस्येदमिति योगार्थवशात्तस्य मुख्यार्थत्वं, तस्य चिक्कणताकारित्वेन साहश्याश्रयं शक्यलक्ष्योभयमेवात्र तैल-

---

**( लो ऊ )** एवमष्टविधाऽपि लक्षणा प्रत्येकं शुद्धा गौणी चेति षोडशप्रकारेति दर्शयति—**साहश्येतरे**ति। वृत्तौ स्पष्टो लक्षणार्थः।

**( लो, ऋ ) एतानी**ति—अत्र तैलशब्दस्य तिलभवस्नेहमात्रवाचकत्वात् प्रकृते तस्य केवलस्य सुखमयत्वादिविवक्षणात् मुख्यार्थबाधः; प्रयोजनाभावात् रूढिः उपादानलक्षणात्वं मुख्यार्थमुपादायैव इति वृत्त्या स्मारितम्। स्नेहेषु वर्त्तत इत्यनेन

---

+—गौणी गुणनिमित्ता वृत्तिः गुणेभ्य आगता गौणी, तत्र मुख्यार्थलक्ष्यार्थयोः सम्बन्धस्तु सजातीयगुणवत्त्वम्। अतो गौणी लक्षणा इयम्। यथा—तिलस्येदं तैलम् इति व्युत्पत्त्या तैलशब्दस्य तिलोत्पन्नस्नेहपदार्थे शक्तिः—परं तिलोत्पन्नस्नेहसजातीयगुणवत्त्वात् सर्षपाद्युत्पन्नस्नेहपदार्थे तैलशब्दस्य लक्षणा गौणी एव।

1 "सार्षपादिषु स्नेहेषु" इति. (ग. घ. ङ. पु.)

**प्रयोजने यथा—राजकुमारेषु तत्सदृशेषु च गच्छत्सु 'एते राजकुमारा गच्छन्ति' (ह)। रूढावुपादानलक्षणा साध्यवसाना गौणी यथा—**

**'तैलानि हेमन्ते सुखानि'। प्रयोजने यथा—'राजकुमारा गच्छन्ति'। (क्ष)**

**रूढौ लक्षणलक्षणा सारोपा गौणी यथा—'राजा गौडेन्द्रं[1] कण्टकं शोधयति (क)**

**प्रयोजने यथा 'गौर्वाहीकः'। * रूढौ लक्षणलक्षणा साध्यवसाना**

---

शब्दार्थ इत्यतो मुख्योपादानम्। **एते राजकुमारा** इति। अत्र राजकुमारतुल्यशोभावत्त्वं प्रयोजनम्—तुल्यवयस्कत्वं सादृश्यम्। उभयत्रैव एतानि एते इति सर्वनामपदेन लक्ष्यार्थोपादानात् तत्र शक्यार्थतादात्म्यारोपाच्च सारोपा लक्षणा।

**(वि, क्ष)** सादृश्यात् साध्यवसानामाह—**तैलानी**ति। अत्र सर्वनामपदेन लक्ष्यार्थानुपस्थापनान्न सारोपा, किन्तु शक्यार्थाऽव्यावर्त्तकेन शक्यलक्ष्यसाधारण्येन सुखपदेन लक्ष्यार्थोपस्थापनात्तस्याच्छादनरूपा निगीर्णता। ततः शक्यार्थतादात्म्यारोपात् साध्यवसाना। **राजकुमार** इति। अत्राख्यातेनैव कर्त्तॄणां लक्ष्यार्थानामुपस्थापनात्तेषां निगीर्णता। तत्र शक्यराजकुमारतादात्म्यारोपश्चेति साध्यवसाना। तुल्यशोभावत्त्वं प्रयोजनम्, तुल्यवयस्कत्वं सादृश्यम्।

**(वि, क) राजा गौडेन्द्रमि**ति। अत्र दुःखदायित्वेन कण्टकसदृशः गौडेन्द्रो लक्ष्यार्थः स्वशब्देनैवोपात्तः। अत्र कण्टकतादात्म्यारोपात् सारोपा।

**(वि, ख) गौर्वाहीक** इति। वाहीको हलवाहकः। स च स्वशब्देनैवोपात्तः। अज्ञत्वधर्मेण सादृश्यम्। जाड्यमान्द्यादिकम् अवैदग्ध्यं वा प्रयोजनम्। राजा कण्टक-

---

उभयोः स्नेहरूपत्वात् सादृश्यलक्षणः सम्बन्धः। एतानीति सर्वनाम्ना सारोपात्वम्, एवमुत्तरोदाहरणेष्वपि बोद्धव्यम्।

**(लो, ऋ)** प्रयोजन इत्यनन्तरम् उपादानलक्षणा सारोपा गौणीत्यनुषज्यते, एवमुत्तरत्राप्युदाहरणे पूर्वोक्ता वृत्तिः। **एते** इति। अत्र राजकुमारसदृशेषु राजकुमारप्रयोगात् मुख्यार्थबाधः। शौर्य्यसौन्दर्य्यपरिच्छदादिभिः सादृश्यं सम्बन्धः। प्रयोजनमेषामतिशयः। **राजे**ति—गौडेन्द्रे कण्टकशब्दस्य प्रयोगे प्रयोजनाभावाद्रूढिः।

---

*—वाहीकः—बहिर्भवः, इति शास्त्रीयाचाराद् बहिर्भूतः (बहिषष्टिलोपो यं च ईकक् च। वार्त्तिक) अथवा वाहीको नाम देशविशेषः। तत्र भवः पुरुषः वाहीकः (प्राचां देशे, वाहीकग्रामेभ्यश्च) वाहीकलक्षणम्—

> 'पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः।
> तान् धर्मबाह्यानशुचीन् वाहीकान् परिवर्जयेत्॥
>
> (महाभारत कर्णपर्व)

1 'गौडेन्द्रः' इति प्रकाशित ख. पु०।

**गौणी यथा–'राजा कण्टकं शोधयति'। प्रयोजने यथा–'गौर्जल्पति'। (ख, ऋ)**

**अत्र केचिदाहुः–स्वार्थसहचारिणो[1] गुणा जाड्यमान्द्यादयो लक्ष्यन्ते। ते च गोशब्दस्य वाहीकार्थाभिधाने निमित्तीभवन्ति। तदयुक्तं, गोशब्दस्यागृहीत-संकेतं वाहीकार्थमभिधातुमसामर्थ्यात्[2] गोशब्दार्थमात्रबोधनाच्च। अभिधाया विरतत्वात् विरतायाश्च पुनरुत्थानाभावात्[3]। * (ग, लृ)**

मित्यर्थपरम्परालिखितः प्रामादिक एव पाठः। लक्ष्यार्थस्य केनापि पदेन अनुपस्थापनात्, प्रथमं तत्र शक्यतादात्म्यारोपानुपपत्तेः। किन्तु राज्ञा कण्टकं शोध्यते, इत्येव पाठः। तत्र कर्माख्यातेनोपस्थापिते शोध्ये कर्मणि वैरिणि प्रथमान्तकण्टकपदशक्यार्थस्य तादात्म्यारोपात्। गौर्जल्पतीत्यत्रापि गौर्जल्पकत्वाऽसम्भवादाख्यातेनोपस्थापिते जल्पके निगीरणे गोतादात्म्यारोपात् साध्यवसाना। गोवद् वैदग्ध्यं प्रयोजनम्, जडत्वादिना सादृश्यम्।

**(वि, ग) अत्र केचिदिति**—स्वार्थो गोत्वं तत्सहचारिण इत्यर्थः।

**वाहीकार्थाभिधाने** इति—अभिधया प्रतिपादने इत्यर्थः। **निमित्तीभवन्ती**ति—शक्यतावच्छेदकीभवन्तीत्यर्थः। तथा च जडत्वेन रूपेण वाहीकः शक्त्यैव, जडो वाहीक इति प्रतीतिरिति तन्सिद्धान्तः। **तदयुक्तमि**ति। अयं च दोषः तत् सिद्धान्ताऽनवकलनादेव धर्मे लक्षणाया एव धर्मिणि शक्तिग्राहकत्वस्य तैः सिद्धान्तितत्वात्। **गोशब्दार्थे**ति—सकृदुच्चारितस्य शब्दस्य सकृदर्थबोधनेन शब्दविरत्या अभिधाया अपि विरतेरिति भावः।

क्षुद्रदुःखदायित्वं सादृश्यं सम्बन्धः। कण्टकशब्दस्य प्रकृते स्वार्थपरित्यागात् लक्षणलक्षणा, गौडेन्द्रस्य विषयस्यानिगरणात् सारोपात्वम्। **गौर्वाहीक** इत्यादि-एतस्मिन् उदाहरणे यथा प्रयोजने लक्षणलक्षणा सारोपा गौणी। तथा वृत्तावेवाग्रे स्फुटीभविष्यति। एवं गौर्जल्पतीत्यत्रापि प्रयोजने लक्षणलक्षणा साध्यवसाना गौणी।

**(लो, लृ)** सम्प्रति पूर्वपक्षनिरासपूर्वकं गौण्या वृत्तेर्लक्षणायामन्तर्भावं दर्शयन् एकत्रापि उदाहरणे विप्रतिपत्तिनिरासेन सर्वमपि सामञ्जस्यं भविष्यतीत्याह–**अत्रे**ति।

* लक्षणाया प्रथमं जाड्याद्युपस्थितिः ततः अभिधया वाहीकस्य बोधः। गोशब्दो हि भिन्नार्थकत्वात् वाहीकेन सह बाधितमुख्यार्थः सन् गोत्वसमानाधिकरणात् जाड्यादिगुणान् लक्षणया बोधयति; ततः तान् एव गुणान् निमित्तीकृत्य वाहीकम् अभिधया बोधयति इति निष्कर्षः। एतस्मिन् मते गोशब्दस्य वाहीकार्थे सङ्केताभावात् तदभिधानम् अनुपपन्नम्।

1 'गोसहचारिणः' इति (ख. ग. घ. ङ. पु०)

2 'अशक्यत्वात्' इति (ग. घ. पु०)

3 'उत्थापनाभावात्' इति (ङ. च. पु०)

अन्ये च पुनः—"गोशब्देन वाहीकार्थो नाभिधीयते, किन्तु स्वार्थसहचारिगुणसाजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते।" तदप्यन्ये न मन्यन्ते । (घ, ए) × तथा ह्यत्र गोशब्दाद् वाहीकार्थः प्रतीयते न वा ? आद्येऽपि[1] गोशब्दादेव वा[2] ? लक्षिताद् वा गुणात् अविनाभावद्वारा ?

तत्र न प्रथमः, वाहीकार्थ[3]स्यासंकेतितत्वात् । (ऐ) ।

न द्वितीयः; अविनाभावलभ्यस्यार्थस्य शाब्देऽन्वये प्रवेशासम्भवात् ।

---

(वि, घ) **गुणा एव लक्ष्यन्त** इति—वाहीकप्रतीतिस्त्वाक्षेपादिति भावः।

(वि, ङ) **आद्येऽपी**ति—गोशब्दाद् वाहीकप्रतीतिपक्षे इत्यर्थः। न प्रथम इत्यनेन तद्दूषणम्। **असंकेतितत्वादि**ति—एतदुद्धारश्च तन्मते दर्शित एव, इत्यवधेयम्। न द्वितीयो—लक्षितगुणाऽविनाभावेनाक्षेपात् प्रतीतिपक्षः। **शाब्देऽन्वये प्रवेशासम्भवादि**ति—इदं च स्वसिद्धान्ताभिप्रायेणैवोक्तम्। वस्तुतस्तु जातिशक्तिवादे जात्यविनाभावलभ्याया व्यक्तेः शाब्दबोधप्रवेशवदत्रापि तथात्वे बाधकाभावात्।

---

गौर्वाहीक इत्यत्र स्वार्थो गौः; लक्ष्यन्ते लक्षणया बोध्यन्ते ते तत्र लक्षिता गुणाः; चकारेण न खलु तेषां लक्षितत्वमात्रेण विश्रान्तिरिति, वाहीकार्थस्याभिधानेऽभिधया बोधने निमित्तीभवन्ति। पुनरुत्थानाभावात् शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभाव इति न्यायात्, अभिधान्तरकल्पने कल्पनागौरवमित्याशयः।

(लो, ए) मतान्तरमाह—**अन्य** इति। नाभिधीयते उक्तादेव न्यायात्। स्वार्थो गौः। साजात्येन सम्बन्धेन वाहीकगता गुणा जाड्यमान्द्यादय एव; अत्रैवकारेण गुणिनो व्यवच्छेदः। लक्ष्यन्ते लक्षणया बोध्यन्ते तत् समनन्तरोक्तं मतान्तरमपि।

(लो, ऐ) अत्र पक्षे आद्ये प्रतीतिपक्षे। लक्षितात् गुणात् स्वनिष्ठजाड्यमान्द्यादेः। अविनाभावोऽव्यभिचारसम्बन्धः तद्द्वारा तद्बलेनाक्षेपादिभावः। प्रथमः गौशब्दमात्रात् वाहीकस्य प्रतीतिपक्षेः। प्रतीतिश्चाभिधया बोधिता।

(लो, ओ) अविनाभावलभ्यस्य न तु शब्दबोधितस्येत्यर्थः। आचार्य्यसम्म-

---

× तथा च गोगतजाड्यादिसजातीयजाड्यादिगुणाः गोशब्देन लक्ष्यन्ते। तैरेव गुणैः 'गुणगुणिनोः अविनाभावात्' गुणवान् वाहीक आक्षिप्यते। तत्तु न युक्तम्। गुणग्राहकसामग्र्या द्रव्यग्राहकत्वनियमे प्रमाणाभावात्। एतन्मते आक्षेपलब्धार्थस्य शाब्दबोधविषयत्वाभावो विवक्षितार्थानन्वयश्च दोषः।

1 "अपि" इति ग. घ. पु. नास्ति

2 "वा" इति घ. ङ. फ. नास्ति

3 "वाहीकार्थस्यासङ्केतितत्वात्" इति (ग. पु.)

शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते। न तृतीयः[1], यदि हि गोशब्दाद् वाहीकार्थो न प्रतीयते[2], तदाऽस्य वाहीकशब्दस्य च सामानाधिकरण्यमसंगतं[3] स्यात् ! (ङ) (श्री) * तस्मादत्र गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सह अन्वयमलभमानोऽज्ञत्वादिसाधर्म्यसम्बन्धाद्वाहीकार्थं लक्षयति । +

* वाहीकस्याज्ञत्वाद्यतिशयबोधनं प्रयोजनम् । (च, औ)

---

**न तृतीय** इति–गोशब्दात् वाहीकप्रतीत्यभावपक्षे । **सामानाधिकरण्यमि**ति— स्वार्थयोरभेदबोधकत्वनियतं समानविभक्तिकत्वमित्यर्थः ।

**(वि, च)** तथा हि गोशब्दस्य वाहीकगतजाड्यमान्द्यादि गुणोऽर्थः । वाहीकशब्दस्य हलवाहिकोऽर्थः । **वाहीकार्थं लक्षयती**ति–गोसदृशत्वेन रूपेणेति शेषः ।

---

तिमाह–**शाब्दीत्या**दि–हि यस्मात् शब्देनैव न त्वविनाभावादिलभ्यार्थेन । तृतीयो न प्रतीतिपक्षः ।

**(लो, औ)** तत् का गतिरित्याकाङ्क्षायां स्वमतमाह–**तस्मादि**ति। यस्मादेवमन्या गतिर्नास्ति इत्यर्थः । गोशब्दो गोशब्दार्थः । शब्दतदर्थयोरभेदोपचारात् । एवमन्यत्राप्येवंविधस्थले बोद्धव्यम्। मुख्या वृत्तिरभिधाप्रयोजनम्। वाहीकोऽज्ञ इति स्वशब्दप्रतिपादनाऽलभ्यम्, एतस्या गौण्याख्याया वृत्तेर्मुख्यार्थबाधादित्रितयहेतुकत्वात् लक्षणायामन्तर्भावः स्फुट एव इत्याशयः । इह च गङ्गातटयोस्तादात्म्यप्रतीत्या तटे शीतत्वाद्यतिशयः । गौर्वाहीक इत्यत्र गोवाहीकशब्दयोस्तादात्म्यप्रतीत्या वाहीके जाड्याद्यतिशयः प्रतीयते इति व्यर्थोऽयमुपचारो लक्षणायासः काव्यप्रकाशकारस्येति चण्डीदासपण्डितानामविचारिताभिधानम् । तथाहि सादृश्यसम्बन्धिनोरिव तदितरसम्बन्धिनोर्न सम्बन्धौदासीन्येन वृत्तिः; अत एवान्यैरुक्तसम्बन्धान्तरं लक्ष्यलक्ष्यकयोः साक्षात् सम्बन्धेन, सादृश्यं तु गौर्वाहीकादितद्धर्मसाजात्यरूपं, न तथेति, अत एव

---

* न च जातिपदार्थवादे यथाव्यक्त्यविनाभावात् जात्या व्यक्तिराक्षिप्यते इत्युक्तं तथा प्रकृतेऽपि किं न स्यादिति वाच्यम् , तत्र आक्षेपस्य मुख्यार्थोऽविनाभावहेतुकत्वात् । किञ्च तत्र जातिग्रहसामग्र्या व्यक्तिग्राहकत्वनियम इत्याक्षेपोऽप्यस्ति । प्रकृते गुणग्राहकसामग्र्या द्रव्यग्राहकत्वनियमे प्रमाणाभावात् वाहीकस्य न आक्षेपलभ्यत्वम् ।

+—गोवृत्तिजाड्यादिगुणसमानजाड्यादिगुणाश्रयरूपसम्बन्धेन जात्यादिगुणविशिष्टे लक्षणा । तेन गोवृत्तिजाड्यादिगुणजातीयजाड्यादिगुणवान् वाहीक इत्यर्थः ।

1 "द्वितीयः" इति (ग. घ. पु.)

2 "प्रतीयते" इति (च. छ. पु.)

3 "असमञ्जसं" इति (ट. ठ. पु)

**इयं[1] च गुणयोगात् "गौणी" इत्युच्यते। पूर्वा तु उपचारामिश्रणात् शुद्धा। उपचारो हि नामाऽत्यन्तं विशकलितयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रम्। यथा—"अग्निमाणवकयोः"। ×**

**शुक्लपटयोस्तु नात्यन्तं[1] भेदप्रतीतिः। तस्मादेवमादिषु शुद्धैव लक्षणा। (छ, अ)**

**व्यङ्ग्यस्य गूढागूढत्वात् द्विधा स्युः फललक्षणाः ॥ १५ ॥**

**प्रयोजने या अष्टभेदा लक्षणा दर्शिताः ताः प्रयोजनरूपव्यङ्ग्यस्य गूढागूढतया**

---

**(वि, छ) गुणयोगादि**ति—शक्यगोनिष्ठजाड्यादिगुणसजातीयजाड्यादिगुणयोगादित्यर्थः। **पूर्वा त्वि**ति—शुक्लपटः, आयुर्घृतमित्यादिकेत्यर्थः। ननु तत्रापि समानविभक्तिकत्ववशादायुर्घृतयोः प्रथमभेदोपचारोऽस्त्येव इत्यत आह—**उपचारो ही**ति। समानविभक्तिकत्वाभिधानेन उपचारेणाऽमिश्रणं न शुद्धत्वप्रयोजकं, किन्तु तत्रैव सादृश्यसत्त्वे एवेति भावः। **शुक्लपटयोस्त्वि**ति—आयुर्घृतयोश्चेत्यपि बोध्यम्।

---

क्वचित् तटादौ गङ्गादिसम्बन्धात् किञ्चित् शैत्यादिकमस्त्येव, किन्तु गङ्गाशब्देन प्रतिपादने गङ्गात्वप्रतीतौ तत्शैत्यादिकमाधिकं प्रतीयते। वाहीके पुनर्गोनिष्ठानां गुणानां कदाचिन्न सम्भवः, किन्तु तत्सजातीयानाम्। किञ्च गौर्वाहीक इत्युक्तेऽपि प्रतिपत्तुः सर्वथा नाऽभेदप्रतिपत्तिः, किन्तु सामानाधिकरण्यप्रयोगात् तस्याः स्थगनमात्रम्। तदुक्तं शारीरिकमीमांसाव्याख्याने वाचस्पतिमिश्रैः—'अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्त्तत' इति यत्र प्रयोक्तृप्रतिपत्त्रोः सम्प्रतिपत्तिः स गौणः, सच भेदप्रत्ययपुरःसर इति।

**(लो, अ)** एतदभिप्रेत्य उक्तप्रकारेण लक्षणाविशेषणयोर्गौणशुद्धयोर्भेदं दर्शयति—**इयं चे**ति। इयं सादृश्यसंबन्धहेतुका गुणयोगात् नतु साक्षात्सम्बन्धात्। उपचारो नाम अत्यन्तं विशकलितयोरित्यनेन सम्बन्धस्य साक्षात्त्वं दार्शितम्। स्थगनमात्रं नतु सर्वथाभावः। नात्यन्तं भेदप्रतीतः उक्तनयेन सम्बन्धस्य साक्षात्त्वात्।

**(लो, आ)** सम्प्रति व्यङ्ग्यवैचित्र्येणैव लक्षणाभेदान् दर्शयति, **व्यङ्ग्यस्ये**ति—

---

× उपचारो नाम—विशकलितयोः—भिन्नयोः। सादृश्यात् अतत्त्वस्य तत्त्वेन व्यपदेश उपचारः' (मल्लिनाथ)। उपचारस्तु यत्र सादृश्यात् वस्त्वन्तरे वस्त्वन्तरं उपचर्य्यते यथा—गौर्वाहीकः। अत्र हि गोशब्दो बाधितमुख्यार्थः सन् गोगता ये जाड्यमान्द्यादयः गुणाः तत्सदृशवाहीकगतजाड्यगुणलक्षणाद्वारेण गोगतजाड्यमान्द्यादिगुणसदृशजाड्यमान्द्यादिगुणयुक्ते वाहीके उपचरितः।

1 " इत्थं " इति (ग. पु.)

2 'अत्यन्तभेदप्रतीतिः' इति (ग. पु०)

प्रत्येकं द्विधा भूत्वा षोडशभेदाः। तत्र गूढः काव्यार्थभावनापरिष्कृतबुद्धिविभव-मात्रवेद्यः; यथा "उपकृतं बहु तत्र" इति। अगूढः-अतिस्फुटतया सर्वजन-संवेद्यः; यथा—

उपदिशति कामिनीनां यौवनमद एव ललितानि।

अत्र "उपदिशति" इत्यनेन "आविष्करोति" इति लक्ष्यते॥

आविष्कारातिशयश्चाभिधेयवत् स्फुटं प्रतीयते ( ज, आ )

**धर्मिधर्मगतत्वेन फलस्यैता अपि द्विधा॥ १६॥**

एताः-अनन्तरोक्ताः षोडशभेदा लक्षणाः। फलस्य धर्मिगतत्वेन धर्मगत-त्वेन च प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्भेदाः।

दिङ्मात्रं यथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्वलाका घनाः

वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।

कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे

---

**(वि, ज)** फललक्षणाः प्रयोजनवत्यो लक्षणाः। प्रयोजने या अष्टभेदा दर्शिता इति षोडशसु रूढावष्टौ प्रयोजने त्वष्टाविति दर्शितत्वात्। परिपक्वबुद्धिः दृढसंस्कारजा बुद्धिः। **उपकृतमि**ति—अत्र ग्रन्थकृन्मतेऽपकारातिशयः, अन्यमते त्वपकारिणः कौटिल्यादिकं प्रयोजनं, व्यङ्ग्यविदग्धैकगमम्। सोल्लुण्ठनार्थस्याऽविदग्धाऽवेद्यत्वात्। **आविष्करोती**ति—उपदेशकत्वस्य गुरुधर्मत्वेन यौवनमदे तद्बाधात् इति भावः। **आविष्कारातिशयश्चे**ति—इदं तु नानुभाविकमुक्तम्। काव्यप्रकाशे तु शिक्षा-दानमेव लक्ष्यार्थस्तत्राऽनायास एव प्रयोजनमभिधेयवत् सर्वजनवेद्यम्। तद्धि प्रयोजन-मुपदेशस्य वाक्यार्थस्य धर्मो लक्ष्यार्थे शिक्षादाने प्रतीयते—उपदेशात् शिक्षायां चाना-यासः सर्वजनवेद्य एव इति तदभिप्रायः।

**(वि, झ) षोडशभेदा** इति—गूढागूढप्रयोजनरूपा इत्यर्थः। धर्मिधर्मगत-त्वेनेति; धर्मी लक्ष्यार्थः। धर्मस्तु लक्ष्यार्थनिष्ठपदार्थः **स्निग्धश्यामले**ति—प्रावृट्काले उपस्थिते सीताविरहिणो रामस्येयमुक्तिः। वेल्लन्ती चञ्चला वलाका यत्र तादृशाः। पयोदसुहृदां मयूराणाम् एते विरहोद्दीपकाः कामं स्वाच्छन्द्येन सन्तु तथापि मां मारयितुं न शक्ता इत्यर्थः। यतो रामोऽस्मि, दुःखसहिष्णुरस्मि, तथात्वे हेतुमाह—**कठोरे**ति। अत उक्तं घनादिकं सर्वमहं सहे इत्यर्थः। वैदेही तु अनीदृशी। कथं

फलं प्रयोजनं, तद्युक्ता लक्षणा। ललितानि चेष्टितानि। आभ्यामेव व्यङ्ग्यस्य गूढा-गूढत्वाभ्यां ध्वनिगुणीभूतव्यङ्ग्याख्यौ काव्यप्रकारविशेषौ वक्ष्येते।

**( लो, इ ) स्निग्धे**ति—वेल्लनं चलनं; पयोदसुहृदां मयूराणाम्; आनन्देन

**वैदेही तु कथं भविष्यति हहा ! हा देवि ! धीरा भव ॥ ( क ) +**

**अत्रात्यन्तदुःखसहिष्णुरूपे रामे धर्मिणि लक्ष्ये तस्यैवातिशयः फलम् । " गङ्गायां घोषः " इत्यत्र तटे[1] शीतत्वपावनत्वादिरूपधर्मस्यातिशयः फलम् । ( अ, इ )**

---

भविष्यति, किंप्रकारा भविष्यतीत्यर्थः । हाहा खेदे । तस्माद्देवि वैदेहि ! धीरा भव—दुःखसहिष्णुर्भवेत्यर्थः ।

**( वि. अ ) रामे लक्ष्ये** इति—घनाद्युद्दीपकसहरामत्वस्य प्रयोजकत्वाद्दुःखसहिष्णुत्वरूपेण रामो लक्ष्यत इत्यर्थः । तस्यैवातिशय इति, तस्यैव दुःखसहिष्णो रामस्यातिशयः विप्रलम्भरूपः, नचात्र दुःखसहिष्णुत्वस्याप्यतिशयः प्रतीयत एव । तत् कथमिदं धर्मगतस्योदाहरणं न दर्शितमिति वाच्यम् । विवक्षितार्थाविवेकेन तस्यापि धर्मिगतत्वादेव; तथाहि दुःखसहिष्णुत्वं तावद्दुःखद्वेषाभावस्तस्य चाभावरूपस्यातिशयान्तराभावद्वेषसामान्याभावरूपत्वमेवातिशयः। स च नातिरिक्तपदार्थः। किन्तु अभावस्वरूप एव । तस्य च रामरूपधर्मिगतत्वादेव । **शीतत्वपावनत्वाति-**

केकाः ध्वनयः कला मधुरास्फुटाः । **अत्रे**ति—अयमर्थः; रामोऽहं सर्वं सह इत्यत्र रामस्य सर्वसहत्वस्याऽप्रसिद्धेः; मुख्यार्थबाधात् रामस्यात्यन्तदुःखसहिष्णुत्वरूपो

---

+ स्निग्धया जलसम्बन्धात् सरसया, श्यामलया द्रविडवनितोऽचितासितवर्णया कान्त्या लिप्तम् आच्छुरितं (व्याप्तं) वियत् नभो यैः । वेल्लन्त्यः चलन्त्यः प्रहर्षवशात् वलाकाः (वकपङ्क्त्यो) येषु ते एवंविधाः मेघाः । एवं नभस्तावद् दूरालोकं वर्त्तते । दिशोऽपि दुस्सहाः; यतः—सूक्ष्मजलकणोद्गारिणो वाताः । वातानां मन्दमन्दत्वम् अनियतदिग्भागगमनं च वहुवचनेन सूचितम् । तर्हि गुहासु क्वचित् प्रविश्य आस्यतामित्यत आह—पयोदानां ये सुहृदः तेषु च सत्सु शोभनहृदयाः मयूराः ( पयोदाः सुहृदः येषां ते मयूराः इति केचित् ) तेषाम् आनन्देन हर्षेण कलाः मधुराः केकाः शब्दविशेषाः । ताश्च सर्वं पयोदवृत्तान्तं दुःसहं स्मारयन्ति स्वयं च दुःसहा इति भावः । एवम् उद्दीपनविभावोद्बोधितो विप्रलम्भः । इत एव प्रभृति प्रियतमां हृदये निधायैव स्ववृत्तान्तं तावदाह—**कामं सन्त्वि**ति । दृढं सातिशयं रामोऽस्मि—स एवाहं भवामि (अतिशयेन कठोरहृदयोऽहं रामः सकलदुःखपात्रत्वेन प्रसिद्धोऽस्मि । अत एव सर्वम् उद्दीपकजनितं क्लेशं सहे) भविष्यतीति क्रियासामान्यं, तेन किं करिष्यति इत्यर्थः । अथ च भवनमेव अस्या असम्भाव्यमिति उक्तप्रकारेण हृदयनिहितां प्रियां प्रत्यक्षीभावितां हृदयस्फोटनोन्मुखीं ससम्भ्रममाह—**हहाहे**ति । (हहाहेति त्रयो निपाताः खेदातिशये) देवीति युक्तं तव धैर्य्यमित्यर्थः । धीरा भव धैर्य्यं कुरु "देवीत्वेन धैर्य्यस्य उचितत्वात् । (ध्वन्यालोकलोचन) ।

1 "तटादिषु लक्ष्येषु" इति (ग. घ. फ.)

**तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः ॥ १७ ॥**

रूढावष्टौ, फले द्वात्रिंशदिति चत्वारिंशल्लक्षणाभेदाः ।

**पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा ॥ १८ ॥**

किञ्च—

ताः—अनन्तरोक्ताश्चत्वारिंशद्भेदाः । तत्र पदगतत्वेन[1] यथा–गङ्गायां घोषः'' इति । वाक्यगतत्वेन[2] यथा—''उपकृतं बहु तत्र '' इति एवमशीतिप्रकारा लक्षणा । × (ट, ई)

---

**शयस्ये**ति—अतिशयस्यातिशयान्तराभावादतिशयितशीतत्वपावनत्वयोरित्यर्थः । अत्र चातिशयितांशो नातिप्रयोजनः सम्पातायात एव बोध्यः । नन्वत्र धर्मिगते शीतत्वपावनत्वे एव प्रयोजने किं न स्यादितिचेन्न । गङ्गासम्बन्धवशात्तटस्य शीतत्वपावनत्वे वास्तवे एव । ततश्च लक्षणया तटप्रतीतौ तत्सम्बन्धिनोः तयोः स्मरणस्यैवं सम्भवेन व्यङ्ग्यत्वनियमरहितयोस्तयोरतिशय एव प्रयोजनमित्यभिप्रायात् ।

(वि, ट) **फले द्वात्रिंशदि**ति—पूर्वोक्ताष्टविधप्रयोजनस्य गूढागूढत्वाभ्यां द्वैगुण्येन षोडशविधस्य धर्मिधर्मगतत्वेन द्वैगुण्याद् द्वात्रिंशदित्यर्थः । पदवाक्यगतत्वेन व्यङ्ग्यत्वेन । **गङ्गाया**मिति–नन्विदमपि घोषान्वयवशात् वाक्यमेव यदि च वाक्यस्यैकपदस्यैव लाक्षणिकत्वात्तद्व्यङ्ग्यस्य पदगतत्वं तदा उपकृतं बह्वित्यत्रापि न वाक्यगतत्वम् । उपकृतं बहु तत्र किमुच्यते इति वाक्यस्थस्योपकृतपदस्य एकस्यैव लाक्षणिकत्वादिति चेन्न । वाक्यगतपदद्वयस्य लाक्षणिकत्वे तयोः पदयोर्वाक्यत्वेन वाक्यगतत्वात् । भवति हि उपकृतमित्यत्र उपकृतसुजनतापदयोर्वाक्यस्थयोर्लाक्षणिकत्वम् ।

---

विशेषो लक्ष्यते । तेन फलात् अत्यन्तदुःखसहिष्णु रामोऽस्मि इति शब्दाभिधानालभ्यं तथाभूतरामविशेषस्य एवातिशयस्तन्निष्ठमेव प्रयोजनमिति ।

(लो, ई) तस्मात् एवमुक्तप्रकारेण ''उपकृतं बहु तत्र'' इत्यत्र बहुपदनिष्ठत्वाभिप्रायेण वाक्यगतत्वम् । एवमेव हि ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालङ्काराणां वाक्यनिष्ठत्वम् प्राचीनालङ्कारग्रन्थेष्वपि प्रायशो दृश्यते । तथाहि काव्यप्रकाशकृतो हि निहतार्थत्वे उदाहरणम् ।

''सायकसहायवाहोर्मकरध्वजनियमितक्षमाधिपतेः ।
अब्जरुचिभास्वरस्ते भाततिरामवनिपश्लोकः'' ॥ इति ।

---

×—**अशीतिप्रकारे**ति, रूढौ अष्ट प्रयोजने च अष्ट लक्षणा च । प्रयोजनमूला अष्टौ लक्षणाः प्रयोजनस्य गूढत्वेन अगूढत्वेन च (८×२) प्रत्येकं द्विधा भूत्वा षोडशप्रकारा भवन्ति । ताः षोडशप्रकारा धर्मगतत्वेन धर्मिगतत्वेन च (१६+२) प्रत्येकं

2 ''पदगतत्वे'' इति (ग. फ.)

3 ''वाक्यगतत्वे'' इति. (ग. फ.)

अथ व्यञ्जना—

**विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः ।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥ १६ ॥**

" शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः " इति नयेनाभिधालक्षणातात्पर्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वोपक्षीणासु ययान्योऽर्थो बोध्यते सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च [1]वृत्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषया[2] व्यञ्जना नाम । * ( ठ, उ )

---

नच किमुच्यते इत्यन्तस्य भिन्नवाक्यत्वात् कथं तयोरेकवाक्यत्वमिति' वाच्यम्, "किमुच्यते अतः सुजनता प्रथिता" इत्येवमेकवाक्यत्वात् ।

**(वि, ठ)** व्यङ्ग्यो व्यञ्जनयेत्युक्तत्वात् व्यञ्जनालक्षणं वक्तुमाह—**अथे**ति । **नयेने**ति । एतन्न्यायात् शब्दस्येव तन्निष्ठवृत्तेरपि विरतिः सिद्ध्यति, इत्यर्थः । **उपक्षीणास्वि**ति । अर्थान्तरबोधने क्षीणसामर्थ्यासु ।

---

**( लो, उ )**—उद्देशक्रमप्राप्तां व्यञ्जनां निरूपयति—**अथे**ति । परोभिधेयादिव्यतिरिक्तो व्यङ्ग्यत्वेन निरूपयिष्यमाणो वस्त्वलङ्काररसलक्षणः । **तिसृष्वि**ति—अभिहितान्वयवादिमतमाश्रित्य अन्विताभिधानमते तु द्वयोः । तत्रापि लक्षणाया अभावे तु प्रथममते तु द्वयोः द्वितीयमते त्वेकस्याः । ध्वननादयो व्यञ्जनस्य पर्यायान्तराणि ।

---

द्विविधा भूत्वा द्वात्रिंशत्प्रकारा भवन्ति । ताश्च प्रयोजनमूला द्वात्रिंशत्प्रकारा रूढमूलाभिरष्टभिर्मिलित्वा ( ३२ ६ ) चत्वारिंशत् प्रकारा भवन्ति । ताश्च सर्वाः पदवृत्तित्वेन वाक्यवृत्तित्वेन पुनः प्रत्येकं द्विधा भूत्वा ( ४० × २ ) अशीतिप्रकारा भवन्ति ।

* विरम्य स्वविषयं बोधयित्वा क्षीणा भूत्वा । प्रथमशब्दो द्वितीयं जनयित्वा निवर्तते, न तु तस्य तृतीयशब्दबोधने शक्तिः । एवं द्वितीयादिरपि । तथैव ज्ञानमिच्छां जनयित्वा निवर्तते । तथैव प्रथमं कर्म द्वितीयं जनयित्वा निवर्तते । अत एका वृत्तिरेकमेवार्थं बोधयित्वाऽपरमपि बोधयितुं न क्षमा । केचित्तु—शब्दबुद्धिः शब्दज्ञानमेव । कर्म व्यापारः—तासामभिधालक्षणातात्पर्याख्यवृत्तीनां विरम्य स्वं स्वमर्थं बोधयित्वा व्यापाराभावः पुनर्बोधनसामर्थ्याभावः । "सकृदुच्चरितः शब्दः सकृदेवार्थं बोधयति" इतिन्यायात् । **विरतास्वि**ति—अभिधाद्यासु विरतासु यया अपरः अर्थः बोध्यते सा शब्दस्य अर्थादिकस्य वृत्तिर्व्यञ्जना नाम । **व्यञ्जने**ति–

1 "शक्तिः" इति (च.छ.पुस्तकयोः)
2 "विषयः" इति (ठ पुस्तके)

तत्र—

अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा ॥ २० ॥

अभिधामूलामाह—

अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।

एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया ॥ २१ ॥

[1]आद्यशब्दात् विप्रयोगादयः । ( ड, ऊ )

उक्तं हि—"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता ।

अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।

शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ " इति (ढ, ऋ) *

---

(वि, ड) अनेकार्थस्येति—संयोगादीन् वक्ष्यति, तैरनेकार्थस्य शब्दस्य एकार्थे नियन्त्रिते अर्थान्तरबोधं प्रतिरुध्य बोधिते सति अन्यस्य प्रतिरुद्धार्थस्य धियो हेतुर्या वृत्तिः सा व्यञ्जनाऽभिधाश्रया इत्यर्थः । आद्यशब्दादिति संयोगाद्यैरित्याद्य-शब्दादित्यर्थः ।

( वि, ढ ) संयोगः, समभिव्याहृतापरपदार्थस्य । विप्रयोगः—त्यागः, सोऽपि तस्यैव । साहचर्य्य—समभिव्याहृतपदार्थेन सह सर्वदा स्थितिः विरोधिता वैरिता सापि तादृशापरपदार्थेन सह । अर्थः प्रयोजनं तच्च समभिव्याहृतम् । प्रकरणमुपक्रमः । लिङ्गं चिह्नं तदपि समभिव्याहृतम् । सामर्थ्यं समभिव्याहृत-पदार्थजनने । औचिती तात्पर्य्यम् । देशकालावपि समभिव्याहृतौ । व्यक्तिः शब्दस्य पुंस्त्वादिलिङ्गानि । स्वरः उदात्तादिः । अनवच्छेदेऽनेकत्वे । विशेषस्यैकस्यैवार्थस्य स्मरणहेतवः संयोगादय इत्यर्थः । नैयायिकमते सर्वेषामेव पदार्थानां स्मरणमन्वय-

---

(लो, ऊ) अनेकार्थस्य विष्णुसिंहाद्यनेकाभिधेयशब्दस्य हर्य्यादेः एकार्थे नियन्त्रिते इत्यन्वयः । अर्थे वाच्यरूपे नियन्त्रिते अर्थान्तरनिरुद्धप्रसरतया व्यवस्थापिते । अन्यस्य संयोगादिसाचिव्याभावात् अभिधाया अविषयस्य बुद्धिहेतुः व्यञ्जना ।

(लो, ऋ) उक्तं हि भर्तृहरिणा इति शेषः । संयोग इति । विरोधो वध्यघात-कादिः । अर्थः फलम् , प्रकरणं प्रस्तावः । लिङ्गम् , विषयव्यावृत्तो धर्मः । सन्निधिः

---

व्यञ्जनम्—व्यङ्ग्यार्थबोधनम् ; ध्वननम्—ध्वन्यर्थप्रतिपादनम् ; गमनम्—अवग-तिजननम्—प्रत्यायनम्—प्रतीतिप्रतिपादनमित्यादयो ये व्यपदेशाः संज्ञाः विषयः यस्याः सा । अर्थादित्यादिभिः संज्ञाभिः कथ्यते ।

* संयोगः सम्बन्धः स च गुणरूपः । विप्रयोगः—संयोगध्वंसः तस्य प्रतियो-गितासमानाधिकरणत्वानियमाद् विशेषोपस्थापकता । औचिती—अनुरूपतया सम्बन्धः ।

1 "आदि" इति. ( ग. पु. )

"सशङ्खचक्रो हरिः" इति शङ्खचक्रयोगेन हरिशब्दो विष्णुमेवाभिधत्ते। "अशङ्खचक्रो हरिः" इति तद्वियोगेन तमेव। "भीमार्जुनौ" इति अर्जुनः पार्थः। "कर्णार्जुनौ" इति कर्णः सूतपुत्रः। "स्थाणुं वन्दे" इति स्थाणुः शिवः।

"सर्वं जानाति देवः" इति देवो भवान्। "कुपितो मकरध्वजः" इति पुरारिः शिवः। "मधुना मत्तः पिकः इति मधुर्वसन्तः। "पातु[1] वो दयिता-मुखम्" इति मुखं साम्मुख्यम्।

"विभाति गगने चन्द्रः" इति चन्द्रः शशी। "निशि चित्रभानुः" इति चित्रभानुर्वह्निः। "भाति रथाङ्गम्" इति नपुंसकव्यक्त्या रथाङ्गं चक्रम्। स्वरस्तु

बोधस्त्वेकमेव पदार्थमादाय। एतन्मते तु यस्य पदार्थस्यान्वयबोधस्तस्यैव विशेषस्य स्मरणमिति।

**(वि, ण) तद्वियोगेने**ति—शङ्खचक्रत्यागेनेत्यर्थः। नञोऽत्र त्यागार्थकत्वात्। भीमार्जुनाविति साहचर्ये। अत्र अर्जुनपदं पार्थकार्त्तवीर्य्ययोः। भीमपदं महेशपार्थयोरनेकार्थम्। कर्णार्जुनाविति विरोधितायाम्। अत्र द्वयमपि पदमनेकार्थम्। प्रयोजने स्थाणुमिति। अत्र राज्ञ उपक्रमो वाक्यान्तराल्लभ्यः। चिह्ने—कुपित इति कोपस्य कामचिह्नत्वात्। समुद्रोऽपि मकरध्वजः। नच कामदेवस्यापि कोप इति वाच्यम्, विरहिण्यां कुपित इत्यर्थात्। अन्यशब्दसन्निधौ स देव इति—अत्र देवशब्दोऽनेकार्थः। तुल्यविभक्तिकपुरारातिशब्दस्य सान्निध्यम्। सामर्थ्ये मधुनेति—अत्र मधुर्दैत्यविशेषेऽपि, कोकिलमादने वसन्तस्यैव सामर्थ्यम्। औचित्यां 'पातु व'

---

सामानाधिकरण्यम्। सामर्थ्यं तत् कारणानियमः। देशस्तद् विशेषः। कालस्तद्विशेषः। व्यक्तिः पुंस्त्वादिः स्वरा उदात्तादयः। अनवच्छेदे एकवाक्यनियमे। विशेष एकवाक्यरूपः।

**( लो, ॠ )** एषां नियन्त्रणस्वरूपं क्रमादुदाहरणैर्दर्शयति—**सशङ्खे**त्यादि। विष्णुमेवेत्येवकारेण शक्रसिंहाश्वादेर्व्यवच्छेदः। तयोः शङ्खचक्रयोर्वियोगेऽभावेऽपि तमेव हरिमेवाभिधत्ते इत्यनुषज्यते, प्रतिषेधस्य प्रसक्तिपूर्वकत्वात्। पार्थो नतु वृक्षविशेषः। सूतपुत्रो नतु श्रवणम्। अत्र वध्यघातको विरोधः, सहानवस्थाने तु छायातपाविति। स्थाणुशब्दस्य शङ्कुवाचकत्वे लब्धच्छेदाख्यं न घटते। भवान् प्रकृतो राजा। कामो न तु मकराकारो ध्वजः, तस्य कोपरूपधर्माभावात्। शिवो न मुररिपुः। वसन्तो न तु मद्यम्। सान्निध्यं न तु वदनं, तस्य कामकातरतायोग्यत्वाभावात्। शशी न तु कर्पूरम्। वह्निर्न तु रविः। चक्रं न तु चक्रवाकः। वेद एव विशेष-

---

एते शब्दार्थस्य शब्दवाच्यस्य अनवच्छेदे अनिश्चये सति (सन्देहे सति) विशेषस्य विवक्षितार्थस्य या स्मृतिर्ज्ञानं तस्य हेतवः—सन्देहनिराकरणेन अर्थस्य निर्णयं कुर्वन्ति।

1 'यातु' इति (ग. पु०)

वेद एव विशेषप्रतीतिकृत् न काव्ये इति तस्य विशेषो[1] नोदाहृतः[2] ॥ (ण, ऋ)

इदं च केऽप्यसहमाना आहुः—

"स्वरोऽपि काक्वादिरूपः काव्ये विशेषप्रतीतिकृदेव । उदात्तादिरूपोऽपि मुनेः पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृदेव; इत्येतद्विषये उदाहरणमुचितमेव" इति । तन्न । तथाहि स्वराः काक्वादयः उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति न खलु प्रकृतोक्तमनेकार्थशब्दस्यैकार्थनियन्त्रणरूपं विशेषम् । (लृ) किञ्च यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयोः अनुरूपस्वरवशेनैकत्र नियमनं वाच्यं, तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः (तं)

---

इति—अत्र मुखपदं प्रभृत्यादावनेकार्थम् । मानिन्याः साम्मुख्ये वक्तुस्तात्पर्य्यम् । देशे भातीति—अत्र चन्द्रपदं कर्पूरेऽपि । देशो गमनम् । काले निशीति—चित्रभानुः सूर्य्योऽपि । व्यक्तौ—रथाङ्गमिति, चक्रवाकस्तु रथाङ्गः ।

**(वि, त) मुनेः पाठोक्तदिशे**ति—मुनिना वेदस्य स्वरविशेषेणैव पठनात् । **द्वयोरर्थयोरनुरूपे**ति—द्वयोरर्थयोर्मध्ये एकस्यानुरूपस्वरवशेनेत्यर्थः। एकोच्चारणे द्वयोरनुरूपस्वरासम्भवात् । तथात्वे एकत्र नियमनासम्भवाच्च । तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्ग इत्यर्थः । एकार्थनियमनेऽन्यार्थस्य व्यङ्ग्यत्वेन तस्योपमानत्वात् उप-

---

प्रतीतिकृत् इति अनेकार्थवाचकशब्दस्य एकार्थवाचकत्वे नियन्त्रणरूपः, तत्प्रत्ययं च स्वरो वेदे एव करोति । यथा इन्द्रशत्रुरित्यादौ षष्ठीतत्पुरुषे समासान्तोदात्तसूचिते इन्द्रस्य शमयिता वा दैत्योऽरिरेवाभिधीयते । बहुव्रीहौ तु पूर्वपदान्तोदात्तनिर्णीते इन्द्र एव शमयिता शातयिता चेति । इदं हि काव्यप्रकाशकारस्य उदाहरणम् ।

**(लो, लृ) केऽपी**ति—श्रीचण्डीदासराघवानन्दप्रभृतयः । असहमाना इति । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव इत्यत्र विशेषपदस्याऽर्थानवबोधने इति शेषः । **आहुः—स्वरोऽपि** इत्यादि **उचितमेवे**त्यन्तम् । तत्र काव्यादीनां विशेषप्रतीतिकृदेव नियन्त्रणरूपः । उदाहरणं तैरेव दर्शितम् । यथा 'मथ्नामि कौरवशतं समरे न कोपादित्यादि भीमवचनम् ।' अत्र न मथ्नामीत्यनेन काकुवचनेन मथ्नाम्येव इति विशेषप्रतीतिकृदिति । मुनेः पाठगुणोक्तमार्गश्च तैरेव दर्शितो यथा—'यथाह मुनिभरतः—'हास्यशृङ्गारयोः स्वरितोदात्तं, वीररौद्राद्भुतेषु उदात्तकम्पितं, करुणबीभत्सभयानकेषु अनुदात्तकम्पितम् उत्पादयेदिति । तन्न, तत् तेषां वचनमयुक्तम्, कथ-

---

1 'विषये' इति (घ. पु०)

2 'नोदाहृतम्' इति (ग. पु०)

नच तथा । अत एवाहुः श्लेषनिरूपणप्रस्तावे-"काव्यमार्गे स्वरो न गण्यते" इति च [1]नये, इत्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण । आदिशब्दात् " एतावन्मात्रस्तनी " इत्यादौ हस्तादिचेष्टादिभिः स्तनादीनां कमलकोरकाद्याकारत्वम् । ( ए )

एवमेकस्मिन्नर्थे अभिधया नियन्त्रिते या शब्दस्यान्यार्थबुद्धिहेतुः शक्तिः, सा अभिधामूला व्यञ्जना । ( थ )

---

माध्वनित्वस्यैव प्रसक्तेर्नतु श्लेषस्य । यथा वक्ष्यमाणे दुर्गालङ्घितविग्रहे इत्यादौ प्रकरणादुमामहादेवीवल्लभभानुदेवराजनियमने पार्वतीवल्लभस्य व्यङ्ग्यत्वेन राज्ञः तदुपमाध्वनिरेव ।

**(वि, थ) न च तथे**ति—तथात्वे पृथुकार्त्तस्वरपात्रमित्यादिश्लेषालङ्कारोच्छेदप्रसङ्गादिति भावः । अत एवाहुरिति काव्यप्रकाशकारादय आहुरित्यर्थः । उपजीव्यानामिति काव्यमार्गेऽपि स्वरगणयितॄणां प्राचीनानामुपरीत्यर्थः । **आदिशब्दा-दि**ति—स्वरादय इत्यादिशब्दादित्यर्थः । **हस्ते**ति—हस्तचेष्टादिभिः स्तनादीनां कमलकोरकाद्याकारत्वं स्मार्य्यंत इत्यर्थः ।

'एद्दहमेत्तत्थिणिआ एद्दहमेत्तेहि अच्छिवत्तेहिँ ।
एद्दमेत्तावत्था एद्दहमेत्तेहिं दिअ एहिँ ॥' इत्यादि

प्राकृतश्लोकस्य हि—

'एतावन्मात्रस्तनिका एतावन्मात्रैरक्षिपत्त्रैः ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः' ॥ इति संस्कृतम् ।

**स्तनादीनामि**ति—कमलकोरकादित्यादिपदद्वयात् चक्षुरादीनां पद्मपलाशाद्या-

---

मित्याह—**तथाही**ति । व्यङ्ग्यरूपमेव भवद्दर्शितं, मध्याम्येवेतिरूपं शृङ्गाररूपं च । प्रकृतोक्तं 'संयोगो विप्रयोगश्च' इत्यादिना भर्तृहरिणा उक्तं दर्शितम् । अनेकार्थे इत्यादौ अर्थशब्दो वाच्यपरः, विशेष इत्यनन्तरं संयोगादिप्रयोगादिति शेषः ।

**(लो ए)** एवं प्राचीनोक्तं दूषयित्वा स्वयमेव पूर्वपक्षमुत्पाद्य निराचष्टे-**किञ्चे**ति । यत्र क्वचित्—

" येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयोगंगां च योऽधारयत् ।
यस्याहुः शशिमत् शिरो हर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥"

इत्यादौ द्वयोरप्यर्थयोर्हरिहरस्तुतिपरयोरनुरूपः स्वर उदात्तादिरेकत्र हरौ हरे वा । नच तथा श्लेषाङ्गीकारः । अत्राचार्य्यसम्मतिं दर्शयति-**अत एवे**त्यादि ।

---

1 " नयः " इति. (ग. पु.)

**यथा मम तातपादानां महापात्रचतुर्दशभाषविलासिनीभुजङ्गममहाकवीश्वर-श्रीचन्द्रशेखरसान्धिविग्रहिकाणाम् ।—**

**"दुर्गालङ्घितविग्रहो * मनसिजं सम्मीलयंस्तेजसा**
**प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः ।**
**नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन्**
**गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः ।"**

---

कारपरिग्रहः । अत्र एतत्पदं नानाकारबोधकत्वेनानेकार्थम् । चेष्टाविशेषस्त्वाकार-विशेषस्मारकः । शक्तिः वृत्तिः ।

**(वि, द) दुर्गालङ्घिते**ति । अत्र उमा नाम महादेवी तस्या वल्लभो भानुदेव-नृपतिः । प्राकरणिको राजति । कीदृशः शत्रुदुर्गेणाऽवारितयुद्धः । तेजसा देहकान्त्या मनसिजं सम्मीलयन् सौन्दर्य्यगर्वात् सङ्कोचयन् । प्रोद्यन्ती राजकला नृपतिचातुर्य्यं यस्य तादृशः । गरिमा, वपुःपुष्टिः, गृहीततत्त्वः । भोगिभिर्नाम भोगवद्भिः अमात्यैर्विष्वक् सर्वतो वृतः । क्षत्रेशेषु क्षत्रियेश्वरेषु राजसु अवज्ञया न कृतेक्षणो अकृत-दृक्पातः । गुरौ महत्यां गिरि वाचि, गाढां रुचिं प्रीतिं धारयन् गामाक्रम्य पृथिवी-मधिकृत्य, विभूत्या ऐश्वर्य्येण भूषिततनुः । अत्र दुर्गादिपदान्यनेकार्थानि प्रकरणवशा-द्दर्शितार्थे नियन्त्रिते वाचकानि (शब्दाः) अर्थान्तरं तु व्यञ्जनया बोधयन्ति । तथा हि—उमायाः पार्वत्या वल्लभो महेशो राजति । कीदृशः—दुर्गया, पार्वत्या, लङ्घित-

---

नये नीत्यां लोकप्रसिद्धायाम् । तेषामुपजीव्यत्वं—तद्ग्रन्थनिष्ठया स्वव्युत्पत्त्या विशेष-सम्पादनात् । आदिशब्दः, कालो व्यक्तिः स्वरादय इत्यत्र । चेष्टादीत्यादिशब्देन—'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्' इत्यादौ आत्मनिर्देशादयः ।

**(लो, पे) दुर्गालङ्घिते**ति—दुर्गाणि वनगिरिजलमयस्थानानि दुर्गा पार्वती च, अलङ्घितो लङ्घितश्च, विग्रहो युद्धं देहश्च, सम्मीलनं तिरस्कारो दहनं च, तेजः कान्तिः नयनाग्निश्च । राजा पार्थिवश्चन्द्रश्च । कला कलना अंशश्च, गरिमा महिमा ऐश्वर्य्य-विशेषश्च । भोगिनः स्रक्चन्दनादिभोगवन्तः सर्पाश्च । क्षत्रेश्वरेषु अकृतदृष्टिः क्षत्रे-शेन चन्द्रेण कृतनयनश्च । गुरौ महत्याम् । गिरि वाचि । गिरीणां गुरौ, श्रेष्ठे च गां पृथिवीं वृषभं च । विभूतिः सम्पत् भस्म च । उमावल्लभो भानुदेव ईश्वरश्च । प्रकर-णेन वर्णनीयत्वात् । इह च **उमावल्लभशब्देन** योऽयमप्रकृतो महेश्वरार्थः प्रतीयते तस्याऽसम्बद्धत्वमासीदिति महेश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते । तेन उमावल्लभ-इवेत्युपमाध्वनिः व्यञ्जनयैव बोध्यते । इत्यत्रैवकारस्यायमाशयः—इह खलूमावल्लभशब्दे येयं द्वितीयार्थप्रतीतिः तत्राभिधाया प्रकृतार्थमात्रबोधने विरमात् लक्षणायाश्च मुख्यार्थ-

---

* दुर्गैः अलङ्घितः (शत्रुभिरनिवारितः) विग्रहः युद्धं यस्य । शिवपक्षे—दुर्गया पार्वत्या लङ्घितः (आक्रान्तः) विग्रहः (देहो यस्य सः) ।

अत्र प्रकरणेनाभिधेये[1] उमावल्लभशब्दस्य उमा नाम महादेवी—तद्[2] वल्लभ-भानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोध्यते। एव-मन्यत्। ( द, ऐ )।

लक्षणामूलामाह—

**लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनं।**

---

विग्रहः आश्लेषेण आक्रान्तशरीरः। तेजसा नेत्रज्योतिषा, मनसिजं सम्मीलयन् निघ्नन्। राजकला चन्द्रकला, शिरसि प्रद्योतत्कः गृहीतगरिमा गृहीतजगद्गुरुभारः। भोगिभिः सर्पैः सर्वतो वृतः। क्षत्रेशेन चन्द्रेण घटितलोचनः सूर्य्यचन्द्राग्निमयलोचन-त्वात्। गिरीणां गुरौ हिमालये गाढां रुचिं धारयन् श्वशुरत्वात् स्वीयतपोनिलयत्वाच्च। गां वृषम् आक्रम्यारुह्य राजतीत्यन्वयः। विभूतिभिर्भस्माभिर्भूषिततनुश्च। इत्थमत्रा-ऽप्राकरणिके महेशे व्यञ्जिते प्रकृते सङ्गमनाय महेश इव राजेत्युपमाव्यञ्जनादुप-माध्वनिरयम्।

**(वि, ध) यस्य कृते** इति। यत्प्रतीतेर्निमित्तमित्यर्थः। वैशिष्ट्यात् वैलक्षण्यात्।

---

बोधहेतुकत्वात्। तात्पर्य्यस्य शक्त्यभिहितलक्षितसंसर्गमात्रबोधननैयत्यात् व्यञ्जनाख्या तुरीया वृत्तिरुपास्यैवेति। नन्वत्राप्यर्थभेदेन शब्दभेद इति दर्शनात् शब्दभेदद्वयमस्ति। तच्च साजात्यादैक्यभ्रमहेतुः। अतश्च प्रथममुमावल्लभादिशब्देन राजार्थबोधनाद् विरतायां प्रथमाभिधायां द्वितीयः शब्दः तन्निष्ठाभिधाशक्त्या द्वितियार्थं बोधयतु किं वृत्त्यन्तरकल्पनया इति चेन्न। अत्र हि शब्दद्वयकल्पने कथं प्रकृतार्थस्य प्रथमं प्रतीतिरनुभूयते, द्वयोरभिधेयत्वेन पूर्वपश्चाद्भावनैयत्यासम्भवात्। एवं "भ्रमि-मरतिम्" इत्यादावपि विषशब्दस्य गरलार्थत्वे भुजङ्गादिपदसाचिव्यात् न पुनरभिधाया उज्जीवनं, किन्तु व्यञ्जनैव व्यापारः। किन्त्वत्र द्वितीयार्थबोधे हेतुर्भुजङ्गादिरूपः शब्दः। दुर्गालङ्घितेत्यादावार्थः। "येन ध्वस्तम्" इत्यादौ तु नियामकाभावात् अनेकार्थविषयः सन्देहः "व्यथां द्वयेषामपि मेदिनीभृताम्" इत्यादौ चोभयाभिधानमपीति चण्डी-दासपण्डिताः। एतन्निराकरिष्यामहे श्लेषालङ्कारव्याख्यानावसरे। दुर्गालङ्घितेत्यादौ च द्वितीयार्थस्यानुभवसिद्धस्याऽभावं वदतो महिमाचार्य्यस्य गजनिमीलिकैव दुर्व्याख्यातृ-दुरुपदेशपरम्परयैव द्वितीयार्थप्रत्याख्याने व्यासवाल्मीकिप्रभृतिमहाकवीनां तादृश-काव्यनिबन्धस्य निष्फलताप्रसङ्गः। अर्थद्वयस्यापि प्रतीयमानत्वविशेषाद् व्याख्याविशेष-निगमनायां प्रामाण्याभावश्च। किञ्च द्वितीयार्थबोधने धर्मिकल्पनातो वरं धर्मकल्पनेति भिन्नशब्दकल्पनात् भिन्ना एव व्यञ्जनाख्या वृत्तिरङ्गीकर्त्तुमुचिता; तस्यास्तु यत्र तत्र प्रसरेऽतिप्रसङ्गभीत्या सम्बन्धत्वेन सैवाभिधाऽश्रीयत इति सर्वमवदातम्।

---

1 'अभिधया' इति (ग. घ. पु०)

2 'तद्' इति ग. पु नास्ति।

**यया प्रत्याय्यते सा स्याद् व्यञ्जना लक्षणाश्रया ॥ २२ ॥**

( ओ ) *

"गङ्गायां घोषः" इत्यादौ जलमयाद्यर्थबोधनादभिधायां विरतायां तटाद्यर्थबोधनाच्च लक्षणायां विरतायां यया शीतत्वपावनत्वाद्यतिशयादिर्बोध्यते, सा लक्षणामूला व्यञ्जना ।

एवं शाब्दीं व्यञ्जनामुक्त्वा आर्थीं व्यञ्जनामाह—

**वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः ।**
**प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च ।**
**वैशिष्ट्यादन्यमर्थं या बोधयेत्साऽर्थसम्भवा ॥ २३ ॥**

व्यञ्जनेति सम्बध्यते ( ध, औ )

तत्र वक्तृ-वाक्य-प्रस्ताव-देश-कालवैशिष्ट्ये यथा मम—

"कालो मधुः कुपित एष च पुष्पधन्वा
धीरा वहन्ति रतिखेदहराः समीराः ।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु-
र्दूरे पतिः कथय किं करणीयमद्य ? +

---

**(वि, न) कालो मधुरि**ति—सखीं प्रति प्रोषितभर्तृकाया उक्तिरियम् । स्पष्टोऽर्थः ।

---

**(लो, ओ )** लक्षणामूलामुद्देशक्रमप्राप्तामिति शेषः । उपास्यते आद्रियते, यस्य कृते यन्निमित्तम् यया शब्दशक्त्या ।

**( लो, औ )** प्रकरणसङ्गतिमाह **एवमि**ति—बोध्यते यः स बोद्धव्यः । शब्दप्रयोगस्य परार्थत्वात्, यत्समवेता प्रतीतिरुपपद्यते स इत्यर्थः । उच्यते शब्देन प्रतिपाद्यते यः स वाच्यः । तेन वाच्य-लक्ष्य-व्यङ्ग्यात्मनस्त्रिविधस्यार्थस्य परिग्रहः । प्रस्तावः प्रकरणं, काकुः ध्वनेर्विकारः, वैशिष्ट्यात् वैलक्षण्यादिति वक्त्रादिषु प्रत्येकमन्वयः । अन्यं प्राचीनाभिधेयादिवैलक्षण्यम् ।

**(लो, अ) काल** इति । एष इत्यनेन तत्कालानुभूयमानोन्मादकत्वं कामस्य सूचितम् । **पतिरि**ति—पतिर्भर्त्ता न तु प्रियः । अत्र वक्त्र्या मदनविह्वलतादिना वैशिष्ट्यम्, वाक्यस्य तथाभूतानुभूयमानविच्छित्तियुक्तत्वेन ।

---

* यस्य ( प्रयोजनस्य ) कृते लक्षणा उपास्यते तत् प्रयोजनं तु यया प्रत्याय्यते ( बोध्यते ) सा लक्षणाश्रया व्यञ्जना । यस्य पावनत्वादेः फलस्य प्रतीत्यर्थलक्षणया शब्दप्रयोगः—तत्फलं यया वृत्त्या बोध्यते सा लक्षणमूला व्यञ्जना वृत्तिः ।

+ मधुः वसन्तः, पुष्पधन्वा कन्दर्पः । **वञ्जुले**ति—वञ्जुलः अशोकः तेषां कुञ्जाः तैः मञ्जुः मनोहरा ।

अत्रैतं[1] देशं प्रति शीघ्रं "प्रच्छन्नकामुकस्त्वया प्रेष्यताम्" इति सखीं प्रति कयाचित् द्योत्यते[2] ॥ (न, अ)

बोद्धव्यवैशिष्ट्ये यथा—

"निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तथेयं[3] तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमे !
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥ (प, आ)

अत्र तदन्तिकमेव गताऽसीति[4] विपरीतलक्षणया लक्ष्यम् । तस्य च रन्तुमिति

---

अत्रेति—एतं देशं केलीवनीरूपम् । ईदृशव्यङ्ग्यबोधे केलीवनीरूपस्य तत्प्रदर्शनेन करणीयजिज्ञासार्थकवाक्यस्य तत् वक्त्र्या उद्दीपकप्रदर्शनलब्धशृङ्गारप्रकरणस्य मधुरूपकालस्य च वैलक्षण्यं हेतुः ।

(वि, प) निःशेषेति—उपनायकमानेतुं प्रेषितां युवतिं तेनैव उपभुक्तामागत्यासौ मत्प्रार्थनयाऽपि नायात इति प्रतारयन्तीं दूतीं प्रति नायिकायाः सोल्लुण्ठनोक्तिरियम् । हे मत्प्रार्थनयाऽपि नायात इति मिथ्यावादिनि ! दूति ! बान्धवजनस्य मम अज्ञातकामपीडागमे इतः स्नातुं वापीं गताऽसि न पुनस्तस्याधमस्यान्तिकं गताऽसि । वापीं स्नातुमिति नान्वयः, स्नाधातोरकर्मकत्वात् । आपाततः स्नानकार्याणि दर्शयति—निःशेषेति । यतस्ते स्तनतटं स्तनपार्श्वभागो निःशेषच्युतचन्दनम् । अधरश्च निर्मृष्टरागः । नेत्रे च दूरमतिशयं यथा स्यात्तथाऽनञ्जने जाते इति शेषः । तत् क्रियाविशेषणं च दूरमिति । तथा इयं तन्वी कृशा तव तनुः पुलकिता; स्नानशैत्यात् जातपुलका इत्यर्थः । तथेति विशेषणसमुच्चये ।

(वि, फ) गताऽसि इति लक्ष्यमिति । चन्दनच्यवनादीनां रतिकार्यत्वेनैव

---

प्रस्तावस्य पतिदूरस्थित्यादिना; देशस्य च क्रीडावनरूपस्य वकुलकुञ्जादिना; कालस्य वसन्तवत्त्वेन; एवमेषां वैशिष्ट्येन वक्रोक्त्या व्यङ्ग्यार्थप्रकाशनं स्फुटमेव ।

(लो, आ) निःशेषेति—तटं समीपं, स च समप्रायो देशः । तत्र चन्दनं निःशेषच्युतं; चूचुकादिषु च शेषम्; अधरो निर्मृष्टरागः; न तूत्तरौष्ठः; दूरमनञ्जने निकटे तु साञ्जने; अञ्जनस्य क्वचित् क्वचिदवशेषः सूचितः । इयं तनुः चिरकालेऽपि स्नाने इदानीं पुलकिता; तन्वी क्षामा च । अधमस्य प्रागपि लक्षितनिकृष्टपरिग्रहस्य ।

---

1 "नं" इति. (च. पु.)

2 "व्यज्यते" इति. (च छ. पु.)

3 तवेयमिति पाठान्तरम् । (ग. घ. ङ. च. पु.)

4 "रन्तुं" इति. च. पु. अधिकः पाठः ।

व्यङ्ग्यं[2] प्रतिपाद्यदूतिवैशिष्ट्यात् बोध्यते ॥ ( फ, इ )

अन्यसन्निधिवैशिष्ट्ये यथा—

'उअ णिच्चल ! णिप्पन्दा भिसिणीपत्तम्मि रेहइ बलाआ ।
णिम्मलमरगअभाअण-परिट्ठिआ संखसुत्तिव्व ।''

---

प्रतीत्या तदन्तिकेऽगमनबोधात्, तद्विपरीतं गमनं लक्षणयार्थः । तेषां रतिकार्य्यत्वेनैव प्रतीतिर्हि—चन्दनाधररागयोश्च्युतिमार्जनाभ्यां, स्नाने त्वनयोः क्षालनमेवोक्तं स्यात्। तथा दूरं चुम्बनस्पृष्टं नेत्रप्रान्तभागं प्राप्य अनञ्जने स्नाने तु समस्तनेत्रस्यैवानञ्जनत्वमुक्तं स्यात्। तथा चन्दनच्युतिमहिम्ना ग्रीष्मकालप्राप्तौ पुलकेन च तदानीं स्नानेन पुलकाभावात्। तथा तदन्तिकागमने तस्य दोषाभावात् अधमत्वोक्त्यनौचित्यम्, दूतिरन्तृत्वेनैवाधमत्वोपपत्तेश्च। अत्र गमनं लक्षणयेति यदुक्तं तत् काव्यप्रकाशकारस्याऽसम्मतम्। रन्तुं तदन्तिकगमनस्यैव तन्मते व्यङ्ग्यत्वात्। तथा हि न गताऽसीत्यस्य काव्यत्वेन तत्र लक्षणाया एवाभावात्। तदुक्तं 'वाक्ये न शक्तिर्नवा लक्षणेति' पदलक्षणा तु न सम्भवत्येव गमनस्य गमधातुवाच्यत्वादेव। नञर्थस्य तु वापीगमनान्वयेनैव तदुपपत्तेः। यदि च वाक्येऽपि लक्षणा स्वीक्रियते तथापि न लक्षणा। रन्तुं तदन्तिकस्यैव तन्मते प्रथमं व्यङ्ग्यत्वादेव। तथा हि चन्दनच्यवनादीनां प्रथमं स्नानकार्य्यत्वेनैव प्रतीत्या बाधानवतारात्। प्रतिसन्धानविशेषेण उत्तरकालमेव बाधावतारात्। अत्र च व्यञ्जनायाः प्रवृत्तेर्नतु लक्षणाया एव। प्रथमं बाधावतार एव लक्षणायाः प्रवृत्तेः। तदुक्तम्।

'क्वचित् बाध्यतया ख्यातिः क्वचित् ख्यातस्य बाधनम्।
पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु ॥' इति।

पूर्वत्र प्रथमं बाध्यतया ख्यातौ प्रतीतौ अभिधैव त्वित्यनेन तत्र लक्षणाया अभावात्। तदुत्तरं रन्तुं तदन्तिकगमनं व्यञ्जनैवेत्युक्तम्। अत्र चन्दनच्युतादिसत्त्वं बोद्धव्याया दूत्या वैलक्षण्यम्।

---

**(लो, इ)** एषां च पदार्थानां वापीस्नानविरुद्धानामनुसन्धानादेव वापीस्नानाभावमात्रस्य प्ररोहाभावेन तदन्तिकं न गतासीत्यत्र विपरीतलक्षणया गतासीति लक्ष्यते रन्तुमित्यतः पूर्वं तेन सहेति शेषः।

**(लो, ई) उअ णिच्चे**ति—

पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका।
निर्मलमरकतभाजनप्रतिष्ठिता शङ्खशुक्तिरिव ॥

**निश्चले**ति—निरुद्यमेति विटसम्बोधनम्। शङ्खशुक्तिः शंखपात्री।

---

1 ''व्यङ्ग्यप्रतिपाद्य'' इति. (ट. ढ. पु.)
''व्यङ्ग्यं प्रतिपाद्यं इति. (च. पु.)

अत्र बलाकाया निष्पन्दत्वेन विश्वस्तत्वं, तेनास्य देशस्य विजनत्वम्, अतः सङ्केतस्थानमेतत्, इति कयाऽपि सन्निहितं प्रच्छन्नकामुकं प्रत्युच्यते। अत्रैवं स्थाननिर्जनत्वरूप[1]व्यङ्ग्यार्थवैशिष्ट्यं प्रयोजनम्[2] ॥ ( ब, ई ) .

" भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते " इत्युक्तप्रकारायाः काकोर्भेदा आकरेभ्यो ज्ञातव्याः । (उ)

एतद् वैशिष्ट्ये यथा—

"गुरुपरतन्त्रतया बत ! दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति सखि ! सुरभिसमयेऽसौ ॥" *

अत्र नैष्यति ? अपि तर्हि एष्यत्येवेति काक्वा व्यज्यते ( भ )

चेष्टावैशिष्ट्ये यथा—

" सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।

---

**(वि, ब)** सङ्केतस्थानमुपनायके दर्शयन्त्या दूत्या उक्तिरियम्—**उअ** इति । जानीहीत्यर्थः, पश्येति यावत् । निश्चलेति सम्बोधनम् । अथवा निश्चलानिष्पन्देत्येकं वा पदम् । तदा निश्चलादपि निष्पन्देत्यर्थः । शङ्खशुक्तिः शच्च्यकपालम् । उच्यमानस्य नायकस्य सान्निध्यात्—सङ्केतस्थलप्रदर्शनं सामाजिकैर्व्यञ्जनयाऽवगम्यते इत्यर्थः । तथा च द्योत्यत इत्यत्र द्योतनं सामाजिकैर्व्यञ्जनया बुध्यत इति शेषः । नायकेन तु बलाकाप्रदर्शनरूपात् वक्त्र्या वैलक्षण्यात् सङ्केतस्थलं व्यञ्जनया बुध्यते ।

**( वि, भ ) आकरेभ्य** इति—भिन्नकण्ठध्वनिरित्यादिकाकुविवेचकग्रन्थ आकरः । स्वाभाविककण्ठध्वनितो भिन्नः कण्ठध्वनिरित्यर्थः ।

**गुरुपरतन्त्रतये**ति—दूरतरदेशगतं पतिं शोचयन्त्या नायिकाया उक्तिः प्रथमार्द्धम् । तामाश्वासयन्त्याः सख्या उक्तिः परार्द्धम् । नैष्यतीति—अपि त्वेष्यत्येवेत्यर्थः **काक्वा व्यज्यते** इति—काक्वाः परं नञर्थोपस्थापनान्न एष्यति एष्यत्येवेत्येवंरूपः । अत्र शिरश्चालनसहोत्पन्नत्वं काकोर्वैलक्षण्यम् ।

---

**(लो, उ) भिन्ने**ति—भेदाः तत्तत्सहकारिभेदाः स्वरूपभेदान्ताः ।

**(लो, ऊ) सङ्केते**ति—हसता विकशता नेत्रेण अर्पितमाकूतमभिप्रायो येन इति विटविशेषणम् । एषां चोक्तोदाहरणानां ध्वनिगुणीभूत-व्यङ्ग्यत्वे तन्निरूपणे अग्रे

---

* गुरुपरतन्त्रतया—गुरूणां पित्रादीनां पराधानतया । **अलिकुले**ति । अलिकुलैः भ्रमरसमूहैः ललिते रमणीये सुरभिसमये वसन्तकाले न एष्यति—नागमिष्यति अपि तु एष्यत्येव ।

1 'रूपं' इति (च. पु०)
2 'प्रयोजकं' इति (च. पु०)

"[1]हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्"। (ऊ)

अत्र सन्ध्या सङ्केतकालः इति पद्मनिमीलनादिचेष्टया कयाचित् द्योत्यते (म) एवं वक्त्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यम्।

**त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ॥ २४ ॥**

अर्थानां वाच्य-लक्ष्य-व्यङ्ग्यत्वेन त्रिरूपतया सर्वा अपि अनन्तरोक्ता व्यञ्जनास्त्रिविधाः। तत्र वाच्यार्थस्य व्यञ्जना यथा—"कालो मधुः" इत्यादि। लक्ष्यार्थस्य यथा—"निःशेषच्युतचन्दनम्"इत्यादि। व्यङ्ग्यार्थस्य यथा—"उअ णिच्चल" इत्यादि। प्रकृतिप्रत्ययादिव्यञ्जकत्वं तु प्रपञ्चयिष्यते।

**शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः।**
**एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥ २५ ॥ (ऋ)**

यतः शब्दो व्यञ्जकत्वे अर्थान्तरमपेक्षते, अर्थोऽपि शब्दम्; तदेकस्य व्यञ्जकत्वे अन्यस्य सहकारिताऽवश्यमङ्गीकार्य्या।

**अभिधादित्रयोपाधिवैशिष्ट्यात् त्रिविधो मतः।**
**शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ॥ २६ ॥ (य)**

---

(**वि, म**) **संकेतकाले**ति—विटं धूर्त्तम् उपनायकं संकेतकालमनसं तज्जिज्ञासार्थं तन्मनस्कं ज्ञात्वेत्यर्थः। हसता नेत्रेणार्पितं स्थापितम् आकूतं भावो यत्र तादृशं यथा स्यात्तथा लीलापद्मं निमीलितमित्यर्थः। द्योत्यत इति विटं प्रतीत्यर्थः। सामाजिकैस्तु तद्द्योतनमपि बुध्यते इति बोध्यम् ॥

(**वि, य**) वक्तृबोद्धव्यादिदशवैशिष्ट्यात् याऽर्थी व्यञ्जनोक्ता, सा व्यञ्जकार्थत्रैविध्यात् त्रिविधेत्याह—अर्थानां व्यञ्जकार्थानाम्। इयं दशविधा व्यञ्जना। निःशेषेत्यादौ लक्ष्यार्थस्य व्यञ्जकत्वं स्वमताभिप्रायेणैवोक्तम्। उक्तशब्दार्थव्यञ्जकार्थत्रैविध्यस्यैवोक्तत्वात् इदानीं व्यञ्जकशब्दस्यापि त्रैविध्यमाह—**अभिधादित्रये**ति।

---

स्फुटीभविष्यति, किन्तु व्यञ्जनाया आर्थत्वमात्रेणोदाहरणम्। चेष्टादीत्यादिशब्देन वर्णनीयनायकादिगतसात्त्विकादिपरिग्रहः।

(**लो, ऋ**) शब्दबोध्य इत्यर्थान्तरमपेक्षते, नत्वेकार्थमात्रप्रतिपादको व्यञ्जकः यथा—दुर्गालङ्घितेत्यादौ। अर्थोऽपि शब्दमपेक्षते यथा कालो मधुरित्यादौ। एकस्येत्यादेरयमर्थः। शब्दार्थयोरेकस्य व्यञ्जकत्वे तदितरः सहकारी सतु अवर्जनीयसन्निधिमात्रेणाऽवस्थितः। किन्तु यत्र यच्छक्तिरुत्कटा तत्र तन्मूलो व्यञ्जकत्वव्यपदेशः।

---

1 'ईषत्' इति (च. पु०)

अभिधोपाधिको वाचकः। लक्षणोपाधिको लक्षकः व्यञ्जनोपाधिको व्यञ्जकः। किञ्च—

**तात्पर्य्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।**
**तात्पर्य्यार्थं तदर्थं च वाक्यं तद्बोधकं परे २७॥ (र) ***

**अभिधाया एकैकपदार्थबोधनविरमात्[1] वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्य्यं नाम वृत्तिः, तदर्थश्च तात्पर्य्यार्थः, तद्बोधकं च वाक्यमिति अभिहितान्वयवादिनां मतम्॥ (ल)**

इति श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे वाक्यस्वरूपनिरूपणो नाम द्वितीयः परिच्छेदः॥



**(वि, र)** न केवलं वाच्यादिस्त्रिविध एव शब्दस्यार्थोऽपि तु वाच्यादित्रयभिन्नः पदार्थसंसर्गोऽपि शब्दार्थस्तद्बोधकं च वाक्यमित्याह—**किं चे**त्यादिना। पदार्थान्वयबोधने तदन्वयबोधनिमित्तम्। परे नैयायिकास्तात्पर्य्याख्यां वृत्तिमाहुः। तदर्थं तस्या वृत्तेर्विषयरूपमर्थं तात्पर्य्यार्थं संसर्गरूपं तद्बोधकं च वाक्यमित्याहुः।

**(वि, ल)** अभिधायाः संसर्गबोधनेऽसामर्थ्यं दर्शयन् व्याचष्टे—**अभिधाया** इति। तदर्थश्चेति संसर्गरूप इत्यर्थः। अभिहितान्वयवादिनां नैयायिकानां पदेन पदार्थेऽभिहिते स्मारिते तदन्वयबोधो वाक्यादेव॥ इति।

इति श्रीसाहित्यदर्पणटीकायां द्वितीयपरिच्छेदविवरणम्।



* पदार्थो हि पदार्थान्तरविशिष्टो वाक्यार्थः। न च तत्र पदार्थानां संकेतः तेषां सामान्यरूपे अर्थे संकेतितत्वात्, वैशिष्ट्यस्य च अन्यलभ्यत्वात् अतो भिन्नार्थवाचिभ्यो यत् संसर्गरूपवाक्यार्थप्रतिपत्तिः सा वृत्त्यन्तरसाध्या। तां च तात्पर्य्याख्यामाहुः। घटं करोतीत्यत्र घटवृत्तिकर्मत्वानुकूला कृतिरित्यर्थो बोध्यते। तत्र घटशब्दस्य घटोऽर्थः अम् प्रत्ययस्य च कर्मता; वृत्तिता तु न कस्याप्यर्थः। परं तात्पर्य्यवृत्त्या वृत्तिता अनयोः संसर्गविधया भासते इत्यर्थः।

1 "विरामात्" इति (ट. ठ. पु.)

# तृतीयः परिच्छेदः ।

**अथ कोयं रस इत्युच्यते ( क, अ )**

**विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा । ( ख )**
**रसतामेति रत्यादिः स्थायी[1] भावः सचेतसाम् ॥*( ग, आ) ॥ १ ॥**

---

**(वि, क)** वाक्यं रसात्मकमित्युक्तत्वाद्रसं निरूपयितुं पृच्छति—**अथे**ति । **(ख)** विभावो रत्यादेरालम्बनोद्दीपनकारणद्वयम् । अनुभावस्तस्य कार्यम् । सञ्चारी व्यभिचारी, निर्वेदादिरूपः कार्यविशेषः । तस्य पृथगुपादानं च गोवृषन्यायात् प्राशस्त्यार्थम्, प्राशस्त्यं च रत्यादेः शीघ्रप्रतिपादकत्वात् । यद्यपि विभावादित्रयस्य मिलितस्यैव रसहेतुता वक्ष्यते, तथापि यत्र श्लोके मिलिता न सन्ति तत्रैकेनाऽन्यव्यञ्जने व्यभिचारिणामन्यापेक्षया शीघ्रव्यञ्जकत्वमित्येतद्द्वारा रसस्यापि शीघ्रप्रतिपादकत्वं बोध्यम् ।

**(ग)** रत्यादिः स्थायी भावो रसतामेतीत्यन्वयः । ननु रामादिवृत्ती रत्यादिर्विभावादिभिर्व्यज्यते । तद्व्यञ्जनावशादेव रसादेरसंलक्ष्यक्रमव्यङ्ग्यपरिभाषा, ततश्च भावनोपनीतः स रत्यादिर्विभावादिनिष्ठेन स्वादनाख्यव्यापारेण सामाजिकरत्याद्यभेदे-

---

**(लो, अ)** रसस्वरूपं निरूपयितुकामस्तस्यावसरप्राप्तत्वं दर्शयन्नाह—**अथे**ति । अथ—काव्यस्वरूपनिरूपणानन्तरं कोयं रसो यदात्मकं वाक्यं काव्यमित्यर्थः । इत्यपेक्षायामुच्यते—तत्स्वरूपं निरूप्यते ।

**( लो, आ ) विभावेने**त्यादि—सचेतसां-सहृदयानां रत्यादिः स्थायीभावः । भाव्यते—वास्यते इति व्युत्पत्त्या अनादिवासनान्तर्लीन इत्यर्थः । तदुक्तम्—

'वासनाऽनादिकालीना याऽसौ हृदि सचेतसाम् ।
स्वसामग्रीं समासाद्य व्यक्ता सैति रसात्मताम् ॥'

---

* वासनारूपतया अतिसूक्ष्मरूपेण अवस्थितान् रत्यादीन् स्थायिभावान् विभावयति, आस्वादयोग्यतां नयति इति विभावः, तेन । अनुभावेन—रत्यादीन् स्थायिभावान् अनुभावयति इति अनुभावः, तेन। **संचारिणे**ति । रत्यादीन् स्थायिनः काये संचारयति मुहुर्मुहुरभिव्यनक्ति इति संचारी तेन ।

स्थायी—अविच्छिन्नः प्रवाहः ।

भावः—चित्तवृत्तिविशेषः । चित्तवृत्तिरूपस्य आशु विनाशित्वेपि वासनात्मतया सूक्ष्मरूपेण अवस्थानात् स्थायित्वं बोध्यम् ।

1 'स्थायिभावः' इति (कखपुस्तकयोः) ।

**विभावादयो वक्ष्यन्ते । ( इ )**

**सात्त्विकाश्चानुभावरूपत्वात् न पृथगुक्ताः । ( घ, ई )**

**व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो[1] व्यक्तीकृत[2] एव रसो नतु दीपेन घट इव पूर्वसिद्धो व्यज्यते ( ङ, उ )**

---

नारोप्यमाणः स्वप्रकाशानन्दतया तथा परिणमतीति परिणामवादसिद्धान्तेन, तस्य सामाजिके रसताप्राप्तिः । एवमेवाग्रे व्यक्तिर्भविष्यति ।

**(वि, घ)** ननु सात्त्विकभावोऽपि रसादिव्यञ्जकः, स कथं नोक्त इत्यत आह—**सात्त्विकाश्चे**ति । ते चाग्रे वक्ष्यन्ते ।

**(वि, ङ)** परिणामवादसिद्धान्तं दर्शयति—**दध्यादिन्यायेने**ति । दुग्धमेव यथाऽम्लद्रव्ययोगाद् दध्यादिरूपतया परिणमति; तन्न्यायेन रामादिरत्यादिरेव विभावादिनिष्ठस्वादनाख्यव्यापारेण सामाजिकरत्यादौ अभेदेनारोप्यमाणः स्वप्रकाशानन्दात्मकज्ञानरूपतया परिणमतीत्यर्थः ।

व्यक्त इत्यस्यार्थं परिणत इत्यन्तेन दर्शयित्वा, तादृगवस्थ एव रसः, नतु अतादृगवस्थ इति प्रतिपादयन् पुनराह—**व्यक्तो व्यक्तीकृत एवे**ति । इदं च व्यक्तीकृतरसास्वादाख्येन व्यापारेण विभावादिनिष्ठेन व्यञ्जनाभिन्नव्यापारान्तरेण रामादिरत्याद्यारोपविषयसामाजिकरत्यादेः स्वप्रकाशानन्दरूपतया विषयीकरणमित्यग्रे व्यक्तिर्भविष्यति ।

---

यद्यपीह मिलितो रत्यादिः प्रपानकरसन्यायेन चर्व्यमाणोऽखण्डस्वरूपो रसः, तथापि लोकप्रसिद्धिमासाद्य प्रत्यभिज्ञानात् स्थायिभावो रसतामेति । **(इ)** इत्युक्तं विवृणोति—**विभावादय** इति । वक्ष्यते इहैव परिच्छेदे । सामान्यतस्तु—

'कारणानि च कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ।
विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः ॥'

इत्युक्तप्रकाराः । दण्ड्याद्यैरुक्तम्—

'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीय नीतः स्वाद्यत्वं स्थायिभावो रसः स्मृतः ॥'

**(लो, ई)** तत्कथमत्र लक्षणे सात्त्विकानामनुपादानमित्याशङ्क्याह—**सात्त्विकाश्चे**ति । सात्त्विकाः स्तम्भस्वेदादयः ।

**(लो, उ) दध्यादी**ति—यथा दुग्धं दधिरूपेण परिणमते इत्यर्थः ।

---

1 'णतो व्यक्तो व्यक्तीकृत एव' इति ( च. छ. पुस्तकयोः )

2 'व्यक्तीकृत एव रसः' इति ङपुस्तके नास्ति ।

तदुक्तं लोचनकारैः—रसाः प्रतीयन्ते इति तु ओदनं पचतीतिवद् व्यवहारः इति। (च, ऊ)

अत्र च रत्यादिपदोपादानादेव प्राप्ते स्थायित्वे पुनः स्थायिपदोपादानं रत्यादीनामपि [1]रसान्तरेषु अस्थायित्वप्रतिपादनार्थं[2], ततश्च हासक्रोधादयः शृङ्गारवीराद्यैर्व्यभिचारिण एव। तदुक्तम्—

"रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति। (छ, ऋ)

अस्य स्वरूपकथनगर्भ आस्वादनप्रकारः कथ्यते।

**सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।**
**वेद्यान्तरस्पर्शशून्यब्रह्मानन्द[3]सहोदरः।**

---

**(वि, च) ओदनं पचतीतिवदि**ति। पाकोत्तरमेवोदनोत्पत्तेस्तण्डुलपाकस्यैव तत्रोपचारः व्यञ्जनया, रत्यादिप्रतीतेरेवं रसे व्यञ्जनया प्रतीत्युपचारः इत्यर्थः। अयमुपचारो मानस एव; शाब्दस्तु नोपचारः। किन्तु ओदनपदस्य तण्डुले लक्षणेति बोध्यम्।

**(वि, छ)** "रसतामेति रत्यादिः स्थायीभावः सचेतसाम्" इति यदुक्तं तत्र स्थायीत्वस्य उपादानफलमाह—**अत्र रत्यादी**ति।

**अस्थायित्वप्रतिपादनार्थमि**ति—किन्तु व्यभिचारिभावत्वप्रतिपादनार्थमिति बोध्यम्, तदाह-**ततश्चे**ति।

रसान्तरे स्थायित्वाभावे संवादमाह-तदुक्तं **रसावस्थ** इति। रस एव उत्तरकालम् अवस्था यस्य। परं केवलं तादृशो हासक्रोधादिभावः स्थायितां प्रतिपद्यते इत्यर्थः। अतादृगवस्थस्तु न स्थायित्वं प्रतिपद्यते इत्यर्थः।

**(वि, ज)** सत्त्वोद्रेकादिति कारिकार्थं प्रतिपदं स्वयमेव व्याख्यास्यति। चिन्मय इत्यत्र चिद् ज्ञानम्।

---

**(लो, ऊ)** ओदनं पचतीतिवत्—न खल्वोदनः पूर्वसिद्धो व्यज्यते, किन्तु पक्वः सन् ओदनो भवतीति तथायमपि व्यक्तः सन् रसो भवतीत्यर्थः।

**(लो, ऋ) क्रोधादय** इत्यादिशब्दात् जुगुप्सादयः। रसावस्थः रसरूपताप्राप्तियोग्यः।

**(लो, ॠ)** सम्प्रति कीदृगसावास्वाद्यते येनैतदास्वादनलम्पटः काव्ये प्रवर्तिष्यते लोकः इत्याशङ्क्योक्तां सत्त्वोद्रेकादिति कारिकामवतारयति—**अस्ये**ति। आस्वादनप्रकार इति उपचारप्रयोगः; अस्याऽऽस्वादनातिरिक्तत्वात्। **सत्त्वोद्रेकादि**ति—

---

1 'अवस्थायित्व' इति (घपुस्तके)

2 "स्थायित्वव्यपदेशार्थम्" इति ( जझपुस्तकयोः )

3 'स्वाद–' इति ( ग. पु. )

**लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः ।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः ॥ २ ॥ (ज, ऋ)**

**" रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते " (लृ)**

**इत्युक्तप्रकारो बाह्यमेयविमुखतापादकः कश्चनान्तरो धर्मः सत्त्वम् । तस्योद्रेकः रजस्तमसी अभिभूयाविर्भावः । अत्र च हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम् । अखण्ड इत्येक एवायं विभावादि[1]रत्यादिस्वप्र[2]काशसुखचमत्कारा-**

---

**स्वाकारवदभिन्नत्वेने**ति—अयं रत्यादिज्ञानरूपो रसः परिणामवशाद्रत्याद्यभिन्नत्वेन विशिष्ट आस्वाद्यते इत्यर्थः । नत्वभिन्नत्वं तद्वोवे प्रकारः । आरोप्यमाणरामादिरत्याद्यभेदेन अधिकरणीभूतसामाजिकरत्यादेरेव यः स्वप्रकाश आस्वादः तस्यैव रसत्वात् तत्र चाभिन्नत्वाभावात् । तत्रास्वादतद्विषयरत्यादेरभेदे स्वाकारवादोक्तं दृष्टान्तमाह—**स्वाकारवदि**ति । स्वाकारवादे हि विषयो ज्ञानाभिन्नो ज्ञानस्याकार एवेति ।

**(वि, ऋ)** तत्र सत्त्वमाचष्टे—**रजस्तमोभ्यामि**ति । बाह्यमेयविमुखतासामाजिकस्याविर्भावः उद्बोधः सहकारिप्राप्त्या कार्यजनकतेति यावत् । सहकारिप्राप्तिं दर्शयति—**तत्र च हेतुरि**ति । एकत्वं ग्राहयति—**विभावादी**ति । विभावादिश्च रत्यादिश्च तद्विषयं यत् स्वप्रकाशरूपं सुखं तत्सहितः चमत्कार आत्मा स्वरूपं यस्य तादृशः । चमत्कारश्च विस्मय इति वक्ष्यते । तादृशसुखचमत्कारयोरेकदा स्थितौ तत्र हेतुं वक्ष्यामः "व्यापारोस्ति विभावादेः" इत्यादिना । विभावादेः स्वादनाख्यव्यापारस्य चमत्कारहेतुतायाः सामाजिकानां रामादिनायकाभेदारोपहेतुतायाश्च वक्ष्यमाणत्वात् ।

---

स्वात्मैवाकारः । स यथाऽभिन्नत्वेनानुभूयते उपचारादिति शेषः तथायमास्वाद्यते । विवृणोति—**( लृ ) रजस्तमोभ्यामि**ति—मनो हि सत्वरजस्तमोरूपं त्रिगुणात्मकम् । बाह्यमेया घटपटादयः । आन्तरो धर्मः सत्त्वमात्रावस्थितिरूपः । ननु कथमेवंविधः सत्त्वोद्रेको जायते, ततश्च कथमखण्डस्वप्रकाशानन्दाद् बोधः इत्याशङ्क्याह—**तत्र चे**ति । अयमाशयः—"सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत । प्रमादमोहौ तमसो भवतोऽज्ञानमेव च । इत्यादि भगवद्वचनात् त्रिगुणात्मके मनसि सत्त्वांशस्य प्रकाशे सुखोत्पत्तिः सत्त्वांशस्य प्रकाशश्च रजस्तमसोरभिभवाद् वैषयिकं सुखं जनयति । तथा हि सत्त्वांशप्रकाशतारतम्याद् वैषयिकसुखस्यापि तारतम्यं दृश्यते । तच्च सुखतारतम्यं सुखकारणतारतम्यहेतुकमित्यवश्यमभ्युपगन्तव्यम् । तच्च सुखकारणं यदि सकललौकिकसुखकारणोत्तरं तेन रजस्तमसोरभिभवः सर्वथा शक्यक्रिय एवेति । ततो न्यायात् लोकोत्तरकाव्यार्थश्रवणरूपकारणात् सर्वथा रजस्तमस्यभिभूय मनसः

---

1 'रत्या प्रकाशगुणश्च' ( ठ. पु. )
2 'प्रतीति' ( ट. ठ. पु. )

त्मकः। अत्र हेतुं वक्ष्यामः। स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या। चिन्मय इति स्वरूपार्थे मयट् (ए) चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः। तत् प्राणत्वं चास्मत्[1] पितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादै-रुक्तम्। तदाह धर्मदत्तः स्वग्रन्थे—(क)

"रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते

तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः॥

तस्माददद्भुतमेवाह कृती नारायणो रसम्॥" इति। (अ, ऐ)

**चिन्मय इती**ति—स्वप्रकाशानन्द एव चिद् ज्ञानं तत् स्वरूप इत्यर्थः। ज्ञाना-नन्दयोरभेदस्वीकारात्। लोकोत्तरचमत्कारपदार्थं व्याचष्टे—**चमत्कार** इति। चित्तस्य विस्तारः आत्मसंयोगविशेषेण जनितं विलक्षणं ज्ञानम्। तदेव दर्शयति—**विस्मये**ति। तत्प्राणत्वं च तत्सहभावेनैव स्थित्या। **तदाहे**त्यादि किमपि नारायणस्यैवोक्तिः।

**(वि, अ) रसे सार** इति रसास्वादहेतुत्वात् सारः। तच्चमत्कारसारत्वे इति सति सप्तमीयम्। चमत्कारस्य विस्मयरूपत्वात् तेन स्वप्रकाशसुखेऽतिशयकरणात् तस्य सारत्वं विलक्षणसुखात्मकरसजनकत्वम्। तस्मिन् सति शृङ्गारादिरसकाव्येष्वपि अद्भुतो रसः सम्भवति। तथा च सामान्यतः शृङ्गारादिरसे जातेऽद्भुतमुत्पाद्य विलक्षणास्वादरूपः प्रकृष्टशृङ्गारादिरसो जन्यत इत्यर्थः। काव्यप्रकाशे तु आस्वाद एव चमत्कारः नतु तद्भिन्नो विस्मयः। इत्यद्भुतप्रवेशो न सर्वत्र।

**तस्माददद्भुतमेवे**ति—अतः शृङ्गारादिकाव्ये प्रकृष्टशृङ्गारादिजनकतया अद्भुत-मपि रसमब्रवीदित्यर्थः।

सत्त्वांशस्यैव प्रकाशस्तदा तन्मात्रहेतुकोऽखण्डप्रकाशरूप आत्मावबोधः प्रामाणिक एव। अत एवाहुः—"स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः।" इत्युक्तप्रकारः। स चात्मानन्दाद् बोधो यदि "अन्वयव्यतिरेकाभ्यां निरस्य प्राणतो यतः। वीक्ष्या-सन्नस्य कोऽस्मीति तत्त्वमित्याह—सौहृदात्" इत्यादि। शास्त्रानयनहेतुकः स्यात् तदा निरुपहितं ब्रह्म प्रकाशते। यदि पुनर्नाट्यकाव्यदर्शनश्रवणाभ्यां, तदा विभावा-दिसम्वलित-रत्याद्यंशकर्बुरितत्वेन किंकुर्मः। कारणवैचित्र्यस्यैवायं सहृदयानुभवसिद्धोऽ नुभाव इति तस्य च रत्याद्यंशशवलत्वेऽपि यथा स्वप्रकाशतमोविरुद्धं तथेहाग्रे दर्श-यिष्यते। एतदेवाह—**स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्ये**ति। रत्याद्यंशशवल-त्वादेव चास्य ब्रह्मास्वादस्य सहोदरत्वं; नतु तत्त्वं सूत्रेणोक्तम्। स्वरूपार्थ इत्यनेन मयटः प्रस्तुतार्थस्य निरासः, तेन स्वप्रकाशानन्दचिदभिन्नत्वं रसस्योक्तं भवति।

**(लो, ऐ) नारायणदासैरप्युक्तमि**ति—चमत्कार एव सर्वरसप्राणभूतः।

---

1 'अस्मद्वृद्धप्रपितामह (क. घ.)

**कैश्चिदिति प्राक्तनपुण्यवद्भिः, यदुक्तं, "पुण्यवन्तः प्रमिण्वन्ति योगिवद्रस-सन्ततिम् " इति । ( ट, ओ )**

**यद्यपि " स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः " इत्युक्तदिशा रसस्याऽऽस्वादानतिरिक्तत्वमुक्तम् ( ठ, औ ) तथापि " रसः स्वाद्यते " इति काल्पनिकभेदमुररीकृत्य कर्मकर्तरि वा प्रयोगः, ( ड )**

---

**(वि, ट) पुण्यवद्भिरि**ति–पुण्यशालिभिरिति क्वचित् पाठः । वासनायामास्वादनाख्यव्यापारे च पुण्यमेव हेतुरित्यर्थः । 'न जायते तदास्वादो विना रत्यादिवासनाम्' इति वक्ष्यमाणत्वात् । 'विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चिद् व्यापार' इति वक्ष्यमाणत्वाच्च ।

**(वि, ठ) काव्यार्थसंभेदात्** इति । रत्यादिरूपो यः काव्यस्य व्यङ्ग्यार्थस्तत्-संभेदात्–तत्परिशीलनादित्यर्थः । वस्तुतस्तु संभेदादिति ल्यब्–गर्भत्वात् पञ्चमी तेन विभावादिशवलित इति । **आत्मानन्दे**ति–आत्मनि य आनन्दस्तद्रूपेण समुद्भवो यस्य तादृश इत्यर्थः । तथा च आनन्दात्मकस्य रसस्य स्वादानतिरिक्तत्वमित्यर्थः ।

**(वि, ड)** काल्पनिकम्–अभेदे भेदारोपेण भेदम् । **कर्मकर्तरि वे**ति–"भिद्यते कुशूलः स्वयमेव" इत्यत्र एकस्यैव कुशूलस्य कर्मत्वकर्तृत्वोभयविवक्षया भेदारोपवद-

---

तस्य च रत्याद्यंशशवलत्वेन यथायथं शृङ्गारादिव्यपदेशः। तद्भावाददूभुतव्यपदेश इति ।

**(लो, ओ) पुण्यवन्त** इति । प्रमिण्वन्तीत्यत्रापि पूर्ववदुपचारः । स्वप्रकाशरूपस्यास्य प्रमाविषयत्वानुपपत्तेः । **योगिवदि**ति । यथा योगिनः शुद्धं ब्रह्म स्वप्रकाशानन्दचिद्रूपतया साक्षात्कुर्वन्ति रत्याद्यंशकर्बुरितमपि तथा पुण्यवन्त इत्यर्थः । तथा चोक्तं 'विभावादिसंभिन्नानुद्रिक्ताङ्गरत्याद्यंशकर्बुरितः स्वप्रकाशानन्दचमत्काररूपो रसः' इति । केचित्तु रत्यादिसंभिन्नानन्दसाक्षात्कारानन्तरं प्रशान्तनिखिलप्रपञ्चचिदानन्दमयब्रह्मतत्त्वाभिव्यक्तिं सुषुप्तिदशावत् समाधिवच्चेच्छन्ति । यदाहुः—

> पाठ्यादथ ध्रुवाख्यानात्ततः संपूरिते रसे ।
> तदास्वादभरैकाग्रो हृष्यत्यन्तर्मुखः क्षणम् ॥
> ततो निर्विषयस्यास्य स्वभावोऽवस्थितो निजः ।
> व्यज्यते ह्लादनिष्यन्दो येन तृप्यन्ति योगिनः ।'

आचार्यास्तु शवलितस्यैवानुभवात् सुखमनुभवामीति प्रतिसन्धानस्य च तावतैवोपपत्तेरधिकं नेच्छन्ति । रससन्ततिं सन्तन्यमानं रसम् । सन्तन्यमानत्वेन ब्रह्मास्वादसहोदरस्यास्य विद्ययाऽविच्छिन्नप्रवाहवाहित्वं सूचितम् ।

**(लो, औ)** काव्यार्थो विभावादिः । तत्सम्भेदादिति ल्यब्लोपे पञ्चमी तेन विभावादिशवलित इत्यर्थः । (अ) काल्पनिकमौपचारिकम् । **कर्मकर्तरि वे**ति । स्वाद्यते–आस्वाद्यते प्रमाणान्तरोपनीतरत्यादितादात्म्येन समुल्लिख्यत इत्यर्थः ।

**तदुक्तम् 'रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्य एव हि रसः। इति(ढ,अ)**

**एवमन्यत्राप्येवंविधस्थलेषूपचारेण प्रयोगा ज्ञेयाः।**

**ननु एतावता रसस्याज्ञेयत्वमुक्तं भवतीति। (ण) व्यञ्जनायाश्च ज्ञान-विशेषत्वाद्[1] द्वयोरैक्यमापतितम्। (त, आ)**

**ततश्च—"स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः।**

**यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्॥ (थ, इ)**

त्रापि आस्वाद्यास्वादनयोरभेदेपि भेदविवक्षया कर्मकर्तरि प्रयोगः इत्यर्थः। नच आस्वाद्ये आस्वादस्य विषयिता एव, तत्कथं कर्तृत्वमिति वाच्यम्, स्वप्रकाशत्वेन तत्र कर्तृत्वारोपात्।

(वि, ढ) **रस्यमानतामात्रसारत्वा**दिति–सारपदमत्र स्वरूपार्थकम्। तथा च रस्यमानताया आस्वादकर्मत्वं दर्शितम्। प्रकाशशरीरत्वेन आस्वादकर्तृत्वं च दर्शितम्। तथा च कर्मकर्तृत्वमुपपादितम्। स्वप्रकाशस्य प्रकाशकोभयरूपत्वात् ताभ्यामनन्य एवेत्यर्थः।

(वि, ण) **एवमन्यत्रापी**ति—सः प्रतीयत इत्यादावित्यर्थः। **नन्वेताव-ते**ति—रसस्यास्वादाभिन्नत्वकथनेनेत्यर्थः। अज्ञेयत्वं स्वभिन्नज्ञानाग्राह्यत्वमित्यर्थः। स्वेनैव स्वस्वग्राह्यत्वेन घटादिवत् ज्ञेयत्वासिद्धेरिति भावः।

(वि,त) ननु विभावादिजन्येन व्यञ्जनाधनिज्ञानेनैव विषयीकरणात् स्वभिन्नज्ञान-ग्राह्यत्वमस्त्येवेत्याशङ्कायामाह—**व्यञ्जनायाश्च ज्ञानविशेषत्वा**दिति। व्यञ्जनायाः व्यञ्जनाधीनज्ञानस्य ज्ञानविशेषत्वात् आस्वादरूपज्ञानविशेषत्वात्। तथा च तद्दशायां तद्-भिन्नज्ञानाग्राह्यत्वादज्ञेयत्वमित्यर्थः। तथा च रसरूपास्वादव्यञ्जनाधीनज्ञानयोरैक्यमेवा-पतितमित्याह—**द्वयोरैक्यमि**ति। द्वयोरास्वादाभिन्नरसव्यञ्जनाधीनज्ञानयोरित्यर्थः। नन्वेतावता किमनिष्टमित्यतो विभावादेर्व्यञ्जकत्वानुपपत्त्या रसस्य व्यङ्ग्यत्वा-नुपपत्तिः एवानिष्टमिति वक्तुं प्रथमं विभावादेर्व्यञ्जकत्वानुपपत्तिं घटव्यञ्जकदीपवैलक्ष-ण्येन साधयति—**ततश्चे**ति। घटादेर्व्यञ्जको यथा दीपो विभावादेस्तथात्वाभावाद् घटव्यञ्जकदीपतो विभावादेः पार्थक्यं पृथग्भावो वैलक्षण्यमिति समुदायार्थः। यथा-श्रुताक्षरार्थेन त्वयमर्थो न घटते, स्वविषयज्ञानेन स्वजन्यज्ञानेन वा घटधियो हेतो-

---

(लो, आ) एतावतेत्यत्र प्रबन्धेनेति शेषः। रसस्य व्यङ्ग्यत्वेन निरूप्यमाणस्यैकं ज्ञानत्वाविशेषादित्यर्थः।

(इ) अन्यधीहेतुर्व्यङ्ग्यबुद्धेः कारणम्। सिद्धे नतु साध्ये व्यञ्जको मतः शब्द इत्यर्थः। **यथा दीप** इति। न खलु दीपो घटादिकं करोति। किन्तु स्वप्रकाशेन सिद्ध-मेव तं प्रकाशयति। अन्यथाभावे–असिद्धस्य साधने।

---

1 'ज्ञानरूपत्वात्' (घ., ङ. पु०)

**इत्युक्तदिशा घटप्रदीपवद् व्यङ्ग्यव्यञ्जकयोः पार्थक्यमेवेति कथं रसस्य व्यङ्ग्यता, इति चेत् सत्यमुक्तम्। (थ, ई) अत एवाहुः—"विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चिद् व्यापारः" (द, उ)। अत एव हि रसना-स्वादनचमत्करणादयो विलक्षणा एव व्यपदेशा इति। अभिधादिविलक्षण-व्यापारमात्र[1]प्रसाधनग्रहिलैरस्माभी रसादीनां व्यङ्ग्यत्वमुक्तं भवति। (ऊ) ***

---

दीपस्य घटव्यञ्जकभावप्रसक्त्या 'यथा दीप' इति दृष्टान्तानुपपत्तेः। **अतोऽत्र ज्ञानेने**ति। तृतीयाऽभेदे। 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इतिवत्। तथा च स्वजन्यज्ञानाभिन्नाया अन्यस्य ज्ञानादन्यस्य धियो हेतुर्यः स एव सिद्धे ज्ञानं विनापि सिद्धे अर्थे व्यञ्जको मतो यथा दीप इत्यर्थः विभावादिस्तु स्वजन्यव्यञ्जनाधीनज्ञानभिन्नस्याऽऽस्वादात्मकरसादेर्जनक एव न दीपवत् व्यञ्जक इत्यर्थः। अन्यथाभावे अन्यथात्वे स्वजन्यं प्रत्यपि स्वस्वव्यञ्जकत्वे इत्यर्थः। अस्य विभावादेः कारकात् को विशेष इत्यर्थः। घटप्रदीपवत् द्वौ यौ व्यङ्ग्यव्यञ्जकौ तयोः सकाशादनयोः रसविभावायोः पार्थक्यं वैलक्षण्यमेवेत्यर्थः। न तु व्यङ्ग्यव्यञ्जकयोः परस्परं पार्थक्यं भेद इत्यर्थः। तदा प्रत्युत रसस्य व्यङ्ग्यत्वस्यैव सिद्धेराशङ्कानुपपत्तेः।

**(वि, थ)** व्यञ्जनास्वादयोराशङ्कितमैक्यं निरस्य रसावस्थस्य व्यङ्ग्यत्वाभावं सिद्धान्तयन् आह—" **चेत् सत्यमि**ति "।

**(वि, द) कृतिज्ञप्तिभेदेभ्य** इति—कृतिरुत्पादको व्यापारः दण्डादेर्भ्रम्यादिः। ज्ञप्तिः ज्ञापको व्यापारः, अभिधालक्षणाव्यञ्जनाः; तेभ्यो व्यापारेभ्यो भिन्न इत्यर्थः।

स्वादनाख्यः आस्वादरूपः स्वप्रकाशज्ञानजनको वृत्तिविशेष इत्यर्थः। तथा च तद् विषय एव रसः। व्यञ्जनाधीनज्ञानं तु रत्यादिविषयः ततो भिन्नमेव इत्यतो रसव्यञ्जनाधीनज्ञानयोर्नैक्यमित्युक्तम्। स च विभावादिनिष्ठो व्यञ्जनाभिन्न इत्यर्थः। तथा च व्यञ्जनया रत्यादिज्ञानमेव, स्वादनाख्यव्यापारेण तु रसास्वाद इत्यन्वयः। ननु कथं तर्हि रसो व्यङ्ग्य इत्युच्यते इत्यत आह—**अभिधादी**ति। विलक्षणो

**(लो, ई)** उक्तदिशा ध्वनिकाराद्युक्तमार्गेण व्यङ्ग्यव्यञ्जकयोः पार्थक्यमित्यनेन व्यञ्जनाया व्यङ्ग्यस्य च पार्थक्यं न्यायसिद्धमेव इति भावः। न खलु घटस्य दीपप्रकाशेनैक्यम्।

**( लो, उ ) अत एवे**ति—; आहुरित्यस्य व्यङ्ग्यत्वमुक्तं भवतीत्यत्र दूरस्थेनेतिशब्देनान्वयः। अत एव—यतो ज्ञानरूप एव रस इत्यर्थः। आहुर्न्यायविदः प्राचीनाचार्या इति शेषः। कृतिः करणं; ज्ञप्तिर्ज्ञानम्; स्वादनं स्वादः "स्वादः काव्यार्थ-संभेदादात्मानन्दसमुद्भव" इत्युक्तप्रकारः। कश्चिदित्यलौकिकः। व्यापारः—व्यापार-विषयाद्रसादभिन्नः। विलक्षणो व्यञ्जकादिति शेषः।

* अभिधादिभ्यः—( अभिधालक्षणातात्पर्याख्यवृत्तिभ्यः ) विलक्षणः( भिन्नो)

1 व्यापारतात्र (ग. घ. पु.)

नन्तु तर्हि करुणादीनां रसानां दुःखमयत्वाद्रसत्वं न स्यादित्युच्यते—( ध )

**करुणादावपि रसे जायते यत्परं सुखम् ।**

***सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥ ३ ॥** ( न, ऋ )

आदिशब्दाद् बीभत्सभयानकादयः । * तथाप्यसहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते—( प )

**किञ्च तेषु यदा दुःखं न कोपि स्यात्तदुन्मुखः ॥ ४ ॥**

नहि कश्चित् सचेता आत्मनो दुःखाय प्रवर्तते । करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात्[1] ( फ, ॠ )

[2]अनुपपत्त्यन्तरमाह—

**तथा रामायणादीनां भविता दुःखहेतुता ५ ॥**( ब, ऌ )

[3]करुणरसस्य दुःखहेतुत्वात्[4] करुणरसप्रधानरामायणादीनामपि दुःखहेतुत्वप्रसङ्ग[5]: स्यात् ।

---

व्यापारो व्यञ्जना रसो व्यङ्ग्य इति व्यङ्ग्यरामादिरत्याद्यारोपाधिकरणसामाजिकरत्यादेः रसरूपतया परिणामात् परम्परया व्यङ्ग्य इत्यर्थः ।

**(वि, ध) रसत्वं न स्यादि**ति—स्वप्रकाशानन्दरूपत्वाद्रसस्य इत्यर्थः ।

**(वि, न) रसे** इति–करुणादौ रसे प्राप्ते करुणादिरसस्वरूपमेव यत् सुखं जायते इत्यर्थः । रसातिरिक्तसुखाभावात् । **सचेतसामनुभव** इति । रसादीनामेव शोकदुःखं तज्ज्ञातॄणां, सामाजिकानां तु सुखमेव जायत इत्यत्र सचेतसामनुभवः प्रमाणमित्यर्थः ।

**( वि, प )** असहृदयानामपि परदुःखज्ञानादपि दुःखमेव जायत इत्येवं-हृदयानामपीत्यर्थः ।

**(वि, फ) किञ्च तेष्वि**ति—दुःखहेतुत्वे अनुपपत्त्यन्तरमित्यर्थः ।

**(वि, ब) तथा रामायणे**ति—रामायणमत्र करुणरसविशिष्टतदेकदेशः ।

---

[ ऊ ] व्यङ्ग्यत्वमुक्तं, प्रकाशनमात्रोपचारादित्यर्थः ।

**( ऋ ) नन्वि**ति । तर्हि यदीदृशानन्दस्वरूपो रस इत्यर्थः। रसे सुखमित्युपचारः । सचेतसां सहृदयानाम् । तेषु करुणादिषु ।

**(लो, ॠ)** साभिनिवेशा, नतु राजादिकारिता ।

**(लो, ऌ)** रामायणं वाल्मीकिमहाकाव्यम् ।

---

यो व्यापारः ( व्यञ्जना ) तन्मात्रस्य प्रसाधनाय ( सिद्धये ) आहितैः ( यत्नवद्भिः )

* चिह्नाङ्कितः पाठः ड. ढ. पु. नास्ति ।

1 'दर्शनाद्' इत्युत्तरम्, "सुखमयत्वमेव" इत्यधिकः पाठः (प. फ. पु.)

2 'उपपत्त्यन्तरम्' इति (ग. पु.) 3 'करुणादि' इति (भ. पु.)

4 दुःखहेतुत्वात् इति (ठ. पु.) 5 प्रसङ्ग इति नास्ति (च. पु.)

ननु[1] कथं दुःखहेतुभ्यः[2] सुखोत्पत्तिरित्याह—( भ )

**हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात् ।**
**शोकहर्षादयो लोके जायन्तां नाम लौकिकाः ॥६॥ (म)**
**अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात् ।**
**सुखं संजायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः ॥७॥ (ए) ***

"ये खलु [3]रामवनवासादयो लोके 'दुःखकारणानि" इत्युच्यन्ते, त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यत्वं[4] विहायालौकिक[5]विभावशब्दवाच्यत्वं भजन्ते + तेभ्यश्च[6] सुरते दन्तघाता-

**दुःखहेतुत्व-प्रसङ्ग** इति—तथा च तत्-श्रवणे न कोपि प्रवर्तते ।

( **वि, भ** ) **दुःखहेतुभ्य** इति—परशोकादयः स्वदुःखहेतव एव, तेभ्यः कथमित्यर्थः । ( **म** ) हेतुत्वमिति लोकसंश्रयात्—लोके दृष्टत्वात् स्वीय-शोकहर्षादेः हेतुत्वगतेभ्यः परशोकादिकारणेभ्यो लौकिकाः शोकहर्षादयो जायन्तां नामेति तुष्यतु दुर्जन इति न्यायेन उक्त्वा आह—**अलौकिके**ति ।

( **लो, ए** ) **हेतुत्वमि**ति—हेतुत्वं गतेभ्यो रामवनवासादिभ्यो लोकसंश्रयात्; नतु काव्यसंश्रयात् । लोके नतु काव्ये; लौकिकाः; नत्वलौकिकाः । तेभ्यः—रामवनवासादिभ्यः ।

( **लो, ऐ** ) अलौकिकविभावनव्यापारवत्तया, नतु पर्यायान्तरत्वमात्रेण । विभावनादिस्वरूपं वक्ष्यते । **सुरते दन्तघातादिभ्य** इति । अनेन देशकालादिविशेषेण

* लोके यानि तावत् शोकहर्षादेः कारणानि कार्याणि सहकारीणि, तानि काव्ये नाट्ये च विभावा अनुभावाः व्यभिचारिण इति नाम्ना व्यपदिश्यन्ते **अलौकिक** इति । लोके हर्षसुखादिकारणेभ्यो हर्षशोकादयो जायन्ते । परं काव्ये नाट्ये च तेभ्यः सुखमेव जायते इत्यादि लोकोत्तरत्वमेव विभावादीनामलौकिकत्वम् ।

+ विभावनव्यापारवत्तया वासनात्मतया अतिसूक्ष्मरूपेणावस्थितानां रत्यादीनामास्वादनयोग्यतयानयनरूपस्याविर्भावनं विभावनम् । तदेव व्यापारः तद्वत्तया इत्यर्थः । तस्मादेव कारणादयः काव्ये नाट्ये च विभावादिनाम्ना व्यपदिश्यन्ते ।

1 ननु हर्षशोकादिकारणेभ्यो हर्षशोकादय एव जायन्ते इति व्याप्तिः; तत्कथं विभावादिभ्यः सुखोत्पत्तिरित्याह इत्यधिकः पाठः 'ननु' इत्यस्मात् पूर्वमुपलभ्येत ग. पु.

2 "कारणेभ्य" इति (ग. पु.)

3 'राम' इति नास्ति (प. फ.)

4 'ताम्' इति (ग. पु.)

5 'अलौकिक' इति नास्ति (च. फ.)

6 'च' इति नास्ति (घ. फ.)

दिभ्य इव सुखमेव[1] जायते। (ऐ) अतश्च[2] लौकिकशोकहर्षादिकारणेभ्यो[3] लौकिकशोकहर्षादयो जायन्ते इति लोक एव प्रतिनियमः। काव्ये (ओ) पुनः सर्व्वेभ्योपिविभावादिभ्यः सुखमेव जायत इति नियमान्न कश्चिद् दोषः।

कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शनश्रवणाभ्यामश्रुपातादयो जायन्ते इत्युच्यते।

**अश्रुपातादयस्तद्वद् द्रुतत्वाच्चेतसो मताः[4] (य, औ)**

ननु तर्हि कथं काव्यतः सर्वेषामीदृशी रसाभिव्यक्तिर्न जायते इत्याह।

**न जायते तदास्वादो विना रत्यादिवासनाम्, (र) ॥ ८ ॥**

वासना चेदानीन्तनी प्राक्तनी च [5]रसास्वादहेतुः। तत्र यदि आद्या न स्यात्तदा[6] श्रोत्रियजरन्मीमांसकादीनामपि सा स्यात् (ल) यदि द्वितीया न स्यात्तदा रागिणामपि केषाञ्चिद्रसोद्बोधो न दृश्यते तन्न स्यात्। (व)

**(वि, य) द्रुतत्वाच्चेतस** इति–चित्तस्य सदयत्वमेव द्रुतत्वम्। सुखसत्त्वेपि तद्दयया अश्रुपात इति भावः।

**(र) विना रत्यादिवासनामि**ति–तथा च पुण्यजनितरत्यादिवासनापि रसास्वादहेतुरित्युक्तम्।

**(ल) यद्याद्ये**ति–इदानीन्तनीत्यर्थः। **श्रोत्रिये**ति–जरन्मीमांसका हि कार्यकारणभावादितर्कमात्रानुशीलनान् न काव्यरसास्वादवन्तः तदनुशीलनाच्च तदानीन्तनवासनावन्त इत्यर्थः। नच प्राक्तनवासनाभावादेव तेषां न काव्यरसास्वाद इत्येवमुच्यताम्, किमर्थमिदानीन्तन-वासनाङ्गीकारः इति वाच्यम्, तेषामेव तर्कानुशीलनत्यागेन काव्यानुशीलनाभ्यासे रसोद्बोधेन इदानीन्तन्या अपि अवश्यंवाच्यत्वात्।

**(व) रागिणामपी**ति–काव्यरसबोधानुभाववतामपीत्यर्थः तेषामिदानीन्तन-वा-

---

षेण सुखमयस्यापि दुःखमयत्वं; दुःखमयस्यापि सुखमयत्वम्। अत एवाहुः;—"प्रपञ्चस्य सुखदुःखमोहात्मकत्वम्"–साङ्ख्याः

**(ओ)** काव्ये अलौकिकार्थे।

**(लो, औ)** द्रुतत्वात्–द्रवीभावात् रसोद्बोध इति।

---

1 'एव' इति नास्ति (ठ. पु.)

2 'अतश्च' इति च. पु. नास्ति

3 'अपि' इत्यधिकः पाठः (प. फ.)

4 गपुस्तके तु अस्याः कारिकायाः, "चेतसो द्रवीभावात् सुखेऽप्यश्रुपातादयो भवन्तीत्यर्थः" इति व्याख्या दृश्यते।

5 रसास्वादहेतुरिति फ. पु. नास्ति

6 'तदा' इति ट. पु. नास्ति।

उक्तञ्च—धर्मदत्तेन—

"सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।
निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः" । +

ननु[1] कथं रामादिरत्याद्युद्बोधकारणैः सीतादिभिः[2] सामाजिकरत्याद्युद्बोध इत्युच्यते ( श, अ )

**व्यापारोऽस्ति विभावादेर्नाम्ना साधारणी कृतिः ।** *

---

सनाभावादेव न रसोद्बोध इति वाच्यम् । इदानीन्तनवासनाजनकतदनुरागसत्त्वेन तत्सत्त्वावश्यंभावात् । वस्तुतस्तु वासनात्वेनैव कारणत्वमुचितम् । ननु तत्र इदानीन्तनत्वादिप्रवेशः जरन् मीमांसकानां तु अत्यन्ततर्कानुराग एव प्रतिबन्धक इत्येवान्वयः ।

**(वि, श ) ननु कथमिति**—नाट्यकाव्यदृष्टश्रुत-सीतादिभ्यः इत्यर्थः ( ष ) **व्यापारोऽस्ति** इति । साधारणी कृतिः सामाजिके रामाद्यभेदारोपरूपस्य, रामादिसीतादौ स्वीयत्वारोपरूपस्य, स्वीयरत्यादौ रामादिरत्याद्यभेदारोपरूपस्य च 'साधारणी

---

**(लो, अ) नन्विति** । रामादिरत्याद्युद्बोधकारणैः सीतादिभिः सामाजिकरत्याद्युद्बोधः तन्मते रसतामापद्यमानः ।

---

+ **सवासनानामिति**—वासना एव रसास्वादे हेतुः ।

सवासनानाम्—वासनायुक्तानाम् ।

निर्वासनाः—वासनारहिताः सभ्याः ।

काष्ठं कुड्यं ( भित्तिः ) अश्मा च ( पाषाणः ) तेषां सन्निभाः तुल्याः । यथा नाटकशालायां काष्ठकुड्यादीनां रसास्वादो न भवति—वासनारहितानां नाटकदर्शकानां तद् वदेव रसास्वादो न भवति ।

* अन्यसम्बन्धित्वेन असाधारणस्य विभावादेः स्थायिनश्च व्यक्तिविशेषांशपरिहारेण उपस्थापनं साधारणीकरणम् ।

उक्तम्—

"सीतादिकविभावादेर्नास्ति यत्रापि सम्भवः ।
अभवद् भावनात् तत्र साधारण्योपपादनम् ॥
इयं काव्यार्थसम्बन्धनाट्याभिनययोगतः ।
वैचित्र्येण च सामग्र्या पदार्थानां विचित्रता ॥
निशाकरकरस्पर्शात् चन्द्रकान्ते यथा द्रवः ।
एवं कारणवैशिष्ट्यात् काव्ये साधारणी कृतिः ।

1 'ननु' इति ज. पु. नास्ति ।
2 'सीतादिभिः' इति च. ज. ठ. पुस्तकेषु नास्ति ।

**तत्प्रभावेण यस्यासन्-[1]पाथोधि-प्लवनादयः ।**
**प्रमाता * तदभेदेन स्वात्मानं प्रतिपद्यते ॥ ९ ॥** ( आ, ष )

ननु[2] मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोध इत्युच्यते ( स )

**उत्साहादिसमुद्बोधः साधारण्याभिमानतः** ( ह )
**नृणामपि समुद्रादिलङ्घनादौ न दुष्यति ॥ १० ॥** ( इ )

रत्यादयोपि साधारण्येन[3] प्रतीयन्त इत्याह—( क )

**साधारण्येन रत्यादिरपि तद्वत् प्रतीयते ॥ ११ ॥** (ई)

---

सा इति कारिकार्थः । कर्तरि अपि क्विरत एव प्रयोगात् । **तत्प्रभावेणे**ति । यस्य हनूमदादेः पाथोधिप्लवनादयः आसन् प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यत इत्यर्थः । तत्र हेतुमाह—**तत्प्रभावेणे**ति । साधारणीकृतिप्रभावेणेत्यर्थः । भेदाग्रहे सत्येन अभेदग्रह उपपद्यते इत्यत आह—**तदभेदेने**ति । भेदाग्रहेपि—साधारणीकृतिप्रभावेणेत्यर्थः ।

**(वि, स)** इत्थं स्वस्मिन् हनुमदाद्याभेदारोपमुक्त्वा तदुत्साहज्ञानादेव स्वोत्साहोद्बोधमुपपादयितुमाशङ्कते ।

**(ह) ननु कथमि**ति—साधारण्याभिमानतः—स्वस्मिन् हनुमदाद्यभेदाभिमानतः।

**(क) साधारण्येने**ति—उभयसाधारण्येनेत्यर्थः, न स्वात्मगतत्वेनैव नैव रामादिगतत्वेनैवेत्यर्थः ।

**(लो, आ)** साधारणी कृतिः—साधारणीकरणं नाम । तत्प्रभावेण—साधारणीकरणव्यापारस्य प्रभावेण । तदभेदेन स्वात्मानं प्रतिपद्यत इति सम्बन्धः । **यस्यासन्नि**ति । विवृणोति—**तदभेदेने**ति । अयमर्थः, सभ्यानां रामाद्यभेदप्रतिपत्तौ नाट्यकाव्ययोः रावणादिदर्शनश्रवणाभ्यां रोषोद्बोधेन सभातः समुत्थाय धनुराकर्षणादिर्भवेत् । भेदेन प्रतिपत्तौ तु आत्मनिष्ठरोषादिस्थायिभावोद्बोधो न स्यात् । एवं च यो दोषः समनन्तरमेव दर्शयिष्यते । यदुक्तम्—अभेदेन प्रतिपद्यते-अख्यातिवादिनां शुक्तौ रजतप्रत्यये भेदाग्रहवत् ।

**(लो, इ)** साधारण्याभिमानतः—उक्तप्रकारेण विभावादीनां साधारणीकरणव्यापारप्रभावेनोत्पन्नस्य स्वात्मनि साधारण्याभिमानबलात् । नृणां—सभ्यानाम् ।

**(लो, ई)**रत्यादि; सभ्यानां स्थायिभावः । साधारण्येन प्रतीयते । विभावादिसाधारणीकरणव्यापारप्रभावादेवेत्यर्थः ।

---

* प्रमाता—नाटकस्य द्रष्टा, काव्यस्य वोद्धा सामाजिकः ।

1 'यथाब्धि' इति (ग. ङ. पु०)

2 'ननु' इत्युत्तरं कथमित्यधिकः पाठः (ग. घ. पु०) ।

3 एवेत्यधिकः पाठः (ट. ठ. पु०) ।

[1]रत्यादेरपि [2]ह्यात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडातङ्कादिर्भवेत् (ख) परगतत्वेन [3]त्वरस्यतापातः ( उ )
विभावादयोपि प्रथमतः[4] साधारण्येन प्रतीयन्त इत्याह ।

**परस्य न परस्येति ममेति[5] न ममेति च ।**
**तदास्वादे विभावादेः परिच्छेदो न विद्यते ॥ १२ ॥ (ग, ऊ)** *

ननु[6] तथापि[7] कथमेव[8]मलौकिकत्व[9]मेतेषां विभावादीनामित्युच्यते ।

---

(ख) **रत्यादेरि**ति—आत्मगतत्वेन–आत्ममात्रगतत्वेन एवमुत्तरत्रापि मात्र-गर्भिता ।

(ग) **परस्य न परस्ये**ति—अत्रापि परस्यैवेत्यादिरर्थः ।

---

**(लो, उ)** आत्मगतत्वेन प्रतीतावुक्तम्–देवतादिरूपसीतादिहेतुकत्वेनेति शेषः । अरस्यता–अनास्वाद्यता ।

**(लो, ऊ)** तदास्वादे--तस्य रसस्याऽऽस्वादे । एवं च विभावादयः स्वयं साधारण्येन प्रत्याययन्तीत्यर्थः ।

---

* लोके हि तिस्रो विधाः । कानिचित् वस्तूनि स्वस्यैव; कानि च शत्रोरेव; कानि पुनः शत्रुमित्रविलक्षणस्य उदासीनस्यैव । (मित्रवस्तुनोपि आत्मसम्बन्धित्वेन स्वकीयत्वम् , अतो न विभागकल्पना ) तत्र यदि स्वकीयत्वेन विभावादयः प्रतीयेरन् तर्हि इतरसामाजिकसन्निधौ स्वरतिप्रकाशोऽनुचित इति लज्जा एव स्यात्; रसास्वादस्तु दूरे एव । शत्रुसम्बन्धित्वेन विभावादीनां प्रतीतौ च ।

विद्वेषाविर्भावश्चावश्यम्भावी । अतो रसास्वादप्रत्याशाऽपि नास्ति। उदासीनसम्बन्धित्वेन च विभावादीनां प्रतीतौ तदभावचिन्तया नितरामेव रसास्वादो अनुपपन्न इति सम्बन्धविशेषस्वीकारस्य अनिश्चयः स्वीकर्तव्यः । परिच्छेदः–सामाजिकमात्रनिष्ठता तस्मात् साधारणविभावादिरूपेणैव प्रतीयन्ते विभावादयः ।

1 'रत्यादेः' इत्यारभ्य 'इत्याह' इत्यतः पाठः प. फ. पुस्तकयोर्नास्ति ।
2 स्वात्मगतत्वेन' इति (च. ज. पुस्तकयोः)
3 'रसतापत्तिः' इति (घ. च. पु०) ।
4 'प्रथमतः' इति ट. ठ. पुस्तकयोर्नास्ति ।
5 'न ममेति ममेति च' इति (क. ग. पुस्तकयोः) ।
6 'ननु' इति च. प. पुस्तकयोर्नास्ति ।
7 'तथापि' इति च. ज. पुस्तकयोर्नास्ति ।
8 'एव' इति क. ग. पुस्तकयोर्नास्ति ।
9 'तेषाम्' इति (प. फ. ज. पुस्तकेषु) ।

**विभावनादिव्यापारमलौकिकमुपेयुषाम् ।**
**अलौकिकत्वमेतेषां भूषणं नतु दूषणम् ॥ १३ ॥** *

[1]आदिशब्दादनुभावनसंचारणे । तत्र विभावनं रत्यादे ( ऋ ) र्विशेषेणाऽऽस्वादाङ्कुर[2]योग्यतानयनम् । (घ) अनुभावनमेवंभूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनं ( ङ ) संचारणं-तथाभूतस्यैतस्य[3] सम्यक् चारणम्[4] । [5]विभावादीनां यथासंख्यं कारणकार्यसहकारित्वे कथं त्रयाणामपि रसोद्बोधे कारणत्वमित्युच्यते ।

**[6]कारणं कार्यसंचारिरूपा अपि हि लोकतः । ( ऋ )**
**रसोद्बोधे विभावाद्याः कारणान्येव ते मताः ॥ १४ ॥ +**

---

**(वि, घ) आस्वादाङ्कुर** इति—व्यञ्जनया रत्याद्युपस्थापनमेव तद्योग्यता । अस्य योगार्थस्याऽनुभावादावपि सत्त्वेपि परिभाषाया योगरूढत्वान्न तत्र प्रयोगः । एवमग्रे अनुभावव्यभिचारिपरिभाषयोरपि बोध्यम् ।

**(वि, ङ)** अनुसंज्ञार्थमाह—**समनन्तरत्वमि**ति । एवंभूतस्य आस्वादाङ्कुरतां प्रापितस्य रत्यादेः स्वनिष्ठस्वादनाख्यव्यापारेण रसरूपतया प्रवेशनमित्यर्थः । विभावादिभिरेवं क्रियत इति बोध्यम् ।

**(वि, च)** कथं त्रयाणामपीति कार्यस्य कारणत्वाभावादित्यर्थः । रसास्वादे एकः प्रतिभास इत्यर्थः ।

---

**(लो, ऋ)** रत्यादेर्जगतो वासनान्तर्गतवासनान्तर्लीनस्येत्यर्थः ।

**(लो, ऋ)** लोकतो—लोके ।

---

* **विभावनादिव्यापारमि**ति—अलौकिकं विभावनादिव्यापारं ( प्राग् दर्शितं यथा) उपेयुषां प्राप्तवतां विभावादीनाम् अलौकिकत्वं भूषणं ( गुण एव ) नतु दूषणं (दोषः) । ..

+ **कारणं कार्ये**ति—ते विभावाद्याः यद्यपि लोकतः लौकिकव्यवहारेण कारण-

1 'आदि–' इत्यतः 'सञ्चारणे' इत्यन्तः पाठः क. ख. ज पुस्तकेषु नास्ति ।

2 'ङ्कुरण' इति (क. ख. पुस्तकयोः) ।

3 'भूतस्यैव तस्य' इति (क. च. पुस्तकयोः) ।

4 'परिपोषणमित्यर्थः' इति ग. च. पुस्तकयोरधिकः पाठः ।

5 'ननु विभावादीनां प्रत्येकं कारणकार्यसहकारिरूपाणां रसं प्रति कथं कारणत्वमित्युच्यते ।' (ग. पु.)

6 'कार्यकारणसंचारिरूपा' (ख. व. पु.) 'कारणकार्य—' (च. छ. पु.)

ननु[1] तर्हि कथं रसास्वादे तेषामेकः प्रतिभास इत्युच्यते (च)

**" प्रतीयमानः प्रत्येकं प्रथमं हेतुरुच्यते**
**ततः सम्वलितः[2] सर्वो विभावादिः सचेतसाम्।**
**प्रपान[3]करसन्यायाच्चर्व्यमाणो रसो भवेत् ॥ १५ ॥** *

यथा खण्डमरीचादीनां सम्मेलनादपूर्व इव(ल्ट) कश्चिदास्वादः प्रपानकरसे संजायते[4]। विभावादिसम्मेलनादिहापि तथेत्यर्थः । ननु यदि विभावानुभावव्यभिचारिभिर्मिलितैरेव रसस्तत्र कथमेकस्य द्वयोर्वा सद्भावेपि[5] स्यादित्युच्यते।

**सद्भावश्चेद् विभावादेर्द्वयोरेकस्य वा भवेत्।**
**झटित्यन्यसमाक्षेपे (छ) तदा[6] दोषो न विद्यते ॥ १६ ॥**

अन्येषा[7]माक्षेपश्च प्रकरणादिवशात् यथा—

"[8]दीर्घाक्षं शरदिन्दुकान्तिवदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव।

---

(वि, छ) **झटित्यन्ये**ति—शीघ्रमन्यव्यञ्जके सतीत्यर्थः ।

(वि,ज) **दीर्घाक्षमि**ति—अग्निमित्रनाम्ना राज्ञा मालविकानामराजपुत्र्या रूप-

---

(लो, ल्ट) अपूर्व इव—तद् भिन्न इव ।

---

कार्यसंचारिरूपा अपि रसोद्बोधे रसाविर्भावे कारणानि एव । यद्यपि लौकिकव्यवहारात् रत्यादेः कारणानि विभावनाम्ना कार्याणि अनुभावनाम्ना सहकारीणि च (संचारि) व्यभिचारिनाम्ना व्यपदिश्यन्ते तथापि विभाववत् अनुभावः संचारिभावोपि रसास्वादं प्रति कारणानि भवन्ति ।

* **प्रतीयमान** इति—प्रथमं प्रतीयमानो विभावादिः प्रत्येकं रत्यादिं प्रति हेतुरुच्यते । ततः रसप्रतीतिवेलायां सम्वलितो मिलितः सर्वो विभावादिः प्रपानकरसवत् चर्व्यमाणः आस्वाद्यमानः सचेतसां सामाजिकानां रसो भवेत् । रसस्य चर्वणानन्य-

1 तदुक्तं ध्वनिकृता—'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वाद्यत्वं स्थायीभावो रसः स्मृतः॥' इत्यंशः, ननु, इत्यतः प्रागधिको दृश्यते(ग.घ.च.पु०)

2 'संमिलितः' इति (ग. पु०)।

3 'ण' इति (ग. पु०)।

4 प्रतीयते (च, पु०)

5 'अपि' इत्युत्तरं स इत्यधिक पाठः (ट. पु०,) रस इति (घ. पु०)।

6 तथेति (च, ज. पु०)।

7 'अन्यसमाक्षेपश्च' इति (ग. पु०)।

8 'वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः ।
धरणिरभिनवाङ्कराङ्करङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ॥

मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली
छन्दो नर्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः ॥ (ज, ए) *

अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूपविभावमात्रवर्णने[1] संचारिणामौत्सुक्यादीनामनुभावानाञ्च नयनविस्फारादीनामौचित्यादेवाक्षेपः । एवमन्याक्षेपेप्यूह्यम् । (ऐ)

अनुकार्यगतो रस इति वदतः प्रत्याह । (झ, ओ)

**पारिमित्याल्लौकिकत्वात् सान्तरायतया तथा ।**
**अनुकार्यस्य रत्यादेरुद्बोधो[2] न रसो भवेत् ॥१७॥ (ञ)**

---

वर्णनमिदम् । उत्तमनटीं नर्तयितुर्मनसो यथैवच्छन्द इच्छा तथैवास्या वपुः सृष्टम् (विधात्रा) तदेवाह—**दीर्घाक्षमि**ति—बाहू—अंसयोः स्वमूलयोर्नतौ । संक्षिप्तं नातिस्फारम् । निबिडौ-अन्योन्यसंसक्तौ उन्नतौ च स्तनौ यत्र तादृशं च उरः । प्रमृष्टे मार्जिते । पाणिमितः करतलेन परिमातुं शक्यः । जघनोत्तरभागः नितम्बः प्रशस्तः तद् युक्तं जघनम्, उदग्रा—उन्नता । **अत्रे**ति—अभिनयं वर्णयतः ।

**(वि, झ) अनुकार्ये**ति—नाट्येऽनुकार्यो रामादिरनुकारको नटः ।

**(वि, ञ) पारिमित्यादि**ति—सीतादिविषयरतेः रामादिमात्रनिष्ठत्वेन परिमितत्वादित्यर्थः । **लौकिकत्वादि**ति—तन्निष्ठरत्यादेस्तत्रैव दृष्टत्वादित्यर्थः । काव्यनाट्ययोस्तु तद्गतरत्याद्यभेदेन आरोपविषयस्य सामाजिकरत्यादेरलौकिकत्वमेव । **सान्तरे**ति—रामादिरत्यादेरित्यर्थः । तदभेदेनारोपविषयः सामाजिकरत्यादिरेव विभावादिनिष्ठस्वादनाख्यव्यापारजन्यास्वादविषयो रसः इत्यर्थः ।

---

**(लो, ए) दीर्घाक्षमि**ति । छन्दोऽभिप्रायः। सृष्टं विधात्रा इति शेषः । नर्तयिता नर्तकीषु दीर्घाक्षत्वाद्यभिनयेन दर्शयितुं शिक्षयति, मालविकायां सहजसौन्दर्यादेव तदस्तीति भावः ।

**(लो, ऐ) अन्याक्षेप** इति—**अन्यत्**—एकतमं द्वितयं वा ।

**(लो, ओ)** अनुकार्यो—रामादिः, अनुकर्ता—नटः पाठकश्च ।

---

त्वेपि काल्पनिकभेदमाश्रित्य चर्व्यमाण इति । यथा प्रपानके खण्डमरीचाद्यंशः न पार्थक्येनाऽनुभूयते, परं खण्डमरीचादीनां प्रत्येकरसातिरिक्तः कश्चिदपूर्वो रसः अनुभूयते तथा अत्रापि रसे विभावादिप्रत्येकविलक्षण एव आस्वाद इति भावः ।

---

आलम्बनोद्दीपनविभावमात्रवर्णनेपि प्रसीदेतिपदसामर्थ्यात् कटाक्षविक्षेपादीनामनुभावादीनां मुग्धे इत्यतो गर्वामर्षासूयादीनां च व्यभिचारिणामौचित्यादेवाक्षेपः इत्युदाहरणं (क. ख. पुस्तकयोः) ।

1 'नेऽपि' इति (ग. घ, पुस्तकयोः) ।

2 'रत्यादेस्तद्बोधो न रसो भवेत्' इति (च. पु०) ।

[1]सीतादिदर्शनादिजो[2] रामादिरत्याद्युद्बोधो हि परिमितो लौकिको नाट्यकाव्यदर्शनादेः सान्तरायश्च, तस्मात् कथं रसरूपतामियात्। रसस्यैतद्धर्मत्रितयविलक्षणधर्मकत्वात्। *

अनुगतकर्तृत्वं चास्य निरस्यति। (ट)

**शिक्षाभ्यासादि-मात्रेण राघवादेः स्वरूपता[3]।**
**दर्शयन् नर्तको नैव रसस्यास्वादको[4] भवेत्॥ १८॥ (ठ)**

किञ्च—

**काव्यार्थभावनेनायमपि सभ्यपदास्पदम् +॥ १९॥**

यदि पुनर्नटोपि काव्यार्थभावनया रामादिरूपतामात्मनो दर्शयेत् तदा सोपि सभ्यमध्य एव गण्यते। (औ)

---

(वि, ट) **अनुकर्तेति**—अनुकर्ता नट एव।

(वि,ठ) स यदा काव्यार्थभावकः स्यात्तदा सोपि सामाजिको भवेदित्याह—**किंचेति**।

(वि,ड) यद्यप्युक्तरीत्या रसस्य साक्षात् क्रियमाणत्वं कार्यत्वं कादाचित्कत्वेन भविष्यद्वर्तमानत्वं सविकल्पकज्ञानविषयत्वं तज्-ज्ञानस्य साक्षात्काररूपत्वं च तथापि तस्य वैलक्षण्यं साधयितुं साक्षात् क्रियमाणघटादितोऽपि वैलक्षण्यसाधनेन कौतुकादसाक्षात् क्रियमाणत्वं कारणविशेषकार्यत्वस्य केनचिदुक्तस्य दूषणेन कौतुकात् सामान्यतोऽकार्यत्वमेवमभविष्यत्वादिकमपि कौतुकाद् वक्तुं प्रथमं घटादिसाधारण-

---

(लो, औ) सभ्यमध्य एव गण्यते। एतावता सभ्यनिष्ठ एव रसः इत्यर्थः।

---

* **एतद् धर्मत्रितयेति**—एतद् धर्मत्रितयात् (परिमितत्वलौकिकत्वसान्तरायत्वरूपधर्मत्रयात्) विलक्षणा विपरीता धर्मा यस्य तस्य भावः तत्त्वात्। रसस्तु अखण्डः—अलौकिकः, निरन्तरायश्च इति प्राक् प्रतिपादितम्। अतः रसस्य विरुद्धधर्म्मवत्त्वात् नायं रसपदवाच्यः।

+ सभ्यपदास्पदं-रसस्याऽऽस्वादको भवेत्।

1 'अनुकार्यो रामादिः, तद्गतो रत्यादिना परिमितः, न अलौकिकश्च, कालान्तरभूतत्वात् सान्तरश्च। स कथमपरिमितालौकिकानुभूयमानो रसतां गच्छेत्। इत्यधिकपाठानन्तरं 'सीतादी'त्यादि (ग. घ)।

2 'दित' इति च. पु०।

3 'सरूपताम्' इति (ग. घ. पु०)।

4 'रसस्य स्वादक' इति (च. पु०)।

**नायं ज्ञाप्यः स्वसत्तायां प्रतीत्यव्यभिचारतः ॥ २० ॥**

( ड, अ )

योयं ज्ञाप्यो घटादिः स सन्नपि कदाचिदज्ञातो भवति नह्ययं तथा, प्रतीतिमन्तरेणाभावात् ।

**यस्मादेष[1] विभावादिसमूहालम्बनात्मकः ॥ २१ ॥**

**तस्मान्न कार्यः ( ढ )**

यदि रसः कार्यः स्यात् तदा विभावादिज्ञानकारणक एव स्यात् ( ण )

---

साक्षात्कारविषयत्वमाह—**नायं ज्ञाप्ये**ति—स्वार्थककारितान्तत्वेन ( णिजन्तत्वेन ) नायं ज्ञेय इत्यर्थः । ज्ञाप्यत्व–ज्ञेयत्वयोः समनियतत्वात् यथाश्रुतमेव वा । अज्ञेयत्वं चात्र घटादिसाधारणेतरसाक्षात्कारविषयत्वम् । ज्ञेयत्वस्य केवलान्वयित्वेन तदभावासम्भवात् । तत्र हेतुमाह—**स्वसत्तायामि**ति । प्रतीत्यव्यभिचारतः । साक्षात्कारं विना असत्त्वात् साक्षात्कारदशायामेव रसः । अन्यदा तु रत्यादिरेव । घटादिस्त्वसाक्षात्कारदशायामपि घटादिरित्यतस्तद्वैलक्षण्यम् । साक्षात्कारहेतुसन्निकर्षार्थं पूर्वसत्त्वस्यावश्यमेवापेक्षणीयत्वात् । एतावतैव सामान्यतोऽज्ञेयत्वमेव अग्रे कौतुकाद् व्यक्तीकरिष्यति ।

**(वि,ढ)** हेतुविशेषकार्यत्वं रसस्य ये वदन्ति तन्मतं निरस्यति—**यस्मादेष** इत्यादि **तस्मान्न कार्य** इत्यन्तेन । अयमर्थः—'प्रपानकरसन्यायाच्चर्व्यमाणो रसो भवेदित्युक्त्या विभावादिरत्यादिसमूहालम्बनात्मको रस इत्युक्तम् । तच्च समूहालम्बनं स्वादनाख्यव्यापारजन्यम् । केचित्तु तत्समकालोत्पन्नं व्यञ्जनयापि तादृशं समूहालम्बनानन्तरं जायते, तत्कार्य एव रस इत्याहुः, तन्निरस्यति—**यस्मादेष** इति । एष रसो यस्मात् स्वादनाख्यव्यापाराधीनसमूहालम्बनात्मकः, अतो न कार्यः, न समूहालम्बनकार्यः स्वस्य स्वकार्यत्वात् स्वकालोत्पत्तिकस्य व्यञ्जनाधीनसमूहालम्बनान्तरस्याभावाच्चेति भावः । तत्र स्वस्य स्वकार्यत्वासम्भवस्य स्फुटत्वात् ।

**( वि, ण )** 'स्वसमकालोत्पत्तिकसमूहालम्बनानन्तरकार्यत्वासम्भवं व्याचष्टे—**यदि रसः कार्यः स्यादि**ति । यदि समूहालम्बनकार्यः स्यादित्यर्थः । विभावादिज्ञानकारणको विभावादिसमूहालम्बनज्ञानकारणकः स्यादित्यर्थः । प्रत्येकं विभावादिज्ञानकारणकत्वे त्विष्टापत्तिरेव । "प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते" इत्यनेन प्रत्येकस्य हेतुत्वोक्त्या तत्कार्यत्वे विप्रतिपत्त्यभावात् ।

---

**(लो ,अ ) नायं ज्ञाप्य** इति—अयं रसः सत्तायां सद्भावे प्रतीतिमन्तरेणाभावात् । असंविदितसत्त्वे च प्रमाणाभावात् ।

---

1 'व' इति (क. ख. पु०) ।

ततश्च रसप्रतीतिकाले विभावादयो न प्रतीयेरन् ( त ) कारणज्ञानतत्कार्यज्ञानयो[1]र्युगपददर्शनात् ( थ ) नहि चन्दनस्पर्शज्ञानं तज्जन्यसुखज्ञानं चैकदा सम्भवति ( द ) रसस्य च विभावादिसमूहालम्बनात्मकतयैव प्रतीतेर्न विभावादिज्ञानकारणकत्वमित्यभिप्रायः ( ध, आ)

**नो नित्यः पूर्वसम्वेदनोज्झितः ।**
**असंवेदनकाले हि न भावोप्यस्य विद्यते ॥ २२ ॥ ( न )**

**न खलु नित्यस्य वस्तुनोऽसंवेदनकालेऽसम्भवः ।**

---

**(वि, त)** ननु तादृशसमूहालम्बनकारणत्वे को दोषः इत्याह—**ततश्चे**ति । रसप्रतीतिकाले, स्वादनाख्यव्यापारजन्यविभावादिसमूहालम्बनात्मकरसप्रतीत्युत्पत्तिकाले विभावादयो न प्रतीयेरन्; तत्कालोत्पन्नप्रतीतिविषयाः स्युरित्यर्थः ।

**(वि, थ)** कारणज्ञानस्य स्थितिः कार्यज्ञानस्योत्पत्तिरिति तु न सम्भवत्येव । कार्यकारणयोरुत्पत्तियौगपद्यस्यैवाभावात् । तदाह—**ज्ञानतत्कार्यज्ञानयो**रिति । अत्र ज्ञानेति प्रकृताभिप्रायेणैव । कारणकार्यमात्रयोरेव युगपदुत्पत्त्यभावात् । न च पूर्वोत्पन्नमेव व्यञ्जनाधीनसमूहालम्बनमस्त्विति वाच्यम् । स्वादनाख्यव्यापाराधीनरसात्मकसमूहालम्बनातिरिक्तसमूहालम्बनस्यानुभवात् , तत्स्वीकारवैफल्याच्च ।

**(वि, द)** कारणकार्यज्ञानयोर्युगपदुत्पत्त्यसंभवं दर्शयति—**नहि चन्दने**ति ।

**(वि, ध)** तस्मात् रसस्य समूहालम्बनात्मकत्वमेव; ननु समूहालम्बनजन्यत्वमित्युपसंहरति—**रसस्ये**ति । समूहालम्बनात्मकतयैव इत्येवकारात् समूहालम्बनजन्यत्वव्यवच्छेदः । तदेवाह—**न विभावादी**ति । ज्ञानमत्रापि समूहालम्बनम् । एवं रसस्य समूहालम्बनकार्यत्वमेव खण्डितं ननु कार्यत्वम् । एतावतैव कार्यत्वसामान्याभावमग्रे कौतुकाद् वक्ष्यति ।

**( वि, न )** नित्यत्वाभावः स्पष्ट एव, तमाह—**नो नित्य** इति । पूर्वसंवेदनं, संवेदनात् पूर्वमुज्झितोऽसन्नित्यर्थः । तदेव दर्शयति—**असंवेदनकाल** इति ।

---

**( लो, अ ) रसस्ये**ति—नहि विभावादिज्ञानकारणकमित्यनन्तरं ततश्चानुपलभ्यमानकारणान्तरस्य रसस्य न कार्यत्वमिति भावः ।

**(लो, आ ) नो नित्य** इति—नित्यत्वाभावे हेतुमाह—

**पूर्वसंवेदनोज्झित** इति । पूर्वसम्वेदनाभावादित्यर्थः । ननु पूर्वसंवेदनाभावान्नित्यत्वाभावे इतरेषामपि नित्यवस्तूनामभावप्रसङ्ग इत्यत आह—**असम्वेदने**ति । अस्य रसस्य ।

---

1 'ज्ञानादीनाम्' ( ग. पु. )

**नापि भविष्यन् (इ) [1]साक्षादानन्दमयस्वप्रकाशरूपत्वात् ।**
**कार्यज्ञाप्यविलक्षणभावान्नो[2] वर्तमानोपि ॥ २३ ॥ ( प )**
**विभावादिपरामर्शविषयत्वात् सचेतसाम् ।**
**परानन्दमयत्वेन सम्वेद्यत्वादपि[3] स्फुटम्**
**न निर्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते ॥ २४ ॥ (फ, ई)** *

---

**( वि, प )** नापि भविष्यन्निति यद्यपि संवेदनात् पूर्वम् असत्त्वेनैव भविष्यत्वं दुरपह्नवम् । तथापि भविष्यत्पदार्थान्तरस्य साक्षादानन्दमयप्रकाशत्वस्वरूपाभावात् तद्वै-लक्षण्यमेव भविष्यत्वाभावः कौतुकादुक्तः ।

**( वि, फ)** वर्तमानत्वाभावमपि कौतुकादाह—**कार्यज्ञाप्ये**ति । यद्यपि घटादि-साधारणज्ञाप्यत्वस्यैव समूहालम्बनकार्यत्वस्यैव चाभावः प्राग् दर्शितः, तथापि ताव-तैव कार्यत्वज्ञाप्यत्वाभावं कौतुकादारोप्यैवमुक्तम् । तथा च कार्यज्ञाप्यभिन्नस्याऽलीकत्वान्न वर्तमान इत्यर्थः । स्वप्रकाशरूपस्य स्वमेव ग्राहकं, तत्तु न निर्विकल्पकमित्याह—**विभा-वादी**ति । तत्परामर्शस्तत्समूहालम्बनं; तद्विषयत्वात् स्वेनैव स्वस्य विषयीकरणात् । तत् प्रधानत्वादिति क्वचित् पाठे तत्परामर्शः प्रत्येकं तज् ज्ञानं, तत् प्रधानत्वात् तज्-जन्यत्वादित्यर्थः । उभयथापि निर्विकल्पकत्वाभाव एव । आद्ये विभावादिसमूहालम्ब-नस्य सविकल्पकत्वात् । अन्त्ये तु ज्ञानजन्यत्वेन निर्विकल्पकत्वाभावात् । ज्ञानजन्यज्ञा-नस्यैव निर्विकल्पकत्वात् । हेत्वन्तरमाह—**परानन्दे**ति । प्रकारप्रदर्शनात् सप्रकारत्वं प्रदर्शितम् । तथा च न निर्विकल्पकं निष्प्रकारकज्ञानस्यैव तथात्वात् ।

---

**(लो, इ)** नापि भविष्यन्नित्याह—साक्षादनुभूयमानस्य हि कथं भविष्यत्त्वम् । यस्य खलु वस्तुनो भविष्यत्त्वं सहजो धर्मस्तत् सदा भविष्यदेवेति भावः । कार्यज्ञाप्यविलक्षण-भावात् समनन्तरोक्तन्यायसिद्धावित्यर्थः ।

**(लो, ई)** निर्विकल्पकं ज्ञानम्—अस्ति ह्यालोचनमात्रप्रथमं निर्विकल्पकं ज्ञानम् । अमुकासदृशं ज्ञानं शुद्धवस्तुजमित्युक्तप्रकारं, तस्य ग्राहकमित्युपचारप्रयोगः । स एव रसो निर्विकल्पकज्ञानत्वेन गृह्यमाणो न भवतीत्यर्थः । तथा निर्विकल्पकस्य ज्ञान-विषयोपीति । तत्र पक्षे यस्य ग्राहकत्वमिष्यते इत्यत्र नोपचारः ।

---

* ज्ञानं तावत् निर्विकल्पकं सविकल्पकं चेति द्विविधम्, तत्र नामरूपजात्यादिविशेष-शून्यं ज्ञानं निर्विकल्पकम्, नामरूपजात्यादियुक्तं ज्ञानं सविकल्पकम् । तयोर्मध्ये रसः केन गृह्यते इत्याशङ्क्य नान्यतरेण गृह्यते इत्याह—**विभावादी**ति । विभावादीनां

1 'आनन्दमयस्वप्रकाश' ( इति च. घ. पु. )

2 'भावाच्च न' ( इति क. ख. पु. )

3 'दविस्फुटम्' ( इति प. फ )

**तथाभिलाप[1]-संसर्गयोग्यत्व-विरहान्नच**
**सविकल्पकसंवेद्यः।** (ब)
[2]**सविकल्पकज्ञानसंवेद्यानां हि वचनप्रयोगयोग्यता ननु रसस्य। तथा** (भ)
**साक्षात्कारतया न च।**
**परोक्षस्तत्प्रकाशो नापरोक्षः शब्द सम्भवात्॥२६॥** (म, ऋ)

---

**(वि, ब)** सविकल्पकसंवेद्यत्वाभावमपि तस्य कौतुकादाह—**तथाभिलापे**ति। यद्यपि तद्ग्राहकस्य निर्विकल्पकत्वाभावयुक्तिप्रदर्शनेनैव सविकल्पकसंवेद्यत्वं सिद्धं तथापि सविकल्पकसंवेद्यान्तरतो वैलक्षण्येन तदवेद्यत्वं कौतुकादुक्तम्। वैलक्षण्यमेवाह—**तथाभिलापे**ति। तत्काव्यस्थशब्देन तस्याऽभिलप्यमानत्वाभावादित्यर्थः। तस्य विभावाद्यभिधानद्वारेणैव तस्य ज्ञेयत्वम्, नतु काव्यस्थशब्देन। प्रत्युत तस्य तत्काव्यस्य शब्दवाच्यत्वे स्वशब्दवाच्यत्वं दोष एव वक्ष्यते। अत एव काव्यप्रकाशकृताप्युक्तं, 'रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्य' इति। अयं रसवानित्यादितत्काव्यस्थेन अशब्देन तु वाच्यं, सविकल्पकवेद्यं पदार्थान्तरं तत्काव्यस्थशब्देनैव वाच्यमिति ततो वैलक्षण्यमिति वचनम्।

**(वि, भ)** प्रयोगयोग्यता तत्काव्यस्थशब्देनेति शेषः।

**(वि, म)** तत्प्रकाशस्य परोक्षत्वं नास्तीत्याह—**साक्षात्कारतये**ति। स्पष्टमिदम्। साक्षात्कारानन्तरवैलक्षण्यप्रतिपादनाय साक्षात्काररूपस्यापि तत्प्रकाशस्य साक्षात्कारत्वाभावमपि कौतुकादाह—**नाऽपरोक्ष** इति। न साक्षात्कार इत्यर्थः। तत्र हेतुमाह—**शब्दसंभवादि**ति। शब्दसंभवात्-शाब्दत्वादित्यर्थः।

---

**(लो, ऋ) तथाभिलापे**ति—अत्रापि पूर्ववत् रसो न सविकल्पकरूप इति। नच तद्विषयोपीतिव्याख्येयम्। सविकल्पकस्वरूपं च—"अतः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया। बुद्ध्याऽवसीयते सापि प्रत्यक्षत्वेन सम्मता।" प्रत्यक्षमत्र प्रकरणात् सविकल्पकम्। साविकल्पकत्वेन सम्मतेत्युक्तप्रकारम्। अतः परमित्यत्र इदमानुपूर्वोक्तनिर्विकल्पकपरामर्शः शब्दसंभवात् शाब्दज्ञानम् परोक्षमिति भावः। तत् कथयति—तत्त्वं स्वरूपं, पूर्वं न श्रुतो न दृष्टश्चोक्तस्वरूपो निरूपणप्रकारो यस्य रसस्येत्यर्थः।

---

परामर्शः स्मरणम् एव विषया यस्य तत्त्वात्। निर्विकल्पे हि ज्ञानान्तरजन्यत्वम्। इन्द्रियसम्बन्धमात्रग्रहणं च नास्ति, तस्य निष्प्रकारकत्वात्। रसस्तु विभावादिभिर्ज्ञायते। अतो रसो निर्विकल्पेन ज्ञानेन न गृह्यते।

1 'पः' इति (ज. पु०)।
2 सविकल्पकेत्याद्यंशो (ग. घ. पुस्तकयोर्नास्ति।

तत् कथय कीदृगस्य तत्त्वम्[1] एवमश्रुतादृष्टपूर्वनिरूपणप्रकारस्येत्याह—

**तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम् ॥२७॥ ( य, ऋ )**

तत् किं पुनः प्रमाणं तस्य सद्भावे इत्याह—

**प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतम् ॥ २८॥ ( र, ऌ )**

चर्वणा आस्वादनम्; तच्च "स्वादः काव्यार्थसंभे[2]दादात्मानन्दसमुद्भवः" इत्युक्तप्रकारम् । (ल) ननु यदि रसो न कार्यस्तत्कथं महर्षिणा "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति लक्षणं कृतमित्युच्यते ।

---

**(वि, य)** इत्थं किञ्चित् वस्तुतः किञ्चिच्च कौतुकाद् वैलक्षण्यमुक्त्वा कीदृशं तादृशविलक्षणं वस्तु तत् इति पृच्छति: तत् कथयति । तस्यादृष्टचरत्वात् तन्निरूपणस्यापि अदृष्टचरत्वं भवतीत्याह—**अदृष्टनिरूपणे**ति ।

विलक्षणं दर्शयति—**तस्मादलौकिक** इति । लोकदृष्टसुखादिपदार्थविलक्षण इत्यर्थः । स चान्यलोकैरज्ञेयः ।

**( वि, र )** तत्संवेद्यत्वे एव किं प्रमाणमित्यत्राह—**प्रमाणमि**ति । तदीयसाक्षात्कार एव प्रमाणमित्यर्थः । स्वप्रकाशत्वेन साक्षात्कार्यसाक्षात्कारयोरभेदादिदं विदुषां मतमित्यर्थः ।

**( वि, ल ) स्वादः काव्यार्थे**ति—स्वादः—साक्षात्कारः । काव्यार्थसम्भेदात् काव्यस्य वाच्य इत्यर्थः । लक्ष्यव्यङ्ग्यवस्तूनां सम्भेदात् ज्ञानात् आत्मनो रसस्यानन्दरूपेण समुद्भवः । कृदभिहितभावत्वात् समुद्भूत आनन्द इत्यर्थः ।

**( वि, व )** रामादिरत्यादेः सामाजिकरत्यादेर्वा उद्दीपनविभावानुभावव्यभिचारिजन्यत्वं नास्त्येव, ततस्तदात्मकस्य रसस्य तत्साक्षात्कारांशमात्रजन्यत्वं सिद्धान्तयितुं कौतुकोक्तमपि तस्याऽकार्यत्वमुक्त्वा आशङ्कते—**ननु यदि रसो न कार्य** इति । वस्तु-

---

**(लो, ऋ)** अलौकिको लौकिकवस्तुविलक्षणः । यदाह एतन्निरूपणप्रस्ताव एव काव्यप्रकाशकारः— अलौकिकसिद्धेर्भूषणं नतु दूषणम् । न खल्वदर्शनमात्रेणाऽनुभूयमानवस्तुस्वरूपापह्नवः शक्यक्रिय एवेति भावः । कथमीदृशोऽसावस्माभिरनुभूयत इत्याह—**वेद्य** इति । प्राचीनवासनासम्वलिता विद्यानिपुणतोपस्कृता बुद्धिरत्र हृदयम् । तद्वद्भिः सहृदयैः; नतु वैयाकरणमीमांसकदर्दुरकैर्युष्माभिरिति भावः ।

---

1 'तत्त्वमश्रुता' इति (ग. पु०) ।
'तत्त्वं दृष्टपूर्वनिरू' इति (छ. पु०) ।

2 'संवेदादात्मा' (घ. पु.)

**निष्पत्त्या [1]चर्वणस्यास्य निष्पत्तिरुपचारतः ॥ २९ ॥**

**यद्यपि [2]स्वाभिन्नतया चर्वणस्यापि न कार्यत्वं (व) तथापि तस्य कादाचित्कतया [3]उपचरितेन कार्यत्वेन कार्यत्वमुपचर्यते । (श, ए)**

**अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे ॥ ३० ॥**

---

तस्तु समूहालम्बनाकार्यस्यैव उक्तत्वात् निष्पत्तिरुपचारत इति । विभावादितो निष्पत्तिरित्यर्थः । स्वकारणाधीननिष्पत्तिकस्य रत्यादेर्निष्पत्तेर्वास्तवत्वेन निष्पत्तेरुपचाराभावात् । इत्थं विभावादितश्चर्वणाया निष्पत्तिरेव वास्तविकरत्याद्यंशस्य ततो निष्पत्तिरुपचरितेत्युक्त्या चर्वणांशस्यापि निष्पत्तिरुपचरितैवेति वक्तुमाह—**यद्यपी**ति । अयमर्थः—रत्यादयस्तावदुद्दीपनविभावानुभावव्यभिचारिणामकार्यमित्युक्तमेव । अत एव रत्यादयश्चर्वणात्मकसाक्षात्काररूपतया परिणमन्तीति सिद्धान्तितम् । ततश्च रत्यादिरूपरसाभिन्न एव चर्वणात्मकः साक्षात्कारस्तथा रत्यादेः विभावाद्यकार्यतयैव चर्वणस्यापि विभावाद्यकार्यत्वमर्थसिद्धमिति यद्यपि रत्यादेरर्थः ।

**(वि, श)** समाधाने **तथापी**ति । परिणामरसास्वादचर्वणादिभावाद्यभिन्नतया निष्पन्ना । सा विभावादिज्ञानात् पूर्वं नास्तीति । किन्तु विभावादिज्ञानोत्तरमेव निष्पन्नेत्येवं कादाचित्कतया उपचरितेन कार्यत्वेन कार्यत्वमुपचर्यते इत्यर्थ । नचैवमन्यथासिद्धविभावादिज्ञानोत्तरभावित्वेन तत्कार्यत्वं चर्वणायाम् अवास्तवमेव तत् कथमुपचार इति वाच्यम् । रत्याद्यभिन्नतया कार्यत्वस्यैव वास्तवत्वात् । शुद्धायास्तस्या अवास्तवत्वमित्यभिप्रायात् ।

**(वि, ष)** "तथाभिलापसंसर्गयोग्यत्वविरहान्नचे"त्यादिना यत्तत् काव्यस्थशब्दावाच्यत्वमुक्तं तदुपात्तमग्रे करिष्यत इत्याह—**अवाच्यत्वादिकमि**ति । आदिशब्दादलक्ष्यत्वादि इत्यत्र आदिपदादननुमेयत्वपरिग्रहः ।

---

**(लो, लृ)** अत्रैवमुक्तरूपे रसे स्वस्याश्चर्वणाया एवाऽभिन्ने ! एवं च सहृदयानुभव एवात्र प्रमाणमिति पर्यवस्यति । तथाच नात्माश्रयदोषः ।

**(लो, ए) यद्यपी**त्यादि—अयमर्थः समनन्तरोक्तप्रकारेण रसाभिन्ने चर्वणे कादाचित्कत्वाद् वस्तुनि व्याभिचारेण तस्य कार्यत्वं कादाचित्कत्वादेवोपचर्यते । तेन चर्वणस्यापरिचितेन कार्यत्वेन तदभिन्ने रसेपि कार्यत्वमुपचारादिति भावः । अस्य कादाचित्कत्वेपि न कार्यत्वमिति समनन्तरमेवोक्तम् । व्यञ्जनानिरूपणे पञ्चमपरिच्छेदे ।

---

1 'चर्वणस्यैव' (घ. पु०) ।

2 'रसाभिन्नतया' (क. ग. च. ट. पु०) ।

3 'उपचरितेन कार्यत्वेन' इत्यंशो नास्ति (ङ. ञ. ठ. पु०) ।

[1]तस्य रसस्य आदिशब्दादलक्ष्यत्वादि। (ष) ननु[2] यदि मिलिता रत्यादयो रसास्तत्कथमस्य स्वप्रकाशत्वं कथं वा अखण्डत्वमित्याह ( स, ऐ )

**रत्यादि[3] ज्ञानतादात्म्यादेव यस्माद्रसो भवेत्।**
**[4]अतोस्य स्वप्रकाशत्वमखण्डत्वं च सिद्ध्यति ॥३१॥** (ह, ओ)

यदि* रत्यादिकं प्रकाशशरीरादतिरिक्तं स्यात् तदैवास्य स्वप्रकाशत्वं न सिद्ध्येत् '+ नच तथा; तादात्म्याङ्गीकारात् । यदुक्तम्—यद्यपि रसानन्यतया चर्वणा न कार्या तथापि कादाचित्कतया कार्यत्वमुपकल्प्य तदेकात्मन्यनादिवासनापरिणतिरूपे रत्यादिभावेपि व्यवहारः" इति । सुखादितादात्म्याङ्गीकारे चास्माकीं सिद्धान्तशय्यामधिशय्य दिव्यं वर्षसहस्रं प्रमोदनिद्रामुपेयाः"इति च* । [5]अभिन्नोपि स प्रमात्रा वासनोपनीतरत्यादितादा-

---

**( स ) मिलिता** इति । विभावादिसाहित्येन समूहालम्बनविषया इत्यर्थः । **तत् कथमस्य स्वप्रकाशत्वमि**ति—रत्यादेर्ज्ञानरूपत्वाभावात् ज्ञानस्यैव स्वप्रकाशत्वात् । मिलनकथनं च स्वरूपाख्यानमात्रम् एकैकत्राप्येवमाशङ्कासम्भवात् ।

**(वि, ह) ज्ञानतादात्म्यादि**ति । ज्ञानरूपतया परिणामादित्यर्थः ।

**(वि, क)** यद्यपीति उक्ताशङ्कासमाधानयोः प्राक्-कृतयोः सम्वादमाह— **यदुक्तमि**ति । प्रागेव कृतव्याख्यानमिदम् । **अनादिवासने**ति—अनादिवासना

---

**( लो, ऐ ) ननु यदी**ति । कथं स्वप्रकाशत्वं रत्यादीनां जडत्वादित्यर्थः ।

**(लो, ओ) रत्यादिरि**ति—अस्य रत्याद्यंशस्य यस्याहुः"आत्मभूतसुखाकार-प्रकाशप्रतिमानतः । ज्ञानाकारावलम्बित्वे सिद्धा स्यात् स्वप्रकाशता' इति । अस्यार्थः—ज्ञानाकारावलम्बित्वे नात्मभूतः सुखाकारोऽपि प्रकाशते । तस्य प्रतिमानतः सत्सादृश्यात् इत्याद्यंशोपि स्वप्रकाश इति । ननु यदि चैतन्यस्य सज्ज्ञानत्वेन जडस्य स्वप्रकाशता तदा प्रमातृभावमापन्नस्याऽन्तःकरणस्यापि स्वप्रकाशत्वं स्यादिति चेन्नैवम् । तत्र हि त्रिगुणात्मके मनसि सत्त्वांशस्य रजस्तमोभ्यामस्पृष्टत्वम् । येनात्मानन्दस्वप्रकाशकारा वृत्तिरुत्पद्यते । नच तयोः शवलत्वमपि तात्त्विकं, कुतो तादात्म्यमिति, 'किमार्द्रकवणिजां नो वहित्रचिन्तया' ।

---

+ प्रकाशशरीरात्—ज्ञानस्वरूपात् । अतिरिक्तं-भिन्नम् ।

1 तस्येत्यादि त्वाद्यन्तः पाठः (ट. ण. पु. नास्ति) ।

2 नन्विति क. पु. नास्ति ।

3 रत्यादिज्ञानमिति समस्तं पदं (ग. घ. पु०) ।

4 'तेति' (ख. पु०) ।

* तारकाचिह्नान्तर्गतः पाठः (ज. ट. ड पु. नास्ति) ।

5 तदुक्तं मुनिनेत्यादिः (क. ग. ट. पु०) ।

त्म्येन गोचरीकृतः " इति च। ( क, औ ) ज्ञानस्य स्वप्रकाशत्वमनङ्गीकुर्वतामुपरि वेदान्तिभिरेव पातनीयो दण्डः । तादात्म्यादेव अस्याखण्डत्वम् । रत्यादयो हि प्रथममेकैकशः प्रतीयमानाः सर्वेऽप्येकीभूताः स्फुरन्त एव रसतामापद्यन्ते । तदुक्तम्—

" विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः ।
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम् ॥ इति ( ख, अ )
परमार्थतस्त्वखण्ड एवायं वेदान्तप्रसिद्धब्रह्मतत्त्ववद् वेदितव्यः"इति ( ग, आ )

अथ* के ते विभावानुभावव्यभिचारिणः इत्यपेक्षायां विभावमाह—

**रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः ॥ ३२॥ (इ)**

ये हि लोके रामादिगतरतिहा[1]सादीनामुद्बोधकारणानि सीतादयस्त एव

---

प्राक्तनी तत्त्वादिशून्या । तया रसादिरूपा परिणतिर्यस्य तादृशरूपे रत्यादिभागे विभावादिकार्यत्वव्यवहारः इत्यर्थः । द्वितीय इति चेति पर्यन्तं सम्वादवाक्यत्वं बोध्यम् । तत्राभिन्नोपीत्यादिकं स्वप्रकाशनप्रदर्शनम् । रत्यादय इत्यादिपदात् विभावादिपरिग्रहः । तत्र विभावादेः शब्दशक्त्यैव प्रतीतिः ।
रत्यादेस्तु ततो व्यञ्जनया समूहालम्बनरूपेति पूर्वापरविरोधेन बोध्यम् ।

( वि, ख ) **सात्त्विका व्यभिचारिण** इति । व्यभिचारिण एव सात्त्विका इत्यभेदेनाऽन्वयः ।

( वि, ग ) अखण्डताप्राप्तौ विमतिं निरस्यति—**परमार्थतस्त्व**ति । ननु पूर्वोक्तपरिच्छेदेन परमार्थताप्रदर्शनम् ।

**ब्रह्मतत्त्ववदि**ति—खण्डाखण्डनानापदार्थानाम् अद्वैतभावनया अखण्डस्वरूपत्वात् ब्रह्मतत्त्वस्य इतिच इत्यन्तं सम्वादवाक्यम् ।

---

**(लो, औ)** तादात्म्यानङ्गीकारे प्राचीनाचार्याणामिति शेषः । यद्यपीत्यादौ तदेकात्मनीति पदं तादात्म्यसूचकम् । गोचरीकृत इति चिदानन्दमयोयं पुरुष इतिवदुपचारः ।

**(लो,अ)** अखण्डत्वे सम्मतिं दर्शयति—**तदुक्त**मित्यादि । विभावा इत्यादि कारिकायां रत्यादिप्रकाशसुखचमत्कारा अकण्ठोक्ता अपि प्रकरणादवसेयाः ।

**(लो, इ) रत्यादी**ति—अनादिवासनान्तर्लीनस्य रत्यादेः प्रकाशकाः ।

1 तारकाचिह्नितः पाठो न. घ. पु. दृश्यते । किन्तु, 'ननु विभावादिभ्यो रस इत्युक्तं के ते विभावाद्या इत्याह—बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयात्मकाः । अनेन यस्मात्तेनेयं विभाव इति कीर्तितः' इत्येवं पाठः दृश्यते ।

2 'रत्याद्युद्बोध' (ख. च. पु० ) ।

काव्ये नाट्ये निवेशिताः सन्तो " विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः " इति विभावा उच्यन्ते । ( घ )

तदुक्तं भर्तृहरिणा—

" शब्दोपहितरूपांस्तान्[1] बुद्धेर्विषयतां गतान् ।
प्रत्यक्षानिव[2] कंसादीन् साधनत्वेन मन्यते ॥' इति । ( ङ, ई )

तद्भेदावाह—

**आलम्बनोद्दीपनाख्यौ तस्य [3]भेदावुभौ स्मृतौ ॥ ३३ ॥**

स्पष्टम् । तत्र—

**आलम्बनं नायकादिस्तमालम्ब्य रसोदयात्[4] ॥ ३४ ॥**

आदिशब्दात् नायिकाप्रतिनायिकादयः ।

---

**(वि, घ) विभाव्यन्ते** इति । रसप्रतीत्यर्थं विशेषेण भाव्यन्त इत्यर्थः । ननु प्रतीत्यर्थं कथं विशेषेण भाव्यन्ते तत्प्रतिपादनसामर्थ्य एव तथात्वौचित्यादित्यत आह— **आस्वादाङ्कुरे**ति । यत एभिर्विभावादिभिः सामाजिकरत्यादिभावा आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते, अतो विशेषेण भाव्यन्त इत्यर्थः । अतो विभावा उच्यन्ते इत्यर्थः सामाजिकरत्यादिभावानां तथात्वकरणं रामादिरत्यादीनां च तत्रारोपात् बोध्यम् । स चारोपो वासनासहकृतैर्विभावादिभिर्व्यञ्जनयेति बोध्यम् । अत एवोक्तं—वासनोपनीतरत्यादितादात्म्येनेति । अस्या परिभाषाया योगारूढत्वादेतद्योगार्थस्यानुभावादौ सत्त्वेपि न तत्र प्रयोग इति प्रागप्युक्तम् ।

**(वि, ङ) शब्दोपहिते**ति—तान् प्रसिद्धान् कंसादीन् श्रीकृष्णादिक्रोधस्य रौद्ररसस्थायिभावस्यालम्बनविभावान् शब्दोपहितरूपान् शब्दोपस्थाप्यान् प्रत्यक्षानिव सामाजिका मन्यन्ते । मन्यत इति पाठे तु सामाजिकः । केन हेतुनेत्यत्राह— **साधनत्वेने**ति । शब्दोपहितत्वरूपेण प्रत्यक्षसाधनत्वेनेत्यर्थः । इदमेव विशेषणभावनं सम्वादेन प्रदर्शितम् ।

**(वि, च) आलम्बनं नायकादिरि**ति नायिकाशृङ्गारे बोध्यम् । **नायिका-**

---

**(लो, ई) शब्दे**ति—शब्दोपहितरूपान् काव्यरूपशब्दोपाधिना श्रवणात् तद्बुद्धिविषयतामापन्नानां साधनत्वेन सोत्साहाद्युद्बोधे मन्यन्ते सभ्या इति शेषः ।

---

1 'रूपांश्च' इति (च. छ. पु०)।

2 'प्रत्यक्षमिव' (ग. घ. पु०) ।

3 भावा (ङ. पु०)।

4 रसोद्गमात् (क. ख. पु०) ।

अत्र यो[1] यस्य रसस्य विभावः स तत्स्वरूपवर्णने वक्ष्यते (च, उ)
तत्र नायकः—(छ)

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।
[2]दक्षोऽ[3]नुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता ॥ ३५ ॥ ×

दक्षः क्षिप्रकारी, शीलं—सद्वृत्तम्। एवमादिगुणसंपन्नो नेता नायको भवति।
तद् भेदानाह —

धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च।
धीरप्रशान्त इत्ययमुक्तः प्रथमं[4] चतुर्भेदः ॥ ३६ ॥ (ज)

स्पष्टम्।

तत्र धीरोदात्तः—

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान् (ऊ) निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥ ३७ ॥

अविकत्थनोऽनात्मश्लाघाकरः + महासत्त्वो—हर्षशोकाद्यनभिभूतः निगूढमानो विनयच्छन्नगर्वः*। दृढव्रतः—अङ्गीकृतनिर्वाहकः। यथा—रामयुधिष्ठिरादिः।

**प्रतिनायकादय** इति नायकश्शृङ्गारे बोध्यम्। प्रतिनायिका चोपनायिका, सा च शृङ्गाराभासे। एवं नायिकाशृङ्गाराभासे उपनायकोऽपि बोध्यः।

**(वि, छ)** तत्र नायको—नायकलक्षणमाहेति शेषः।

**(वि, ज) प्रथमं चतुर्भेद** इति—पश्चात्तु धीरोदात्तादीनाम् अपि दक्षिणधृष्टत्वादिभेदस्य वक्ष्यमाणत्वात्।

---

**(लो, उ)** प्रतिनायकादीत्यादिशब्देन विकृतवेशा व्याघ्रादयः। **वक्ष्यत** इति। इहैव परिच्छेदे।

**(लो, ऊ)** स्थेयान्—स्थिरतरः।

---

× कृती—कर्मकुशलः। अनुरक्तलोकः—अनुरक्ताः लोका यस्मिन् सः। तेजो वैदग्ध्यवान्। (द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकमनुसम्बध्यते इति न्यायेन) तेजस्वी वैदग्ध्यवान् (चातुर्ययुक्तः) शीलवांश्च।

+ अविकत्थनः—विकत्थना, आत्मश्लाघा, तद्रहितः।

1 'यो' इत्यस्य, 'रसस्य' इत्यनन्तरं पाठः (क. ख. पु०)।

2 'कृती कृतज्ञः' इत्यधिकः पाठ० (ग. पु०)।

3 'नुकूल' (च. पु०)।

4 'मश्च' इति (क. ख. पु०)।

* तारकितः पाठो ग. पु. नास्ति।

अथ धीरोद्धतः—

**मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः ।**
**आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः ॥ ३८ ॥** *

यथा—भीमसेनादिः ।

अथ धीरललितः—

**निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ॥ ३९ ॥**

कला नृत्यादिका[1] । यथा रत्नावल्यादौ वत्सराजादिः ॥

अथ धीरप्रशान्तः—

**सामान्यगुणैर्भूयान् द्विजादिको धीर[2]प्रशान्तः स्यात् ॥४०॥**

( झ, ऋ ) * यथा मालतीमाधवादौ—मालतीमाधवादिः ।

एषां च शृङ्गारि[3]रूपत्वे भेदानाह—

**एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोडशधा ॥ ४१ ॥** (ञ)

तत्र तेषां धीरोदात्तादीनां प्रत्येकं[4]दक्षिणशठधृष्टानुकूलशठत्वेन षोडशप्रकारो नायकः ।

**एषु त्वनेकमहिला[5]समरागो दक्षिणः कथितः ॥४२॥** ( ट, ऋ )

द्वयोस्त्रिचतुःप्रभृतिषु नायिकासु[6] तुल्यानुरागो दक्षिणनायकः ।

( वि, झ ) **सामान्यगुणैरिति**—धीरोदात्तादित्रयसाधारणगुणैर्भूयान् महानित्यर्थः ।

( वि, ञ ) **षोडशधेति**—धीरोदात्तादीनां चतुर्णां दक्षिणत्वादिचातुर्गुण्येन षोडशत्वम् ।

( वि, ट ) **अनेकमहिला**—इति व्याचष्टे द्वयोस्त्रिचतुरिति ।

---

( लो, ऋ ) सामान्यगुणा—मन्वाद्युक्तधृतिक्षमादयः

( लो, ऋ ) एषु—दक्षिणादिषु नायकमध्ये ।

---

* प्रचण्डः—उग्रस्वभावः । अहङ्कारदर्पभूयिष्ठः अहङ्कारदर्पौ भूयिष्ठौ यस्य सः । धीरैः पण्डितैः कथितः ।

1 'रत्यादिका' इति (क. पु०) ।
2 प्रेति नास्ति ( ग. घ. पु. )
3 शृङ्गारादिरूपत्वे ( क. च. पु. )
4 'दक्षिणधृष्टानुकूलशठत्वेन' ( क. ग. पु. )
5 'महिलासु' ( ट. ड पु. )
6 'नायिकासु' ( इति नास्ति

यथा—स्नाता तिष्ठति कुन्तलेश्वरसुता, वारोऽङ्गराजस्वसु-
र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च ।
इत्यन्तःपुरसुन्दरीः[1] प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥ ( ठ )

**कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः ।**
**दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः ॥ ४३ ॥ ( ड )**

यथा मम—
शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं, ततः
पादेन प्रहृतं तया, सपदि तं धृत्वा सहासे मयि ।
किञ्चित् तत्र विधातुमक्षमतया बाष्पं त्यजन्त्याः सखे !
ध्यातश्चेतसि कौतुकं वितनुते कोपोपि वामभ्रुवः ॥ ( ढ, लृ )

**अनुकूल एकनिरतः ॥ ४४ ॥**

[3]एकस्यामेव नायिकायामासक्तोनुकूलनायकः । यथा—

---

( वि, ठ ) **स्नाता तिष्ठती**ति—अन्तःपुरचरजनस्य कस्मिंश्चिदियमुक्तिः । अनेकपत्नीसम्भोगार्हा इयं रात्रिरिति तत्कर्मनियुक्तस्य राज्ञि निवेदनम् । श्लोकार्थः—स्नाता, ऋतुस्नाता । वारः तत्सम्भोगनियतवासरः । कमलया तन्नाम्न्या देव्या । देवी—कृताभिषेका । मानिन्यास्तस्या अद्यावश्यं प्रसादनम् । **द्वित्रा** इति । सर्वासु अनुरागसाम्येन कस्याप्युपेक्षाऽनर्हत्वात् अप्रतिपत्त्या कर्तव्यनिर्णयाभावेन मूढमनस्कत्वेन द्वित्रादिदण्डस्थितिः ।

( वि, ड ) **कृतागा अपी**ति—आगोपराधः । मिथ्यावाक् कृतस्यापि मिथ्यात्ववादी ।

( वि, ढ ) **शोणं वीक्ष्ये**ति—रोषारुणमुखीं प्रियां चुम्बितुं गतस्य तया प्रहर्तुमुद्यतं पादं धृत्वा किञ्चित् कर्तुमक्षमीकृतां रुदतीं तां दृष्ट्वा हसितवतो नायकस्य सख्यौ वृत्तान्तकथनमिदम् ।

अत्र नायिकाक्रोधवशात् नायकस्य कृतागस्त्वसिद्धिः ।

---

**(लो, लृ) शोणमि**ति—विचुम्बितुं समीपं यातोऽनुनयादिकमकृत्वापीति भावः ।

---

1 'सुन्दरीमिति' (च. ज. पु.)

2 'तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
सा श्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥
इति परकीयमुदाहरणं (ग. घ. पु.) ।

3 एकस्यामित्यादिव्याख्यानं ट. ड. पुस्तकयोर्न दृश्यते ।

अस्माकं सखि ! वाससी न रुचिरे, ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं, नैवास्ति कश्चिन् मदः ।
किन्त्वन्येपि जना वदन्ति सुभगोऽप्यस्याः प्रियो[1] नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥ ( ण, ए )

**शठोयमेकत्र बद्धभावो यः ।**
**दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति ॥ ४५ ॥**

यः* पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्बहिर्दर्शितानुरागोऽन्यस्यां नायिकायां गूढं विप्रियमाचरति स शठनायकः । *

यथा—[2]शठाऽन्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।
तदेतत् क्वाचक्षे घृतमधुमयत्वद्बहुवचो
विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥ ( त )

**एषां च त्रैविध्यादुत्तममध्यमाधमत्वेन ।**

---

( वि, ण ) **अस्माकं सखी**ति—पत्यौ सुभगाया सख्या उक्तिरियम् । वस्त्रोज्ज्वल्यादिकं सौभाग्यहेतुर्मम नास्ति । किन्तु न केवलमहमन्येपि जना वदन्ति अस्याः पतिरन्यतोऽन्यस्यां नायिकायां दृष्टिं न निक्षिपतीति । विश्वम्—एतद् विश्ववर्ति स्त्रीजनं दुःस्थितं, मयि असूयया मदपेक्षया सौभाग्याल्पत्वेन वा दुःस्थितं वयं मन्यामहे । पतिःकीदृशः, सुभगोपि सौन्दर्येणान्यनायिकाभिलषणीयत्वरूपसौभाग्यवानपि इत्यर्थः ।

( वि, त ) **शठान्यस्या** इति—नायिकाया विप्रियकारिणं नायकं भर्त्सयन्त्या सख्या उक्तिरियम् । हे शठ ! खल ! मम सखीम् आश्लिष्यन्नेव त्वं यदन्यस्या नायिकायाः काञ्चीमणिरणितशब्दमाकर्ण्य सहसा प्रशिथिलभुजग्रन्थिः ( बाहुवेष्टनं ) अभवः तदेतत् क्व जने **आचक्षे** । अतो मे सखी घृतमधुमयेन मिश्रितघृतमधुरूपेण त्वदीयबहुचाटुवचोविषेणाघूर्णन्ती किमपि कर्तव्यं न गणयतीत्यर्थः । मिश्रितघृतंमधुनी हि आपातमधुरेपि विषत्वं प्राप्नुतः ।

(वि, थ) **एषां चे**ति—एषामुत्तममध्यमाधमत्वेन त्रैविध्यादित्यन्वयः । चत्वारिंशदिति षोडश त्रैगुण्येन अष्टचत्वारिंशत् ।

---

(लो,ए) अन्यतः अन्यस्यां मा विनेत्यर्थः। विश्वं दुःस्थितं मन्यामहे। किन्तु मामेव सुस्थितामिति भावः।ग्रैवेयकं,कण्ठाभरणम् , मदोपि यौवनाद्यहङ्कारजनितः गर्वोपि नैवास्ति।

---

1 'पतिः' ( क. ख. ग. पु. )
* तारकितः पाठो नास्ति ( ग. घ. )
2 'शठोऽन्यस्याः' ( च. छ. पु. )

**उक्ता नायकभेदाश्चत्वारिंशत् तथाष्टौ च ॥४६॥ (थ)**

सर्वेषामुक्तषोडशभेदानाम् ।

अथ प्रसङ्गादेषां सहायानाह ( द, ऐ )

**दूरानुवर्तिनि स्यात्तस्य प्रासङ्गिकेतिवृत्ते तु ।**

**किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः ॥४७॥**

तस्य नायकस्य बहुव्यापिनि प्रसङ्गसङ्गते[1] इतिवृत्ते अनन्तरोक्तैर्नायकसामान्यगुणैः (ओ) किञ्चिदूनः पीठमर्दनामा सहायो भवति । यथा रामचन्द्रादीनां[2] सुग्रीवादयः (ध) ।

अथ शृङ्गारसहायाः[3]—

**शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः[4] ।**

**भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥४८॥ ***

[5]आदिपदान्मालाकाररजकताम्बूलिकगान्धिकादयः ।

तत्र विटः—

**संभोगहीनसम्पद् विटस्तु धूर्तः कलैकदेशज्ञः ।**

**वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ॥४९॥(न)+**

---

( वि, द ) **अथ प्रसङ्गादि**ति—अत्र एषामित्यनेन नायकमात्रस्यैव परामर्शो ननु प्रकान्तशृङ्गारीयाष्टचत्वारिंशत एव । अत एव रामस्य सुग्रीवः सहायो दर्शयिष्यते ।

( वि, ध ) **दूरानुवर्तिनी**ति व्याचष्टे—तस्येति दूरानुवर्तिनि इत्यस्य व्याख्या बहुव्यापिनीति बहुदेशव्याप्यसाध्ये इत्यर्थः । प्रसङ्गसङ्गते—दैवत उपस्थित इतिवृत्ते वृत्तान्ते । किञ्चित् तद्गुणहीन इत्यस्यार्थमाह—**अनन्तरे**ति—अनन्तरोक्तैः पूर्वोक्तैः ।

( वि, न ) **मधुर** इति—मधुरभाषीत्यर्थः । गोष्ठ्यां शृङ्गारीयगोष्ठ्याम् ।

---

( लो, ऐ ) **प्रसङ्गादि**ति । एषां हि सहाययुक्तत्वेन कार्यकारित्वेऽधिकरसपरिपोषः । एवमन्यत्र ।

( वि, ओ ) नायकसामान्यगुणैस्त्यागादिभिः ।

---

* भक्ताः—अनुरक्ताः—नर्मसु परिहासादिषु निपुणाः । कुपितानां वधूनां मानिनीनां मानभञ्जना मानभङ्गे क्षमाः ।

\+ **सम्भोगे**ति । सम्भोगेन बहुव्ययेन हीना विनाशिता सम्पत् येन सः । अतोयं जीविकार्यं अपरमाश्रयति । कलाया एकदेशज्ञः । वेशे वेश्यालये ये उपचारा व्यवहाराः तेषु दक्षः ।

1 'प्रसङ्गेतिवृत्ते' ( इति क. ग. पु. )

2 'रामस्य सुग्रीवः' ( इति ट. ड. पु. )

3 'शृङ्गारविषये सहायाः' ( इति क. ख. पु. )

4 'द्याः स्युः' ( इति क. ख. )

5 'आदीत्यादिपङ्क्तिः' च. छ. पु. नास्ति ।

चेटः प्रसिद्ध एव । (प)

**कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः ।**

**हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः ॥५०॥** (औ, फ)

*स्वकर्म भोजनादि । अर्थचिन्तन[1]सहायमाह (ब)

[2]**मन्त्री स्यादर्थानां चिन्तायाम् ॥ ५१ ॥**

अर्थास्तन्त्रावापादयः (भ)

यत्त्वत्र सहायकथनप्रस्तावे 'मन्त्री स्वं[3] चोभयं चापि सखा तस्यार्थचिन्तने' इति केनचिल्लक्षणं कृतम्, तदपि राज्ञोऽर्थचिन्तनोपायलक्षणप्रकरणे लक्षितव्यम् । न तु सहायकथनप्रकरणे । नायकस्य 'अर्थचिन्तने मन्त्री सहायः' इत्युक्तेऽपि नायकस्यार्थत एव सिद्धत्वात् । (म) यद्यप्युक्तम् 'मन्त्रिणा ललितः शेषा । मन्त्रिस्वा[4]यत्तसिद्धयः' इति, तदपि स्वलक्षणकथनेनैव लक्षितस्य

---

( वि, प ) **चेटः प्रसिद्ध** इति—चेटीपुत्र इत्यर्थः ।

(वि, फ) विदूषकमाह—**कुसुमे**ति । कर्मादिभिर्हास्यकरः इत्यन्वयः । कर्मणा, वपुषा, वेशेन, वासनादिना भाषाद्यैः सर्वेषां हास्यं जनयति ।

(वि,ब) रसीयनायकसहायकथनप्रसङ्गादन्यत्रापि सहायमाह—**अर्थचिन्तने**ति ।

(वि, भ) **तन्त्रावापे**ति । तन्त्रं राजकृत्यं तस्य आवापो योग्यायोग्यानुष्ठानम् । तस्मिन् अर्थे मन्त्री सहाय इत्यर्थः ।

(वि, म) स्वं चेति–स्वं राजा तस्य राज्ञः । केनचिदिति लक्षणं सहायज्ञापनम् । अत्र स्वस्यापि सहायत्वेन कथनात् पूर्वस्माद् भेदः । **सहायकथनप्रकरणे** इति–स्वस्य स्वसहायत्वात् सहायताया भेदघटितत्वात् । नन्वेवं तेन चिन्ता न क्रियतामित्याह– **नायकस्ये**ति ।

(वि, य) **मन्त्रिणे**ति—ललितो धीरललितस्तादृशो राजा मन्त्रिणैवार्थसाधकः इति शेषः, स्वस्य शृङ्गारनिरतत्वात् । शेषाः धीरोदात्तधीरोद्धतादयः । **स्वलक्षण-**

---

( लो, औ ) **कुसुमे**ति—कुसुमाभिधो विदूषको रसालकादिः । वसन्ताभिधा वसन्तकमाधवादिः ।

( लो, अ ) **यत्त्वत्रे**ति—यत्त्वत्रेत्यादेर्गतार्थत्वमित्यनेनान्वयः । तस्य ग्रन्थस्या-

---

* तारकितांशो ट. ठ. पु० नास्ति ।

1 'चिन्तने' इति पृथक् पदम् (क. पु०) ।

2 'मन्त्री स्यादर्थचिन्तायामर्थास्तन्त्रावापादयः' इति श्लोकाकारः, 'तद्वदवरोध' इति गद्याकारश्च पाठः (ख. ग. घ. पु०) ।

3 'स्वस्योभयस्यापि' (ग. पु०) ।

4 'मन्त्रिष्वायत्त' इति (च. ङ. पु०) ।

धीरललितस्य मन्त्रिमात्रायत्तार्थचिन्तनोपपत्तेर्गतार्थम् । नचार्थचिन्तने तस्य मन्त्री सहायः । किन्तु स्वयमेव सम्पादकः । तस्यार्थचिन्तनाद्यभावात् (य) (अ)
अथान्तःपुरसहायाः—

**तद्वदवरोधे ॥ ५२ ॥**

**वामनषण्डकिरातम्लेच्छाभीराः शकारकुब्जाद्याः ।**

**मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः[1] ।**

**सोयमनूढाभ्राता * राज्ञः श्यालः शकार इत्युक्तः॥५३॥** (र, आ)

आद्यशब्दान्मूकादयः । तत्र षण्डकिरातकुब्जादयो यथा रत्नावल्याम्—

नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।

---

**कथनेने**ति । धीरललितलक्षणकथनेनेत्यर्थः । 'निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यादिति' धीरललितलक्षणे निश्चिन्तत्वेनार्थचिन्तनस्य मन्त्रिमात्रनिष्ठत्वसिद्धेस्तस्य मन्त्रिणः सहायताकथनं गतार्थमित्यर्थः । धीरललितस्य यो मन्त्री तस्य स्वयमेवार्थचिन्तकत्वम् । नतु स्वचिन्तने तस्य सहायत्वम् । स्फुटमेवाह—**नचार्थचिन्तनमि**ति—तस्यार्थचिन्तनाद्यभावादित्यत्र तस्य धीरललितस्य । अयं मन्त्री स्यादर्थानां चिन्तायामिति सूत्रस्य परभागः ।

( **वि, र** ) शकारलक्षणमाह—**मदे**ति । दुष्कुलता ऐश्वर्यं च ताभ्यां संयुक्तोपि मदमूर्खताभ्यामभिमानीत्यर्थः ।

( **वि, ल** ) **नष्टं वर्षवरैरि**ति—राज्ञो वाजिशालात आगतमेकं महावानरं दृष्ट्वा अन्तःपुरस्थनपुंसकादीनां भीतिक्रियावर्णनमिदम् । कञ्चुकस्य सर्वाङ्गव्यापकलम्बमानवस्त्रस्यान्तरित्यर्थः । निजस्य नाम्न इति कृ विक्षेप इति धातुना किरातपदस्य साधितत्वात् स्वस्य पर्यन्तविशीर्णत्वं कृतमित्यर्थः । कुब्जा न पलायिताः । किन्तु नीचतयैव वानर-

---

यमर्थः । सहायकथनप्रस्तावे मन्त्रिण एव सहायत्वकथनं युक्तम्; नतु आत्मन उभयस्य वा । आत्मन एव आत्मसहायत्वं विरुद्धम् । किन्तु राजा केनार्थचिन्तनं कुर्यादित्यपेक्षायामेव क्वचिन् मन्त्रिणा क्वचिदात्मना, क्वचिदुभयेनेति वक्तुं युक्तम् । धीरललितस्य निश्चिन्तत्वादिरूपकथनेन मन्त्रिमात्रायत्तार्थचिन्तनमुपपद्यते । किञ्च तदप्यर्थचिन्तनोपायप्रकरण एव लक्षितव्यम्; नतु सहायकथनप्रकरणे । तस्य धीरललितस्य नच सहायः सः । मन्त्रिणः सहायत्वे धीरललितस्याप्यर्थचिन्तनप्रसङ्गात् ।

( **लो, आ** ) शकारस्वरूपमाह—**मदे**ति—मदो गर्वः, मद्यविकारो वा ।

---

* अनूढायाः अपरिणीतायाः उपभोग्याया स्त्रियाः भ्राता ।

1 'संपन्नः' इति (च. छ. पु०) ।

पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः (इ) किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥' (ल) ×
शकारो मृच्छकटिकादौ प्रसिद्धः (व) अन्येपि यथादर्शनं ज्ञातव्याः ।
अथ दण्डसहायाः—

**दण्डे सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च ॥ ५४ ॥**

(श) दुष्टनिग्रहो दण्डः । स्पष्टम् । [1]अथ धर्मसहायाः—

**ऋत्विक् पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्मे ॥ ५५ ॥**

ब्रह्मविदो वेदविद आत्मविदो वा ।
तत्र[2]—

**उत्तमाः पीठमर्दाद्याः ॥ ५६ ॥**

आद्यशब्दान्मन्त्रिपुरोहितादयः ।

---

कर्तृके आत्मकर्मके ईक्षणे अशङ्किनः शङ्कारहिताः सन्तः शनकैर्यान्तीत्यर्थः ।

( वि, व ) मृच्छकटिकं नाटकविशेषः ।

( वि, श ) आटविकानां दण्डसहायत्वम् । दण्डनीयस्य अटव्यां पलायितस्य प्रदर्शकत्वाद्दण्डनीयविपक्षराज्याटव्यां स्थितत्वात्तद्वृत्तान्तज्ञातत्वाच्च । सामन्तः-सेनापतिः ।

---

( लो, इ ) निजस्य नाम्नः अन्तेवासित्वस्य ।

---

× वर्षवरैः षण्डैः कर्तृभिः 'षण्डो वर्षवरस्तुल्यौ इत्यमरः । मनुष्येषु या गणना तस्या अभावात् स्त्रीत्वपुंस्त्वान्यतरप्रजोत्पादनरूपमनुष्यत्वाभावात् एतेषां मनुष्यगणनाभावः । त्रपां लज्जाम् अपास्य त्यक्त्वा नष्टम् अन्तर्हितम् । अयं पुरोवर्ती वामनः त्रासात् ( वानरादितिशेषः ) कञ्चुकिकञ्चुकस्य कञ्चुकिनः सर्वाङ्गव्यापकवस्त्रस्य अन्तः मध्यभागे विशति । पर्यन्ताश्रयिभिः—पर्यन्तं समीपभागम् आश्रयन्तीति समीपवर्तिभिः इत्यर्थः । किरातैः निजस्य नाम्नः सदृशं युक्तं कृतम् आचरितम् । कॄ विक्षेपे इत्यस्मात् । इगुपधज्ञाप्रीकिरः कः' इति कप्रत्यये किर इति रूपम् । अतन्ति सततं गच्छन्तीति अताः (पचाद्यच् ) किराश्च ते अताश्चेति किराताः इति किरातनाम्नो व्युत्पत्तिः । तस्य सदृशं विक्षिप्ततया इतस्ततो भ्रमणमित्यर्थः । आत्मेक्षणाशङ्किनः—आत्मनः यत् ईक्षणं वानरकर्तृकं दर्शनं तत्र अशङ्किनः शङ्काशून्याः नीचतयैव स्वभावखर्वत्वेऽपि पुनः खर्वाकारेण शनकैः मन्दं मन्दं यान्ति ।

1 'अथ—याः' ( इति क. पु. नास्ति. )
2 'अत्र च' ( इति क. पु. )
'तत्र च ( इति ग. घ. पु. )
'तत्र' इत्यादिः, 'लक्षणमाह' इत्यन्तः पाठः ( ट. ड. ढ. पु. नास्ति. )

मध्यौ विटविदूषकौ ।

तथा शकारचेटाद्या अधमाः परिकीर्तिताः ॥ ५७ ॥

आद्यशब्दात्ताम्बूलिकगान्धिकादयः । अथ प्रसङ्गाद्दूतानां त्रिभागगर्भं लक्षणमाह (ई)।

निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः ।
कार्यप्रेष्यास्त्रिधा दूतो दूत्यश्चापि तथाविधाः ॥ ५८ ॥

तत्र कार्यप्रेष्यो दूत इति लक्षणम् ।

तत्र—

उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः ॥ ५९ ॥ (उ)

उभयोरिति—येन प्रेषितः यदन्तिकं प्रेषितश्च ॥

मितार्थभाषी कार्यस्य सिद्धिकारी मितार्थकः ।
यावद्भाषितसंदेशहारः सन्देशहारकः ॥ ६० ॥ (ऊ)

अथ सात्त्विका नायकगुणाः—(ष)

शोभा विलासो माधुर्यं गाम्भीर्यं[1] धैर्यतेजसी ।
ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥ ६१ ॥ (ऋ)

तत्र—शूरता दक्षता सत्यं महोत्साहोऽनुरागिता ।
नीचे घृणाऽधिके स्पर्द्धा यतः शोभेति तां विदुः ॥६२॥

तत्रानुरागिता यथा—(स)

अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।

---

(वि,ष) **सात्त्विका नायकगुणा** इति । सत्त्वं बलं बलवन्नायकगुणा इत्यर्थः ।

(वि, स) **यतः शोभे**ति—यतो बलात् शोभालक्षणेन अनुरागितोक्ता । तामुदाहरति—**अहमेवे**ति ।

(वि, ह) रघौ अजवर्णनमिदम् । प्रकृतिषु अमात्येषु मध्ये सर्व एव इत्यचिन्तयत् किं तत् इत्यत्राह-**अहमेवे**ति । मतः सम्मतः । अस्य अजस्य । विमानना

---

(लो, ई) विभागगर्भम्–विभागस्य गर्भे स्थितम् ।

(लो, उ) भावमाभिप्रायम् । सुश्लिष्टं सुशोभनम् । उन्नीय ऊहित्वा ।

(लो, ऊ) मितार्थभाषी अल्पभाषी । यावदिति प्रेरकेण यावद् भाषितस्य सन्देशस्य हारः ।

(लो, ऋ) सत्त्वं गुणविशेषः । सत्त्वजाः तदुद्भवाः सत्त्ववतां नायकानां गुणा इत्यर्थः ।

---

1 'धैर्यं गाम्भीर्यतेजसी' इति (ग. पु.)

उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥

एवमन्यत्रापि[1] । अथ विलासः—(ह)

**धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः ॥६३॥ (क)**

यथा—दृष्टिस्तृणीकृत-जगत्-त्रय-सत्त्वसारा

धीरोद्धता नमयतीव गतिर्धरित्रीम् ।

कौमारकेऽपि गिरिवद्गुरुतां दधानो

वीरो रसः किमयमेत्युत दर्प एव[2] ॥ * (ख)

**संक्षोभेष्वप्यनुद्वेगो माधुर्यं परिकीर्तितम् ॥६४॥ +**

ऊह्यमुदाहरणम् (ग)

**भीशोकक्रोधहर्षाद्यैर्गाम्भीर्यं निर्विकारता ॥६५॥ (घ)**

---

अवज्ञा अपमानम् । निम्नगा नद्यः तासां सर्वासामेवोदधिना जलग्रहणेन कृतादरत्वात् ।

**(वि, क) धीरे**ति—विलासे सात्त्विके गुणे सति धीरेत्यादिकं भवतीत्यर्थः ।

**(वि, ख) दृष्टिस्तृणीकृते**ति—कुशमवलोक्य रामचन्द्रेण वर्णनमिदम् । तृणीकृतो जगत्त्रयस्य सत्त्वानां बलानां सारः प्रकृष्टो भागो यया । अस्य कुशस्य दृष्टिस्तादृशी । स्फुटमन्यत् ।

**(वि, ग) ऊह्यमुदाहरणमि**ति—

'त्यजतो मङ्गलक्षौमे चीरे च प्रतिगृह्णतः ।

ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥'

इत्युदाहरणम् । अत्र हि मङ्गलक्षौमे गृह्णतः चीरे प्रतिलक्षीकृत्य त्यजतश्च रामस्य मुखरागं विस्मिता जनाः समानं ददृशुः इत्यनेन वनवासार्थं चीरग्रहण-संक्षोभेपि मङ्गलक्षौमग्रहणवद् अनुद्वेगः ।

**(वि, घ) भीशोके**ति । अत्र भयशोकयोः प्रवेशात् माधुर्यतः कियान् भेदः । आहूतस्येत्यादिकं तु माधुर्यस्याप्युदाहरणं संभवतीति बोध्यम् । गाम्भीर्यस्य माधुर्या-संकीर्णमुदाहरणं तु—

योऽविकल्पमिदमर्थमण्डलं

पश्यतीश ! निखिलं भवद्वपुः ।

---

* धीरा उद्धता सदर्पा गतिः पादन्यासः धरित्रीं पृथिवीं नमयतीव । कौमारकेपि शैशवेपि गिरिवत् गुरुतां भारवत्त्वं दधानः अयं बालः किं वीरो रसः उत दर्प एति मूर्तिमान् वीरो रसः अहंकारो वा आगच्छति ।

+ संक्षोभेषु—उद्वेगकारणेषु विकारहेतुषु सत्सु ।

1 'मन्यदपि' (ख. ग. पु.)

2 'एषः' (चं. पु.)

यथा—'आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ।'

※ व्यवसायादचलनं धैर्यं विघ्ने महत्यपि ॥ ६६ ॥ +

यथा—श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां नहि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ॥ * (ङ)

**अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।**
**प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ।**
**वाग्वेशयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितम् ।**
**दानं सप्रियभाषणमौदार्यं शत्रुमित्रयोः समता ॥ ६७ ॥**

एषामप्युदाहरणान्यूह्यानि । ( च )

---

आत्मपक्षपरिपूरिते जग-
त्यस्य नित्यसुखिनः कुतो भयम् ॥ इति ।

इयं हि तपस्यतः परमेश्वरेण भीषितस्य कस्यचिदुक्तिः । अविकल्पं निःसंशयम् । निखिलमर्थमण्डलं यो भगवद्वपुःस्वरूपं पश्यति । आत्मपक्षेण भवता परिपूरिते जगति अस्य कुतो भयमित्यर्थः । यथा वा "न खल्वनिर्जित्य रघुं कृती भवान्" इति इन्द्रेण भीषितस्य रघोरुक्तिः ।

**( वि, ङ ) श्रुताप्सरोगीतिरि**ति—हरस्य समाधिभङ्गार्थमप्सरोभिर्गीयमानेऽपि तस्य समाधिभङ्गो माभूदिति पूर्वार्द्धार्थः । तत्र प्रसंख्यानं समाधिः । अत्रार्थान्तरन्यासमाह—**आत्मेश्वराणामि**ति । आत्मा धृतिस्तदीश्वराणां स्वायत्तधृतीनामित्यर्थः । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च' इति कोषः । जातु कदाचित् ।

**( वि, च ) एषामप्युदाहरणान्यूह्यानि**—तत्र तेजस उदाहरणं यथा—

'पुरोजन्मा नाद्यप्रभृति मम रामः पुनरहं
न पुत्रः पौत्रो वा रघुकुलभुवां च क्षितिभुजाम् ।
अधीरं धीरं वा कलयतु जनो मामयमहो
मया बद्धो दुष्टद्विजदमनदीक्षापरिकरः ॥

---

\+ महति विघ्ने उपस्थितेपि व्यवसायात् उद्योगात् अचलनं धैर्यम् ।

× परेण शत्रुणा प्रयुक्तस्य अधिक्षेपस्य निन्दावादस्य अपमानादेश्च प्राणात्यये जीवननाशसम्भावनेऽपि यत् असहनम् ।

※ एतच्चिह्नान्तर्गतः पाठः * एतच्चिह्नान्तर्गतपाठानन्तरं दृश्यते (ग. घ. पु.)

**अथ नायिका त्रिविधा स्वान्या साधारणी[1] स्त्रीति ।**
**नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता ॥६८॥ (छ)**

[2]नायिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासम्भवैर्युक्ता भवति। सा च स्वस्त्री, अन्यस्त्री, साधारणस्त्रीति त्रिविधा[3] । तत्र स्वस्त्री—

**विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ॥६९॥(ज)**

यथा—"लज्जापज्जत्तपसाहणाइं परतन्तणिप्पिवासाइं ।
अविणअदुम्मेहाइं धन्नाणं घरे कलत्ताइं ॥ (झ, ऋ)

**सापि कथिता त्रिविधा[4] मुग्धा मध्या प्रगल्भेति ॥ ७० ॥ (ञ,लृ)**

इयं परशुरामेणाऽधिक्षिप्तस्य लक्ष्मणस्य उक्तिः । ललितोदाहरणं यथा—

"प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषम्
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥" इति ।

अत्र हि कामिनो वाङ्मधुरता शृङ्गारचेष्टा च । औदार्योदाहरणं यथा—

"एते वयममी दाराः कन्येयं कुलभूषणा ।
ब्रूत केनार्थिनो यूयमनास्था बाह्यवस्तुषु ।"

इति सप्तर्षीन् इति हिमालयस्योक्तिः ।

**(वि, छ)** नायिकाप्रभेदमाह—**अथे**ति—स्वान्ययोरपि स्त्री इत्यस्यान्वयः ।

**(वि, ज) विनयार्जवादी**ति । एतादृशगुणरहिता तु स्वस्त्री अपि नोपक्रान्त-शृङ्गारविभावः; किन्तु तदाभासविभाव एवेति बोध्यम् ।

**(वि, झ) लज्जाप** इति—'लज्जापर्याप्तप्रसाधनानि परचिन्तानिष्पिपासानि । अविनयदुर्मेधांसि धन्यानां गृहे कलत्राणि ।' इति संस्कृतम् । पर्याप्तप्रसाधनं पर्यवसितालङ्कारः । परचिन्ता—परपुरुषचिन्ता, तत्र तृष्णारहितानि । तन्त्रचिन्तायां देशी । अविनयदुर्मेधांसि—अविनयाद् दूरीकृतबुद्धीनि । **सापी**ति—सा स्वीया ।

**( वि, ञ ) प्रथमे**ति—प्रथमावतीर्णयौवना, प्रथमावतीर्णमदनविकारेति द्विधा । एतानि विशेषणानि एकैकान्येव मुग्धाया बोध्यानि ।

**(लो,ऋ)** लज्जा एव पर्याप्तं पूर्वं प्रसाधनं भूषणं येषाम् । निष्पिपासानि—निःस्पृहाणि । दुर्मेधांसि अनभिज्ञानि । **( लो, लृ )** सा स्वस्त्री ।

1 साधारणा स्त्री च. (ग. घ. पु.)
2 'नायिका पुनः' इति (च. ट. पु. नास्ति.) ।
'नायिका—' इत्यादि—'कलत्ताइं' इत्यन्तं (च. छ. पु. नास्ति ।
3 'त्रिभेदा' (ट. ड. पु.) । 4 'त्रिभेदा' (क. ख. पु.)

**तत्र प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।**
**कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥ ७१ ॥** (ट)

तत्र (ए) प्रथमावतीर्णयौवना यथा मम तातपादानाम्—

मध्यस्य प्रथिमानमेति जघनं वक्षजयोर्मन्दतां
दूरं यात्युदरञ्च रोमलतिका नेत्रार्जवं धावति ।
कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणा-
दङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः ॥ (ऐ)

*प्रथमावतीर्णमदनविकारा यथा मम प्रभावतीपरिणये—

दत्ते सालसमन्थरं भुवि पदं निर्याति नान्तःपुरात्
नोद्दामं हसति, क्षणात् कलयते ह्रीयन्त्रणां कामपि ।
किञ्चिद् भावगभीरवक्रिमलवस्पृष्टं मनाग् भाषते
सभ्रभङ्गमुदीक्षते प्रियकथामुल्लासयन्तीं[1] सखीम् ॥ (ट)

रतौ वामा यथा—

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।

---

(**वि, ट**) **मध्यस्य प्रथिमानमि**ति—नूतनं यदस्या मनोराज्यं मनस्याधिपत्यं तत्राभिषिक्तं कन्दर्पं परिवीक्ष्य सुभ्रुवः अङ्गानि परस्परं निर्लुण्ठनं विदधते इत्यर्थः । राज्ञः प्रथमाधिपत्यदिनेऽराजके राज्ये परस्परनिर्लुण्ठनस्य लोकसिद्धत्वात्, तद्दर्शयति—**मध्यस्ये**ति । शैशवे मध्यस्य प्रथिमा पृथुत्वमासीत् । यौवने च मध्यं क्षीणं जघनं च पृथु बभूव इत्यर्थः । वक्षोजयोर्मन्दता तनुत्वं दूरमतिशयमुदरं यातीत्यर्थः । नेत्रस्य आर्जवं रोमलतिका धावति प्राप्नोतीत्यर्थः, यौवनारम्भे नेत्रयो रक्तत्वात् रोमलतिकाया ऋजुभावेन उत्थितत्वात् ।

( **वि. ठ** ) **दत्ते सालसे**ति—प्रियस्य कथां प्रसङ्गमुल्लासयन्तीं प्रस्तुवन्तीं सभ्रभङ्गमुदीक्षते—पश्यति । गभीरो दुरवगाहो यो वक्रिमः वक्रताया लवोऽल्पत्वम् । तेन स्पृष्टं यथा स्यात्तथा । मनाक् शनैः किञ्चिदल्पं भाषते । सालसपददानं शुश्रूषया । कामपि अनिर्वचनीयां ह्रीयन्त्रणां लज्जाकृतपीडां कलयते अनुभवति ।

( **वि, ड** ) **दृष्टा दृष्टिमि**ति—नवोढाया वृत्तं सख्ये कथयत उक्तिरियम् । श्लोकार्थः स्पष्टः ।

---

( **लो, ए** ) तत्र-तासु मध्ये ।

( **लो, ऐ** ) प्रथिमानं पृथुत्वमेति गृह्णाति । मन्दतां च याति गृह्णातीत्यर्थः । निर्लुण्ठनं परस्परवित्तविग्रहणम् ।

---

* तारकितः पाठः ग. च. पु. नास्ति ।

1 'मुल्लापयन्तीम्' (ट. ठ. पु.)

निर्यान्तीषु सखीषु वासभवनान् निर्गन्तुमेवेहते
जाता वामतयैव सम्प्रति मम प्रीत्यै नवोढा प्रिया॥" (ड)

मानें मृदुर्यथा—

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।
स्वच्छैरच्छकपोल[1]मूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति [2]लुठल्लोलालकैरश्रुभिः (ढ, ओ)

समधिकलज्जावती यथा—"दत्ते सालसमन्थरम्" इत्यत्र श्लोके। अत्र समाधिकलज्जावत्त्वेनापि लब्धाया रतिवामताया विच्छित्तिविशेषवत्तया पुनः कथनम्। [3]अथ मध्या—

**मध्या विचित्रसुरता प्ररूढस्मरयौवना।**
**ईषत्प्रगल्भवचना मध्यमव्रीडिता मता॥ ७२॥ (ण)**

**( वि, ढ )** मानें मृदुरल्पमाना। **सा पत्युरिति**—अल्पमानायाः क्रियां सख्यां कथयन्त्याः सख्या उक्तिरियम्। सख्या उपदेशं सखीकर्तृकमुपदेशं विना सा पत्युरुपनायिकासम्भोगरूपप्रथमापराधसमये सविभ्रमयोरङ्गभङ्गीवक्रोक्त्योः संसूचनं प्रकाशं नो जानाति। ततः किं कुरुते इत्यत्राह—**स्वच्छैरि**ति। विरहात् पाण्डुत्वेन कपोलस्याच्छता। अञ्जनत्यागादश्रुणः स्वच्छता। नेत्रोत्पलस्य पर्य्यासः परेण तद् दर्शने लज्जया।

**( लो, ओ ) सा पत्युरि**ति—सख्योपदेशं सख्येन सौहार्द्देन कृतमुपदेशम्। अथवा सख्येति हेत्वर्थतृतीयान्तं पदम्। तेन सख्या कृतमुपदेशमित्यर्थः। सविलासाङ्गपरिवर्तना सती पराङ्मुखीत्यर्थः। वक्रोक्तिभिः कुटिलभाषितैः संसूचनमपराधज्ञापनं यतो नो जानाति नो वेत्ति। ततः स्वच्छैः अकलुषैः अच्छकपोलमूलगलितैः निर्मलगण्डप्रान्तनिःसृतैः। लुठल्लोलालकैः लुठन्तः परिवर्तमानाः लोलाश्चञ्चला अलकाः चूर्णकुन्तला येषु तानि तैः। अश्रुभिर्बाष्पैः पर्य्यस्तनेत्रोत्पला-पर्य्यस्ते नेत्रोत्पले यस्याः तथा भूत्वा केवलं रोदित्येव-रोदनमेव करोति। न किञ्चिदुपायं जानातीत्यर्थः। अत्र सविभ्रमाङ्गवलनेत्यनेन शय्याविरहो बोध्यते। एकशय्या शयनेनैवालकानामश्रुलुण्ठनं सम्भवति। मुग्धा तूपदेशं विना न किञ्चिज्जानाति। नायिका स्वीया मुग्धा च। नायकः शठः। प्रतीयमानकृतो विप्रलम्भश्शृङ्गारः। अश्रुभिः पर्य्यस्तनेत्रोत्पलेतिसम्बन्धः।

---

1 'पालि' इति (ख. घ. पु.)
2 'गलल्लोलोदकैरश्रुभिः' (ट. ठ. ड. पु.)
3 मध्या यथा—
'मध्यात्तयौवनानङ्गा मोहान्तः सुरतक्षमा' इति लक्षणं ( ग. घ. पु. )

तत्र विचित्रसुरता यथा—

कान्ते तथा कथमपि प्रथितं मृगाक्ष्या
चातुर्य्यमुद्धतमनोभवया रतेषु ।
तत्कूजितान्यनुवदद्भिरनेकवारं
शिष्यायितं गृहकपोतशतैर्यथास्याः ॥ (त)

प्ररूढस्मरा—यथा अत्रैवोदाहरणे । ( थ )

प्ररूढयौवना—यथा मम—

नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः ।
कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्पर्द्धिनी[1]
स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा । (द)

एवमन्यत्रापि ।

अथ प्रगल्भा—

**स्मरान्धा गाढतारुण्या समस्तरतकोविदा ।**
**भावोन्नता दरव्रीडा प्रगल्भा क्रान्तनायका ॥७३॥ ( ध )**

---

**( वि, ण )** विचित्रसुरतादिकम् अप्येकैकमेव मध्याया विशेषणम् । प्ररूढस्मरा प्ररूढयौवनेति विशेषणद्वयम् ।

**( वि, त ) कान्ते तथे**ति—सुरते नायिकया नानाविधं चातुर्य्यं कृतम् । तत्र च कण्ठे नायिकया पारावतवद् ध्वनयः उच्चरिताः । पारावतैश्च तदनुवादः कृत इति समुच्चयार्थः ।

**( वि, थ ) अत्रैवोदाहरणे** इति—किन्तु सुरतवैचित्र्याभावे प्ररूढस्मराया असंकीर्णमुदाहरणं बोध्यम् ; यथा—

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं प्रयाते ।
श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥ इति ।

भुजङ्गे कामुके ।

**( वि, द ) नेत्रे खञ्जने**ति । नेत्रे इत्यादिषु सर्वत्र तस्या इति सम्बन्धः । प्रत्यर्थि प्रतिद्वन्दि । विभ्रमकरी विशेषभ्रान्तिजनिका । सोदरं तुल्यम् । छटा कान्तिः । अत्र स्मरक्रियाऽनुक्त्या यौवनस्यैव प्ररूढत्वम् । **एवमन्यत्रापी**ति । "दीर्घाक्षं शरदिन्दु" इत्यादौ बोध्यम् ।

**( वि, ध )** स्मरान्धेत्यादिकमपि प्रत्येकमेव विशेषणम् । **दरव्रीडे**ति—समधिकलज्जाभिन्ना इत्येवार्थः । तेन स्वल्पव्रीडत्वे व्रीडाभावे वा दरव्रीडत्वं बोध्यमिति ग्रन्थकृतोऽभिप्रायः । आक्रान्तनायका इत्यर्थः ।

---

1 'स्पन्दिनी' (क. पु.)

स्मरान्धा यथा—

धन्यासि या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः ! शपाम यदि किञ्चिदपि स्मरामि ॥ ( न ) *

गाढतारुण्या यथा—

अत्युन्नतस्तनमुरो नयने सुदीर्घे
वक्रे भ्रुवावतितरां वचनं ततोपि ।
मध्योऽधिकं तनुरनूनगुरुर्नितम्बो
मन्दा गतिः किमपि चाद्भुतयौवनायाः ॥ ( प, औ )

×समस्तरतकोविदा यथा—

क्वचित्ताम्बूलाक्तः क्वचिदगुरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।

---

( वि, न ) सखिषु मध्ये एकया नायिकया कथितम्—"मया रतिकाले बहूनि चाटुवचांसि पत्यौ कथ्यन्ते" तां रसानिविष्टां प्रतिपादयितुं तत्कालेऽत्यन्तरसाविष्टत्वमात्मनः सूचयन्ती काचित् सोल्लुण्ठमाह—**धन्यासी**ति । रतान्तरेषु अत्यन्तरमावेशयोग्येषु रतमध्येषु स्वीयोत्कर्षकथने बह्वीनामवधानाय सख्य इति बह्वीनां सम्बोधनम् । शपामि शपथं करोमि ।

( वि, प ) **अत्युन्नतस्तन**मिति—अत्र अद्भुतयौवनाया इति सर्वत्राऽन्वयः । किमपीत्यत्र किं पदमव्ययम् । कापि गतिर्मन्ये इत्यर्थः ।

(वि फ) **क्वचित् ताम्बूलाक्त** इति । प्रच्छदपटः—शय्याच्छादनपटः

---

( लो, औ ) अनूनगुरुः—अत्यन्तगुरुः ।

(लो, अ) चूर्णानि कर्पूरादीनाम् । वलिभङ्गाभोगैरिति त्रयाणां विशेषणे तृतीया । तैरेव कथयतीति कथनकरणत्वं वा । सर्वावस्थं बहुप्रकारम् ।

---

* हे सखि, या त्वं प्रियसङ्गमे रतान्तरेषु अपि रतमध्येष्वपीति विश्रब्धानां विश्वासयुक्तानां चाटुकानां प्रियवाक्यानां शतानि कथयसि सा त्वं धन्याऽसि । प्रथमतः प्रियसङ्गमे एव विलक्षणानन्दमन्थरतया तत् कथनमशक्यम् । तत्रापि रते, तत्रापि नादौ नान्ते किन्तु मध्ये । तस्य पुनःस्मरणमित्याश्चर्यभूतं तव सावधानत्वम् । भोः सख्यः, प्रियेण नीवीं प्रति करे प्रणिहिते प्रणिधानविषयीकृते नत्वर्पिते यदि किञ्चिदपि स्मरामि तदा शपामि । भवतीनां शपथो ननु किञ्चिदपि स्मरामीत्यर्थः । 'शप उपालम्भे' इत्यात्मनेपदं प्राप्नोति । तथापि शपथकरणप्रकाशनविवक्षाभावान्नात्मनेपदम् ।

* तारकितः पाठो ग. घ. पु. नास्ति. विविधसुरतज्ञा—इति पाठान्तरम् ।

वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥ ( फ, अ )

भावोन्नता यथा—

मधुरवचनैः सभ्रभङ्गैः कृताङ्गलितर्जनै
रभसरचितैरङ्गन्यासैर्महोत्सवबन्धुभिः ।
असकृदसकृत् स्फारस्फारैरपाङ्गविलोकितै-
स्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम् ॥ ( ब )

स्वल्पव्रीडा यथा—

'धन्यासि या कथयसि'–इत्यत्रैव ॥ ( भ )

आक्रान्तनायका यथा—

स्वामिन् भङ्गुरयालकं, सतिलकं भालं विलासिन् कुरु ,
प्राणेश ! त्रुटितं पयोधरतटे हारं पुनर्योजय ।

---

स्त्रियाः सर्वावस्थं न्युब्जोत्तानान्यावस्थायं रतं कथयतीत्यर्थः । पटः कीदृशः ? क्वचित् ताम्बूलाक्तः इदं न्युब्जरते । क्वचिदगुरुपङ्केति–इदं पार्श्वरते । क्वचित् चूर्णेति–चूर्णलेपपूर्वकरते । क्वचिदपि सालक्तकेति–पदमत्र पदचिह्नम्, इदमुत्थितावस्थारते । वलीभङ्गः प्रच्छदपटस्य वलनेन भङ्गः संकोचः तस्य आभोगैः तत्परिपूर्णताभिरपि कथयतीत्यर्थः । इदमलकपतितैत्यादिकं च विमर्दरते । विचित्रसुरतायास्त्वेतादृशविमर्दाभावादस्याः ततो भेदः ।

**(वि, ब) मधुरवचनैरि**ति—नायिका सा मधुरवचनादिभिः पञ्चेषोः त्रिभुवनजये सहायतां करोति इत्यन्वयः । मधुरवचनादिकं सर्वं नायके कदाचित् मधुरवचनं कदाचित् सभ्रभङ्गत्यादिकं बोध्यम् । रभसः–सहसा । महोत्सवस्य बन्धुभिः सहायैः यूनामानन्दकरैः रङ्गाभ्यासैः स्फारैः स्फारैरतिदीर्घैः ।

**( वि, भ )** धन्यासि येत्यादिकं स्वल्पव्रीडोदाहरणमुक्तं, तन्न युक्तम्–अत्राल्पाया अपि व्रीडाया अप्रतीतेः । किन्तु–'वनकोलि हिअनिअं सनकवालि सनअवहुलम् । यन युअन स्मरुन्मत्त इअ गअणं पवि उपरि चुम्बि अंज'' इत्येव स्वल्पव्रीडोदाहरणम् । यथा वा ''शूलिनः करतलद्वयेन सा संनिरुध्य नयने हृतांशुका । तस्य पश्यति ललाटलोचने मोघयत्नविधुरा रहस्यभूत् ॥'' इति । अत्र पार्वती शूलिनोर्नयने इत्यन्वयः ।

**( वि, म ) स्वामिनि**त्यादि—सम्पूर्णचन्द्रानना सुरतावसानसमये स्वामिन्नित्यादिकमुक्त्वा तेन स्पृष्टा सती पुनर्मोहनं याता इत्यन्वयः । भङ्गुराणामलकानां विकीर्णत्वात् पुनर्भङ्गुरीकरणाय प्रेरणा । अत्र स्वामिन्नित्याज्ञाकरणात् नायिकाक्रान्तः ।

इत्युक्त्वा सुरतावसानसमये सम्पूर्णचन्द्रानना
स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥ ( ञ )

मध्याप्रगल्भयोर्भेदान्तराण्याह—

**ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे ॥ ७४ ॥** (आ)

ते मध्याप्रगल्भे ।

तत्र—

**प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा[1] दहेद्रुषा ।**
**धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः ॥ ७५ ॥** (थ, इ)

तत्र मध्या धीरा यथा—

तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं वसान
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥ ( र )

मध्यैव धीराधीरा यथा—

बाले ! नाथ विमुञ्च मानिनि ! रुषं, रोषान्मया किं कृतं
खेदोऽस्मासु, न मेऽपराध्यति भवान् , सर्वेऽपराधा मयि ।
तत् किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥ ( ल, ई )

**( वि, य ) प्रियं सोत्प्रासे**ति—उत्प्रासः समन्तात् स्मितम् ।

**( वि, र ) तदवितथमि**त्यादि—त्वं मम प्रियेति यदवादीस्तदवितथं सत्यम् । यद् यस्मात् प्रियजनेन उपनायिकया सपत्न्या वा परिभुक्तं दुकूलं वस्त्रं वसानः दधानः सन् मदधिवसतिं मम गृहमागाः आगतोऽसि । ननु एतावता कथं प्रियेत्युक्तेः सत्यत्वमित्यत आह—**कामिनामि**ति । वल्लभाया आलोकनेनेत्यर्थः । प्रियजनपरिभुक्तवस्त्रधारणमेवात्र मण्डनश्रीःसफलत्वं व्रजति । सेयं सोत्प्रासवक्रोक्तिः ।

**( वि, ल ) बाले** इति—कामुकस्य मानिन्याश्च इमे उक्तिप्रत्युक्ती न मेऽपराध्यतीत्यादि ममेत्यन्तं नायिकाया उक्तिः, नन्वेतन्मे इत्यत्रापि अग्रत इत्यस्याप्यनुषङ्गः । दयिता पत्नी । नायिकोक्तौ दयिताविषयः ।

**( लो, आ )** षड्विधे प्रत्येकं त्रिविधत्वात् ।

**( लो, इ )** प्रियं दहेदित्यस्य रुदितैः परुषोक्तिभिरित्याभ्यां सम्बन्धः ।

**( लो, ई )** बाले अज्ञे । धीरमध्याया वक्रोक्त्या प्रियतापनम् धीराधीरायास्तु सोपहासवचनेनेति भावः । सर्वत्र मध्याप्रगल्भयोः समनन्तरोक्तेषु भेदेषु ।

1 'वदेत्' ('च. ज.')

इयमेवाधीरा यथा—

साद्धं मनोरथशतैस्तव धूर्त ! कान्ता
सैव स्थिता मनसि कृत्रिमहावरम्या ।
अस्माकमस्ति नच कश्चिदिहावकाश-
स्तस्मात्कृतं चरणपातविडम्बनाभिः ॥ ( व )

**प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ।**
**उदास्ते सुरते तत्र दर्शयन्त्यादरं[1] बहिः ॥ ७६ ॥ ( श )**

तत्र प्रिये । यथा—

यथा—

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्[2] दूरतः
ताम्बूलानयन[3]च्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ ( ष )

**धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम्[4] ॥ ७७ ॥**

अमुं नायकम्[5] । यथा* मम—

---

**(वि, व)** इयमेवेति मध्यैव इत्यर्थः। **साद्धं मनोरथे**ति—चरणपतितं कामुकं प्रति मानिन्या अधीरमध्यमाया उक्तिरियम् । धूर्तेति कान्तसम्बोधनम् । सैव उपनायिकैव कृत्रिमभावः परस्त्रीत्वेन मिथ्यानुरागः । इह मनसि । कृतं व्यर्थम्, कृतंशब्दयोगे स्वार्थे तृतीया । विडम्बनाभिः प्रतारणाभिः इत्यर्थः ।

**( वि, श )** तत्रेत्यस्य व्याख्या दर्शयन्त्यादरमिति । बहिरादरं दर्शयन्तीत्यर्थः ।

**( वि, ष ) एकत्रासने**ति—चतुरया नायिकया उपचारतोऽथवार्थक्रियातः कान्तं प्रति कोपः कृतार्थीकृतः, सम्वरणेन तद्वञ्चनात् सार्थीकृत इत्यर्थः। कोपसम्वरणहेतून् उपचारान् दर्शयति-**एकत्रे**ति—एकत्र देशे आसनसंस्थितिरित्यर्थः । रभसाश्लेषः, कान्तेन सहसालिङ्गनम् । अन्तिके परिजनमर्थात् तदुपचारार्थं गृहकार्यार्थं व्यापारयन्त्येत्यर्थः ।

**( वि, स ) सोल्लुण्ठे**ति—सोल्लुण्ठभाषितम् आपातमधुरकटुवचनम् ।

---

1 'आदरान्' इति ( क. ग. पु. )
2 'प्रत्युद्गता दूरतः' इति ( ट. ड. पु. )
3 'लाहरण' ( ग. च. पु. )
4 'खेदयत्यमुम्' ( प. व. पु. )
5 'सोल्लुण्ठनवचनैः' ( च. ज. पु. )
* तारांकितः पाठो च. छ. पु. न दृश्यते ।

अनलङ्कृतोऽपि सुन्दर ! हरसि मनो मे यतः प्रसभम् ।
किं पुनरलङ्कृतस्त्वं सम्प्रति नखरक्षतैस्तस्याः ॥ (स)

**तर्जयेत्ताडयेदन्या ॥ ७८ ॥**

अन्या अधीरा । यथा—"शोणं वीक्ष्य मुखम्" इत्यत्र (६६पृ०) ।
अत्र च सर्वत्र रुषेत्यनुवर्तते—

**प्रत्येकं ता अपि द्विधा ।**
**कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति ॥ ७९ ॥ (ह)**

ता अनन्तरोक्ताः षड्भेदा नायिकाः । यथा—

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकप्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥ (क्ष)

**मध्याप्रगल्भयोर्भेदास्तस्माद्[1] द्वादश कीर्तिताः ।**
**मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश ॥ ८० ॥**
**[2]परकीया द्विधा प्रोक्ता परोढा कन्यका तथा ॥ ८१ ॥ (क)**

---

**अनलङ्कृतोपी**ति । यतस्त्वमनलङ्कृतोपि मम मनः प्रसभं सहसा हरसि । अतः किं पुनरित्यन्वयः । तस्या उपनायिकाया अत्र नखक्षतानामलङ्कारत्वासम्भवात् एतदुक्तेः कटुत्वस्य अतिस्फुटत्वात् तदवितथमवादीरित्यादि धीरमध्योदाहरणादस्य विशेषः, तत्र दुकूलस्याऽलङ्कारताया अपि सम्भवात् । कटुत्वस्फुटत्वादेव चास्याः प्रगल्भत्वं, न मध्यत्वम् ।

(वि, ह) **शोणं वीक्ष्ये**त्यादि व्याख्यातम् । तत्र पादप्रहारकथनात्ताडनम् । **कनिष्ठज्येष्ठे**ति—नायकस्य यः कपटप्रणयस्तं प्रति न्यूनाधिक्यादित्यर्थः । षड्विधा इति । धीरा अधीरा धीराधीरा चेति त्रैविध्यात् मध्याप्रगल्भयोः षट्त्वम् ।

(वि, क्ष) **दृष्ट्वैके**ति—एकासनसंस्थितं पत्नीद्वयं दृष्ट्वा विहितक्रीडानुबन्धच्छलः कृतकौतुकोत्पत्तिः धूर्तो नायकः आदरात् तयोः पश्चात् पृष्ठत उपेत्य गत्वा एकस्या पत्न्या नयने पिधाय ईषद् वक्रितकन्धरः सन् अपरां चुम्बति । अपरां कीदृशीं सपुलकं यथा स्यात्तथा प्रेम्णा उल्लसन्मानसां हृष्यन्मनस्कां पुनः कीदृशीं अन्तर्हासेन लसती कपोलफलके गण्डयुगलं यस्यास्ताम् । अत्र नायिकानुरागस्य न्यूनाधिकत्वं स्फुटमेव ।

(वि, क) **द्वादशे**ति—षट्द्वैगुण्यात् । मुग्धा त्वेकैवेति । तस्याः प्रथमावतीर्ण—

---

1 'तेन' इति (क. ग. पु.) 'तद्वद्' इति (च. ज. पु.)

2 'कन्यका अनूढा । अस्याश्च पित्राद्यायतत्वात् परकीयत्वम्' इत्यधिकः पाठो (ग. पु.)

तत्र—

**यात्रादिनिरतान्योढा कुलटा गलितत्रपा ॥ ८२ ॥ (ख)**

यथा[1]—

स्वामी निःश्वसितेऽप्यसूयति, मनोजिघ्रः सपत्नीजनः
श्वश्रूरिङ्गितदैवतं, नयनयोरीहालिहो यातरः ।
तद् दूरादयमञ्जलिः, किमधुना दृग्भङ्गिभावेन ते
वैदग्धीमधुरप्रबन्धरसिक ! व्यर्थोऽयमत्र श्रमः ॥ (उ)

अत्र हि मम परिणेतान्नाच्छादनादिदातृतया स्वाम्येव नतु वल्लभः । त्वं तु वैदग्धीमधुरप्रबन्धरसिकतया मम वल्लभोऽसीत्यादिव्यङ्ग्यार्थवशादस्याः परनायकविषया रतिः प्रतीयते । ( ग )

**कन्या त्वजातोपयमा सलज्जा नवयौवना ॥ ८३ ॥**

अस्याश्च पित्राद्यायत्तत्वात् परकीयात्वम् । यथा मालतीमाधवादौ मालत्यादिः—

**धीरा कलाप्रगल्भा स्याद् वेश्या सामान्यनायिका ॥ ८४ ॥**

---

मदनविकाराद्यभावादेकत्वम् । इत्थं स्वीयास्त्रयोदशेति उक्त्वा अन्या इत्युक्ताम् अन्यां विभजति । **परकीये**ति–तत्र परकीयामाह ।

**( वि, ख ) यात्रादी**ति–या परोढा कुलटा भवति सा गलितत्रपा सती यात्रादिनिरता भवतीत्यर्थः । यात्रा अभिसारः । आदिना दूतीप्रेषणात् नायकानयनपरिग्रहः

**(वि, ग) स्वामी**ति—उपनायकं प्रति नायिकाया उक्तिरियम् । दीर्घनिःश्वासेन विरहाशङ्काया असूया । जिघ्रः घ्राता । ईषल्लिङ्गेनापि परनायकविषयमनोऽनुमापक इत्यर्थः । इङ्गितदैवतमिति दैवतत्वेन अत्यन्तं तद् बोद्ध्री । **नयनयोरि**ति–लेहनात् सामस्त्येन तद् बोद्ध्रीत्यर्थः । यातरः पतिभ्रातृपत्न्यः । **वल्लभोऽसी**त्यादि–इत्यत्र आदिपदात् अञ्जलिकरणादपीत्यर्थः । रतिः प्रतीयते इति. तत्प्रतीतिवशाच्चास्या निरतत्वसिद्धिः ।

**( वि, घ )** सान्या साधारणीत्युक्तां साधारणीमाह–**धीरे**ति । सामान्यनायिका

---

**( लो, उ )** निःश्वसितेऽपि–चेष्टायामपीत्यर्थः । मनोजिघ्रः मनसा घृतमप्यनायासादनुमिनोति, इङ्गितदैवतम् इङ्गितज्ञानं तस्या एव आयत्तम् । यः खलु यत्राधिष्ठानं तस्य तदभिज्ञानं सुकरमेव । ईहालिहः अत्रैव चेष्टाग्रहणशीलाः । वैदग्ध्या चातुर्येण मधुरो मनोहरो यः प्रबन्धो व्यापारस्तत्र रसिकेत्यनेन चातुर्येण निर्वाह्यो यो मदाभिगमनार्थं प्रबन्धस्तमाचरेति भावः ।

---

1 'तत्र परोढा यथा' इति ( ट. ण. पु. )

**निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि ।**
**वित्तमात्रं समालोक्य सा रागं दर्शयेद् बहिः ।**
**काममङ्गीकृतमपि परिक्षीणधनं नरम् ।**
**मात्रा निष्कासयेदेषा पुनः सन्धानकाङ्क्षया ।**
**तस्कराः [1]पण्डूका मूर्खा सुखप्राप्तधनास्तथा ।**
**लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः ।**
**एषापि मदनायत्ता क्वापि सत्यानुरागिणी ।**
**रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ॥ ८५ ॥ ( घ, ङ )**

**[2]पण्डूको वातपण्ड्वादिः । छन्नं प्रच्छन्नं ये कामयन्ते ते च्छन्नकामाः । तत्र रागहीना यथा—नटकमेलकादौ मदनमञ्जर्यादिः । रक्ता यथा—मृच्छकटिकादौ वसन्तसेनादिः ।**

**पुनश्च—**

**अवस्थाभिर्भवन्त्यष्टावेताः षोडशभेदिताः ॥ ८६ ॥ ( ङ, ऋ )**

---

साधारणी नायिका, सा च वेश्या इत्यर्थः । सैव च धीरा, कलाप्रगल्भा च इत्यर्थः, कला-विलासकला विलासः विब्वोकादयः । मात्रा मातृद्वारा । इदमुपलक्षणम्: अन्यद्वारापि इति बोध्यम् । तस्करादिप्रच्छन्नकामाद्यन्ता प्रायेण सुखप्राप्तधनाः । अत एव तासां वल्लभा इत्यर्थः । **एषापी**ति—एषा साधारणी मदनायत्ता चेत् तदा क्वाप्यनुरागिणी भवति । तथापि धनमात्रसाध्यत्वाद्रक्तायां विरक्तायां वा अस्यां रतं धनं विना सुदुर्लभमित्यर्थः । वातपण्ड्रो रतिप्रतिबन्धकव्याधिविशेषः ।

**(वि ङ)** विरक्तायां वेत्युक्तां रागहीनां दर्शयति—**तत्रे**ति । **अवस्थाभिरि**ति—स्वास्त्रयोदश, परकीये द्वे । साधारणी चैका । एवं षोडश नायिका । अवस्थाभिरष्टभिर्विशेषणैरष्टौ अष्टगुणा भवन्ति ।

---

**( लो, ऊ ) सामान्ये**ति । सामान्यनायिका साधारणी स्त्रीत्युद्दिष्टा वेश्या । सा च धीरा चतुरा । न रज्यति बहिर्दर्शयते, नत्वन्तर्वहति । **मात्रे**ति—मात्रा निष्कासयेत्, नत्वात्मना, पुनर्धनयोगे सति मातरि दोषं दत्त्वा परिग्राहयितुम् । **सुखे**ति—सुखप्राप्तधनं पित्राद्यर्जितधनम्, दुःखार्जितस्य व्ययितुमशक्यत्वात् । लिङ्गिनः तपस्विभगवत्प्रभृतयः । **मदनायत्ते**ति—अयमर्थः । मदनपरवशत्वस्य स्त्रीपुरुषसाधारणत्वात् तदुद्भवस्तस्यां न दण्डकारित इति । प्रच्छन्नं गुप्तम् । वातपण्ड्रो रोगविशेषः ।

**( लो, ऋ )** अवस्थाभिरष्टौ प्रत्येकमित्यर्थः ।

---

1 'पुण्ड्रकाः' ( ट. ढ, पु. ) 'पण्डकाः' (क. पु.)

2 'पण्डको वातपाण्ड्वादिः' (क. पु.) 'पुण्ड्रको वातपुण्ड्रकादिः' (ट. ड. पु)

**स्वाधीनभर्तृका तद्वत् खण्डिताथाभिसारिका।**
**कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका।**
**अन्या वासकसज्जा स्याद् विरहोत्कण्ठिता तथा[1] ॥८७॥** ( च )

तत्र—

**कान्तो[2] रतिगुणाकृष्टो न जहाति यदन्तिकम्।**
**विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्तृका॥ ८८॥** (छ, ऋ)

यथा—अस्माकं सखि वाससीत्यादि ( ९७ पृ० )।

**पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः।**
**सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥ ८९ ॥** ( ज ) *

यथा—तदवितथमवादीरित्यादि (१११ पृ०)।

**अभिसारयते कान्तं या मन्मथवशंवदा।**
**स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका॥ ९० ॥**

क्रमाद् यथा—( झ )

---

( **वि, च** ) आसामष्टावस्थारूपविशेषणवैशिष्ट्यं दर्शयति—**स्वाधीने**ति।

( **वि, छ** ) स्वाधीनभर्तृकालक्षणमाह—**कान्तो रती**ति। कन्यकायास्तु उपनायक एव कान्तो भर्ता च बोध्यः। तदनूढत्वमेव चास्याः। परोढत्वमुपनायकानेकहेतुसाधारणत्वमस्याः। अन्तिकात्यागोऽन्यस्थले न स्थितिः। वेश्यायास्तु निजपतेरेवं भावः।

( **वि, ज** ) खण्डितालक्षणमाह—**पार्श्वमेती**ति—कन्यकायास्तु उपनायक एव प्रियः। एवं साधारण्या अपि।

( **वि, झ** ) अभिसारिकालक्षणमाह—**अभिसारयते** इति। नच स्वीयायाः कथमभिसारः। उपनायकाभिसारे परोढत्वमिति वाच्यम्। पितृगृहस्थायाः स्वस्वामिन्यपि अभिसारसम्भवात्। **क्रमात् यथे**ति। प्रथमं कान्तमभिसारयन्त्या ततः कान्तमभिसरन्त्या उदाहरणमिति क्रमः।

---

( **लो, ऋ** ) तत्र तासु मध्ये। गुणो रतेर्विचित्रसुरतादिः शुश्रूषादिर्वा।

---

* अन्यसम्भोगचिह्नितः। अन्यस्या नायिकाया सम्भोगचिह्नं दन्तक्षतादि तद्युक्तः। ईर्ष्याकषायिता ईर्ष्यया कषायिता विकृतिमापन्ना।

1 'यथा' इति ( क. ग. पु. )
2 'यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति' इति ( ट. ड. पु. )

[1]नच मेऽवगच्छति यथा लघुतां
करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमभिगम्य वदे-
रभिदूति काचिदिति संदिदिशे ॥ ( ञ )
उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला
यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता ।
आरब्धे रभसान्मया प्रियसखि ! क्रीडाभिसारोत्सवे
चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः ॥ ( ट ) *

**संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।**
**अवगुण्ठनसंवीता कुलजाऽभिसरेद् यदि ॥ ६१ ॥** +
**विचित्रोज्ज्वलवेशा तु रणन्नूपुरकङ्कणा ।**
**प्रमोदस्मेरवदना स्याद् वेश्याभिसरेद् यदि ॥ ६२ ॥** ×
**मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।**

---

( वि, ञ ) **नच मे** इति । अभिदूति दूत्यां काचिन्नायिका इति संदिदिशे । सन्देशमाह—**नच मे** इति । एवं नायकमभिगम्य निपुणं प्रकृष्टं वदेः इत्यन्वयः ।

( वि, ट ) कान्तमभिसरन्तीमुदाहरति—**उत्क्षिप्तमि**ति । तमस्विन्यां चन्द्रोदयात् पथि स्वस्या अभिसारभङ्गं सख्यां कथयन्त्या उक्तिरियम् । अवगुण्ठनमाच्छादनं, तस्य क्षेपमपसारणं विधत्ते इति अतीतसामीप्ये वर्तमानं व्यधादित्यर्थः ।

( वि, ठ ) **आविद्धगतिसंचारे**ति—आविद्धः सभङ्गीका पितृगृहगत्यर्थं संचारो यस्यास्तादृशी ।

---

* इदं करकङ्कणद्वयम् उत्क्षिप्तं यथा शब्दो न भवेत् तथा मेखला दृढं बद्धा । मुखरयोः शब्दायमानयोर्मञ्जीरयोर्नूपुरयोर्मूकता निःशब्दता कृता । मया रभसात् हर्षात् क्रीडाभिसारोत्सवे विहाराय अभिसरणरूपोत्सवे आरब्धे सति चण्डालः चण्डालवत् क्रूरः विधुश्चन्द्रः तिमिरमन्धकार एवावरकत्वात् अवगुण्ठनपटः तस्य क्षेपमपसारणं विधत्ते ।

+ कुलजादिभेदेन अभिसारणप्रकारानाह—संलीना—अतीव संकुचिता । मूकीकृतानि निःशब्दीकृतानि भूषणानि यया सा । अवगुण्ठनेन संवीता आवृता ।

× विचित्रश्च उज्ज्वलश्च वेशो यस्याः सा । वेश्या तु द्रष्टॄणां चित्राकर्षणार्थम् एवं करोति ।

1 "त्वरय प्रस्तुतविधये यावत्तिमिराणि तरुणतरणानि ।
भावी कुलटावाटः शशधरकरकण्टकैरवहः॥" इत्युदाहरणान्तरं (च. ज. पु.)

आविद्धगतिसञ्चारा स्यात् प्रेष्याभिसरेद् यदि ॥ ६३ ॥+ (ठ)

तत्राद्ये उत्क्षिप्तमित्यादि ।

अनयोरूह्यमुदाहरणम् । ( ड, ऌ )

प्रसङ्गादभिसारस्थानानि कथ्यन्ते । ( ण )

क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् ।
[1]मालामञ्चं श्मशानञ्च नद्यादीनां तटी तथा ।
एवं कृताभिसाराणां पुंश्चलीनां विनोदने
स्थानान्यष्टौ तथा[2] ध्वान्तच्छन्नेषु क्वचिदाश्रयः ॥ ६४ ॥ ( ढ )*
[3]चाटुकारमपि प्राणनाथं रोषादपास्य या ।

---

( वि, ड ) अनयोरूह्यमिति—आद्ये ।

"अनणुरणन्मणिनूपुरमविरतशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥" इति

इयं हि अभिसरन्तीं वेश्यां प्रति शान्तस्य कस्यचिदुक्तिः । रणरणकं कामचिन्ताम् । प्रेष्यायास्तु "निःशङ्कच्युत" इत्यादिकमुदाहरणम् । मदस्खलितादिविशेषणान्यस्यां चन्दनादिवेशादूह्यानि ।

( वि, ढ ) मालामञ्चमुद्यानम्, कुत्रचिदाश्रय इत्यत्र विनोद इति शेषः ।

( वि, ण ) कलहान्तरितालक्षणमाह—चाटुकारमपीति । कन्यकासाधारणयोरुपनायक एव प्राणनाथः ।

---

( लो, ऌ ) प्रेष्याभिसारिका यथा—

ताम्बूलाक्तं दशनमसकृद्दर्शयन्तीह चेटी
घोटी हेषाद् विकृतरुदितं हेतुहीनं हसन्ती ।
स्थानास्थानस्खलितपदविन्यासमाभाषमाणा
यूनामग्रे सरति कुटिलं नर्तितोच्चैर्नितम्बम् ।

(लो,ण) स्थानानीति–अष्टानां स्थानानां महर्षिणोक्तत्वात् भिन्ननिर्देशः। यदाह–

---

+ मदेन गर्वात् स्खलितः विकृतः संलापो यस्याः सा । विभ्रमेण विलासेन उत्फुल्ले लोचने यस्याः सा ।

*पुंश्चलीनां, कुलटानाम् । ध्वान्तच्छन्नेषु अन्धकारावृतेषु स्थानेषु ।

1 मालापञ्चः ट. मालयं च ज. मालापञ्चाः ग. मालायञ्चाः ङ. मालायाञ्चः व. मालामाञ्चाः ( ढ. पु. )

2 'मुनिः प्राह ध्वान्तच्छन्नं स्थलं तथा' ( च. ज. पु. )

3 "पादयोः पतिते कान्ते या मानं न विमुञ्चति ।
तस्मिन् गते तु तापार्ता कलहान्तरिता तु सा ।"इति लक्षणान्तरं (ग.च.ज.पु.)

**पश्चात्तापमवाप्नोति कलहान्तरिता तु सा ॥६५॥** (ण)

[1]यथा मम तातपादानाम्—

नो [2]चाटु श्रवणे कृतं नच दृशा हारोऽन्तिके वीक्षितः
कान्तस्य प्रियहेतवे[3] निजसखीवाचोऽपि दूरीकृताः ।
पादान्ते विनिपत्य तत्क्षणमसौ गच्छन् मया मूढया
पाणिभ्यामवरुध्य हन्त सहसा कण्ठे कथं नार्पितः ॥ (त)

**प्रियः कृत्वापि संकेतं यस्या नायाति सन्निधिम् ।**
**विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता[4] ॥ ६६ ॥**

यथा—उत्तिष्ठ दूति ! यामो यामो यातस्तथापि नायातः ।
याऽतः परमपि जीवेज्जीवितनाथो भवेत्तस्याः । (थ)

**[5]नानाकार्यवशाद्यस्या दूरदेशं गतः पतिः ।**
**सा मनोभवदुःखार्त्ता भवेत्प्रोषितभर्तृका ॥ ६७ ॥**

यथा—[6]तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।

---

(वि, त) **नो चाटुश्रवण** इति । हारस्तन् प्रीत्यर्थं कान्तेन दत्तः । विनिपत्ये-त्यनन्तरं मया निराकृत इति पूरणीयम् ।

(वि, थ) विप्रलब्धालक्षणमाह—**प्रियः कृत्वेति । उत्तिष्ठ** इति । यामो मदागमनावधिप्रहरो यात इत्यर्थः । या नायिका अतः परमपि जीवेत् तस्या एवायं जीवितनाथो भवेत्; भविष्यतीत्यर्थः, ननु ममेति भावः ।

(वि, ञ) प्रोषितभर्तृकालक्षणमाह **नानाकार्य्ये**ति । अत्रापि कन्यापरोढयो-रुपनायक एव पतिः । **तां जानीया** इति—शापप्रतिरुद्धप्रियागमनाधिगमनस्य यक्षस्य

---

"स्थानान्यष्टौ प्रवदति मुनिः पुंश्चलीनां विनोदे" इति अष्टौ स्थानानि एतान्येव क्षेत्रादीनि।

---

1 यथेत्यग्रिमं नास्ति (ग. घ. पु.)

2 चाटुश्रवणं (क. ग. पु.) 3 'प्रियहेतवो' (च. ट. पु.)

4 "अहरहरनुरागाद् दूतिकां प्रेष्य पूर्वं
सरभसमभिसृत्य क्वापि संकेतके च ।
न मिलति खलु यस्या वल्लभो दैवयोगात्
प्रवदति भरतस्तां नायिकां विप्रलब्धाम् ।"
इति लक्षणान्तरं (प. व. पु.)

5 दूरदेशं गते कान्ते विवर्णा मलिना कृशा ।
या तिष्ठति तदाकाङ्क्षा सा स्यात् प्रोषितभर्तृका ॥ (इति च.)

6 च. पु. तु "आधिक्षामाम्–' इत्युदाहरणं दृश्यते

गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥ ( ञ ),

[1]**कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।**
**सा तु वासकसज्जा स्याद्विदितप्रियसंगमा ॥ ९८ ॥**

यथा—*राघवानन्दानां नाटके—

विदूरे केयूरे कुरु, करयुगे रत्नवलयै-
रलं, गुर्वी ग्रीवाभरणलतिकेयं किमनया ।
नवामेकामेकावलिमयि ( ऐ ) मयि त्वं विरचये-
र्न पथ्यं नेपथ्यं बहुतरमनङ्गोत्सवविधौ ॥ ( ट ) *

[2]**आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः ।**
**तदनागमदुःखार्ता विरहोत्कण्ठिता तु सा ॥ ९९ ॥**

मेघं संबोध्य प्रियावस्थाकथनमिदम् । जानीयाः जानीहि । एषु गुरुषु दिवसेषु गच्छत्सु गाढोत्कण्ठामत एव शिशिरमथितां पद्मिनीमिवान्यरूपां जातामहम् इत्यर्थः । वा-शब्द इवार्थे ।

( वि, ट ) वासकसज्जालक्षणमाह—**कुरुत** इति । सज्जिते केलियोग्यतया सज्जीकृते वासवेश्मनि यस्या मण्डनं सखी कुरुत इत्यर्थः । विदितप्रियसंगमा निश्चित-प्रियसंगमा । स्वीयाकन्ययोस्तु पितृगृहस्थयोरेवंभावो बोध्यः । **विदूरे** इति । वासगृहे नायकसंयोगार्थम् अल्पभूषणरचनार्थं सखीं प्रेरयन्त्यास्तां प्रयुक्तिरियम् । अयि सखि त्वं नवानाम् एकामेकावलीं हारं मयि विरचयेः । यतोऽनङ्गोत्सवविधौ बहुतरं नेपथ्यं वेशः न पथ्यं न हितम्ः कठिनसंयोगत्वेन आलिङ्गने दुःखदायकत्वात् अतोलङ्कारा-न्तरं निषेधति ।

( वि, ठ ) विरहोत्कण्ठितालक्षणम्—**आगन्तुमि**ति । अत्रापि कन्यकापरोढयो-

( लो. ऐ ) **नवामि**ति । एकावली एकगुणमुक्ताहारः ।

* च. पु. तु. तारांकितः पाठो न दृश्यते, किन्तु
अङ्गेष्वाभरणं करोति बहुशः पत्त्रेऽपि सञ्चारिणि
प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति ।
इत्याकल्पविकल्पतल्परचनासंकल्पलीलाशत-
व्यासक्तापि विना त्वया वरतनुर्नैषा निशां नेष्यति ॥ इति दृश्यते ।

1 वासवेश्मनि सुकल्पिततल्पे या समागमविधिं विदधाना ।
तिष्ठति प्रियसमागमसज्जा तां मुनिर्वदति वासकसज्जाम् ( इति च. पु. )

2 "उद्दाममन्मथमहाज्वरवेपमानां रोमाञ्चकञ्चुकितमङ्गकमावहन्तीम् ।
गाढानुरागवचनां पुरतः सखीनामुत्कण्ठितां वदति तां भरतः कवीन्द्रः ।"
( इति लक्षणान्तरं च. पु. )

यथा—[1]किं रुद्धः प्रियया कयाचिदथवा सख्या ममोद्वेलितः
 किं वा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः ।
इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं
 दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥ ( ठ )

**इति साष्टाविंशतिशतमुत्तममध्यमाधमस्वरूपतः ।**
**चतुरधिकाशीतियुतं शतत्रयं[2] नायिकाभिधानं स्यात् ॥१००॥ (ड)**

" इह च परस्त्रियौ कन्यकोढे[3] सङ्केतात् पूर्वं विरहोत्कण्ठिते । पश्चाद् विदूषकादिना सहाभिसरन्त्यावभिसारिके । कुतोऽपि [4]साङ्केतिकस्थानमप्राप्ते नायके विप्रलब्धे इति त्र्यवस्थैवानयोरस्वाधीनप्रिययोरवस्थान्तरायोगात्" इति कश्चित्[5] । ( ढ, ओ )

---

रुपनायक एव पतिः ।

**किं रुद्ध** इति—परोढाकन्यकयोरुपनायकस्य स्वीयायाश्च सपत्नीगृहं गतस्य नायकस्याऽनागमनेनोत्कण्ठितया इति पूर्वार्द्धोक्तिमालोच्य वक्त्राम्बुजं करतले विन्यस्य दीर्घं निश्वसितमित्यादि । सख्या मया प्रेषितया ।

**( वि, ड ) इति साष्टाविंशती**ति षोडशानामष्टगुणेन साष्टाविंशतिशतम् । तच्च उत्तममध्यमाधमस्वरूपं सत् चतुरधिकाशीतियुतं शतत्रयम् । नायिकाभिधानम्—नायिकेति अभिधानं यस्य साष्टाविंशतिनायिकाशतस्य तादृशमित्यर्थः । कुलटानां पापित्वेऽपि उत्तमत्वादिकामकलाकौशलतारतम्यात् । यद्वा—ब्राह्मणादिजातितारतम्यात् तथात्वम् । साष्टाविंशतिशतत्रैगुण्यादुक्तसंख्या ।

**( वि, ढ )** अत्र परस्त्रियोः कन्यकोढयोरवस्थात्रयस्य एवासंभवात् अष्टगुणत्वाभावेन उक्तसंख्या न भविष्यतीति कश्चिदाह—तद्दर्शयति । **इह चे**ति । संकेतात् पूर्वमिति संकेतात् हेतोः पूर्वं विरहोत्कण्ठिते पश्चात् विदूषकेत्याद्यन्वयः । **अवस्थान्तरा-**

---

**( लो, ओ ) अष्टे**ति—अष्टाविंशतिशतं षोडशानां प्रत्येकमष्टधा गुणनात् । पुनश्च उत्तममध्यमाधमभेदात् तत् त्रिगुणितम् । चतुरशीत्यधिकं शतत्रयमित्यर्थः ।

---

1 "एणीदृशः प्रबलतापभयादिवास्याः श्वासानिलाः प्रतिमुहु प्रसरन्ति दूरम् ।
 बाष्पाम्बुवीचिषु निमज्जनकातरेव निद्रा दृशोर्न सविधेऽपि पदं विधत्ते । "
 इत्युदाहरणान्तरं च. पु.

2 नायिकभेदाः ग. पु. ' नायिकाभिदानां स्यात् ' इति (द. पु.) ।

3 'कन्यकोन्याढे' इति ( क. ख. पु. )

4 'सङ्केतस्थानम्' इति क. । 'सङ्केतम्' इति ख.

5 'कन्यकोढे' इति ( च. ज. ट. पु. )

**क्वचिदन्योऽन्यसाङ्कर्य्यमासां लक्ष्येषु दृश्यते ॥ १०१ ॥ ( ण )**

यथा—

**न खलु वयममुष्य दानयोग्याः पिबति च पाति च यासकौ रहस्त्वाम् ।**
**विट ! विटपममुं ददस्व तस्यै भवति[1] यतः सदृशोश्चिराय योगः ॥ ( त, श्रो )**
**तव कितव ! किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः ।**

**योगादि**ति—तथाहि स्वाधीनभर्तृकात्वखण्डितात्वकलहान्तरितात्वप्रोषितभर्तृकात्व-वासकसज्जात्वरूपाः पञ्चावस्थाः भर्तृघटिताः, कन्यकापरोढयोस्तादृशावस्थाभावादित्यर्थः। काश्चिदित्यस्वरससूचनस्यायमभिप्रायः—सर्वत्र भर्तृपतिपदानि उत्कटानुरागविषय-कामुकपराणि स्वभर्त्रुपनायकसाधारणानि । अतस्तद्घटिताः स्वाधीनभर्तृकादि-चतुरवस्थाः संभवन्त्येव । वासकसज्जात्वावस्था तु पतिर्घटितैव न भवति इत्यतः कन्यकापरोढयोरपि ताः पञ्चावस्थाः संभवन्त्येव। एवं च स्वस्त्रिया अपि पितृगृहस्थायाः पित्रधीनत्वेन पत्या सह स्वच्छन्दसम्भोगासंभवात् । पत्यौ अभिसारविरहो-त्कण्ठाविप्रलम्भा भवन्त्येव इति यथोक्तसंख्याः ।

**( वि, ण ) क्वचिदन्योऽन्यसाङ्कर्य्यमि**ति—आसां धीराधीराधीराणाम् ।

**( वि, त ) न खलु वयमि**ति—कुसुमितविटपं दित्सुं स्वनायकं प्रति कोप-नाया उक्तिरियम् 'हे विट ! धूर्त्त ! अमुष्य विटपस्य दानयोग्या न खलु वयम् । किन्तु असकौ असौ या उपनायिका त्वां चक्षुषा पिबति सुरते प्रीतिजननात् प्रतिपालयति च तस्यै अमुं विटपं ददस्व यतः सदृशोर्योगश्चिराय भवति । असदृशोस्तु क्षणिकत्वन् निष्फल इत्यर्थः, सदृशत्वं च दर्शितयोगार्थवशात् । साऽपि विटपी अयं च विटप इति सादृश्यम् ।

**( वि, थ ) तव कितवे**ति— वृक्षपल्लवं कर्णपूरं ददानं नायकं प्रति कोप-

काश्चिदित्यसंतोषोक्तिः, तथा हि जयदेवकृतगीतगोविन्दे मम पितृणां कंसवधे परस्त्रिया राधिकाया अष्टावप्यवस्थाः स्पष्टमेव प्रकाशिताः, अन्यस्या-प्यात्मीयत्वेन परिगृहीतस्य परयोषिदुपभोगेष्ववस्थोचिता । मृदुरान्तरो मानः । तथापि मानेन कथंचिद् विभावदर्शनार्थमभिमुखं नायके गते कलहान्तरितात्वम् । तस्यैव प्रवासे प्रोषितभर्तृकात्वम् । एवमन्यदपि सुबुद्धिभिरूह्यम् ।

**( लो, श्रो ) न खल्वि**ति—पिबति सर्वतो निरुद्धप्रसरीकृत्य स्वामात्रायत्त-तायां प्रवेशयति उपभुङ्क्ते वा। मदनशरपातकातरं पाति रक्षति । असकाविति कुत्सितद्धि-तत्वेन तस्याः कुत्सितत्वं प्रकाश्यते । विटपेऽपि विटं पाति रक्षतीति व्युत्पत्तियोगः । तस्यामप्युक्तप्रकारेण तथात्वमिति द्वयोः सादृश्यम् । एवञ्चानयोर्विटपत्वेन सदृशयो-र्विटपयुवयोर्वा गर्हितत्वेन सदृशयोर्वा उचितो योगो यतः तस्यैव

1 'भवतु' ( ख. )

ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम् ॥ ( थ )
×इति गदितवती रुषा जघान स्फुरितमनोरमपक्ष्मकेशरेण ।
श्रवणनियमितेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च ॥ ( द )
इयं हि वक्रोक्त्या परुषवचनेन कर्णोत्पलताडनेन च धीरमध्यताधीरमध्यता-धीरप्रगल्भाभिः संकीर्णा[1] ।

एवमन्यत्राप्यूह्यम् ।

**[2]इतरा अप्यसंख्यास्ता नोक्ता विस्तरशङ्कया ॥ १०२ ॥ ( अ )**

ता नायिकाः । अथासामलङ्काराः—

**यौवने सत्त्वजास्तासामष्टाविंशतिरीरिताः[3] । (आ)**
**अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः ।**
**शोभा कान्तिश्च दीप्तिश्च माधुर्यञ्च प्रगल्भता ।**

---

नायाः नायिकाया उक्तिरियम् । हे कितव ! धूर्त ! आहवैः दत्तैः क्षितिरुहाणां वृक्षाणां पल्लवरूपैः कर्णपूरैः मम किं प्रयोजनमित्यर्थः । ननु भोः जनविदितैः भवद्-व्यलीकैः भवदपकर्मभिः मम कर्णयुग्मं चिरपरिपूरितमेव । तथा च योगार्थवशात् भवद्व्यलीकमेव मे कर्णपूर इत्यर्थः ।

**( वि, द ) इति गदिते**ति–पूर्ववर्णितनायिकातोऽन्या नायिका इति गदितवती सती रुषा अम्बुरुहेण चक्षुषा च तं नायकं जघान । कषायितचक्षुषा दर्शनमेव हननम् अम्बुरुहचक्षुषोर्द्वयोः विशेषणमाह—**स्फुरिते**ति––स्फुरितं मनोहरं पक्ष्मैव केशरवत् यस्य तादृशेन चक्षुषा । स्फुरितो मनोहरपक्ष्मवत् केशरो यस्य तादृशेन अम्बुरुहेण, तथा श्रवणपर्यन्तनियमितेन चक्षुषा श्रवणे नियमितेन अम्बुरुहेण उभयत्र स्थापन-मेव नियमनम् ।

**(वि, ध) अलङ्कारा** इति । शोभका धर्मा इत्यर्थः । अङ्गजत्वायत्नजत्वस्वभाव-जत्वानि परिभाषामात्राणि ननु एषां परस्परवैलक्षण्यमस्ति । अत्र भावाद्यास्त्रयः

---

विटपप्रदानेन भवतीति उभयथा सम्बन्धः ।

**(लो, अ) इतरा** इति । असंख्याः पद्मिनीमृग्यादिभेदात् ।

**(लो, आ) अथे**ति । अलङ्क्रियते भूष्यते एभिरित्यलङ्काराः । सत्त्वं गुणविशेषः । तासां नायिकानामीरिता उक्ताः ।

---

× इतः पूर्वं, 'मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम् । वसति-मुपगतेन धाम्नि तस्याः शठ ! कलिरेष महांस्त्वयाद्य दत्तः ॥' इति श्लोकान्तरं दृश्यते ।

1 संकीर्यते ( ख. पु. )

2 इदं तु श्लोकार्धं च., ट. पु. नास्ति ।

3 'तिसंख्यकाः' क. ख. पु.

औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः ।
लीलाविलासौ विच्छित्तिर्विव्वोकः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ।
विहृतं[1] तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।
हसितं चकितं केलिरित्यष्टादशसंख्यकाः ।
स्वभावजाश्च भावाद्याः दश पुंसां भवन्त्यपि ॥ १०३ ॥

पूर्वे भावादयो धैर्य्यान्ता दश नायकानामपि संभवन्ति । किन्तु सर्वेऽप्यमी नायिकाश्रिता एव विच्छित्तिविशेषं पुष्णन्ति । ( ध ) तत्र भावः ।

[2]निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ॥ १०४ ॥ ( इ )

जन्मतः प्रभृति निर्विकारे मनसि उद्बुद्धमात्रो विकारो भावः ।

यथा—

स एव सुरभिः कालः स एव मलयानिलः ।
सैवेयमबला किन्तु मनोऽन्यदिव दृश्यते ॥

अथ हावः—

भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः ।
भाव एवाल्पसंलक्ष्यविकारो हाव[3] उच्यते ॥ १०५ ॥ *

यथा—

विवृण्वती शैलसुताऽपि भावमङ्गैः क्वचिद् बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्य्यस्तविलोचनेन ॥ ( न, ई )

---

शोभाद्याः सप्त लीलाद्या अष्टादश इति अष्टाविंशतिः । विच्छित्तिविशेषं भङ्गीविशेषम् ।

( वि, न ) **विवृण्वती शैलसुतापी**ति–तपस्यतो महेशस्य समीपे कामेन धनुषि आरोपिते पार्वत्या हाववर्णनमिदम्, क्वचित् तस्थावित्यन्वयः । अङ्गैर्भावं विवृण्वतीत्यन्वयः । बालकदम्बपुष्पतुल्यताम् अङ्गानां पुलकेन मुखेन साचीकृता वक्रीकृता; वक्रमुखवैशिष्ट्यात् तस्या वक्रता ।

---

( लो, इ ) **निर्विकारे**ति–विकारो मदनविकारः ।

( लो, ई ) **विवृण्वती**ति अत्र हावेऽपि भावविशेषत्वात् भावशब्दप्रयोगः मुखेन साचीकृता न संमुखीभूतेत्यर्थः । पर्य्यस्तं समन्ततः क्षिप्तम् ।

---

* अल्पं संलक्ष्यः ज्ञेयः विकारः मनोविकृतिर्यस्य सः ।

1 'विहृतम्' इति (च. ट. पु.)

2 'निर्विकारात्मकात् सत्त्वाद् भावस्तत्राद्यविक्रिया' ( इति लक्षणान्तरं च. पु. )

3 'हेवाकस्तु सशृङ्गारो हावोऽक्षिभ्रूविलासकृत् । प्रतिनियताङ्गविकारकारी सशृङ्गारः स्वभावविशेषो हावः' ( इति च. पु. )

अथ हेला—

हेलात्यन्तं समालक्ष्यविकारः स्यात् स एव च ॥ १०६ ॥

स एव भाव एव ।

यथा—

तह से झत्ति पउत्ता वहुए सव्बङ्गविब्भमा सअला ।

संसइअमुद्धभावा होई चिरं जइ सहीणम्पि । (प)

[1]रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम् ।

शोभा प्रोक्ता ॥ १०७ ॥

तत्र यौवनशोभा यथा—

असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।

कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥ (फ)

एवमन्यत्रापि—

अथ कान्तिः—

सैव कान्तिर्मन्मथाप्यायितद्युतिः ॥ १०८ ॥

मन्मथोन्मेषेणातिविस्तीर्णा शोभैव कान्तिरुच्यते ।

यथा—नेत्रे खञ्जनगञ्जन इत्यादि— (ब)

अथ दीप्तिः—

कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ॥ १०९ ॥

यथा—मम चन्द्रकलानामनाटिकायां चन्द्रकलावर्णनम्—

---

(वि, प)

तथा तस्या झटिति प्रवृत्ता वध्वाः सर्वाङ्गविभ्रमाः सकलाः ।

संशयितमुग्धभावा भवन्ति चिरं यथा सखीनामपि ॥

इति संस्कृतम् । नायकं प्रति नायिकायाः विभ्रमोन्मेषवर्णनमिदम् । मुग्धभावो बाल्यात् मूढभावः ।

(वि, फ) **रूपयौवने**ति—रूपादिचतुर्भिरङ्गभूषणम् अङ्गशोभा । **असम्भृतं मण्डनमि**ति—सा पार्वती अथ अनन्तरं बाल्यात् परं वयः यौवनं प्रपेदे । वयसि रूपकाण्याह—असम्भृतम् इति हरितालादि संभारजनितम् अङ्गयष्टेर्मण्डनम् । मदस्य मत्ततायाः कारणं हेतुः । अनासवाख्यम् आसवस्य मदिराया या आख्या संज्ञा तद्रहितमासवभिन्नमितियावत् । पुष्पभिन्नं कामस्य अस्त्रम् अङ्गभूषणम् अङ्गशोभा असम्भृतमण्डनमिति । अथानन्तरम् ।

(वि, ब) **नेत्रे खञ्जने**ति । इदमुदाहरणं प्ररूढयौवनायाः प्रागुक्तम् ।

---

1 अतः प्राग्, 'अथ शोभा' (इति क. ख. पु.)

तारुण्यस्य विलासः समधिकलावण्यसंपदो हासः ।
धरणितलस्याभरणं युवजनमनसो वशीकरणम् ॥ ( भ )

अथ माधुर्य्यम्—

**सर्वावस्थाविशेषेषु माधुर्य्यं रमणीयता ॥ ११० ॥**

यथा—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ ( म )

अथ प्रगल्भता—

**निःसाध्वसत्वं प्रागल्भ्यम् ॥ १११ ॥**

यथा—

समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि ।
दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः ॥

अथौदार्य्यम्—

**औदार्य्यं विनयः सदा ॥ ११२ ॥**

यथा—

न ब्रूते परुषां गिरं वितनुते न भ्रूयुगं भङ्गुरं
नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि ।
कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या बहिः
सख्या वक्त्रमभिप्रयच्छति परं पर्य्यश्रुणी लोचने ॥ ( य )

---

**( वि, भ ) तारुण्यस्ये**ति । एतदादीनि चन्द्रकलाया विशेषणानि । विलास-हासयोर्जनिका इत्यर्थः । शुद्धसारोपा इयं लक्षणा ।

**( वि, म ) सरसिजमि**ति–इयं शकुन्तला वल्कलेनापि अधिकमनोज्ञा । अतो मधुराणामाकृतीनां किमिव न मण्डनम्, तत्र दृष्टान्तमाह—**सरसिजमि**ति–अनुविद्धं सम्बद्धम् । लक्ष्म कलङ्कः । लक्ष्मीं शोभाम् ।

**(वि, य) न ब्रूते** इति । प्रियायाश्चरितं सख्यौ कथयत उक्तिरियम् । मे मम स्फुटेऽप्यागसि अपराधे सा कान्ता सख्या वक्त्रमभि सख्या वक्त्रे पर्य्यश्रुणी लोचने प्रयच्छति । सख्याः कीदृश्याः सागसं मां द्रष्टुं गवाक्षविवरव्यापारिताक्ष्याः । मान्तु परुषं रुषा न ब्रूते इत्यादि स्पष्टम् । क्षितौ श्रवणतः उत्तंसं क्षिपतीत्यन्वयः ।

अथ धैर्य्यम्—

**मुक्तात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला ॥ ११३ ॥**

यथा—

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यते[1] ।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं नत्वेवायं जनो न च जीवितम् ॥ (र)

अथ लीला—

**अङ्गैर्वेषैरलङ्कारैः प्रेमाभिर्वचनैरपि ।**
**प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ॥ ११४ ॥**

यथा—

मृणालव्यालवलया वेणीबन्धकपर्दिनी ।
हरानुकारिणी पातु लीलया पार्वती जगत् ॥ ( ल )

अथ विलासः—

**यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् ।**
**विशेषस्तु विलासः स्यादिष्टसंदर्शनादिना ॥ ११५ ॥**

---

**( वि, र ) मुक्तात्मशलाघने**ति—अचञ्चला मनोवृत्तिर्या मुक्तात्मशलाघना सा धैर्य्यमिति भावः। **ज्वलतु** इति। गौरिकाविवाहे उद्वेजमानायास्तत्र संमितायाः मालत्या उक्तिरियम् । मम विरहोद्दीपनाय रात्रौ अखण्डकलः शशी ज्वलतु । मदनोऽपि मां दहतु । मृत्योः परेण कर्मणा किं वा तेन विधास्यते । वरं मृत्युरेव विधीयते; तथापि पितृमातृकुलकलङ्कं न जनयिष्यामि इत्यभिप्रायेणाह—**मम त्वि**ति। अतस्तु मयि मम दयितः दयायोग्यो यतः श्लाघ्यः निष्कलङ्कः। अतस्तत्कलङ्कं न जनयिष्यामीत्यर्थः। एवममलान्वया मम जनन्यपि दयितेत्यर्थः। नत्वेवायं जनो माधवः दयितो जीवितञ्च न दयितमित्यर्थः ।

**(वि, ल) अङ्गैर्वेषैरि**ति । प्रीतिप्रयोजितैरङ्गादिभिः प्रियस्यानुकृतिं सदृशाचरणं लीलां विदुरित्यर्थः । **मृणाले**ति । मृणालात्मकसर्पवलया । वेणीबन्धात्मककपर्दिनी पार्वती सर्पवलयस्य जटावतो हरस्यानुकारिणी जगत् पात्वित्यन्वयः ।

**( वि, व ) यानासने**ति । इष्टसंदर्शनादिना यानादीनां विशेष इत्यन्वयः । यानम् गमनम् । विशेषो हर्षसूचकं वैलक्षण्यम् । **अत्रान्तर** इति—वकुलवीथ्याम् उपविष्टं माधवं विलोक्य गजेन यान्त्या मालत्या हर्षक्रियां मकरन्दे कथयतः माधवस्योक्तिरियम् । अत्रान्तरे पूर्वकथितवृत्तान्तमध्ये आयताक्ष्या मालत्यास्तन्मयानु-

---

1 'विधास्यति' इति ( क. ख. पु. )

यथा—

अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
तद्भूरिसात्त्विकविकारमपास्तधैर्य्य-
माचार्य्यकं विजयि मान्मथमाविरासीत्" ॥ ( व, उ )

अथ विच्छित्तिः—

**स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत्[1] ॥ ११६ ॥**

यथा—

" स्वच्छाम्भःस्नपनविधौ तमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासस्तु प्रतनु विविक्तमस्त्विवतीया-
नाकल्पो यदि कुसुमेषुणा न शून्यः ॥ " ( श )

अथ विव्वोकः-

**विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः ॥ ११७ ॥**

यथा—

यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परा
याः प्राणान् वरमर्पयन्ति न पुनः सम्पूर्णदृष्टिं प्रिये ।

---

भूतम्; मान्मथमाचार्य्यकं मन्मथाचार्य्योपदिष्टक्रियाऽऽविरासीदित्यर्थः । कीदृशं वाग् विभवातिक्रान्तवैचित्र्यं स्पष्टमन्यत् ।

**(वि, श) स्तोकापी**ति । कान्तिपोषिका स्तोकापि आकल्परचना अल्पापि वेशरचनेत्यर्थः । **स्वच्छाम्भ** इति-विलासिनीनामाकल्पो वेशः कुसुमेषुणा यदि न शून्यः तदा इयानप्यस्तु । स क इत्यत्राह-**स्वच्छे**ति-स्वच्छाम्भसि स्नपनेन विधौतं विक्षालितमङ्गम् । ओष्ठश्च ताम्बूलद्युतिविशदः । प्रतनु सूक्ष्मं विविक्तं परिच्छिन्नं वासश्चेति ।

**( वि, ष ) यासा**मिति—सत्यपि भावे वामाचरणशीलासु नायिकासु अनुरागिणः कस्यचिदुक्तिरियम् । दोषानुवृत्तिः दोषार्पणम् । तच्च गर्वात् चाटुं कारयितुं

---

**(लो, उ) अत्रान्तरे** इति । मन्मथस्याचार्यकमाचार्यकत्वं भावशिक्षाविशेषः । मन्मथदेवाराधनेन यं यं भावविशेषमधिगतवती तं तं तत्र प्रकाशितवतीत्यर्थः ।

---

1 'पोषकृत्' ( क. ख. पु. )
2 'विविक्तं' ( ट. पु. )
3 'वरम्' ( च. ज. पु. )

अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मक-
स्तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः प्रसीदन्तु[1] ते ॥ (ष, ऊ)

अथ किलकिञ्चितम्—

**स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम् ।**
**साङ्कर्य्यं किलकिञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात् ॥११८॥**

यथा—

पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितञ्च सुखे[2]ऽपि । (स)

अथ मोट्टायितम्—

**तद्भावभाविते चित्ते वल्लभस्य कथादिषु ।**
**मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम् ॥ ११९ ॥**

यथा—

सुभग ! त्वत्कथारम्भे कर्णकण्डूतिलालसा ।
उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना ॥ (ह)

अथ कुट्टमितम्—

**केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात् ।**
**प्राहुः कुट्टमितं नाम शिरःकरविधूननम् ॥ १२० ॥**

यथा—पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे ।

---

प्रिये परं केवलं प्राणान् अर्पयन्तीति अन्वयः । न संपूर्णदृष्टिं गर्वात् कटाक्षमात्रम् । अत्यन्ताभिमते वस्तुनि सुरते ।

(वि, स) **पाणिरोधमि**ति । करभोरूः कामिनः पाणिरोधादिकमविरोधितेत्यादि विशिष्टं यथा स्यात् तथा कुरुते स्म । स्पष्टमन्यत् ।

(वि, ह) **तद् भाव** इति । वल्लभस्य कथादिषु प्रसङ्गेषु केनाप्यारभ्यमाणेषु तद्भावभाविते तदनुरागनिषेविते चित्ते सति कर्णकण्डूयनादिकं मोट्टायितमिति प्राहुःइत्यर्थः । कथासु इत्यादिपदादिङ्गितपरिग्रहः । कण्डूयनादिकमित्यादिपदादङ्गभङ्गीचरणभूमिलिखनपरिग्रहः । सुभगेत्यादि स्पष्टम् ।

(वि, क्ष) **पल्लवोपमिति** इति—अभीष्टे प्रियेऽधरबिम्बं दष्टवति सति अर्थात्

---

(लो, ऊ) **अत्यन्ताभिमते** इति—निषेधात्मको विधिः किमनेनास्माकम् इत्याद्यनादरयुक्तमेवाभिमतवस्तुनः अपरिग्रह इत्यर्थः ।

(लो, ऋ) **पल्लवे**ति । पल्लवस्य उपमित्या साम्येन सपक्षम् । द्वयोरपि करा-

---

1 'प्रसिध्यन्तु ते' (च. ट. पु.) 2 'मुखेपि' (ग. च. पु.)

पर्य्यङ्कजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥ (ख, ऋ)

अथ विभ्रमः—

**त्वरया हर्षरागादेर्दयितागमनादिषु ।**
**अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः ॥ १२१ ॥**

श्रुत्वाऽऽयान्तं बहिः कान्तमसमाप्तविभूषया ।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥

अथ ललितम्—

**सुकुमारतयाङ्गानां विन्यासो ललितं भवेत् ॥ १२२ ॥ (क)**

यथा—

गुरुतरकलनूपुरानुनादं [1]सललितनर्त्तितवामपादपद्मा ।
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥ (ख)*

अथ मदः—

**मदो विकारः सौभाग्ययौवनाद्यवलेपजः ॥ १२३ ॥**

यथा—

मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।

---

निषेधार्थं धूयमानेन करेण पर्य्यङ्कजीत्यन्वयः । कीदृशेन करेण तारस्वरलोलवलयेन । तदुत्प्रेक्षते—**सरुजेवे**ति । धर्मिणोऽधरस्य क्षतमेव तदवयवस्यापि करस्य रुक् इतिभावः । अधरबिम्बं कीदृशम् ? उपामित्यर्थेन साम्येन पल्लवसपक्षम् ।

**( वि, क ) सुकुमारतये**ति—अङ्गानां विन्यासो विलक्षणन्यासः सुकुमारतया कोमलतया ।

**( वि, ख )** गुरुतरेत्यादिकं नर्त्तनक्रियाविशेषणम् । ललितं सुन्दरम्, नतु प्रकृतललितभावम्, नर्तनस्यैव तत्त्वात् । इतरत् पदम् ।

**( वि, ग ) मदो विकार** इति । अवलेपो गर्वः । **मा गर्वमि**ति—अन्यनायिकायाः पतिसौभाग्याऽधीनगर्वं सूचयन्त्याः तत्सख्याः तत् सपत्न्यामुक्तिरियम् । हे सखि ! मम कपोलतले कान्तस्वहस्तालिखिता मञ्जरी पुष्पकलिका चकास्ति शोभते इति गर्वं

---

धरयोः पल्लवस्तु उपमानत्वेन निर्दिश्यते ।

**( लो, ऋ ) मा गर्वमि**ति । वेपथुः कान्तस्य हस्तसम्बन्धी ।

---

* सा बाला सललितं सुन्दरं नर्त्तितं वामपादरूपं पद्मं यया तथा सती गुरुतरः अतिमहान् कलः नूपुरस्य अनुनादो रणो यस्मिन् तादृशमितरत् पदं दाक्षिणं पदमनतिलोलं शनैरादधाना भूमौ विन्यस्यन्ती मन्मथेन कामवशेन मन्थरं मन्दं जगाम ।

1 'सु' ( ढ. पु. )

अन्याऽपि किं न [1]खलु भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः ॥ (ग, ऋ)

अथ [2]विकृतम्—

**वक्तव्यकालेऽप्यवचो व्रीडया विकृतं मतम् ॥ १२४ ॥**

यथा—

दूरागतेन कुशलं पृष्टा नोवाच सा मया किञ्चित् ।
पर्यश्रुणी तु नयने तस्याः कथयांबभूवतुः सर्वम् ॥ (घ)

अथ तपनम्—

**तपनं प्रियविच्छेदे [3]स्मरावेशोत्थचेष्टितम् ॥ १२५ ॥**

यथा—

श्वासान्मुञ्चति भूतले विलुठति त्वन्मार्गमालोकते
[4]दीर्घं रोदिति विक्षिपत्यत इतः क्षामां भुजावल्लरीम् ।
किञ्च प्राणसमान काङ्क्षितवती स्वप्नेऽपि ते सङ्गमं
निद्रां वाञ्छति न प्रयच्छति पुनर्दग्धो विधिस्तामपि ॥ (ङ, लृ)

अथ मौग्ध्यम्—

**अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः ।**

---

मा उद्वह। कथमित्यत आह—**अन्यापी**ति। अन्या तव सपत्नी मम सखी कि कपोले तन्न लिखतीत्यत्राह । **वैरी**ति—वेपथुरत्र मञ्जरीलिखनाधिकारणमलाभो नायिकाया एव पत्युर्भावातिशयदर्शनेन भावोदयात्—नतु लेखकस्य पत्युः पाणेः, तस्य गर्वितनायिकाविकारत्वाभावात् ।

( वि, घ ) **दूरागतेने**ति। सख्यौ सख्युरुक्तिरियम् । मया कुशलं पृष्टेत्यन्वयः सर्वमितिविरहार्धानं तत् तद्दुःखमित्यर्थः ।

(वि ङ) **श्वासान् मुञ्चति** इति। इयं विरहगयाश्चेष्टां नायके कथयन्त्या उक्तिः । हे तस्याः प्राणसमान ! तव विरहे तव प्रिया श्वासान् मुञ्चतीत्यादि । क्षामां क्षीणाम् चेष्टान्तरकथनार्थमाह—**किञ्चे**ति । तामपि निद्रामपि ।

( वि, च ) **अज्ञानादिवे**ति—प्रतीतस्यापि वस्तुनः अज्ञानादिव या वल्लभस्य

---

( **लो, लृ**) **किञ्चे**ति । प्राणसमानेति प्रियस्य सम्बोधनम् ।

---

1 'सखि' ( घ. च पु. )
2 'विकृतम्' ( ट. ड. पु. )
3 '—वेगो—' ( ख. ग. च. पु. )
4 'दीनं' ( ख. ग. पु. )

**वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः ॥ १२६ ॥**

यथा—

के द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः ।
नाथ ! मत्कङ्कणन्यस्तं येषां मुक्ताफलं फलम् ॥ (च)

अथ विक्षेपः—

**भूषाणामर्द्धरचना वृथा[1] विष्वगवेक्षणम् ।**
**रहस्याऽऽख्यानमीषच्च विक्षेपो दयितान्तिके ॥ १२७ ॥**

यथा—

धम्मिल्लमर्द्धमुक्तं कलयति तिलक तथासकलम् ।
किञ्चिद्वदति रहस्यं चकितं विष्वगवेक्षते तन्वी ॥ (छ)

अथ कुतूहलम्—

**रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम् ॥ १२८ ॥**

यथा—

प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।
उत्सृष्टलीलागतिरा गवाक्षादलक्तकाङ्कां पदवीं ततान ॥ (ज)

अथ हसितम्—

**हसितन्तु वृथाहासो यौवनोद्भेदसंभवः ॥ १२९ ॥**

अकस्मादेव तन्वङ्गी जहास यदियं पुनः ।
नूनं प्रसूनबाणोऽस्यां स्वाराज्यमधितिष्ठति ॥' (झ)

---

पुरः पृच्छा इत्यर्थः । के द्रुमा इति । येषां फलं मुक्ताफलमित्यन्वयः ।

**(वि, छ) भूषाणामि**ति—विष्वक् सर्वतो वृथान्वेक्षणमित्यन्वयः । दयिकान्तिके इति सर्वत्रान्वयः । **धम्मिल्लमि**ति—संयतकेशम्, अर्द्धमुक्तम् । तिलकमसकलञ्च तन्वी कलयते कुरुते इत्यर्थः । अत्र पूर्वार्द्धं नायकानुरागोद्दीपकम्, परार्द्धं लज्जया ।

**( वि, ज ) प्रसाधिकालम्बितमि**ति—इन्दुमत्या स्वयं वृतस्य अजस्य पुरीप्रवेशे दिदृक्षोः स्त्रियाः क्रियावर्णनमिदम् । प्रसाधिकया स्त्रिया आलम्बितम् अग्रपादं पदाग्रम् द्रवरागमशुष्कालक्तकमेव काचित् पुरस्त्री आक्षिप्य आकृष्य उत्सृष्टलीलागतिः त्यक्तलीलागतिः सती पदवीमागवाक्षात् गवाक्षपर्य्यन्तम् अलक्तकाङ्कां ततानेत्यन्वयः ।

**( वि, झ ) अकस्मादेवे**ति—इयं तन्वी यत् पुनरकस्मादेव जहास तेन इति पूरणादुत्तरार्द्धान्वयः । स्वाराज्यं स्वर्गराजत्वम् इयमेव स्वर्ग इति भावः ।

---

1 'मिथ्या' ( च. छ. ज. पु. )

अथ चकितम्—

**कुतोऽपि दयितस्याग्रे चकितं भयसंभ्रमः ॥ १३० ॥**

यथा—

त्रस्यन्ती चलशफरीविघट्टितोरू-
वामोरूरतिशयमाप विभ्रमस्य ।
क्षुभ्यन्ति, [1]प्रततमहो विनापि हेतो-
र्लीलाभिः किमु सति कारणे तरुण्यः ॥ ( ञ )

अथ केलिः—

**विहारे[2] सह कान्तेन क्रीडितं केलिरुच्यते ॥ १३१ ॥**

यथा—

व्यपोहितुं लोचनतो मुखानिलै-
रपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः
प्रियं जघानोन्नतपीवरस्तनी ॥ ' ( ट )

अथ मुग्धाकन्ययोरनुरागेङ्गितानि—

**दृष्ट्वा दर्शयति व्रीडां सम्मुखं नैव पश्यति ।**
**प्रच्छन्नं वा भ्रमन्तं वाऽतिक्रान्तं पश्यति प्रियम् ।**
**बहुधा पृच्छ्यमानाऽपि मन्दमन्दमधोमुखी ।**
**सगद्गदं स्वरं किञ्चित् प्रियं प्रायेण भाषते ।**

---

( वि, ञ ) **कुतोऽपी**ति—दयितस्याग्रे कुतोऽपि हेतोः भयसंभ्रमः व्याकुलता इत्यर्थः । **त्रस्यन्ती**ति—दयितेन सह जलक्रीडायां नायिकाया भयविभ्रमवर्णनमिदम् । वामोरूः चलशफरीभिर्विघट्टितोरूः सती त्रस्यन्ती विभ्रमस्य विलासस्याऽतिशयमाप इत्यन्वयः । अर्थान्तरन्यासमाह **क्षुभ्यन्ती**ति । अहो तरुण्यः हेतोर्विनापि लीलाभिः प्रततमतिशयं क्षुभ्यन्ति संचलन्ति कारणे तु सति किमु इत्यर्थः ।

( वि, ट ) **व्यपोहितुमि**ति—काचिदुन्नतपीवरस्तनी उन्मनाः कामोद्विग्न-मनाः प्रियमुरसि पीवरस्तनेन जघान । कीदृशं प्रियम् पुष्पजं रजः तस्या लोचनतो मुखानिलैर्व्यपोहितुम् अपाकर्त्तुम् अपारयन्तम् ।

( वि, ठ ) मुग्धाकन्ययोरनुरागेङ्गितानि स्पष्टानि । अथ सकलनायिका-नुरागेङ्गितान्याह । संव्यानं वस्त्रम् ( उत्तरीयम् )

---

1 'प्रसभ' ( क. ख. पु. )
2 'विलासे' ( ख. चं. पु. )

अन्यैः प्रवर्त्तितां शश्वत् सावधाना च तत्कथाम् ।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी ॥ १३२ ॥ ( ठ )

अथ सकलानामपि नायिकानामनुरागेङ्गितानि—

चिराय सविधे स्थानं प्रियस्य बहु मन्यते ।
विलोचनपथञ्चास्य न गच्छत्यनलङ्कृता ।
कापि कुन्तलसंव्यानसंयमव्यपदेशतः । ( ड )
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम् ।
आच्छादयति[1] वागाद्यैः प्रियस्य परिचारकान् ।
विश्वसित्यस्य मित्रेषु बहुमानं करोति च ।
सखीमध्ये गुणान् ब्रूते स्वधनं प्रददाति च । ( ढ )
सुप्ते स्वपिति दुःखेऽस्य दुःखं धत्ते सुखे सुखम् ।
स्थिता दृष्टिपथे शश्वत् प्रिये पश्यति दूरतः । ( ण, ए )
आभाषते परिजनं [2]सम्मुखे स्वरविक्रियम् ।
यत् किञ्चिदपि संवीक्ष्य कुरुते हसितं मुधा । ( त )
कर्णकण्डूयनं तद्वत् कबरीमोक्षसंयमौ ।
जृम्भेत स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति । ( थ )
भाले तथा वयस्याया रचयेत्तिलकक्रियाम् ।
अङ्गुष्ठाग्रेण लिखति सकटाक्षं निरीक्षते । ( द )

---

( वि, ड ) वागाद्यैरित्यादिपदात् ताम्बूलदानादिपरिग्रहः ।

( वि, ढ ) स्वधनं ददाति च इत्यत्र याचकाय भर्त्ते इति शेषः ।

( वि, ण ) प्रिये दूरतः पश्यति सति इति शश्वत् वारम्वारम् अस्य दृष्टिपथे स्थिता भवतीति शेषः ।

( वि, त ) समुग्धस्वरविक्रियं मधुरस्वरविकारं यथा स्यात्तथा ।

( वि, थ ) स्फोटयति लीलया भङ्गयति। बालचुम्बनं पतिसम्मुखे ।

( वि, द ) **सकटाक्षमिति** । पूर्वं कटाक्षपूर्वकहासोक्तिः इदानीं कटाक्षमात्रस्य इति भेदः ।

---

( लो, ए ) **स्थिते**ति । प्रियस्य दृष्टिपथे स्थिता तस्मिन् दूरतः पश्यति सति । मुग्धस्वरविकारादियुक्तपरिजनाभाषणादीनि स्वाधरदशनपर्य्यन्तानि कर्म्माणि करोति इत्यर्थः । यदि च प्रियस्य कथां कथयति तदाऽधोमुखी सती कथयति ।

---

1 'आनन्दयति' ( ट. ठ. ड. पु. )

2 'सम्मुखं स्मरविक्रियम्' ( इति क. ख. ग. पु. )

दशति स्वाधरं चापि ब्रूते प्रियमधोमुखी ।
न मुञ्चति च तं देशं नायको यत्र दृश्यते । ( ध )
आगच्छति गृहं तस्य कार्य्यव्याजेन केनचित् । ( न )
दत्तं किमपि कान्तेन धृत्वाङ्गे मुहुरीक्षते । ( ऐ )
नित्यं हृष्यति तद्योगे वियोगे मलिना कृशा ।
मन्यते बहु तच्छीलं तत् प्रियं मन्यते प्रियम् ।
प्रार्थयत्यल्पमूल्यानि सुप्ता न परिवर्त्तते । ( प )
विकारान् सात्त्विकानस्य सम्मुखं[1] नाधिगच्छति । ( फ )
भाषते सूनृतं स्निग्धमनुरक्ता नितम्बिनी ॥ १३३ ॥
एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः । ( ओ )
मध्यव्रीडानि मध्यायाः स्रंसमानत्रपाणि तु ।
अन्यास्त्रियाः प्रगल्भायास्तथा स्युर्वारयोषितः ॥ १३४ ॥

दिङ्मात्रं यथा मम—

आन्तिकगतमपि मामियमलोकयन्तीव[2] हन्त दृष्टाऽपि ।
सरसनखक्षतलाञ्छितमाविष्कुरुते भुजामूलम् ॥ ( ब )
[3]लेखप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः ।
दूतीसंप्रेषणैर्नार्य्या भावाभिव्यक्तिरिष्यते ॥ १३५ ॥

दूत्यश्च—

दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी ।

---

( **वि, ध** ) अधरदंशनमपि लीलाविशेषः ।

( **वि, न** ) आगच्छति गृहं तस्येति भिन्नगृहस्थितस्य इत्यर्थः ।

( **वि, प** ) **प्रार्थयत्यल्पमूल्यानी**ति–बहुमूल्यप्रार्थने तदप्रीतिभयमित्यर्थः ।

( **वि, फ** ) सम्मुखं नाधिगच्छति किन्तु पार्श्वस्था एव इत्यर्थः ।

( **वि, ब** ) **अन्तिकगतमपी**ति । सख्यौ सख्युरुक्तिरियम् । हन्त हर्षे दृष्टापि इयं प्रियान्तिकगतमपि माम् अलोकयन्तीव अपश्यन्तीव सरसनखक्षतेन लाञ्छितं चिह्नितं भुजामूलं बाहुमूलम् आविष्कुरुत इत्यर्थः ।

---

( **लो, ऐ** ) **दत्तमि**ति । किमपि तुच्छमपि वस्तु ।

( **लो, ओ** ) एतेषु अनुरागेङ्गितेषु मध्ये ।

---

1 'संमुखी' ( क. ख. पु )

2 'लोकयतीव' ( क. ख. च. पु. )

3 इतः प्राक्, 'तथा' इति ( क. च. पु. )

**बाला प्रव्राजिता कारूः[1] शिल्पिन्याद्याः स्वयं तथा ॥ १३६ ॥**

कारू रजकीप्रभृतिः। शिल्पिनी चित्रकारादिस्त्री। आदिशब्दात्ताम्बूलिक-गान्धिकस्त्रीप्रभृतयः। तत्र सखी यथा, श्वासान्मुञ्चतीत्यादि। स्वयं दूती। यथा मम—

पन्थिअ ! पिआसिओ विअ लच्छीअसि जासि ता किमणत्तो।
ण मणं पि वारओ इध[2], अत्थि घरे घणरसं पिअन्ताणम्॥ (भ, औ)

एताश्च नायिकाविषये नायकानामपि दूत्यो भवन्ति।

दूतीगुणानाह—

**कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः।**
**माधुर्यं नर्म्म विज्ञानं वाग्मिता चेति तद् गुणाः।**
**एता अपि यथौचित्यादुत्तमाधममध्यमाः ॥ १३७ ॥**

एता दूत्यः।

अथ प्रतिनायकः—

**धीरोद्धतः पापकारी व्यसनी प्रतिनायकः ॥ १३८ ॥** (म)

यथा रामस्य रावणः।

अथोद्दीपनविभावाः— (य, अ)

---

(**वि, भ**) स्वयं तथेति स्वयमपि दूती। **पन्थिअ** इति।

पथिक ! पिपासुरिव लक्ष्यसे यासि तत् किमन्यत्र।
न मनागपि वारक इहास्ति गृहे घनरसं पिबताम्॥ इति संस्कृतम्

मनाक् अल्पः। घनरसम् जलम्। व्यङ्ग्यार्थस्तु त्वं पिपासू रसस्वादेच्छुः। घन-रसं सुखेन निहितं शृङ्गाररसं पिबताम् आस्वादयताम्। वारकोऽल्पोऽपि नास्तीत्यर्थः।

(**वि, म**) प्रतिनायक इति वीररौद्ररसयोरित्यर्थः।

(**वि, य**) इत्थमालम्बनविभावप्रदर्शनं समाप्य उद्दीपनविभावमाह—**अथे**ति।

---

(**लो, औ**) **पन्थिअ** इति। पथिक ! पिपासुरिव लक्ष्यसे यासि तत् किमन्यत्र। न मनागपि वारक इहास्ति गृहे घनरसं पिबताम्॥ घनरसं जलम्। व्यङ्ग्यार्थश्च घनरसां मामनिवारितमुपभुङ्क्ष्व।

(**लो, अ**) एवं सपरिकरं विभावस्य आलम्बनाख्यं भेदं निरूप्य उद्दीपनाख्यं भेदं निरूपयन्नाह—**अथोद्दीपने**त्यादि।

---

1 'कारुशिल्पिन्याद्याः' इति (क. प. फ. पु.)

2 'ह' (क. पु.)

**उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ॥ १३९ ॥**

ते च—

**आलम्बनस्य चेष्टाद्या देशकालादयस्तथा ॥ १४० ॥**

चेष्टाद्या[1] इत्यादिशब्दाद्रूपभूषणादयः । कालादीत्यादिशब्दाच्चन्द्रचन्दन-कोकिलालापभ्रमरझङ्कारादयः ।

तत्र चन्द्रो[2] यथा मम—

करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः॥ ( र, आ )

यो यस्य रसस्य उद्दीपनविभावः स तत् स्वरूपवर्णने वक्ष्यते ।

अथानुभावाः—

**[3]उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् ।**
**लोके यः कार्य्यरूपः सोऽनुभावः काव्यनाट्ययोः ॥१४१॥(ल,इ)**

---

**( वि, र ) करमुदयमहीधरे**ति—अयं सुधांशुः अमरेशस्य इन्द्रस्य दिशः प्राच्याः मुखं विचुम्बति । किं कृत्वा गलितं तमः पटलरूपम् अंशुकं यस्मात् तादृशे उदयमहीधररूपस्य स्तनस्याग्रे करं रश्मिमेव करं निवेश्य । यद्यप्यत्र चन्द्रो नायक एव न उद्दीपनविभावः । तथापि चन्द्रदिशोर्नायकनायिकयोर्वृत्तान्तदर्शनात् उद्दीप्तस्य वक्तृशृङ्गारस्य चन्द्र उद्दीपकः । स्फुटमुदाहरणन्तु—

कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥ इति

**( वि, ल )** इत्थं विभावान् समाप्य अनुभावानाह । **अथ अनुभावा** इति। **उद्बुद्धमि**ति। स्वैः स्वैः कारणैः उद्बुद्धं भावं रत्यादिकं बहिः प्रकाशयन् इत्यर्थः । बहिर्दृष्टः सन् रत्यादिभावं सामाजिके प्रकाशयन्नित्यर्थः ।

---

**( लो, आ ) करमुदये**ति—करं किरणं हस्तश्च कुमुदानाम् ईक्षणं दर्शनं पक्षे कुमुदमेव ईक्षणं चक्षुर्यत्र । एवंविधः चन्द्रः प्रकरणस्थं शृङ्गारादिरसमुद्दीपयति ।

**( लो, इ )** उद्देशक्रमप्राप्तमनुभावं निरूपयितुमवतारयति । **अथे**ति—उद्बुद्धमिति रामादेर्वासनान्तर्लीनस्य रत्यादिभावनस्य उद्बोधं बहिः प्रकटयन्नित्यर्थः ।

---

1 'चेष्टाद्या इत्याद्यशब्दाद्' ( क. पु. )
2 'चन्द्रोदयो' ( क. ख. पु. )  3 'उद्बुद्धः' ( ख. पु. )

यः खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैरालम्बनोद्दीपनकारणै रामादेरन्तरुद्बुद्धम् रत्यादिकं बहिः प्रकाशयन् कार्य्यमित्युच्यते; स काव्यनाट्ययोः पुनरनुभावः। कः पुनरसावित्याह—

**उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः।**
**तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि ॥ १४२ ॥( व )**

तद्रूपा अनुभावस्वरूपाः तत्र यो यस्य रसस्यानुभावः स तत् स्वरूपवर्णने वक्ष्यते। तत्र सात्त्विकाः—

**विकाराः सत्त्वसंभूताः सात्त्विकाः परिकीर्त्तिताः ॥ १४३ ॥**

सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चनान्तरो धर्मः। (श, ई)

**सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः ॥ १४४ ॥**

गोबलीवर्दन्यायेन इति शेषः। के त इत्याह—

**स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।**
**वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ १४५ ॥ (ष,उ)**

तत्र—

**स्तम्भश्चेष्टाप्रतीघातो भयहर्षामयादिभिः।**

---

**( वि, व ) उक्ताः स्त्रीणामि**ति—अङ्गजाः स्वाभाविकाश्च ये स्त्रीणामष्टाविंशतिरलङ्काराः सात्त्विका उक्ताः तथा अपरा अपि तासां पुंसां वा याः चेष्टाः वक्ष्यमाणास्ताः सर्वाः सात्त्विकास्तद्रूपा अनुभावरूपा इत्यर्थः।

**( वि, श ) आत्मविश्रामे**ति—रजस्तमोऽधीनविकारराहित्येन आत्मनः स्थितिः विश्रामः। तत् प्रकाशः तदुत्पत्तिस्तत्कारीत्यर्थः।

**( वि, ष ) ते भिन्ना** इति—लोके यः कार्यरूपः सोऽनुभाव इत्यनेन रत्यादेः कार्यमात्रस्यैवानुभावत्वमुक्तम्। उक्तसात्विकभावानामपि तत्कार्यकृत् अनुभावतो भिन्ना इत्यर्थः। ननु किं तर्हि सात्त्विकेन पृथगुपादानमित्यत आह—**गोबलीवर्दे**ति। गोत्वेन प्राप्तस्याऽपि बलीवर्दस्यैव कार्यत्वेन प्राप्तानामपि सात्त्विकानां प्राशस्त्यार्थं पृथगुपादानमित्यर्थः। प्राशस्त्यञ्च अन्यकार्यापेक्षया रत्यादिप्रकर्षबोधकत्वरूपं प्राधान्यम्। तथा अपरा अपि सात्त्विका इति यदुक्तं तान् पृच्छति।

**के ते इत्यष्टावि**ति—इत्यष्टावपीत्यर्थः।

---

**( लो, ई )** कश्चनान्तरो धर्म्मः सच परगतदुःखहर्षादिभावनायामत्यन्तानुकूलान्तःकरणत्वम्। तस्य च समाहितमनस्त्वेन राघवादि समानदान्तरत्वम्।

**( लो, उ )** गोबलीवर्दन्यायेन न तु स्वरूपेण।

वपुर्जलोद्गमः[1] स्वेदो रतिघर्म्मश्रमादिभिः ।
हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया ।
मदसम्मदपीडाद्यै[2] वैस्वर्य्यं गद्गदं विदुः ।
रागद्वेष[3] श्रमादिभ्यः कम्पो गात्रस्य वेपथुः ।
विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता ।
अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम् ।
प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः ॥ १४६ ॥ ( स, ऊ )

यथा मम—

तनुस्पर्शादस्या दरमुकुलिते हन्त नयने
उदञ्चद्रोमाञ्चं व्रजति जडतामङ्गमखिलम् ।
कपोलौ घर्म्मार्द्रौ ध्रुवमुपरताशेषविषयं
मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम् ॥ ( ह )

एवमन्यत् । अथ व्यभिचारिणः—

विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च [4]तद्विदाः ॥१४७॥(त्त, ऋ)

---

**( वि, स )** आमयादिभिरित्यत्र आमयो रोगः आदिपदात् शोकपरिग्रहः । रतिघर्म्मेत्यत्र घर्म्म आतपः, आदिपदात् ज्वरपरिग्रहः भयादिभ्य इत्यत्र आदिपदात् शीतपरिग्रहः । मदसंमदेत्यत्र मदो मत्तता सम्मदो हर्षः । पीडाद्यैरित्यादिपदात् अत्यन्तरुदितपरिग्रहः । चेष्टाज्ञानयोर्निराकृतिरनुत्पादः ।

**( वि, ह ) तनुस्पर्शादस्या** इति । अस्या नायिकायास्तनुस्पर्शान्नयनमुकुलादिकपोलघर्म्मान्ता जाता इत्यर्थः । अतो ध्रुवं निश्चितम् उपरताशेषविषयं त्यक्तसमस्तविषयं मनः परमं ब्रह्म झटिति स्पृशतीत्यर्थः । अत्र पुंसो रोमाञ्चादयस्त्रयः सात्त्विकाः ।

**(वि, त्त) स्थायिन्युन्मग्न** इति—स्थायिनि रत्यादौ आभिमुख्येन इत्यन्वयः

---

**( लो, ऊ )** सम्मदो हर्षः ।
चेष्टाज्ञानयोर्निराकृतिरभावः ।

**(लो, ऋ)** अथ व्यभिचारिणः उद्देशक्रमप्राप्त्या इति शेषः । इत्यादौ तु लवणाकरप्राये निर्वेदादयो बुद्बुद्प्रायाः । ते त्र्यधिकत्रिंशत्प्रकारा व्यभिचारिण इत्यर्थः ।

---

1 '–लोदयः' ( ख. ग. पु. )
2 'हर्षाद्यैः' ( च. ट. पु. )
3 'रागदोष' ( ज़. ट. ड. पु. )
4 'ते मताः' ( क. ख. पुं. )

स्थिरतया वर्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भावतिरोभावाभ्याम् आभिमुख्येन चरणाद् व्यभिचारिणः [1]कथ्यन्ते। के ते इत्याह—(क)

**निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः**
**स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्रावहित्थाः।**
**औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसंत्रासलज्जा**
**हर्षासूयाविषादाः सधृतिचपलता[2]ग्लानिचिन्तावितर्काः॥ १४८॥**
(ख, ऋ)

तत्र निर्वेदः—

**तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्।**
**दैन्यचिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वसितादिकृत्॥ १४९॥** (ग)

तत्र तत्वज्ञानान्निर्वेदो यथा—(लृ)

---

आभिमुख्यञ्च आस्वादविशेषव्यञ्जने सहायत्वम्। केचित्तु चित्तपरं स्थायिपदम्। तत्र उन्मग्नेत्यादिरर्थ इत्याहुः।

( वि, क ) उन्मग्नेत्यादयो व्याख्यायन्ते—**स्थिरतये**ति। प्रादुर्भावेत्युन्मग्नतायास्तिरोभावेति निर्मग्नतायाः व्याख्या। प्रादुर्भावतिरोभावौ चोत्पत्तिविनाशौ एव; न तु प्रकाशाप्रकाशौ। मरणादेस्तथात्वाभावात्।

( वि, ख ) स्मृतिमतिसहिता इत्यस्य विषादा इत्यस्यान्वयः। साहित्यञ्च उक्तावेव नतु एषां परस्परसाहित्यम्। एकैकस्य तथात्वात्।

( वि, ग ) **तत्त्वज्ञाने**ति—तत्त्वज्ञानापदीर्ष्यादेरिति आदिपदात् योगाभ्यासप्रवृत्तेश्च स्वस्यावमाननमित्यर्थः।

---

(लो, ऋ) के किमाख्याः? एते च निर्वेदादयो वितर्कान्ता भावा उद्देशतस्त्रयस्त्रिंशदुक्ताः। अन्याः चित्तस्य वृत्तय एषामेव वक्ष्यमाणविभावानुभावरूपतया एष्वेवान्तर्भवितुमर्हन्तीत्यर्थः।

( लो, लृ ) **तत्त्वे**ति—अयमर्थः। निर्वेदाख्यसंचारिभावस्य स्वस्यात्मनोऽवमानस्वरूपम्। सच तत्वज्ञानादेर्विभावादुत्पद्यते। दैन्यादिकमनुभावं करोति। उच्छ्वासो निश्वास एव मुहुरुत्कटतया उपलब्धः। एवमेषाञ्च सर्वेषामपि व्यभिचारिणां स्वरूपकथनप्रस्तावे विभावानुभावयोः कथनं वक्ष्यमाणस्वशब्दवाच्यत्वदोषरीत्या महाकविभिस्तद्द्वारेण निर्देशेनापि महाकाव्येषु स्वप्रतिपत्त्यर्थम्। किंचैवं स्वरूपप्रतिज्ञानमपि अतिसुगमं भवतीत्याशयः।

---

1 'उच्यन्ते' ( प. व. पु. )    2 'वि' ( क. ख. पु. )

मृत्कुम्भवालुकारन्ध्रपिधानरचनार्थिना ।
दक्षिणावर्त्तशङ्खोऽयं हन्त चूर्णीकृतो मया ॥ (घ, ए)

**आवेगः सम्भ्रमस्तत्र वर्षजे पिण्डिताङ्गता ।**
**उत्पातजे स्रस्तताङ्गे धूमाद्याकुलताऽग्निजे ।**
**राजविद्रवजादेस्तु शस्त्रनागाधि[1]योजनम् ।**
**गजादेः स्तम्भकम्पादिः पांश्वाद्याकुलताऽनिलात् ।**
**इष्टाद्धर्षाः शुचोऽनिष्टाज् ज्ञेयाश्चान्ये यथायथम् ॥१५०॥ (ङ, ऐ)**

तत्र शत्रुजो यथा—

अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम् ॥ ( च, ओ )

एवमन्यदूह्यम् ।

अथ दैन्यम्—

**दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत् ॥ १५१ ॥ ( औ )**

---

( **वि, घ** ) **मृत्कुम्भे**ति सुगमम् । अनेनाऽन्यापदेशेन ऐहिकस्वल्पदुःख-निवारणाय कुकर्म कुर्वता मयाऽधमेन पारत्रिकात्यन्तसुखं विनाशितमिति लभ्यते। अत्र च स्वस्य कुकर्मकारित्वेन निन्दा स्वावमाननमेव ।

( **वि, ङ** ) **आवेग** इति । अतर्कितवस्तूपस्थित्या व्याकुलता संभ्रमः । विभिन्नकारणजन्यस्य तस्य कार्याणि विभिन्नान्याह । **वर्षजे**ति । वर्षजे तस्मिन् सति पिण्डिताङ्गता भवतीत्यर्थः ।

( **वि, च** ) अर्घ्यमर्घ्यमिति रामस्य शत्रुभावेन उपस्थितं परशुरामं दृष्ट्वा दशरथस्य संभ्रमादुक्तिः । प्रथमचरणं कथयन्तं दशरथमनादृत्य भरताग्रजो रामः यतो यस्यां दिशि वर्त्तते तत्रोदग्रतारकां दृशं संदधे सन्निहितवान् । कीदृशीं दृशं क्षत्रकोपदहनस्यार्चिःस्वरूपाम् । अत्र विद्रावणादेरित्यादिपदग्राह्यमुनिजन्ये संभ्रमे सति अर्घ्यानयनादित्वम् ।

( **वि, छ** ) **दौर्गत्याद्यै**रित्यादि । आद्यपदात् इष्टालाभेन चिन्तया च ।

---

( **लो, ए** ) **मृत्कुम्भे**ति । अत्र तुच्छसंसारभोगप्रवणतया निःश्रेयससाधन-समर्थोऽयं देहो मया नाशितः । तन् मां धिगिति स्वावमाननम् ।

( **लो, ऐ** ) वर्षजे वृष्टिभवे स्रस्तता अनायत्ततया स्तब्धता। शस्त्रैः शरादिभिः, नागैर्गजैश्चाभियोजनं समन्तादाक्रमणम्। अन्ये एतज्जनिता लोकप्रसिद्धाः श्रेष्ठा इत्यर्थः।

( **लो, ओ** ) अर्घ्यमित्यत्र प्रथमपादे एवावेगः ।

( **लो, औ** ) दौर्गत्यं दारिद्र्यम् । अनौजस्यम् ओजो हानिः ।

---

1 'दि' ( क. ख. पु.)

यथा—

> वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं
>
> कालोऽभ्यर्णजलागमः, कुशलिनी वत्सस्य वार्तापि नो ।
>
> यत्नात् सञ्चिततैलबिन्दुघटिका भग्नेति पर्याकुला
>
> दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति ॥ (छ ) *

**खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः ॥ १५२ ॥**

यथा—

> सद्यः पुरीपरिसरेषु शिरीषमृद्वी
>
> गत्वा जवात् त्रिचतुराणि पदानि सीता । ( अ )
>
> गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा
>
> रामाश्रुणः कृतवती प्रथमावतारम् ॥ ( ज )

अथ मदः—

**सम्मोहानन्दसंभेदो मदो मद्योपयोगजः ।**
**अमुना चोत्तमः शेते, मध्यो हसति गायति ।**
**अधमप्रकृतिश्चापि परुषं वक्ति रोदिति ॥ १५३ ॥**

---

अनोजस्यं दुर्बलता । **वृद्धोऽन्ध** इति—वृद्धान्धदरिद्रभर्त्तकायाः प्रोषितपुत्रायाः तैल-घटिकाभङ्गेन रोदनस्य वर्णनमिदम् । स्थूणास्तम्भः उपरिपटलभङ्गेन तदवशेषता । वत्सस्य पुत्रस्य प्रोषितस्य । तैलबिन्दुर्नतु बहुतैलम्, तच्च वधूप्रसवार्थं सञ्चितम् ।

( वि, ज ) **सद्यःपुरी**ति—वनवासे चलितायाः सीतायाः पुरीर्बाहरेव वर्णन-मिदम् । परिसरेषु समीपेषु । **प्रथमावतार**मिति । सीताहरणे तूत्तरोत्तरं बह्वश्रुपातः स्यात् ।

(वि, झ) **सम्मोहानन्दे**ति—प्रकृतबुद्धितोऽन्यादृशबुद्धिः सम्मोहः । सम्भेदो मिलनम् । **अमुने**ति—अमुना मदेन उत्तमादयो मद्यपातारः । प्रातिभमिति त्रिसरकं

---

( **लो, अ** ) त्रीणि च चतुराणि च त्रिचतुराणि ।

( **लो, आ** ) सम्मोहानन्दयोः संभेदो मिश्रणः । प्रतिभा एव प्रातिभम् । त्रिविधः सरको मधु 'गौडी माध्वी पैष्टी' च ।

---

* मम एष पतिः वृद्धः अन्धः मञ्चकगतः ( खट्वाश्रितः चलितुमसमर्थः ) गृहं स्थूणावशेषम् । स्तम्भमात्रावशिष्टम् । कालोऽभ्यर्णजलागमः सन्निहितवर्षाकालः । अतो गृहेऽवस्थितिरपि दुष्करा । वत्सस्य विदेशं गतस्य कुशलिनी कुशलमयी वार्त्तापि नो प्राप्यते । यस्मात् सञ्चितानां तैलबिन्दूनां घटिका भग्ना इति हेतोः पर्याकुला श्वश्रूः निजवधूं गर्भभरालसामासन्नप्रसवसमयां दृष्ट्वा रोदिति ।

यथा—

प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः॥ (क, आ)

अथ जडता—

**अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः।**
**अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र॥ १५४॥**

यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये—

णवरि अं जुअजुअलं अण्णोण्णणिहिदसजलमन्थरदिट्ठिम्।
आलेक्खआपिअं विअ खणमेत्तं तत्थ ठिअं मुअसण्णम्॥ (ज, इ)

अथोग्रता—

**शौर्यापराधादिभवं भवेच्चण्डत्वमुग्रता।**
**तत्र स्वेदःशिरःकम्पतर्जनाताडनादयः॥ १५५॥**

यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतै-
ललितशिरीषपुष्पहननैरपि ताम्यति यत्।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः॥ (ट)

---

मधुमदिरा तेन प्रातिभं प्रतिभासमूहं गतानां सुभ्रुवां परिहासः प्रववृते। गूढसूचित-रहस्यवृत्तान्तश्चासौ सहासश्च इति विग्रहः। अत्र प्रतिभासमूहप्राप्त्या वक्रवाक्येन मधुमयोपयोगवशात् प्रकृतबुद्ध्यन्यादृशबुद्धिः परिहाससहासाभ्यां चानन्दः।

**(वि, ज) णवरि तामि**ति—

केवलं तद्युवयुगलमन्योऽन्यनिहितसजलमन्थरदृष्टि।
आलेख्यार्पितमिव क्षणमात्रं तत्र स्थितमासन्नकम्॥ इति संस्कृतम्।

चिरप्रवासागतपतिगृहस्थितपत्नीरूपं तद्युवयुगलं च केवलमालेख्यार्पितमिव क्षणमात्रमासन्नकं तत्र स्थितमित्यर्थः। चिरप्रवासागतपतिगृहस्थितपत्नीरूपं तत् युवयुगलम्। नवरिशब्दः केवले देशी। कीदृशम् अन्योऽन्यनिहितसजलमन्थरदृष्टि। अत्रेष्टदर्शनाज्जडता।

**(वि, ट)** मालतीं छेत्तुमुद्यतमघोरघण्टं प्रति माधवस्योक्तिरियम्। यदस्या मालत्या वपुः प्रणयिनीनां सखीनां सलीलपरिहासरसेनाधिगतैर्ललितशिरीषपुष्प-

---

**(लो, इ) णवरी**ति—अनन्तरं तत् युवयुगलमन्योन्यनिक्षिप्तसजल-मन्थरदृष्टि। आलेख्यार्पितमिव क्षणमात्रं तत्र स्थितम् मुक्तसंज्ञम्। युवा च युवतिश्च युवानौ तयोर्युगलम्। अत्रेष्टदर्शनात् जडता। एवमन्यत्र।

अथ मोहः—

**मोहो विचित्तता भीतिदुःखावेगानु[1]चिन्तनैः ।**
**[2]मूर्च्छनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥ १५६ ॥**

यथा—

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्त्तं कृतोपकारेव रतिर्बभूव ॥ ( ठ, ई )

अथ विबोधः—

**निद्रापगमहेतुभ्यो विबोधश्चेतनागमः ।**
**जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥ १५७ ॥**

यथा—

चिररतिपरिखेदात्[3] प्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्वते न प्रियाणा-
मशिथिलभुजचक्राश्लेषभेदं तरुण्यः । ( ड )

अथ स्वप्नः—

**स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः ।**
**कोपावेगभयग्लानिसुखदुःखादिकारकः ॥ १५८ ॥**

---

हननैरपि ताम्यति । अत्र वपुषि वधाय शस्त्रमुपक्षिपतस्तव शिरसि मम एष भुजोऽकाण्डयमदण्ड इव पततु इत्यर्थः । अकाण्ड आकस्मिकः । अत्र माधवस्य शौर्यम् अघोरघण्टस्यापराधः । चण्डत्वं माधवस्य ।

( वि, ठ ) **मोह** इति । विचित्तता विषयात् विगतचित्तता ज्ञानलोप इति यावत् । **तीव्राभिषङ्गे**ति—हरेण दग्धे कामदेवे रतिर्मोहेन ज्ञानलोपात् क्षणं कृतोपकारेव बभूव । उपकारं दर्शयति—**अज्ञाने**ति । मोहेन कीदृशेन तीव्रेणाभिषङ्गेण आपदा ( पतिमृत्युना ) जनितेन । पुनः कीदृशेन । इन्द्रियाणां वृत्तिं ग्राहकतां संस्तम्भयता प्रतिबध्नता ।

( वि, ड ) **चिररतिपरिखेदे**ति । तरुण्यः चरमं नायकशयनतः पश्चाद् शयित्वा तज्जागरणात् पूर्वमेव प्रबुद्धाप्यपरिचलितगात्राः सत्यः प्रियाणामशिथिलभुजचक्रस्य आश्लेषभङ्गं न कुर्वते इत्यर्थः । अत्र विबोधः वाच्य एव ।

---

( लो, ई ) **तीव्रे**ति । अभिषङ्गः पराभवः ।

---

1 'र्थ' ( ख. ) 2 'घूर्णनागात्रपतन' ( ख. )
3 'परिखेदप्राप्तनिद्रा–' ( इत्यादि समस्तं पदं क. ख. ग. पु )

यथा—

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेषु[1] ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानाम्
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः[2] पतन्ति ॥ ( ढ )

अथापस्मारः—

**मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः ।**
**भूपातकम्पप्रस्वेदफेनलालादिकारकः ॥ १५९ ॥**

[3]यथा—

आश्लिष्टभूमिं रसितारमुच्चै[4]र्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ ( ण ) *

अथ गर्वः—

**गर्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः ।**
**अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् ॥ १६० ॥**

[5]यथा—

धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत्केन साध्यताम्[6] ॥ ( त )

---

**( वि, ढ ) मामाकाशे**ति । मेघद्वारा यक्षस्य प्रियायां स्वप्रवृत्तिनिवेदनमिदम् । स्वप्नसंदर्शनेषु तव निर्दयाश्लेषहेतोराकाशप्रणिहितभुजं मां पश्यन्तीनां स्थलीदेवतानां मुक्तातुल्यस्थूला अश्रुबिन्दवो बहुशः तरुकिसलयेषु न पतन्ति न । अपि तु पतन्त्येव इत्यर्थः ।

**(वि, ण) आश्लिष्टभूमिमि**ति—असौ कृष्णा आपगानां नदीनां पतिं समुद्रम् अपस्मारिणम् आशशङ्के । अपस्मारिधर्म्मानाह—**आश्लिष्टे**त्यादि । अपस्मारी अपि भूमौ पतति । अत्र समुद्रे आरोप्यमाणः पुरुषे स्मर्य्यमाणः अपस्मारः ।

**(वि, त) गर्व** इति । अवज्ञा परस्मिन् सविलासाङ्गमात्मनः । धृतेत्यादिकं स्पष्टम् ।

---

* उच्चैः रसितारं शब्दायमानम् । ललन्तः भुजाकारा बृहन्तस्तरङ्गा यस्य तम्; फेनायमानं फेनिलम् ।

1 'न' ( ठ. पु. )  2 'खाः' ( ठ. पु. )
3 'यथेति' ( क. ख. पु. नास्ति )  4 'लोलत्' ( इति च. ज. पु. )
5 'तत्शौर्यगर्वो यथा' ( इति प. फ. पु. )  6 'सेत्स्यति' (इति ख. पु.)

अथ मरणम्—

**शराद्यैर्मरणं जीवत्यागोऽङ्गपतनादिकृत् ॥ १६१ ॥**

यथा—

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ ( थ, उ )

अथालस्यम्—

**आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भास्मितादिकृत्[1] ॥ १६२ ॥**

यथा—

न तथा भूषयत्यङ्गं न तथा भाषते सखीम् ।
जृम्भते मुहुरासीना बाला गर्भभरालसा ॥ ( द )

अथामर्षः—

**निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता ।**
**नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्जनादिकृत् ॥ १६३ ॥**

यथा—

प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
नत्वेव[2] दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥

अथ निद्रा—

**चेतःसंमीलनं निद्रा श्रमक्लममदादिजम्[3] ।**
**जृम्भाक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम् ॥ १६४ ॥**

---

( वि, थ ) **शराद्यैरि**ति। ईदृशं मरणं न व्यभिचारिभावः । किन्तु मरणमात्रकथनमिदम् । राममन्मथेत्यादिकमपि मरणमात्रस्यैव उदाहरणम् । व्यभिचारिभावरूपमरणन्तु जातप्रायमेव वर्णनीयम्, नतु जातमित्यग्रे वक्ष्यते । **राममन्मथे**ति–सा निशाचरी ताडकेव निशाचरी अभिसारिका जीवितेशस्य यमस्य जीवितेशस्य प्राणनाथस्य उपनायकस्य वसतिं जगाम। कीदृशी राम एव मन्मथस्तस्य मारकः तस्य शर एव कामोद्दीपकः शरः तेन हृदयेन ताडिता । पुनः कीदृशी दुर्गन्धवत् रुधिरमेव सुगन्धिद्रव्यविशिष्टं रक्तचन्दनं तेन उक्षिता ।

( वि, द ) जृम्भास्मितं जृम्भायुक्तहासः । **न तथे**त्यादि सुगमम् ।

---

( लो, उ ) **रामे**ति । जीवितेशो यमः प्राणेश्वरश्च ।

---

1 'जृम्भासितादिकृत्' ( इति क. ख. पु. )
2 'नत्वेवम्' ( इति ख. च. पु. ) 3 'मदादिजा' ( इति क. ख. पु. )

यथा—

सार्थकानर्थकपदं ब्रुवती मन्थराक्षरम् ।
निद्रार्द्धमीलिताक्षी सा लिखितेवास्ति मे हृदि ॥ (ध)

अथावहित्था—

**भयगौरवलज्जादे[1] हर्षाद्याकारगुप्तिरवहित्था ।**
**व्यापारान्तरसक्त्यन्यथा[2]भाषणविलोकनादिकरी ॥ १६५ ॥**

यथा—

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्त्राणि गणयामास पार्वती ॥ (न)

अथौत्सुक्यम्—

**इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।**
**चित्ततापत्वरास्वेददीर्घनिःश्वसितादिकृत् ॥ १६६ ॥**

यथा—

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥

अत्र यत्काव्यप्रकाशकारेण रसस्य प्राधान्यमित्युक्तम्[3] तद्रसनधर्म्म[4]योगित्वाद् व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन गतार्थं मन्तव्यम् । (प)

---

( वि, ध ) **सार्थके**ति । काञ्चित् निद्राणां प्रियां स्मरत उक्तिरियम् ।

( वि, न ) व्यापारान्तरासक्तिः कर्म्मान्तरसङ्गः । अन्यथाभाषणम् अन्यथालोकनञ्च हर्षजन्यक्रियातोऽन्यरूपम् । **एवं वादिनी**ति । महेशेन पार्वतीपरिणयघटनावाक्यवादिनि सतीत्यर्थः । अत्र पद्मपत्त्रगणनमन्यथा क्रिया ।

(वि,प) **यः कौमारहर** इत्यादि व्याख्यातं प्राक् । अत्र उत्कण्ठापदार्थ एवमौत्सुक्यम् । **रसनधर्मयोगित्वादि**ति—असंलक्ष्यक्रमत्वं रसधर्म्मः व्यभिचारिभावेऽप्यस्तीत्यर्थः । एतन्मते शृङ्गाराभासो नात्र प्रधानम्, किन्तु तथापि चेतः समुत्कण्ठते इत्यनेन व्यङ्ग्ये विस्मय एव प्रधानतया भासते । स चाद्भुतरसस्य स्थायिभावोऽपि शृङ्गाराभासीयश्लोके व्यभिचारिभाव इत्यभिप्रायेण तस्य व्यभिचारिभावत्वं युक्तम् । तस्य

---

1 'हर्षादेर्लज्जाद्याकार' इति ( ख. ग. घ. पु. )
2 'न्यथावभाषण' ( इति क. ख. पु. )
3 'इति' ( इति नास्ति च. ज. पु. ) 4 'तद्रसनधर्मत्वात्' ( इति ख. पु. )

अथोन्मादः—

**चित्तसम्मोह[1] उन्मादः कामशोकभयादिभिः ।**
**अस्थानहासरुदितगीतप्रलपनादिकृत् ॥ १६७ ॥**

यथा मम—

आतर्द्विरेफ ! भवता भ्रमता समन्तात्
प्राणाधिका प्रियतमा मम वीक्षिता किम् ?
( झङ्कारमनुभूय सानन्दम् । )
ब्रूषे किमोमिति सखे ! कथयाशु तन्मे
किं किं व्यवस्यति कुतोऽस्ति च कीदृशीयम् ? ॥ ( फ )

अथ शङ्का—

**परक्रौर्य्यात्मदोषाद्यैः शङ्काऽनर्थस्य तर्कणम् ।**
**वैवर्ण्यकम्पवैस्वर्य्यपार्श्वालोकास्यशोषकृत् ॥ १६८ ॥**

यथा मम—

प्राणेशेन प्रहितनखरेष्वङ्गकेषु क्षपान्ते
जातातङ्का रचयति चिरं चन्दनालेपनानि ।
धत्ते लाक्षामसकृदधरे दत्तदन्तावघाते
क्षामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती ॥ ( ब, ऊ )

---

चात्र निराकाङ्क्षयवाक्यव्यङ्ग्यत्वेन शृङ्गाराभासापेक्षया प्राधान्यम् । नचैवमद्भुत एव तदात्र रस इति वाच्यम् , लोकविलक्षणगुणबन्धतुल्यविषयत्वे एव विस्मयस्याऽद्भुतरसत्वप्राप्तिर्नान्यविषयत्वे अद्भुतालम्बनतया । वक्ष्यते हि "वस्तुलोकातिगम् आलम्बनं मतम्" इति । "गुणानां तस्य महिमा भवेदुद्दीपनं पुनः" इति च । अत्र च उत्कण्ठाया अहेतुरेव विस्मयस्य विषयः । गतार्थमिति अवगतार्थमित्यर्थः । व्यभिचारिभाव एव तत्र रसशब्दार्थ इत्यर्थः ।

( वि, फ ) **आतर्द्विरेफ** इति । द्विरेफं सम्बोध्य विरहोन्मत्तस्य उक्तिरियम् । झङ्कार इत्यादि मध्ये चूर्णकम् । ब्रूषे किमोमिति इति झङ्कारस्यैव स्वीकारार्थम् । ओमिति शब्दत्वेनाऽवगतत्वात् । इयं मम नायिका किं किं व्यवस्यति कीदृशी च इति कथय इत्यर्थः ।

(वि, ब) **परक्रौर्य्येति** । परस्य क्रूरतया आत्मदोषादिनाऽनर्थस्य चिन्तनं शङ्केत्यर्थः । **प्राणेशेनेति**—क्षामाङ्गी कृशाङ्गीयम् । चकितमभितश्चक्षुषी निक्षिपन्ती सखीभ्यो

---

( लो, ऊ ) **प्राणेशेनेति** । अङ्गकेष्वत्र स्वार्थे कः ।

---

1 'भ्रमः' ( इति ख. पु. )

अथ स्मृतिः—

**सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नमनादिकृत् ।**
**स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ॥ १६९ ॥**

यथा मम—

मयि सकपटं किञ्चित् क्वापि प्रणीतविलोचने
किमपि नयनं प्राप्ते[1] तिर्यक् विजृम्भिततारकम् ।
स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं
कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम् ॥ ( भ, ऋ )

अथ मतिः—

**नीतिमार्गानुसृत्यादेरर्थनिर्द्धारणं मतिः ।**
**स्मेरता धृतिसंतोषौ बहुमानश्च तद्भवाः ॥ १७० ॥**

यथा—

'असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ (म)

---

जाताशङ्का सती प्राणेशेनाऽर्पितनखरेष्वङ्केषु चन्दनालेपनानि रचयति दत्तदन्तावघातेऽधरे लाक्षामलक्तकम् असकृद्धत्ते चेत्यर्थः । अत्र सखीनामुपदेश एव आनन्दः । उपहासादिहेतुनखक्षतादित्वमेव चात्मदोषः ।

**(वि, भ) मयि सकपटमि**ति । सकपटं यथा स्यात्तथा क्वापि किञ्चित् प्रणीतविलोचने निक्षिप्तचक्षुषि सति मयि नयनं नयनपथं प्राप्ते तिर्य्यक् विजृम्भित ( प्रेरित ) तारकम् । स्मेरं स्मेरं तदाननं स्मरामि । पुनः कीदृशं स्मितमुपगतां सखीं दृष्ट्वा सलज्जमवाञ्चितं नमितम् । नायिकामुखस्य सकटाक्षस्मेरतया नायको धूर्त इति बुद्ध्वा एवं सख्याः स्मितमपि तत् बुद्ध्वैव । नायिकामुखनमनं तु स्वानादरस्य सख्या दर्शनात् लज्जया ।

**( वि, म ) 'असंशयं क्षत्रपरिग्रहे**ति--शकुन्तलां दृष्ट्वा ब्राह्मणकन्यकाबुद्ध्यनन्तरं प्राप्ताश्वासस्य दुष्यन्तस्य उक्तिरियम् । इयम् असंशयं क्षत्रेण परिग्रहस्य क्षमा योग्या ब्राह्मणकन्या नैवेत्यर्थः । कुत इत्याह—**यदार्य्यमि**ति । आर्यमनुचितानभिलाषित्वेन उत्तमं मम मनो यदस्याम् अभिलाषि कृताभिलाषम् । अत्रार्थान्तरन्यासमाह—**सतां ही**ति । संदेहपदेषु वस्तुषु सतामन्तःकरणप्रवृत्तयो हि

---

**(लो, ऋ) मयी**ति—एवं सति स मां पश्यतु इति सकपटं नतु तां विनाऽन्यत्र प्रहितलोचनत्वं मम कदाचिदभिलषितमिति भावः । अवाञ्चितमवनतम् ।

---

1 'नयनप्रान्ते' ( चु. ज. पु. )

अथ व्याधिः—

**व्याधिर्ज्वरादिर्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत् ॥ १७१ ॥**

तत्र दाहमयत्वे भूमीच्छादयः शैत्यमयत्वे उत्कम्पनादयः ।

स्पष्टमुदाहरणम् । (य)

अत्र त्रासः—

**निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः ॥ १७२ ॥**

यथा—

परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्याऽपि विलोकनीयताम् ॥ (र)

अथ व्रीडा—

**धार्ष्ट्याभावो व्रीडा वदनानमनादिकृद्दुराचारात् ॥ १७३ ॥**

यथा—मयि सकपटमित्यादि । ( ल )

अथ हर्षः—

**हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः ॥ १७४ ॥**

यथा—

समीक्ष्य पुत्रस्य चिरात् पिता मुखं निधानकुम्भस्य यथैव दुर्गतः ।
मुदा शरीरे प्रबभूव नात्मनः पयोधिरिन्दूदयमूर्च्छितो यथा ॥ (व)

अथासूया—

**असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ।**

---

प्रमाणम् सन्देहनिरासकम् । अत्र स्वीयमनसो विशेषस्य निश्चायकत्वस्य सतां सामान्यानां मनोभिः सामान्यैः समर्पितत्वादर्थान्तरन्यासः ।

**(वि, य) स्पष्टमुदाहरणमि**ति—'भूमौ पतति तापार्त्ता विप्रयुक्ता वधूरिव । कदलीवानिलोद्धूता ज्वरार्त्ता कम्पते प्रिया' ॥ इति

**( वि, र ) परिस्फुरदि**ति—जलक्रीडायामूरुप्रविष्टमीनकदर्थितानामप्सरसां त्रासवर्णनमिदम् । सखीजनस्यापि विलोकनीयतामुपाययुरित्यन्वयः । मीनघट्टितोरुत्वमजानतोऽन्यजनस्य विलोकनीयता तावदस्तु; दिनान्तरेऽपि तया त्वं जानतः सखीजनस्यापि इत्यर्थः । तच्चातित्रासात्सर्पदंशादिसम्भावनयेति भावः ।

**( वि, ल ) धार्ष्ट्याभाव** इति—धार्ष्ट्यमलज्जत्वम् । मयि सकपटमित्यादिकं स्मृतेरुदाहरणम् । यत्तत्र सलज्जमवाञ्चितमित्यनेन लज्जा ।

**(वि, व ) समीक्ष्ये**ति—रघोर्मुखं वीक्ष्य दिलीपस्य वर्णनमिदम्—निधानकुम्भस्य निधिकुम्भस्य । मूर्च्छितो वर्द्धितः ।

**( वि, श ) असूयान्ये**ति—औद्धत्यादहङ्कारात् अन्यगुणस्य ऋद्धीनामा-

[1]दोषोद्धोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् ॥ १७५ ॥

यथा—

अथ तत्र पाण्डुतनयेन सदसि विहितं[2] मुरद्विषः।
मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ॥ (श)

अथ विषादः—

उपायाभावजन्मा तु विषादः सत्त्वसंक्षयः।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥ १७६ ॥

यथा मम—

एषा कुडिलघणेण चिउरकडप्पेण तुह णिबद्धा वेणी।
मह सहि दारइ दंशइ आआसजट्ठिव्व कालउरइव्व हिअअम् ॥

( ष, ऋ )

अथ धृतिः—

ज्ञानाभीष्टागमाद्यैस्तु संपूर्णस्पृहता धृतिः।
सौहित्यवचनोल्लाससहासप्रतिभादिकृत् ॥ १७७ ॥ ( लृ )

यथा मम[3]—

कृत्वा दीननिपीडनां निजजने बद्ध्वा वचोविग्रहं[4]
नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः।

---

धिक्यानाम् असहिष्णुतेत्यन्वयः। **अथ तत्रे**ति—अर्थानन्तरं तत्र सभायां पाण्डुतनयेन युधिष्ठिरेण विहितं मुरद्विषः श्रीकृष्णस्य मानं पूजां चेदिपतिः शिशुपालः नासहत। तत्रार्थान्तरन्यासमाह—**परवृद्धी**ति। मत्सरि असहिष्णुः।

**( वि, ष )** सत्वसंक्षयो बलहानिः। उपायाभावजन्मत्वेनास्य दैन्याद्भेदः। **एषा कुडिले**ति—'एषा कुटिलघनेन चिकुरकलापेन तव निबद्धा वेणी। मम सखि! दारयति दशति आयासयष्टिरिव कालोरगीव हृदयम्' ॥ इति संस्कृतम्। बद्धवेणिकां प्रोषितभर्तृकां दृष्ट्वा सख्या विषादोक्तिरियम्। दारणे आयासयष्टिर्दृष्टान्तः, दंशने च कालोरगी।

**( वि, स ) कृत्वा दीने**ति—संसारविरक्तस्य तपोवनस्थस्य उक्तिरियम्।

---

**( लो, ऋ ) एषे**ति—एषा कुटिलघनेन चिकुरकलापेन तव निबद्धा वेणी मम सखि! दारयति दशति आयासयष्टिरिव कालोरगीव हृदयम्।

**( लो, लृ ) ज्ञाने**ति—सौहित्यं तृप्तिः।

---

1 'द्वेषान्वेष' ( ख. पु. )  2 'मधु' ( क. ख. पु. )

3 'मम'इति नास्ति ( ख. पु. )  4 'निष्ठुरम्' ( ट. ड. पु. )

द्रव्यौघाश्चिरसंचिताः[1] खलु मया यस्याः कृते साम्प्रतं
नीवाराञ्जलिनापि केवलमहो सेयं कृतार्था तनुः ॥ ( स )

अथ चपलता—

**मात्सर्य्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः ।**
**तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥ १७८ ॥**

यथा—

अन्यासु तावदुपमर्दसहासु भृङ्ग !
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः[2] ॥ ( ह )

अथ ग्लानिः—

**रत्यायासमनस्तापक्षुत्पिपासादिसंभवा ।**
**ग्लानिर्निष्प्राणताकम्पकार्श्यानुत्साहतादिकृत् ॥ १७९ ॥**

यथा—

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्म्मः केतकीपत्रगर्भम्[3] ॥ (क्ष, ए)

---

यस्यास्तनोः कृते दीननिपीडनादिकं कृत्वा मया द्रव्यौघाः संचिताः सेयं तनुः साम्प्रतं नीवाराञ्जलिनापि खलु कृतार्था इत्यन्वयः । निजजने इष्टजने वचोविग्रहं वाक्कलहम् । आमुष्मिकीः पारलौकिकीः । चिराच्चिरकालीनाः ।

( **वि, ह** ) **अन्यास्वि**ति—हे भृङ्ग ! उपमर्दसहासु अन्यासु सुमनोलतासु पुष्पलतासु लोलं मनो विनोदय । नवमालिकायाः कलिकामकाले किं व्यर्थं कदर्थयसि कीदृशीं मुग्धां मूढां विमर्दसहामित्यर्थः । अजातरजसम् अजातोपरागाञ्च । समासोक्तिवशाच्च नवोढाकदर्थकनायकप्रतीतिः । अत्र अजातरजसम् अजातरजोयोगामित्यर्थः । अत्र वाच्यभृङ्गस्य व्यङ्ग्यनायकस्य च चपलता ।

( **वि, क्ष** ) **रत्यायासे**ति—निष्प्राणता बलहानिः । हेतुविशेषाधीनत्वेन दैन्यविषादतो भेदः । **किसलयमिवे**ति । दारुणो दीर्घशोकः अस्याः क्षामं क्षीणं परिपाण्डु च शरीरं ग्लपयति । तत्रोपमामाह । **किसलयमिवे**ति—बन्धनात् वृन्तात् ।

---

( **लो, ए** ) **किसलयमिवे**ति—शरदिज इत्यलुक् समासः ।

---

1 'परिसंचिताः' ( क. ख. पु. ) 2 'मल्लिकायाः' ( ग. घ. पु. )
3 'केतकीगर्भपत्रम्' ( क. ख. पु. )

अथ चिन्ता—

**ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत् ॥ १८० ॥**

यथा [1]मम—

**कमलेण विअसिएण संजोएन्ती विरोहिणं ससिबिम्बम् ।**

**करअल पल्लत्थमुही किं चिन्तसि सुमुहि ! अन्तराहिअहिअआ (क,ऐ)**

अथ वितर्कः*—

**तर्को विचारः संदेहाद् भ्रूशिरोऽङ्गुलिनर्त्तकः ॥ १८१ ॥**

यथा—किं रुद्धः प्रियेत्यादि । ( ख )

एते च त्रयस्त्रिंशद् [2]व्यभिचारिभेदा इति यदुक्तं तदुपलक्षणमित्याह—(ओ)

**रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः ॥ १८२ ॥**

तथाहि—शृङ्गारेऽनुच्छिद्यमानतयाऽवस्थानाद् रतिरेव स्थायिशब्दवाच्या । हासः पुनरुत्पद्यमानः व्यभिचार्येव, व्यभिचारिलक्षणयोगात् । तदुक्तं—

'रसावस्थः परं भावः स्थायितां प्रतिपद्यते' इति ( ग )

---

( वि, क ) **कमलेणे**ति । ' कमलेन विकसितेन संयोजयन्ती विरोधिनं शशिबिम्बम् । करतलपर्यस्तमुखी किं चिन्तयसि सुमुखि ! अन्तराहितहृदया' ॥ इति संस्कृतम् । अत्र करतलं विकसितकमलं मुखं शशिबिम्बम् । नायिकायाश्चिन्ता ।

( वि, ख ) **किं रुद्ध** इति—विरहोत्कण्ठताया उदाहरणम् ।

( वि, ग ) **रत्यादयोऽपी**ति—स्थायिभावानां ये रसा नियतास्तद्भिन्नेऽनियते । **व्यभिचारिलक्षणे**ति—उन्मग्ननिमग्नतारूपस्य कादाचित्कत्वस्य तल्लक्षणत्वात् । स्थायिभावोऽपि व्यभिचारिभावो भवत्यत्र संवादं दर्शयति—**रसावस्थ** इति । रस एव उत्तरकालम् अवस्था यस्य परं केवलं तादृश एव भावः रत्यादिस्थायित्वम् प्रतिपद्यते । अतादृगवस्थस्तु न स्थायितां प्रतिपद्यते इति परं पदाल्लभ्यते । अतादृगवस्थस्तु रसान्तर एव सम्भवति । स च यदि तत्र उपकारको भवति तदा तदीयस्थायिनि आभिमुख्येन चरणाद् व्यभिचारिलक्षणाक्रान्तत्वेन तत्रापि व्यभिचारिपदस्य योगरूढत्वात्सोऽपि व्यभिचारी भवति, अर्थवशलभ्यमिममर्थमभिप्रेत्य सम्बन्धो दर्शित इति बोध्यम् ।

---

( लो, ऐ ) **कमलेणे**ति—' कमलेन विकसितेन संयोजयन्ती विरोधिनं शशिबिम्बम् । करतलपर्यस्तमुखी किं चिन्तयसि सुमुखि ! अन्तराहितहृदया ॥'

( लो, ओ ) **एते चे**ति—एतानि च उदाहरणानि व्यभिचारिस्वरूपसद्भावदर्शनमात्रपराणि । तेषां क्वचित् प्राधान्ये क्वचित् अप्राधान्ये वा न काचित् प्रतीतिक्षतिः ।

---

1 ममेति नास्ति ( च. पु. )

* तारकितः पाठः ( क. पु. ) नास्ति । 2 व्यभिचारीति नास्ति (ख. पु. )

तत्कस्य स्थायिनः कस्मिन् रसे संचारित्वमित्याह—

**शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः ।**
**शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ।**
**इत्याद्यन्यत्समुन्नेयं स्वयं[1] भावितबुद्धिभिः ॥ १८३ ॥** ( घ )

अथ स्थायिभावः—

**अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः ।**
**आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति सम्मतः ॥१८४॥** (ङ)

यदुक्तम्—

स्रक्सूत्रवृत्त्या भावानामन्येषामनुगामुकः[2] ।
न तिरोधीयते स्थायी तैरसौ पुष्यते परम् ॥ इति । ( च, औ )

तद्भेदानाह—

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।**
**जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च ॥ १८५ ॥** (अ)

तत्र—**रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितम् ।**

---

( वि, घ ) **इत्याद्यन्यत्समुन्नेयमि**ति—अत एव यः कौमारहर इत्यत्राद्भुतरसस्थायिभावस्य विस्मयस्य व्यभिचारिभावत्वम् । ग्रन्थकृन्मते तु स श्लोकः व्यभिचारिभावध्वनेरेवोदाहरणमिति । रसस्यैव हि प्राधान्यात् इति काव्यप्रकाशलिखने रसपदस्य व्यभिचारिभावपरत्वं व्याख्यानादवसीयते ।

( वि, ङ ) **अविरुद्धा विरुद्धा वे**ति–स्थायिभावस्य अविरुद्धा विरुद्धा वा व्यभिचारिभावा इत्यर्थः । तिरोधातुं बुद्ध्यविषयीकर्त्तुम् ।

(वि, च) **स्रक्सूत्रवृत्त्ये**ति । भावानां व्यभिचारिभावानाम् अनुगामुकः सम्बद्धः स्थायी तैर्भावैर्न तिरोधीयते न बुद्ध्यविषयीक्रियते इत्यर्थः । अनुगामित्वे दृष्टान्तमाह-**स्रक्सूत्रे**ति । वृत्त्या रीत्या स्रजिमालायां यथासूत्रमवश्यं सम्बद्धं भवतीत्यर्थः। स्वसम्बद्धैः तैः कीदृशः क्रियते इत्यत्राह–**तैरसावि**ति । पुष्यते आस्वादाङ्कुरीक्रियते इत्यर्थः ।

(वि छ) **रतिरित्या**दि । प्रवणायितम् उत्कट आवेशः । स चानुरागे एव पर्य्य-

---

( लो, औ ) **अथे**ति । स्थायीभाव उद्देशक्रमप्राप्तः । **अविरुद्धे**ति । विरुद्धैरपि स्थायिनोऽतिरोधानं महाकविकाव्येष्वभिव्यक्तमेव । **स्रगि**ति । स्रक्सूत्रं सर्वेषां पुष्पाणां मुक्तानां वा यथा अनुगतं तिष्ठति तथेत्यर्थः । तैर्भावैः ।

( लो, अ ) शान्तिरसस्थायिभावस्य शमस्य निराकरिष्यमाणविवादस्य नवत्वे नवमतया पृथङ् निर्देशः ।

( लो, आ ) **रति**रित्यादि । प्रवणायितं प्रवणीभावः । इयं रतिर्मदनाविष्टा ।

---

1 'तथाभावित' ( इति क. ख. पु. ) 2 'अनुगामकः' ( क. पु. )

वागादिवैकृताच्चेतोविकासो[1] हास इष्यते।
इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्।
प्रतिकूलेषु तैक्ष्ण्यस्याऽवबोधः क्रोध इष्यते।
कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।
रौद्रशक्त्या तु जनितं चित्तवैकल्यजं[2] भयम्।
दोषेक्षणादिभिर्गर्हा जुगुप्सा विस्मयोद्भवा।
विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु।
विस्तारश्चेतसो यस्तु स विस्मय उदाहृतः।
शमो निरीहावस्थायामात्म[3]विश्रामजं सुखम्॥ १८६॥

यथा—मालतीमाधवे रतिः। नटकमेलके हासः। रामायणे शोकः। महाभारते शमः। एवमन्यत्रापि। एते हि एतेष्वन्तरा उत्पद्यमानैस्तैस्तैर्विरुद्धै-रविरुद्धैश्च भावैरनुच्छिन्नाः प्रत्युत परिपुष्टा एव सहृदयानुभवसिद्धाः। (छ,आ)

किञ्च—

नानाभिनय[4]संबद्धान् भावयन्ति रसान् यतः।
तस्माद्भावा अमी प्रोक्ताः स्थायिसञ्चारिसात्त्विकाः॥१८७॥

यदुक्तम्—'सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्'। (ज, इ)

---

वक्ष्यति। वागादीत्यादिपदात् वेशपरिग्रहः। चेतोविकाशो विलक्षणचित्तसंयोगजन्यं ज्ञानमुपहास्यताज्ञानपर्य्यवसन्नं यतो मुखविकाशरूपं स्मितं जायते। वैक्लव्यं दुःखविशेषः। संरम्भः सहर्षत्वरा। स्थेयान् स्थायी। तैक्ष्ण्यस्य उत्कटापचिकीर्षयाऽवबोधः। रौद्रोऽप-कर्त्तु क्षमः; तस्य शक्त्या सामर्थ्येन वैकल्यं भाविदुःखज्ञानपलायनहेतुः। **दोषेक्षणादिभि-रिति**—दोषः विकृतशब्दादिः ईक्षणादिभिरित्यादिपदात् घ्राणपरिग्रहः। गर्हा निन्दा। **विस्मयोद्भवेति**। कथमस्य एतादृशो दोष इत्येवं विस्मयेन जनिता। चेतोविस्तारो दृष्ट-हेतुभ्योऽसंभव्यत्वज्ञानेन हेत्वनुसंधानम्। आत्मविश्रान्तिरात्ममात्रविषयं ज्ञानम्। **एते-ष्विति**। एतेषु रत्यादिषु सत्सु इत्यर्थः। स्थायिभावव्यभिचारिभावादीनां भावसंज्ञा-व्युत्पत्तिमाह—

(वि, ज) **किंचेति**। भावयन्ति ज्ञापयन्ति। **सुखदुःखादिभिरिति**। सुख-दुःखादिभावैस्तद्भावस्य रत्यादिसत्तायाः भावनम् उद्बोधनम् अतो रत्यादिको भाव इत्यर्थः।

---

स्त्रीपुंसनिष्ठैव। शृङ्गारस्य स्थायी नत्वन्यथा स्थायिलक्षणायोगात्। एतेषु समनन्तरोक्तग्रन्थेषु।

(लो, इ) **सुखेति**। भावैरात्मनिष्ठैः काव्यनिष्ठैर्वा तस्य रामादेरनुकार्य्यस्य यो भावः स्वरूपं तस्य भावनं श्रवणं दर्शनं वा।

---

1 'वैकृतैश्चे' (क. ख. पु.) 2 'वैक्लव्यदं' (क. ग. पु.)
3 'वस्थानां स्वात्म' (क. ख. पु) 4 'संबन्धान्' (क. च. पु)

अथ रसस्य भेदानाह—

श्रृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
वीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ॥१८८॥ (ई)

तत्र श्रृङ्गारः—

श्रृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः श्रृङ्गार इष्यते ।
परोढां वर्जयित्वाऽत्र वेश्यां चाननुरागिणीम् ।
आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः ।
चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम् ।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्तितः ।
त्यक्त्वौग्र्यमरणालस्यजुगुप्साव्यभिचारिणः ।
स्थायिभावो रतिः श्यामवर्णोऽयं विष्णुदैवतः ॥१८९॥ (भ, उ)

---

(वि, भ) **तदागमनहेतुक** इति । मन्मथस्यागमनं प्राप्तिः तदेव हेतुर्यस्य तादृशः, कामिन एव शृङ्गाररसोद्बोधात् । **वेश्यां चे**ति । वेश्याऽनूढा; ऊढायाः परोढत्वेन एव प्राप्तेः । एवमनुरागिणी स्वस्त्री कन्यका च । **दक्षिणाद्या** इति । दक्षिणधृष्टानुकूलशठा इत्यर्थः । ते च स्वनायका एव परनायकस्य तु परोढावत् शृङ्गाराभासालम्बनमेव । रोलम्बा भ्रमराः । औग्र्यांशस्य त्यागः । सम्भोग एव मरणस्य जातप्रायमात्रस्यैव वर्णनीयत्वात् वास्तवमरणस्यैव त्यागः ।

---

(लो, ई) एवं सपरिकरस्य रसस्य स्वरूपमुक्तदिशा निरूपयितुमुद्दिशति । **अथे**ति । सात्त्विकबहुलगीतवाद्यादिपूर्वकपुराणवृत्तानुकाराभिनयाश्रयत्वेन महर्षिणा कण्ठोक्ता अष्टौ । श्रव्ये महाकाव्यादौ शान्तोऽपि नवमो रसोऽस्तीति तस्य पृथङ् निर्देशः न सम्यङ् नाट्योपयोगित्वाभावात् । यदाह धनिकः "**पुष्टिर्नाट्येषु नैतस्ये**ति"। एवञ्च निरतिशयसुखास्वादनलक्षणत्वात् एक एव रसो न विशेषाः सन्ति इति वादिनां मतमप्यपास्तम् । अत एवोक्तम् "यत्कारणं च कार्य्यञ्च ये च स्युर्व्यभिचारिणः । स्वरूपं यच्च तद्भावात् शृङ्गारादिभिदाः स्मृताः । इति"

(लो, उ) **शृङ्गमिति**—मन्मथोद्भेदस्य शृङ्गमिति नामान्तरम् । तस्यागमनं रामादिष्वाविर्भावः । आङ्पूर्वात् ऋगतौ इत्यस्य धातोः घञन्तात् आरशब्दस्य व्युत्पादितत्वात् तत्र मन्मथोद्भेदस्य विशेषनिर्देशादुभयोरप्येतद्रसप्रकृतिभूतयोः स्त्रीपुंसयोः परस्परं प्रौढतरानुरागहेतुकत्वमस्य सूचितम् । अनुरागस्य एकनिष्ठत्वे हि रसाभासो वक्ष्यते । दक्षिणाद्याश्चत्वारः । एषां रसानां वर्णदैवतकथनं नाटकादिषु विधेयाविघ्नहेतुकेषु नटसंपाद्यपूजादिषु प्रत्यूह्यते । विवृणोति—**अत्र** इत्यादि । इहोद्दीपनविभावादि एकदेशतो दर्शितम् । विस्तरतः प्रथमपरिच्छेदतो बोद्धव्यम् ।

यथा—शून्यं वासगृहम् इत्यादि ।

अत्र उक्तस्वरूपः पतिरुक्तस्वरूपा च बाला आलम्बनविभावौ । शून्यं वासगृहमुद्दीपनविभावः । चुम्बनमनुभावः । लज्जाहासौ व्यभिचारिणौ । एतैरभिव्यक्तः [1]सहृदयरतिभावः शृङ्गाररूपतां भजते ।

तद्भेदानाह—

विप्रलम्भोऽथ संभोग इत्येष द्विविधो मतः ॥ १६० ॥

तत्र—

यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ॥ १६१ ॥
अभीष्टं नायकं नायिकां वा ( ञ, ऊ )
स च पूर्वरागमानप्रवासकरुणात्मकश्चतुर्द्धा स्यात् ॥ १६२ ॥

तत्र—

श्रवणाद् दर्शनाद्वापि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥१६३॥ (ट)
श्रवणं तु भवेत्तत्र दूतवन्दीसखीमुखात् ।
इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम् ॥ १६४ ॥ (ठ)
अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेग[2]प्रलापाश्च ।
उन्मादोऽथ[3] व्याधिर्जडता मृतिरिति दशात्र कामदशाः॥१६५॥
अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम् ।
उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि ॥ १६६ ॥

---

**( वि, ञ ) नाभीष्टमुपैतीति**—नायकस्य नायिका । नायिकायाश्च नायकोऽभीष्टः । अभीष्टता च अनुकूलतया । तेन मानिन्यामनुकूलतायां प्राप्तायामपि नायकस्य विप्रलम्भ एव ।

**( वि, ट )** दशाविशेषो यज्जन्य इति शेषः । दशाविशेषो विरहकालीनदशदशाः । विशेष इत्येकवचनं विशेषत्वैक्यमाश्रित्य । पूर्वरागोऽभीष्टप्राप्तेः पूर्वं रागः । स च श्रवणात् दर्शनात् वा भवतीत्युक्तत्वात् श्रवणदर्शनयोरुपायमाह—

**( वि, ठ ) श्रवणं त्विति**—दूतादिमुखात् श्रवणम् इन्द्रजालस्वप्नाभ्यां चक्षुषा वा दर्शनमित्यर्थः । साक्षात्पदमत्र तद्धेतुचक्षुःपरम् ।

**(वि, ड) अपरिच्छेदः चेतनाचेतनेष्वपीति**—चेतनत्वाद्यपरिच्छेद इत्यर्थः ।

---

**(लो, ऊ) यत्र त्विति**—रतिरुत्कण्ठा प्रकृष्टा प्रकृष्टतां यातिरतिप्रकर्षस्य नायिकानिष्ठत्वे नायकं नायकपक्षे च नायिकां नोपैति न प्राप्नोतीत्यर्थः । स च विप्रलम्भः—

---

1 'सहृदयविषयो रतिभावः' ( क. पु. )
2 द्वेगसंप्रलापाश्च क. ख. पु. । 3 अथेति नास्ति छ. पु.

अलक्ष्यवाक् प्रलापः स्याच्चेतसो भ्रमणाद् भृशम् ।
व्याधिस्तु दीर्घनिःश्वासपाण्डुताकृशतादयः ।
जडता हीनचेष्टत्वमङ्गानां मनसस्तथा ॥ १६७ ॥ (ड)

शेषं स्पष्टम् ।

क्रमेणोदाहरणानि—

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ( ढ, ऋ )

कथमीक्षे कुरङ्गाक्षीं साक्षाल्लक्ष्मीं मनोभुवः ।
इति चिन्ताकुलः कान्तो निद्रां नैति निशीथिनीम् । ( ण )

अथ कस्याश्चित् नायिकाया इन्द्रजालदर्शनप्ररूढरागस्य नायकस्य चिन्ता । इदं मम । मयि सकपटमित्यादौ नायकस्य स्मृतिः । नेत्रे खञ्जनगञ्जने इत्यादौ गुणकथनम् । ( त ) श्वासान्मुञ्चतीत्यादौ उद्वेगः ।

---

तेन वृक्षादावचेतनत्वाऽप्रतिसन्धानात् कातरोक्तिः । संलापस्य प्रलापपर्यायत्वात् प्रलाप लक्षणमाह—**अलक्ष्ये**ति । अलक्ष्येऽनाश्रये आकाशादौ वाक् । इदमुपलक्षणमनर्थकवाचाऽपि । **दीर्घनिश्वासे**ति । तथा च व्याधिज्वरादिति यदुक्तं प्राक् तदीयादिपदग्राह्यमिदं मुक्तमिति बोध्यम् ।

**(वि, ढ) प्रेमार्द्रा** इति—माधवस्य वचनमिदम् । मुग्धदृशो मालत्यास्तास्ताः अन्यादृशः चेष्टा मयि भवेयुः । चेष्टाविशेषणानि—प्रेमार्द्रा इत्यादीनि । आर्द्रत्वं निस्पन्दत्वेन सजलत्वम् । प्रणयो वात्सल्यम् । तत्सूचिका इत्यर्थः । परिचयो वारं वारं दर्शनम् । यासु चेष्टासु आशंसायामिच्छायां परिकल्पितास्वपि अन्तःकरणस्य आनन्देन सान्द्रो व्याप्तो लयः लीनता क्षणाद्भवति । अन्तःकरणमानन्दव्याप्तं भवतीत्यर्थः । लयः कीदृशः—बाह्यकरणस्य व्यापारस्य रोधी प्रतिबन्धकः । अत्र दृक्चेष्टाऽऽशंसाद्वारा मालत्यामेवाभिलाषः ।

**( वि, ण ) कथमीक्षे** इत्यादिकं स्पष्टम् । निशीथिनीं व्याप्य नैति प्राप्नोति ।

**( वि, त )** नेत्रे इत्यादौ सौन्दर्यमेव गुणः ।

---

**( लो, ऋ ) प्रेमार्द्रा** इति—दर्शनादिगतो भावव्यञ्जकः कश्चन चित्तवृत्तिविशेषः प्रेम । तत्पूर्वको वशीकारः प्रणयः । रहस्यसम्वेदनम् परिचयः । लयः तन्मयत्वमेव ।

त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ ! व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥ (थ)

अत्र प्रलापः—

आतर्द्विरेफ इत्यादौ उन्मादः ।

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ॥ ( ऋ )

अत्र व्याधिः ( द )

भिसिणीअलसअणीए निहिअं सव्वं वि णिच्चलं अङ्गं ।
दीहो णीसासहरो एसो साहेइ जीअइत्ति परं ॥ ( ध )

अथ जडता ।

इदं, मम ।

रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ।
जातप्रायन्तु तद्वाच्यं चेतसाकाङ्क्षितं तथा ।
वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ॥ १६८ ॥ ( न )

तत्राद्यं यथा—

शेफालिकां विदलितामवलोक्य तन्वी
प्राणान् कथञ्चिदपि धारयितुं प्रभूता ।

---

( वि, थ ) **त्रिभागशेषासु** इति । पार्वतीसख्या विजयाया जटिलवेशप्रच्छन्नं महेशं प्रति उक्तिरियम् । भागत्रये जागरितत्वात् शेषावशिष्टासु निशासु नेत्रे निमील्य मीलयित्वा इयं सहसा व्यबुध्यत । कीदृशी असत्ये हरस्य कण्ठेऽर्पितबाहुबन्धना सती हे नीलकण्ठ ! क्व व्रजसि इत्येवम् अलक्ष्यवाक् अनाश्रयवाक् ।

( वि, द ) **पाण्डुक्षाममिति**—मालत्यां तद्विरहावस्थां पृच्छन्त्या लवङ्गिकाया उक्तिरियम् । हे सखि ! तव हृदन्तः क्षेत्रियरोगम् अस्मिन् क्षेत्रे शरीरे अचिकित्स्यं रोगं पाण्डुक्षामवदनादिकं कर्तृ आवेदयतीत्यन्वयः । क्षामं क्षीणम् । सरसं स्नेहार्द्रम् ।

( वि, ध ) **भिसिणीति**—'बिसिनीदलशयनीये निहितं सर्वमपि निश्चलमङ्गम् । दीर्घो निःश्वासभर एष साधयति जीवतीति परम् ।' इति संस्कृतम् । सर्वमप्यङ्गं निश्चलम् । अतो दीर्घनिश्वास एव इयं जीवति साधयति इत्यर्थः ।

( वि, न ) **चेतसाकाङ्क्षितमिति**—मरणाकाङ्क्षा एव वर्णनीया न मरणमित्यर्थः । **वर्ण्यतेऽपीति** । पुनरव्यवहिते जीवने सति मरणमपि वर्णनीयमित्यर्थः ।

( वि, प ) **शेफालिकामिति**—विदलितां पतितकुसुमां किञ्चिदवशिष्टायां

---

(लो, ऋ) **पाण्डिति**—परक्षेत्रे न छेदनीयो रोगः क्षेत्रियरोगः ।

आकर्ण्य सम्प्रति रुतं चरणायुधानां
किं वा भविष्यति न वेद्मि तपस्विनी सा ॥ (प, लृ)

द्वितीयं यथा—

रोलम्बाः परिपूरयन्तु हरितो झङ्कारकोलाहलै-
र्मन्दं मन्दमुपैति चन्दनवनीजातो नभस्वानपि ।
माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं
प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी ॥(फ,ए)

ममैतौ । तृतीयं यथा--

कादम्बर्यां महाश्वेतापुण्डरीकवृत्तान्ते । ( ब )
एष च प्रकारः करुणविप्रलम्भविषय इति वक्ष्यामः ( ऐ )

केचित्तु—

नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ।
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः"
इत्याहुः ॥

तत्र च--

**आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः ॥१६६॥ (ओ)**

---

रात्रौ तद्विदलनात्, कदाचित्तदानीमपि नायकागमनसंभावनया प्राणधारणम् । चरणायुधानां कुक्कुटानां रुतम् । प्रातःकाल एवेति तत्र मरणसंभावनया सख्या विषादोक्तिरियम् । तपस्विनी दुःखिता ।

**( वि, फ ) रोलम्बा** इति । अप्राप्तनायकदर्शनाया नायिकाया उक्तिरियम् । परिपूरयन्तु इत्यस्य हरितः इति कर्म्म । हरितो दिशः । नभस्वान् पवनः । केलीपिकाः पालितकोकिलाः । भ्रमरझङ्कारादयः तावदुद्दीपकाः सन्तु । कठिनाः प्राणा अपि यान्तु इत्यर्थः । कलयन्तु गायन्तु ।

**( वि, ब ) तृतीयमि**ति—तृतीयं मरणोत्तरं जीवनम् ।

---

**( लो, लृ ) शेफालिकामि**ति—शेफालिकाविदलनेन निशीथकालः सूचितः तपस्विनी शोच्या ।

**( लो, ए )** रोलम्बाः भ्रमराः ।

**( लो, ऐ )** महाश्वेतापुण्डरीकवृत्तान्ते पुण्डरीकस्त्यक्तप्राणः पुनर्जीवनमलभत । करुणविप्रलम्भस्य विषयः, नतु पूर्वरागप्रवासयोः ।

**( लो, ओ ) आदावि**ति—तदिङ्गितैः तदिङ्गितानि दृष्ट्वा इत्यर्थः । इङ्गितानि अनुरागचेष्टितानि । उक्तान्यत्रैव "दृष्ट्वा दर्शयति व्रीडाम्" इत्यादिना ।

इङ्गितान्युक्तानि । यथा—रत्नावल्यां सागरिकावत्सराजयोः ।

आदौ पुरुषानुरागे संभवत्येव[1]माधिकं हृदयङ्गमं भवति ॥ (भ)

**नीलीकुसुम्भमञ्जिष्ठाः पूर्वरागोऽपि च त्रिधा ॥ २०० ॥** (औ)

**न चातिशोभते यन्नापैति प्रेम मनोगतम् ।**

**तन्नीलीरागमाख्यातं यथा श्रीरामसीतयोः ॥ २०१ ॥**

**कुसुम्भरागं तत्प्राहुः यदपैति च शोभते ॥ २०२ ॥**

**मञ्जिष्ठारागमाहुस्तद् यन्नापैत्यतिशोभते ॥ २०३ ॥** (म)

अथ मानः—

**मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः ॥ २०४ ॥** (य)

**द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि ।**

**प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना ॥ २०५ ॥**

द्वयोरिति नायकस्य नायिकायाश्च उभयोः प्रणयमानः वर्णनीयः । उदाहरणं तत्र नायकस्य यथा—

अलीअपसुत्तअ विणिमीलिअच्छ देसु सुहअ मज्झ ओआसं ।

गण्डपरिउम्बणफुलइअङ्ग ण उणो चिराइस्सं । (र, अ)

---

(वि, भ) **इङ्गितान्युक्तानी**ति—अनुरागकथनमेव तदुक्तिः । आदौ स्त्र्यनुरागं दर्शयति—**रत्नावल्यामि**ति—अत्र सागरिकायाः प्रागनुरागः ।

(वि, म) **न चातिशोभते** इति—अविस्पष्टत्वात् न चातिशोभते इत्यर्थः । **श्रीरामसीतयो**रिति—श्रीरामस्य धीरोदात्तत्वात् पुरूरवस इवात्यन्तप्रलापाभावेन नातिशोभते इत्यर्थः ।

(वि, य) पूर्वरागानन्तरं मानमाह—**अथे**ति—**प्रणयेर्ष्ये**ति । प्रणयेन ईर्ष्यया वा समुद्भवो यस्य तादृश इत्यर्थः ।

(वि, र) **अलीअपसुत्तअ** इति ।

अलीकप्रसुप्त विनिमीलिताक्ष ते सुभग ममावकाशः ।

गण्डपरिचुम्बनात् पुलकितमङ्गं न पुनश्चिरयिष्यामि ॥ इति संस्कृतम् ।

प्रणयमानेन अलीकप्रसुप्तं नायकं चुम्बित्वा तेनाऽश्लाघिताया नायिकायास्तं

---

(लो, औ) नीली नीलिरागः 'कुसुम्भरागः' मञ्जिष्ठारागश्चेत्यर्थः ।

(लो, अ) मानः उद्देशक्रमप्राप्त इत्यर्थः । प्रणयः प्रेम । **अलिअ** इति ।

अलीकप्रसुप्त ! निमीलिताक्ष ! देहि सुभग ! मह्यवकाशम् ।

गण्डपरिचुम्बनात्पुलकिताङ्ग ! न पुनश्चिरायिष्ये ॥

---

1 'संभवत्यपि एवं' (क. ख. पु.)

नायिकाया यथा कुमारसम्भवे सन्ध्यावर्णनावसरे। ( ल )
उभयोर्यथा—

पणअकुविआणं दोण्णं वि अलिअपसुत्ताणं माणइण्णाणम्।
णिच्चलणिरुद्धणीसासदिण्णअण्णाणं को मल्लो ॥ ( व, आ )

अनुनयपर्य्यन्तासहत्वे त्वस्य न विप्रलम्भभेदता किन्तु सम्भोगसंचारीर्ष्याख्यभावत्वम् ( श )
यथा—

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते।

---

प्रत्युक्तिरियम्। हे अलीकप्रसुप्त ! हे विनिमीलिताक्ष ! हे सुभग ! मया ते तव गण्डपरिचुम्बनया पुलकितमर्थात् तवाङ्गमेव ममावकाशो मम स्थित्यवकाशः । इदानीमपि उन्मीलनाभावेन तदभावनिश्चयात्। अतो न चिरयिष्यामीत्यर्थः। अत्र च "प्रागामन्त्रितमसकृदि"ति सूत्रेण ते इत्यस्य असम्भवो नाशङ्कनीयः। अव्यवहितपूर्वस्य आमन्त्रणपदस्यैवासत्तायास्तदर्थत्वात्। उपपूर्वामन्त्रणपदोत्तरं तु भवत्येव ते इत्यादेशः।

**( वि, ल ) कुमारसंभव** इति। अत्र पार्वतीं त्यक्त्वा सन्ध्यावन्दनाय गते महेशे पार्वत्या माने तस्य तद्भङ्गप्रवृत्तौ तत्र हि

"सन्ध्यया कमलयोनिकन्यया या तनुः सुतनु ! पूर्वमुज्झिता।
सेयमस्तमुदयञ्च सेवते तेन मानिनि ! ममात्र गौरवम् ॥" इत्यादि महेशोक्तौ।

**( वि, व ) पणअकुविद्**ति—

"प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानविज्ञयोः।
निश्चलनिरुद्धनिःश्वासदत्तकर्णयोः को मल्लः ॥" इति संस्कृतम्

को मल्लः को मानरक्षणसमर्थः।

**( वि, श )** न विप्रलम्भभेदता न विप्रलम्भप्रभेदता। भ्रूभङ्गे इति मानरक्षणासमर्थाया नायिकायाः सख्यामुक्तिरियम्।

---

एतच्चिरायितायां नायिकायां सकलामपि शय्यामावृत्य मिथ्याप्रसुप्तस्य नायकस्य गण्डं परिचुम्ब्य तस्या वचनम्।

**( लो, आ ) पणअ** इति—

"प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानवतोः।
निश्चलनिरुद्धनिःश्वासदत्तकर्णयोः को मल्लः ॥" इति

अत्र को मल्लः कश्चिरं सोढुं समर्थः न ज्ञायते इति भावः।

कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ॥ * (ष)

पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते ।
ईर्ष्यामानो भवेत् स्त्रीणां तत्र त्वनुमितिस्त्रिधा ।
उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसम्भवा ॥ २०६ ॥ (ह)

तत्र दृष्टे यथा—

विनयति सुदृशो दृशोः परागं प्रणयिनि कौसुममाननानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे ॥ (स)

सम्भोगचिह्नेनानुमिते यथा—

नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।

---

(वि, ष) मया भ्रूभङ्गे रचितेऽपि मम दृष्टिस्तं प्रियं सोत्कण्ठमुद्वीक्षते । इत्यादिरीत्या तस्मिन् जने प्रियतमे दृष्टे सति कथं मानस्य निर्वहणं निर्वाहो भविष्यतीत्यन्वयः । दग्धाननं गर्हितं ममाननम् ।

(वि, स) उत्स्वप्नायितं पत्युरन्यनायिकासङ्गस्य स्वप्ने दर्शनम् । यथा मम— "सखि! त्वं किं ब्रूषे न भवति मदन्यत्र निरतः पतिर्मे धूर्त्तोऽसावृजुरसि न जानासि तमिमम् । समुद्गत्याऽगारादपरयुवतीसङ्गनिरतो मया दृष्टः स्वप्ने तदलमिह संप्रीतिकथया ॥" पत्युरन्यप्रियासङ्गे दृष्टे उदाहरति—**विनयती**ति । सपत्नीरूपायाः सुदृशो दृशः । ईर्ष्यामानः ।

(वि, ह) **नवनखे**ति—अन्यनायिकासङ्गचिह्नखपदादिमंशुकादिना यद्यपि गोपायितुं शक्नोषि तथापि विमर्दोत्थाङ्गरागगन्धः केन प्रकारेण वारयितुं शक्य इति

---

(लो, ह) **ईर्ष्ये**ति—ईर्ष्याख्यभावत्वं संचारिलक्षणयोगात् ।

**उत्स्वप्नायितमि**ति—उत्स्वप्नायितं स्वप्ने चेष्टा । स्वप्नस्योद्गमनकाल एव तत्कथनाय उत्थानम् । गोत्रस्खलनं संबोधने तन्नामग्रहणम् ।

---

* 'तस्मिन् जने' इत्युदाहरणानन्तरं 'यथा वा' इत्युपक्रम्य

एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः ॥

इत्युदाहरणान्तरं (क. ख. पु.)

प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम् ॥

एवमन्यत्र ( ह )

**सामभेदोऽथ दानं च नत्युपेक्षे रसान्तरम् ।**
**तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात् ॥ २०७ ॥**
**तत्र प्रियवचः साम, भेदस्तत्सख्युपार्जनम् ।**
**दानं व्याजेन भूषादेः पादयोः पतनं नतिः ॥ २०८ ॥**
**सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम्[1] ।**
**रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम् ॥ २०९ ॥** (च, ई)

यथा—नो चाटु श्रवणे कृतमित्यादि । अत्र हि सामादयः पञ्च सूचिताः ।

रसान्तरमूह्यम् ( क )

वाक्यार्थः । **एवमन्यत्रे**ति । उत्स्वप्नायिते उदाहृतमेव । गोत्रस्खलिते यथा—
"एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखं शयितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमः तूष्णीं स्थितः तत् क्षणाद्
माभूत् सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥"

यथा वा मम ।
"परासक्तासक्तः सखि ! मम स यत् चाटु कुरुते
समस्तोऽसौ व्याजप्रणय इति जानीहि नियतम् ।
तदा तां तु ध्यायन् स खलु कितवः केलिसमये
मुहुस्तस्या नाम्ना ननु रहसि सम्बोधयति माम् ॥" इति ।

( **वि, च** ) नत्युपेक्षे । नतिश्च उपेक्षा च इति । **तत् सख्युपार्जनमि**ति । तस्याः मानिन्याः सख्या उपार्जनमात्मीकरणमित्यर्थः। व्याजेन भूषादेर्दानं दानमित्यर्थः। एकमेवात्र दानपदमुद्दिश्य विधेयोभयात्मकम् । रभसत्रास आकस्मिकत्रासः हर्षादेरित्यादिपदात् उत्कटकार्य्यातिपातपरिग्रहः ।

**(वि, क) नो चाट्वि**ति । कलहान्तरितोदाहरणम् । अत्र नोचाट्वित्यत्र साम । नच दृशेत्यत्र दानम् । निजगर्खीवाच इत्यत्र भेदः सखीनामाप्तिकरणरूपः । आप्तिभावादेव कान्तस्य प्रियहेतुवाक्यकथनात् । पादान्त इत्यत्र नतिः । गन्तुञ्चेत्यत्र उपेक्षा एताः पञ्च सूचिता इत्यर्थः । एभिरुपायैरस्या मानभङ्गाभावेऽपि न तदुपायहानिः तस्यामजातोद्वेगरूपसहकारिविरहेण फलानुत्पादनात्। पश्चात्तु तत्प्राप्त्यां भग्न एव मानः । **रसान्त-**

( **लो, ई** ) प्रसङ्गात् मानभङ्गोपायानाह । **सामे**ति । प्रवास उद्देशक्रमप्राप्त ।

1 'क्षावधारणम्' ( क. ख. पु. )

अथ प्रवासः—

प्रवासो भिन्नदेशत्वं[1] कार्याच्छापाच्च संभ्रमात् ।
तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः ।
निःश्वासोच्छ्वासरुदितभूमिपातादि जायते ॥ २१० ॥ (ख)

किञ्च—

अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशताऽरुचिः ।
अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः ।
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ॥ २११ ॥
[2]असौष्ठवमनायत्तिः तापस्तु विरहज्वरः । (ग)
अरुचिर्वस्तु वैराग्यं सर्वत्रारागिताऽधृतिः
अनालम्बनता चापि शून्यता मनसः स्मृता ।
तन्मयं तत्प्रकाशो हि बाह्याभ्यन्तरतस्तथा ॥ २१२ ॥

शेषं स्पष्टम् ।

एकदेशतो यथा मम तातपादानाम्—

चिन्ताभिः स्तिमितं मनः करतले लीना कपोलस्थली
प्रत्यूषक्षणदेशपाण्डु वदनं श्वासैकखिन्नोऽधरः ।
अम्भःशीकरपद्मिनीकिसलयैर्नापैति तापः शमं
कोऽस्याः प्रार्थितदुर्लभोऽस्ति सहते दीनां दशामीदृशीम् ॥ (घ)

---

रसान्तरमिति–हर्षाद् यथा–"चिरप्रवासात् सुहृदि प्रयाते यस्तत्र हर्षो मिथुनस्य जातः। तन्मानिनीमानविघातहेतुः स एव यातः चटुलाविमानी ॥" अत्र तन्मानिनी तन्मिथुनीयमानिनी । अत्र हर्ष एव व्यभिचारिभावो रसान्तरम् । भयाद् यथा—

"प्रवृत्ते मानभङ्गाय पत्यौ नाग उपागतः ।
तं दृष्ट्वा सहसा कण्ठे पतिं जग्राह मानिनी ॥" इति ।

अत्र भयानको रसान्तरम् ।

**( वि, ख )** विप्रलम्भस्य पूर्वरागमानप्रवासकरुणरूपचातुर्विध्यस्य उक्तत्वात् पूर्वरागं मानञ्च समाप्य प्रवासमाह—**अथ प्रवास** इति ।

**(वि, ग)** अङ्गासौष्ठवादेर्लक्षणमाह—**असौष्ठवमनायत्तिरि**ति । अनायत्तिरस्वाधीनता ।

**(वि, घ) चिन्ताभिः स्तिमितमि**ति । पत्यौ प्रवासस्थे करतले गण्डं कृत्वा चिन्तयन्तीं प्रति कस्याचिदुक्तिरियम् ।

---

1 'देशित्वं' (क. पु)  2 'अङ्गसौष्ठवमापत्तिः' (ख.पु.) 'असौष्ठवं मलापत्तिः' (क. पु. )

**भावी भवन् भूत इति त्रिधा स्यात्तत्र कार्य्यजः ॥ २१३ ॥**

**कार्य्यजस्य[1] बुद्धिपूर्वत्वात् त्रैविध्यम् । तत्र भावी यथा मम–( ङ )**

**यामः सुन्दरि ! याहि पान्थ !, दयिते शोकं वृथा मा कृथाः,**
**शोकस्ते गमने कुतो मम, ततो बाष्पं कुतो[2] मुञ्चसि ।**
**शीघ्रं न व्रजसीति, मां गमयितुं कस्मादियं ते त्वरा**
**भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे संभ्रमः॥ (च, उ)**

**भवन् यथा—**

**प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं**
**धृत्या न क्षणमासितं, व्यवसितं चित्तेन गन्तुं पुरः ।**
**यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता**
**गन्तव्ये सति जीवित ! प्रियसुहृत्सार्थः किमु त्यज्यते ॥ (छ)**

---

**( वि, ङ )** प्रवासस्य कार्य्यात् शापात् इत्यादि त्रैविध्यस्योक्तत्वात् कार्य्यजमेव त्रिविधमाह–**भावी**ति । कार्य्यानुरोधेन प्रवासस्त्रिविध इत्यर्थः । **तस्य बुद्धी**ति । बुद्धिः कार्य्यज्ञानम् ।

**(वि,च) यामः सुन्दरी**ति । द्वयोरुक्तिप्रत्युक्ती इमे । तत्र सुन्दरीत्यन्तं पत्युः । याहि पान्थेति प्रियायाः । मा कृथा इत्यन्तं पत्युः । शोक इत्यादिकं ममेत्यन्तं प्रियायाः । तत इत्यादि मुञ्चसीत्यन्तं पत्युः । शीघ्रं न व्रजसीत्यन्तं प्रियायाः । त्वरेत्यन्तं पत्युः । भूयानित्यादि प्रियायाः । त्वया सह जिगमिषोः अस्य मे जीवस्य भूयान् संभ्रमस्त्वरेत्यर्थः ।

**(वि, छ) प्रस्थानं वलयैः कृतमि**ति । स्वजीवितं सम्बोध्य प्रियाया उक्तिरियम् । हे जीवित ! प्रियतमे यातुं निश्चितचेतसि सति तवापि गन्तव्ये गतत्वे सति वलयादिप्रियसुहृत्सार्थः किमु त्यज्यते तेनैव सह गम्यतामित्यर्थः । वलयादयः सर्वेऽपि समं प्रस्थिताश्चलिताः । तेषां प्रस्थानमाह–**प्रस्थानमि**ति । प्रस्थानं यात्रा बहुदिनव्यापकतद्वार्त्तया कार्श्येन वलयभ्रंशः गतं चालितम् । अत्र पृथक् प्रियसुहृत्त्वोपादानम् अत्यन्तप्रियत्वप्रतिपादनाय । तच्च मरणहेतुशोकादिदुःखेऽप्यश्रुपातेन तद्दुःखस्य किञ्चिदुपशमात् । जीवनरक्षा भवत्यतः स्वरक्षाकारित्वेनाऽत्यन्तं प्रियत्वम् ।

---

**( लो, उ ) याम** इति । तव गमने मम कुतः शोकः जीवनाभावादिति भावः । **शीघ्रं न व्रजसी**ति । त्वामग्रे पश्यन्त्या मम तवागमनस्याप्याशङ्का । तया धारयन्त्या नास्य मोचनमित्याशयः । मयि कृतकप्रेमवतस्तव न खलु कदाचिद् गमनम् । ततश्च दुराशयान्दोलितत्वेन प्राणानामाकुलीभावोऽयमसहनीय इति । तत्रावश्यंभाविनि गमने सहसोत्पन्ने एषामपि निर्याण आकुलीभावो निवर्त्ततामिति ।

---

1 'कार्यस्य' ( क. पु. ) 2 'कथं' ( क. पु. )।

भूतो यथा—'चिन्ताभिः स्तिमितमित्यादि । शापाद् यथा–'तां जानीयाः' इत्यादि । संभ्रमो दिव्यमानुषनिर्घातोत्पातादिजः । यथा–विक्रमोर्वश्याम् उर्वशीपुरूरवसोः । अत्र पूर्वरागोक्तानामभिलाषादीनामत्रोक्तानाञ्चाङ्गसौष्ठवादीनामपि दशानामुभयेषामपि उभयत्र सम्भवेऽपि चिरन्तनप्रसिद्ध्या[1] विविच्य प्रतिपादनम् । अथ करुणविप्रलम्भः— (ज)

**यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनरलभ्ये ।**
**विमनायते यदैकस्तदा भवेत्करुणविप्रलम्भाख्यः ॥ २१४ ॥**

यथा कादम्बर्यां पुण्डरीकमहाश्वेतावृत्तान्ते । (ऊ)

पुनरलभ्ये शरीरान्तरेण वा लभ्ये तु करुणाख्य एव रसः । किञ्चात्राकाशसरस्वतीभाषानन्तरमेव श्रृङ्गारः । सङ्गमप्रत्याशया रतेरुद्भवात् । अयन्तु करुणः इत्यभियुक्ता मन्यन्ते । यच्चात्र सङ्गमप्रत्याशानन्तरमपि भवतो विप्रलम्भश्रृङ्गारस्य प्रवासाख्यो भेद एव इति केचिदाहुः । तदन्ये मरणरूपविशेषसम्भवात्तद् भिन्नमपि मन्यन्ते ।

---

**(वि, ज) उर्वशीपुरूरवसो**रिति । तयोर्वृत्तान्ते इत्यर्थः । पुरूरवस एव विप्रलम्भात् । तत्र च देवेन उर्वश्या हरणमेव दैव उत्पातः ।

**(वि, झ) पुण्डरीके**ति । तत्र महाश्वेताया मरणे आकाशसरस्वत्याः पुनर्लभ्यत्वमुक्तम् । तथा च तत्र विप्रलम्भ एव इत्युक्त्वा प्रथमं करुणः पश्चात्तु विप्रलम्भ इत्यभियुक्तानां मतं दर्शयितुमाह–**किञ्चे**ति । **मरणविशेषसम्भवा**दिति । यथा पूर्वरागमानप्रवासरूपा विशेषास्तथा मरणस्यापि विशेषस्य सम्भवादेतद्भेदेन प्रवासाभिन्नमपीत्यर्थः ।

---

**(लो, ऊ)** करुणविप्रलम्भाख्यः करुणाख्यो विप्रलम्भः । कादम्बर्यां पुण्डरीके मृते महाश्वेताया विलापः । एतद्ग्रन्थकृतः कुवलयाश्वचरिते च युवतेर्मदालसायास्तथाभावे कुवलयाश्वस्य शरीरान्तरेण लभ्ये अजेन्दुमतीवृत्तान्तवत् । आकाशसरस्वतीभाषान्तरे त्वयाऽसौ पुनर्लभ्ये इति ।

**(लो, ऋ) यच्चात्रे**त्यादि । अयमाशयः—यथा भवद्भिरेकदेशस्थयोर्वियोगो विरहाख्यः विदेशस्थयोः प्रवासाख्य इति ईषद्भिन्नधर्मयोगेऽपि भेदः स्वीकृतः । अस्माभिस्तस्मिन्नेव शरीरे वियोगः–प्रवासाख्यः, शरीरान्तरे तु करुण इति बहुतरभिन्नयोगे इति का क्षतिः । यत्तु कैश्चिद् अभिलाषप्रवासेर्ष्याविरहशापहेतुकत्वेन पञ्चधा विप्रलम्भ इत्युक्तम् तत्र सङ्गमप्रागभावरूपोऽभिलाषः पूर्वराग एव । एकदेशस्थयोरपि गुर्वादिवशाद् सङ्गमोपरोधस्वरूपः विरहश्च; यदि कन्याविषयस्तदा पूर्वराग एव । यदा तु परोढाविषयः तदा रसाभावसत्त्वात् न शृङ्गाररसभेदः, यदि तूपभुक्तनायिकाविषय-

---

1 'प्रसिद्ध्या' इत्यनन्तरम्, 'उभयसम्भवे' इत्यधिकः पाठः (क. पु.)

अथ सम्भोगः—

दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।
यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः ॥ २१५ ॥ (ऋ)

आदिशब्दादन्योऽन्याधरपानचुम्बनादयः यथा—'शून्यं वासगृहम्' इत्यादि । (ञ)

संख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात् ।
अयमेक एव धीरैः कथितः संभोगशृङ्गारः ॥ २१६ ॥
तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथास्तमयः ।
जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृतिः ।
अनुलेपनभूषाद्या वाच्यं शुचिमेध्यमन्यच्च ॥ २१७ ॥

तथा च भरतः—

यत्किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तत्सर्वं शृङ्गारेणोपमीयते

---

(वि, ञ) **दर्शनस्पर्शनादीनी**ति—अन्योऽन्यमित्यस्यायमर्थः । कदाचित् एकैकेन कदाचित्तूभयेन नापि दर्शनादिकं क्रियत इत्यर्थः । तेन एकैकस्य दर्शनादौ अपि सम्भोगो बोद्धव्यः । 'शून्यं वासगृह' मित्यादौ उभयोरेव । ''यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या । दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥'' इत्यत्र गजोपरि स्थिताया मालत्या दर्शनम् । माधवस्य तु विप्रलम्भ एव ।

(वि, ट) **वाच्यं शुचिमेध्यमि**ति—शुचि शुद्धं वस्त्रादि, मेध्यं पवित्रम् अन्यद् वा यत् तदुद्दीपनविभावरूपतया वाच्यमित्यर्थः । **शृङ्गारेणोपमीयते** इति ।

---

स्तदास्य प्रवासाख्यभेदान्तःपातः । एवमेव च शापतोऽप्यन्तराये स्वदेशस्थयोरपि प्रवासाख्यभेदमेवाचक्ष्यते । अत एव महर्षिणा प्रवासदशदशालक्षणे ''पूर्वानुभवजा ज्ञेया दश स्मरदशा इह'' इति पूर्वानुभवत्वमुक्तम् । पूर्वानुभावः पूर्वोपभोगानुभवः । एवं च पूर्वरागोऽनुपभुक्त इति विषयः । तथा च एकदेशस्थयोर्भिन्नदेशस्थयोर्वा पूर्वरागप्रवासौ भवतः । यत्तु प्रवासलक्षणे भिन्नदेशत्वमुक्तं तद्व्यवहितत्वमात्रविषयम् । यदि चैकदेशस्थयोर्न प्रवासस्तत् कथय कियति योजने कियति वा क्रोशेऽसौ महर्षिभिर्निरूपितः । कथं वा दूरदेशस्थयोर्नलदमयन्त्योःप्रद्युम्नप्रभावत्योर्हंसमुखा गुणश्रवणानन्तरं पूर्वरागस्तया चक्रवाकयोस्तृणमात्रव्यवधानेऽपि शापप्रवासाख्यशृङ्गाराभास इति सर्वं सुस्थम् ।

(लो, ऋ) **संभोग** इति—संभोगः सम्भोगाख्यो भेदः । विलासी च विलासिनी च विलासिनौ ।

(लो, ऌ) **संख्यातुमि**ति—परिरम्भणादित्यादिशब्दात् विभावानुभाव-

युज्यते च । ( ट, लृ )

किञ्च—

**कथितश्चतुर्विधोऽसावानन्तर्य्यात्तु पूर्वरागादेः ॥ २१८ ॥**

यदुक्तम्—

न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागो विवर्द्धते ॥

तत्र पूर्वरागानन्तरं सम्भोगो यथा कुमारसम्भवे पार्वतीपरमेश्वरयोः । ( ठ )
प्रवासानन्तरं सम्भोगो यथा, मम तातपादानाम्—

क्षेमं ते ननु पक्ष्मलाक्षि ! किसअं खेमं महङ्गं दिढं
एतादृक् कृशता कुतः तुह पुणो पुट्ठं सरीरं जदो ।
केनाहं पृथुलः प्रिये पणइणीदेहस्स संभेलणात्
त्वत्तः सुभ्रु ! न कापि मे जइ इदं खेमं कुदो पुच्छसि ॥ (ण)

---

शृङ्गारेण हेतुना उपमीयते तदुद्दीपनतया उपमीयते उपस्थाप्यते इत्यर्थः । वर्ण्यते इति यावत् । युज्यते इति शृङ्गारे तदुपयोगात् ।

( **वि, ठ** ) सम्भोगशृङ्गारस्य एकविधत्वमुक्त्वा पूर्वरागाद्यानन्तर्येण तस्य चातुर्विध्यं वक्तुमाह—**किञ्चे**ति । कषायिते प्रथमं किञ्चिद्रक्तीकृते । **पार्वतीपरमेश्वरयो**रिति—अत्रापि तयोर्वृत्तान्ते इत्यर्थः । पूर्वरागसंभोगो मदनदाहानन्तरं विवाहे सति पार्वतीपरमेश्वरयोः । एवं मालतीमाधवयोरपि बोध्यम् ।

( **वि, ड** ) **क्षेमं ते ननु** इत्यादि—इमे दम्पत्योरुक्तिप्रत्युक्ती । तत्र प्रवासादागतस्य पत्युः संस्कृतोक्तिः तत् पत्न्याः प्राकृतोक्तिः । प्रथमसंस्कृतेन पृच्छा नायकस्य; प्राकृतेनोत्तरं प्रियायाः । एवमुत्तरोत्तरम् । कीदृशम् क्षेमं ममाङ्गं दृढमित्यर्थः । **पुट्ठमि**ति—तव पुनः शरीरं पुष्टं यत इत्यर्थः । **पणइणी**ति—प्रणयिन्या मम देहस्य संभिश्रणात् संकोचात् कृशीकरणादित्यर्थः । एतावत् कालं तव वैदेश्यात्, निश्चितेन तवानुरागेण यतोऽहं कृशा; अतो मां कृशां कृत्वा मन्मांसेन तव शरीरं पुष्टमित्यर्थः । **त्वत्त** इति । हे सुभ्रु ! त्वत्तः कापि न मे कापि पुष्टिः इत्यर्थः । **जइ इदमि**ति यदीदं तदा क्षेमं कुतः पृच्छसि । स्वानुरागविषयस्यैव क्षेमपृच्छा । मत्कार्श्येऽपि

---

वैचित्र्यम् । तत्र स्यादित्यनन्तरं यथासंभवं विभावादिरूपेणेति बोद्धव्यम् । यत् किञ्चित् दर्शनीयं शय्यागृहादि ।

( **लो, ए** ) **किसअमि**ति—कृशकं क्षेमं ममाङ्गं दृढम् । **तुहे**ति—तव पुनः पुष्टं शरीरं यतः । **पणइणी**ति—प्रणयिनीदेहस्य संभिश्रणात् । **जइ** इति—

एवमन्यत्राप्यूह्यम् । ( ड ) अथ हास्यः[1]

विकृताकारवाग्वेशचेष्टादेः कुहकाद् भवेत् ।
हासो हासस्थायिभावः श्वेतः प्रमथदैवतः ।
विकृताकारवाक् चेष्टं यमालोक्य हसेज्जनः ।
तमत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् ।
अनुभावोऽक्षिसंकोचवदनस्मेरतादयः ।
[2]निद्रालस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः ॥ २१९ ॥
ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च ।
नीचानामपहसितं तथातिहसितञ्च[3] षड्भेदाः ॥२२०॥(ढ,ण)
ईषद् विकासि नयनं स्मितं स्यात् स्पन्दिताधरम् ।
किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ।
मधुरस्वरं विहसितं सांसशिरःकम्पनमवहसितम् ।
अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितम् ॥ २२१ ॥

यथा मम[4]—

गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयञ्च ।

---

तत्र पुष्ट्या च मयि तवानुरागाभावेनैव पुष्टिः । अनुरागसत्त्वे तु मद्विरहात् कार्श्यं स्यादिति भावः । **एवमन्यत्रे**ति---करुणविप्रलम्भानन्तरं सम्भोग इत्यर्थः । तत्र च मरणानन्तरं जीवने महाश्वेतापुण्डरीकयोः सम्भोगे ।

( **वि, ढ** ) **ज्येष्ठानामि**ति --उत्तमानां नायकानामित्यर्थः । **स्मितहसित** इति—कस्यचिदुत्तमनायकस्य स्मितं कस्यचित्तु हसितम् इत्यर्थः । एवमुत्तरोत्तरमपि एकैकस्य एकैकमिति षड्भेदाः ।

( **वि, ण** ) स्मितादिलक्षणमाह । **ईषदि**ति । **गुरोर्गिर** इति--कुक्कुट-मिश्रपादोपहासः ।

---

यदि इदं चेमं कुतः पृच्छसि । अयमर्थः--यदाहमेव प्रणयिनी किमिति मां परिहृत्य दूरं गतोऽसि यद्धेतुकस्तवायं प्रश्नः । अत्र सम्भोगः संयुक्तनायकविषयः । संयोग-वियोगौ च परस्परायत्ततारूपौ तेन दूतिप्रेषणादेः संभोगविषयत्वम् । ईर्ष्यामानादेश्च विप्रलम्भविषयत्वमविरुद्धम् ।

( **लो, ऐ** ) **हास्य** इति--विकृताद् विक्रियायुक्ताद् वाग्वेशचेष्टादेः कुहकाख्य-वञ्चनाप्रयोगाच्च हास्यरसो भवेदिति सम्बन्धः । प्रमथाः शिवगणविशेषाः । यद्वस्तु । ज्येष्ठानामुत्तमप्रकृतीनाम् ।

---

1 हासः ( क. ख. ग. पु. ) 2 'हर्षावहित्थप्रमुखास्तथा' ( प. फ. पु. )
3 हसितं तदेव षड्भेदः । (क. ख. पु.) 4 ममेति (क. ख. पु.) नास्ति ।

अमी समाघ्राय च तर्कवादान् समागताः कुक्कुटमिश्रपादाः॥ (ण)

[1]अस्य नटकमेलकप्रभृतिषु परिपोषो द्रष्टव्यः। ( ओ )

अत्र च—

यस्य हासः स चेत् क्वापि साक्षान्नैव निबध्यते।
तथाप्येष विभावादिसामर्थ्यादुपलभ्यते।
अभेदेन विभावादिसाधारण्यात् प्रतीयते।
सामाजिकैस्ततो हास्यरसोऽयमनुभूयते॥ २२२॥ (त)

एवमन्येष्वपि रसेषु बोद्धव्यम्।

अथ करुणः—

इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः।
शोकोऽत्र स्थायिभावः स्यात् शोच्यमालम्बनं मतम्।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः॥ २२३॥
अनुभावा दैवनिन्दाभूपातक्रन्दितादयः।
वैवर्ण्योच्छ्वासनिःश्वासस्तम्भप्रलपनानि[2] च।
निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः।
विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः॥ २२४॥

शोच्यं विनष्टबन्धुप्रभृति।

---

( वि, त ) अत्र चोत्तमादिषु य उपहासकस्तस्य स्मितादिकमुन्नेयम्। साक्षान्नैव निबध्यत इति। नशब्देन वाच्य इत्यर्थः। **अभेदेने**ति—स उपहासकः सामाजिकैः विभावादिसाधारण्यात् यतः अभेदेन प्रतीयते ततो हास्यरसोऽयमनुभूयत इत्यर्थः। विभावादिसाधारण्यञ्च उपहासकस्य यो विभावादिरूपो हसनीयवैकृत्यादिः, तत्र सामाजिकस्यापि स्वोपहसनीयत्वाद्यारोप्यः। स च स्वात्मनि उपहासकाभेदारोपात्। ततश्च स्वनिष्ठहासे उपहासकहासाऽभेदारोपः विभावादीनां साधारणीकरणव्यापारात्। ततश्च स्वादनाख्येन व्यापारेण हास्यरस आस्वाद्यत इति पूर्वापरग्रन्थनिष्कर्षः। एवमेव रसान्तरेऽपि रीतिः।

( लो, ओ ) अत्र कुक्कुटमिश्रपादा आलम्बनम्। तेषां च पञ्चादिनाध्ययनादय उद्दीपनानि। कायोच्छ्वसनदृष्टिसङ्कोचादयो हर्षावहित्थादयश्च अनुभावव्यभिचारिणः अनुक्ता अपि सामर्थ्याल्लभ्याः। एवमन्यत्रापि।

---

1 अस्येत्यादिः द्रष्टव्य इत्यन्तः पाठो ( घ. च. छ. पु. ) नास्ति

2 'प्रलयनानि च' ( क. ख. पु. )

यथा मम राघवविलासे[1]—

विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः ।
अनयोर्घटनाविधेः स्फुटं ननु खड्गेन शिरीषकर्त्तनम् ॥ *

अत्र हि रामवनवासजनितशोकार्त्तस्य दशरथस्य दैवनिन्दा । एवं बन्धुवियोगविभवनाशादावप्युदाहार्य्यम् । परिपोषस्तु महाभारते स्त्रीपर्वणि द्रष्टव्यः (थ)

अस्य करुणविप्रलम्भाद्भेदमाह—

**शोकस्थायितया भिन्नो विप्रलम्भादयं रसः ।**
**विप्रलम्भे रतिः स्थायी पुनः सम्भोगहेतुकः ॥ २२५ ॥ (द)**

अथ रौद्रः—

**रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः ।**
**आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम् ।**
**मुष्टिप्रहारपतन[2]विकृतच्छेदावदारणैश्चैव ।**
**संग्रामसंभ्रमाद्यैरस्योद्दीप्तिर्भवेत् प्रौढा ।**
**भ्रूविभङ्गोष्ठनिर्दंश बाहुस्फोटनतर्जनाः ।**
**आत्मावदानकथनमायुधोत्क्षेपणानि च ।**
**अनुभावास्तथाक्षेपक्रूरसंदर्शनादयः ।**

---

(वि, थ) **विपिने क्व**ेति स्पष्टम् । **एवं बन्धुवियोगे**ति । तत्र बन्धुवियोगे यथा—

"हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषः
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ ।
इत्थं घर्घरमध्यरुद्धकरुणापौराङ्गनानां गिरः
चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥"

इदं मदालसायां मृतायां पुरस्त्रीणां रोदनस्य केनापि कथनम् । वित्तनाशे यथा—

"किं करोमि क्व गच्छामि शरणं क्व व्रजाम्यहम् ।
चिरेणोपार्जितं वित्तं दस्युनापहृतं मम" ॥ इति ।

(वि, द) **पुनः सम्भोगहेतुक** इति । पूर्वरागमानप्रवासहेतुकत्वे करुणसाङ्कर्य्यशङ्कैव नास्ति । मरणे सत्येव तत्साङ्कर्यसम्भावना । तत्र पुनः सम्भोगसम्भावनासत्त्वे विप्रलम्भः । पुनः सम्भोगहेतुकः पुनः सम्भोगसम्भावनाहेतुक इत्यर्थः ।

---

* अत्र राम आलम्बनविभावः । तस्य वनगमनमुद्दीपनविभावः । दैवनिन्दा अनुभावः । शोकः स्थायिभावः ।

1 'विलापे' (ट. ड. पु.)    2 'पातन' (क. ख. पु.)

**उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः ।**
**मोहामर्षादयश्चात्र भावाः स्युर्व्यभिचारिणः ॥ २२६ ॥**

यथा—

कृतमनुमतं[1] दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना—
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ (ध, औ) *

अस्य युद्धवीराद्भेदमाह—

**रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः ॥ २२७ ॥**

अथ वीरः—

**उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः ।**
**महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः ।**
**आलम्बनविभावास्तु विजेतव्यादयो मताः ।** (न)
**विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः ।**
**अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ।**
**सञ्चारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चाः ।**
**सच दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्धा स्याद् ॥२२८॥**

---

**( वि, ध ) कृतमनुमतमि**ति । अर्जुनं सम्बोध्य क्रुद्धस्य अश्वत्थाम्न उक्ति-रियम् । इदं स्वयं मृतस्य मम पितुः शिरच्छेदरूपं गुरुपातकं यैरुदायुधैर्मनुजपशुभि-र्निर्मयादैर्भवद्भिः कृतमनुमतं दृष्टं वा नरकासुरस्य रिपुणा श्रीकृष्णेन सार्द्धं सभीमकिरी-टिनां तेषां मेदोमांसैः दिशां दिक्स्थितभूतानां बलिमयमहम् एतत्क्षणवर्त्ती अहं करो-मीत्यर्थः । किरीटी अर्जुनः । मेदस्तैलम् । नरकरिपुपदोपादानात् नरकहेतुपातक-हन्तारं गुरुपातककारिणश्च हनिष्यामीति सूचनात् मत्क्रोधे जगदेव नङ्क्ष्यति इति सूचितम् ।

**( वि, न )** धर्मवीरदानवीरयुद्धवीरदयावीररूपतया वीररसस्य चातुर्विध्यं वक्ष्यते । तेषामालम्बनादिभेदो विजेतव्यादय इत्यादि सर्वमहार्थमादिपदम् ।

---

**( लो, औ ) कृतमनुमतमि**ति । तेषां भवताम् ।

---

* अत्रापकारिणोऽर्जुनादय आलम्बनम् । पितृहन्तृत्वमस्त्रादेरुद्यमनं चोद्दी-पनम् । प्रतिज्ञा अनुभावः । अन्यनैरपेक्ष्यगम्यगर्वो व्यभिचारिभावः । क्रोधः स्थायि-भावः । सामाजिके क्रोधप्रकृतिको रौद्रो रसो व्यज्यते ।

1 'मनुकृतं' ( क. ख. पु )

स च वीरो दानवीरो धर्मवीरो दयावीरो युद्धवीरश्चेति चतुर्विधः ।

तत्र दानवीरो यथा परशुरामः—त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः इति। अत्र परशुरामस्य त्यागे उत्साहः स्थायिभावः, संप्रदानभूतब्राह्मणैरालम्बनविभावैः सत्त्वाध्यवसायादिभिश्चोद्दीपनविभावैर्विभावितः सर्वस्वत्यागादिभिरनुभावैरनुभावितो हर्षधृत्यादिभिः सञ्चारिभिः पुष्टिं नीतो दानवीरतां भजते । (प)

धर्मवीरो यथा युधिष्ठिरः—

राज्यं च वसु देहश्च भार्य्याभ्रातृसुताश्च ये ।
यच्च लोके ममायत्तं तद्धर्माय सदोद्यतम् ॥

युद्धवीरो यथा श्रीरामचन्द्रः—

भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चिद् गतम् ।
नैवं चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्त्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥ (फ) ×

दयावीरो यथा जीमूतवाहनः—

शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवापि तावत् किंभक्षणात्त्वं विरतो गरुत्मन् ॥

एष्वपि विभावादयः पूर्वोदाहरणवदूह्याः— (ब) ※

---

(वि, प) त्यागः सप्तसमुद्रेति—सप्तसमुद्रावृताया मह्याः निर्व्याजदानपर्यन्तः त्याग इत्यर्थः। सत्त्वाध्यवसायः सात्त्विकक्रियाभावितः। पूर्वोक्तप्रकारेण ज्ञापितः।

(वि, फ) भो लङ्केश्वर इति । रामो रामनाम्ना ख्यातो वालिहन्ता स्वयं याचते । नयं नीतिं स्मर । नाद्यापीति । मया सह सन्धेरुपायः कोऽपि न गत इत्यर्थः। नैवं चेत् सीता न दीयते चेत् तदा मम धनुः ज्याबन्धस्य बन्धूकृत एष पत्त्री बाणो न सहिष्यते । कीदृशः खरादीनामसृजा रक्तेन पङ्किलः ।

(वि, ब) शिरामुखैरिति । गरुडेन भक्ष्यमाणं नागं परित्रातुं तद्भक्षणाय आत्मदेहमर्पितवतस्तद्भक्षितबहुमांसस्य जीमूतवाहनस्याऽतृप्तं प्रत्युक्तिरियम् । हे गरुत्मन् ! अद्यापि मम देहे मांसमस्ति । अत्र हेतुमाह—मम कीदृशस्य शिरामुखै रक्तं स्यन्द-

---

× अत्र रावण आलम्बनं तेन सीताहरणमुद्दीपनम् । तस्मिन् उपेक्षा अनुभावः सहिष्यते इति गम्यगर्वश्च व्यभिचारिभावः । उत्साहः स्थायिभावः ।

※ नाग आलम्बनविभावः । तस्य कातरोक्तिरनुभावः । आनन्दश्च अनुभावः । धैर्य्यश्च सञ्चारिभावः । दयायामुत्साहः स्थायिभावः ।

अथ भयानकः—

भयानको भयस्थायिभावः [1]कालाधिदैवतः ।
स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः ।
यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम् ।
चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः ।
अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणम् ।
[2]पुलकस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः । ( भ )
जुगुप्सावेगसंमोहसंत्रासग्लानिदीनताः ।
शङ्कापस्मारसंभ्रान्तिमृत्य्वाद्या व्यभिचारिणः ॥ २२९

यथा 'नष्टं वर्षवरै'रित्यादि—

अथ बीभत्सः—

जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः ।
नीलवर्णो महाकालदैवतोऽयमुदाहृतः
[3]दुर्गन्धमांसपिशितमेदांस्यालम्बनं मतम् ।
तत्रैव कृमिपाताद्यमुद्दीपनमुदाहृतम् ।
निष्ठीवनास्यवलननेत्रसङ्कोचनादयः ।
अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः ।
मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः ॥ २३० ॥

यथा—

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।

---

त एव । अतो यद्यपि बहूनि मांसानि भक्षितानि तथापि तृप्तिमात्मनि न पश्यामि । अतस्त्वं किं भक्षणाद् विरतोऽसीत्यर्थः ।

**( वि, भ )** भयानकानुभावेषु पुलकः किञ्चिद् अङ्गेषु रोमाञ्चः । रोमाञ्चस्तु सर्वाङ्गेषु इति भेदः ।

**( वि, म )** तद्व्यभिचारिभावेषु—जुगुप्साभयहेतुप्रेतादिदर्शनात् । संत्रासश्च भयाद्भिन्नः । **उत्कृत्येति**—करालाराधनाय गतस्य माधवस्य शवं भुञ्जानं प्रेतं दृष्ट्वा उक्तिरियम् । अयं प्रेतरङ्कः । प्रेतेषु दरिद्रः । अङ्कस्थात् करङ्कात् शवात् अस्थिसंस्थं

---

**( लो, अ ) उत्कृत्येति**—उच्छ्रोथ उच्छूनता । पिण्डो जङ्घोर्ध्वभागः । रङ्कश्चिरदुर्लभाहारः । करङ्कोऽस्थिशेषं शिरः । स्थपुटं विकटगम्भीरभागः ।

---

1 "भूताधिदैवतः' ( च. ज. पु ) 2 'प्रलय' ( क. ख. पु. )
3 'दुर्गन्धिमांसरुधिर' ( ख. पु. ) 'दुर्गन्धमांसरुधिर' ( क. पु. )

आर्त्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ * (म, अ)

अथाद्भुतः—

अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः[1] ।
पीतवर्णो वस्तु लोकातिगमालम्बनं मतम् ।
गुणानां तस्य महिमा भवेदुद्दीपनं पुनः ।
स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसंभ्रमः ।
तथा नेत्रविकासाद्या अनुभावाः प्रकीर्त्तिताः ।
वितर्कावेगसंभ्रान्तिहर्षाद्या व्यभिचारिणः ॥ २३१

यथा—

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।

---

स्थपुटगतमपि क्रव्यं मांसं प्रकटितदशनः सन्नव्यग्रं यथा स्यात्तथाऽत्ति । किं कृत्वा प्रथमं कृत्तिं चर्म्म उत्कृत्योत्कृत्य । अथानन्तरं अंसे भुजमूले स्फिचि नितम्बे पृष्ठे च । आदिना उरो च । पिण्डेऽवयवे सुलभानि मांसानि जग्ध्वा भक्षयित्वा । ईदृशक्रमेण भक्षणाद् अव्यग्रता । मांसानि कीदृशानि पृथुना उच्छोथेन तत्फुल्लतया भूयांसि बहूनि तथा अतिदुर्गन्धीनि ।

( वि, य ) अद्भुतव्यभिचारिभावेषु संभ्रान्तिः; भ्रमणं चपलता । तेनानुभावत्वेन उक्तसंभ्रमाद्भेदः । दोर्दण्डेति—रामेण धनुषि भग्ने तच्छब्दं श्रुत्वा लक्ष्मणस्य उक्तिरियम् । दोर्दण्डेनाञ्चितस्य उत्क्षिप्तस्य चन्द्रशेखरधनुर्दण्डस्यावभङ्गेन उद्गतो झङ्कारध्वनिः अहोऽद्यापि न विश्राम्यति । कीदृशः । आर्य्यस्य रामस्य बालचरितानां प्रस्तावनायाः प्रख्यापनायाः डिण्डिमो वाद्यविशेषः । पुनः कीदृशः—द्राक्सहसा पर्य्यस्ताभ्यामुत्क्षिप्ताभ्यां कपालसंपुटाभ्यां पुनर्मिलितो ब्रह्माण्डभाण्डस्य चण्डशब्दात् उत्फुल्य पुनर्मिलितं ब्रह्माण्डकपालद्वयं तदुदरे भ्राम्यन् इत्यर्थः । अत्र रामो लोकातिगं वस्तु । धनुर्भङ्गः गुणः ।

---

( लो, अा ) दोर्दण्डेति । आर्य्यो रामः द्राक्झटिति । पर्य्याप्तौ संपूर्णौ कपालसंपुटौ यस्य । एवं विशेषणविशिष्टतया मिलति जायमाने ब्रह्माण्डभाण्डोदरे भ्राम्यन्

---

* अत्र शवः प्रेतरङ्को वा आलम्बनम् । तत्कर्त्तनं मांसादनञ्च उद्दीपनम् । तद्द्रष्टुः नासाकुञ्चनवदनविधूननविवर्त्तननिष्ठीवनादयोऽनुभावाः । उद्वेगादयो व्यभिचारिणः । जुगुप्सा स्थायिभावः । सामाजिके बीभत्सरसो व्यज्यते ।

1 'मन्मथदैवतः ( च. ज. पु. )

द्राक् पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥
( य, आ ) *

अथ शान्तः—

शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः । (इ)
कुन्देन्दु[1]धवलच्छायः श्रीनारायणदैवतः ।
अनित्यत्वादिनाशेषवस्तुनिःसारता तु या । (र)
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ।
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ।
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः ।
रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ।
निर्वेदहर्षस्मरणमतिभूतदयादयः ॥ २३२ ॥

यथा—

रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासञ्च सकौतुकञ्च सदयं दृष्टस्य तैर्नागरैः ।
[2]निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कं[3] करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ॥ (ल,ई)

(वि, र) अनित्यत्वादिना इत्यत्र आदिपदात् इष्टवियोगादिना वैराग्यपरिग्रहः ।

(वि, ल ) रथ्यान्त इति । संसारविरक्तस्योक्तिरियम् । निर्व्याजीकृतया चित्सुधारसमुदा ज्ञानामृतहर्षेण निद्रायमाणस्य मे कदा करपुटीभिक्षां करटः काको विलुण्ठिष्यति । कामनाभावात् निर्व्याजता । मम कीदृशस्य, भिक्षाविलुण्ठनादिभयाभावात्

पिण्डितः पिण्डीभूतः चण्डिमा चण्डत्वं यस्येति भाङ्कारध्वनेर्विशेषणम्।

( लो, इ ) उत्कृष्टरूपः शमः स्थायिभावो यस्य । यत्तु निर्वेदस्य स्थायिभावतावलम्बनेन शान्तरसस्वीकारः कृतस्तदयुक्तम् , तस्य स्वाद्यमानरूपत्वात् संचारिभावस्यैव नाट्यत्वात् ।

( लो, ई ) रथ्येति—लवो लेशः । छिद्रमयत्वात् विकृताकारत्वात्सत्रासम् । तथाद्भुतस्याऽदृष्टपूर्वकत्वात्सकौतुकम् । अकिञ्चनत्वात् सदयम । निर्व्याजीकृतो

* अत्र धनुष्टङ्कार आलम्बनविभावः । तस्य विशालतोद्दीपनविभावः । तस्य वर्णनमनुभावः । हर्षादयश्च व्यभिचारिभावाः । अद्भुतः स्थायिभावः । सामाजिकेऽद्भुतरसो व्यज्यते ।

1 'सुन्दरच्छायः' ( ट. ठ. पु. ) 2 'निर्व्याजीकृत' ( क. ख. पु. )
3 'निःशङ्कः' ( ग. घ. पु. )

पुष्टिस्तु महाभारतादौ द्रष्टव्या ।

निरहङ्काररूपत्वाद् दयावीरादिरेष नो ॥ २३३ ॥

दयावीरादौ हि [1]जीमूतवाहनादौ अन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्त्तित्वाद्याप्तेर्दर्शनादहङ्कारोपशमो न दृश्यते । शान्तस्तु [2]सर्वप्रकारेणाहङ्कारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति । अतश्च नागानन्दादेः[3] शान्तरसप्रधानत्वमपास्तम् ।

ननु—

न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा ।

रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु समप्रमाणः[4] ॥ ( व,उ )

इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् तत्र संचार्य्यादीनाम् अभावात् कथं रसत्वमित्युच्यते । (ऊ)

---

निःशङ्कं चरतः रथ्यान्तः नगरराजमार्गमध्ये चरतः । धृतजरत्कन्थालवस्य । अतः तैः रथ्यास्थैः अध्वगैर्नागरैः कन्थादिविपरीतदर्शनात् सत्रासञ्च सकौतुकञ्च दरिद्रावस्थादर्शनात् सदयञ्च दृष्टस्य । अत्र समस्तसुखहेतूपक्षेपणात् लब्धाशेषवस्तुनिःसारता आलम्बनम् । नागररुक्षरूपेण दर्शनानि उद्दीपनानि । भिक्षाविलुण्ठनाशंसालभ्यौ रोमाञ्चहर्षावनुभावव्यभिचारिणौ ।

( वि, व ) दयावीरस्य भेदमाह—**निरहङ्कारे**ति । **नागानन्दे**ति—जीमूतवाहननायके नागानन्दे नाटके काव्यप्रकाशे शान्तस्य जीमूतवाहनस्य युक्तिमाक्षिपति- **अतश्च** इति । **सर्वेषु भावेष्वि**ति—सर्वेषु कान्तादिसकलपदार्थेषु सत्स्वपीत्यर्थः । **अत्र च** इति—मोक्षावस्थायशान्तः स एव यतो रसतामेतीति काव्यनाट्यसमर्पितः सन्निति शेषः ।

---

योऽसौ चित्ज्ञानमेव सुधारसः तेन प्रकाशेन या मुत् प्रीतिः सुखैकमयता तया निद्रायमाणस्य पश्यतोऽपि प्रमेयजातमपश्यतः चित्सुधारसस्य । निर्बीजीकृतस्यायमर्थः— निर्गतं बीजं संसारकारणम् अविद्याख्यं यस्मात् प्रकाशादित्यर्थः । निर्गतं बीजम् आत्मप्रकाशज्ञानकारणं मनो यत्र स निर्बीजः । ब्रह्माकारां वृत्तिमुत्पाद्य मनसः सत्त्वांशस्यापि विनाशाभ्युपगमात् ।

( लो, उ ) **निरहमि**ति—दयावीरादीत्यादिशब्दात् धर्मवीरादिः । नागानन्दाख्यं नाम नाटकम् । सर्वेषु लोष्टाश्मकाञ्चनादिषु भावेषु पदार्थेषु समं तुल्यं प्रमाणं ज्ञानं यत्र ।

(लो, ऊ) **आत्मे**ति—आत्मस्वरूपस्य आपत्तिः प्राप्तिः लक्षणं स्वरूपं यस्याः ।

---

1 हि नागानन्दादौ जीमूतवाहनादेरन्तरा । 2 सर्वाकारेण ( क. ख. पु. )
3 'नागानन्दे' ( च. छ. पु. ) 4 शमप्रधानः ( च. ज. ट. पु. )

**युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः।**
**रसतामेति तदस्मिन् संचार्यादेः स्थितिश्च न विरुद्धा ॥२३४॥**

यश्चास्मिन् सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः। (श,ऋ)
उक्तं हि—

यच्च कामसुखं लोके यच्च दिव्यं महासुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥
सर्वाकारमहङ्काररहितत्वं व्रजन्ति चेत्।
अत्रान्तर्भावमर्हन्ति दयावीरादयस्तदा[1] ॥ (ष, ऋ)
आदिशब्दात् धर्मवीरदानवीरदेवताविषयरतिप्रभृतयः

तत्र देवताविषया रतिर्यथा—

कदा वाराणस्यामिह सुरधुनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्।
अये गौरीनाथ ! त्रिपुरहर ! शम्भो ! त्रिनयन !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ (म)

---

(वि, श) **न विरुद्धे**ति—निर्वेदरूपसंचारिस्थितिः अत्रास्त्येव इत्यर्थः। **वैषयिकसुखपरत्वादि**ति। तेन शान्तस्य वैषयिकसुखभिन्नं तृष्णाक्षयाधीनं सुखमस्त्येव इत्युक्तम्।

(वि, ष) तत्र च सम्वादमाह। **उक्तं ही**ति—एते कामसुखादिव्यसुखे।

(वि, स) **देवताविषयरतिर्यथे**ति—शान्तान्तर्भावमापन्ना देवताविषयरतिर्यथेत्यर्थः। **कदा वाराणस्यामि**ति–इह वाराणस्यां सुरधुन्या गङ्गाया रोधसि तीरे पुलिने वा वसन् अहं कौपीनद्वयञ्च वसानः शिरस्यञ्जलिपुटं दधानश्च अये गौरीनाथेत्यादिनाऽऽक्रोशन् च कदा दिवसान् निमेषमिव नेष्यामीत्यर्थः। अत्र कौपीनादिविशेषणैः सुखादिराहित्यप्राप्त्या सर्वाहङ्कारराहित्यलाभाद् देवविषयरतेरपि शान्तरसत्वप्राप्तिः।

---

(लो, ऋ) **युक्ते**ति—तत्र विषयेभ्यः परावृत्य साक्षात् कर्तव्ये ब्रह्मणि मनो निधाय वर्त्तमानत्वचिन्तासन्तानवान् युक्तः, यस्य च योगजधर्मसहकृतेन मनसा, जिज्ञासितवस्तुसाक्षात्कारो जायते, यश्च भूत्वेन्द्रियजयी अणिमाद्याः कार्यसिद्धीर्दूरश्रवणाद्या अतीन्द्रियसिद्धीरासादितवान्। समाधिर्व्युत्थितो वियुक्तः। यस्य योगजधर्मसहकृतानि बाह्येन्द्रियाणि स्वे स्वे विषये महत्त्वसन्निकर्षादिसहकारनिरपेक्षाणि वर्त्तन्ते, एवं युक्तवियुक्तावस्थायामित्यर्थः।

(लो, ऋ) **अत्रे**ति—अत्र महाविषये दयावीरादयः स्वल्पविषयाः।

---

1 'तथा' (क. ख. पु.)

अथ मुनीन्द्रसम्मतो वत्सलः—

**स्फुटं चमत्कारितया वत्सलं च रसं विदुः।**
**स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम्। ( ह, लृ )**
**उद्दीपनानि तच्चेष्टाविद्याशौर्यदयादयः।**
**आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम्।**
**पुलकानन्दबाष्पाद्या अनुभावाः प्रकीर्तिताः।**
**संचारिणोऽनिष्टशङ्काहर्षगर्वादयो मताः।**
**पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः ॥२३५॥**

यथा—

यदाह धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलीम्।
अभूच्च नम्रः प्रणिपातशिक्षया।
पितुर्मुदं तेन ततान सोऽर्भकः ॥ (क्ष) +

एषाञ्च रसानां परस्परविरोधमाह—

**आद्यः करुणबीभत्सरौद्रवीरभयानकैः।**
**करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः।**
**भयानकेन शान्तेन तथा वीररसः स्मृतः।**
**शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः।**
**भयानकेन करुणेनापि हास्यो विरोधभाक्।**
**रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि।**

---

( **वि, ह** ) **वत्सलतास्नेह** इति—न चैवं दयावीरत्वप्रसक्तिरिति वाच्यम्, आत्मापकारिणोऽपि परोपचिकीर्षाप्रयोजकधर्मविशेषस्य दयात्वात् मुखसम्बन्धिनि अनुरागविशेषस्य च स्नेहत्वात् इति अनयोर्भेदात्।

( **वि, क्ष** ) **यदाह धात्र्ये**ति—उदितस्य उच्चारितस्य प्रथमं प्रथमोदितमिति "राजदन्तादिसमासात्"। धात्र्या उदितश्च नारायणेत्यादिशब्दश्च प्रथमं "ना" इत्यादि यद्वचः रघुराह तदीयां धात्रीयाम् अङ्गुलिमवलम्ब्य यच्च ययौ प्रणिपातशिक्षया यच्च नम्रोऽभूत्, तेन कर्मणा पितुर्दिलीपस्य मुदं ततान इत्यर्थः।

---

( **लो, लृ** ) **स्फुटमि**ति—चमत्कारस्यात्रोक्तप्रकारेण रसे सारत्वान्निर्देशः। तस्य च विभावादिशवलितस्वप्रकाशानन्दमयत्वं दैवसिद्धमित्युक्तम्। **चमत्कारितये**ति। वत्सलतारूपः स्नेहः।

---

+ दिलीपस्य वत्सलता स्थायिभावः। रघुरालम्बनविभावः। तादृशभाषणगमनादिकमुद्दीपनविभावः। आलिङ्गनादिकमनुभावः। हर्षादयः संचारिभावाः।

**शृङ्गारवीररौद्राख्यहास्यशान्तैर्भयानकः ।**
**शृङ्गारेण तु बीभत्स इत्याख्याता विरोधिता ॥ २३६ ॥**

आद्यः शृङ्गारः । एषां च समावेशप्रकारा वक्ष्यन्ते ।

**कुतोऽपि कारणात् क्वापि स्थिरतामुपयन्नपि ।**
**उन्मादादिर्न तु स्थायी पात्रे न स्थैर्य्यमेति यत् ॥२३७॥** (क, ए)

यथा विक्रमोर्वश्यां चतुर्थेऽङ्के पुरूरवस उन्मादः ।

**रसभावौ तदाभासौ भावस्य प्रशमोदयौ ।**
**सन्धिः शबलता चेति सर्वेऽपि रसनाद्रसाः ॥ २३८ ॥**

रसनधर्मयोगित्वाद् भावादिष्वपि रसत्वमुपचारात्[1] इत्यभिप्रायः । भावादय उच्यन्ते— (ख, ऐ)

**सञ्चारिणः प्रधानानि देवादिविषया रतिः ।** (ओ)
**उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥ २३९ ॥**

**न भावहीनोऽस्ति रसो न भावो रसवर्जितः**

---

( **वि, क** ) **पात्रे न**—स्वभावत इति शेषः ।

( **वि, ख** ) प्रशमोदयौ नाशोत्पत्ती । **रसनाद्रसा** इति—रसनम् आस्वादनं तद्रूपसादृश्यात् गौण्या लक्षणया रसपदार्थ इत्यर्थः । तस्य रसस्य सादृश्यं व्याचष्टे—**रसनधर्मे**ति—

( **वि, ग** ) **प्रधानानी**ति । निराकाङ्क्षवाक्यव्यङ्ग्यत्वमेव प्राधान्यम् । प्रधानभूता देवादिविषया रतिश्चेति चार्थो बोध्यः । उद्बुद्धमात्रः ज्ञातमात्रः नतु विशिष्य निश्चित इत्यर्थः । स्थायी स्थायिभाववद् वाच्यो नतु स्थिरतामापन्न इत्यर्थः । ननु सञ्चारिणस्तावद्रसनधर्मसम्बन्धिन एव, ततश्च सञ्चारित्वेऽवश्यं रससत्त्वम् । तथा च ध्वनिरेव रस इत्यतः कथं तत्र भावध्वनित्वमित्यत आह—**न भावो रस**इति । अत्र भावपदं सञ्चारिपरं; देवादिरतिभावस्य रसहीनत्वाद् । तत्र यथाऽप्रधानतया रसस्तिष्ठति एवं रसेऽपि अप्रधानतया भावस्तिष्ठतीत्याह—**न भावहीन** इति ।

( **लो, ए** ) ननून्मादानां स्थायित्वमवलम्ब्य कथमन्येऽपि रसा नोक्ताः इत्याशङ्क्याह—**कुतोऽपी**ति ।

( **लो, ऐ** ) ननु यदि रसात्मकं वाक्यमेव काव्यं तर्हि भावादिप्रधानमकाव्यं स्यादित्याशङ्क्याह—**रसाभावादि**ति । तदाभासौ रसाभासो भावाभासश्च । रसनं स्वादनमुक्तप्रकारम् ।

( **लो, ओ** ) रतिरित्यनन्तरं परिपोषं न नीतेति शेषः ।

---

1 रसत्वमौपचारिकम् ( च. ज. पु. )

परस्परकृता सिद्धिरनयो रसभावयोः ॥ ( ग )

इत्युक्तदिशा परमालोचनया परमविश्रान्तिस्थानेन रसेन सहैव वर्त्तमाना अपि राजानुगतविवाहप्रवृत्तभृत्यवदापाततो यत्र प्राधान्येनाभिव्यक्ता व्यभिचारिणो देवमुनिगुरुनृपादिविषया च रतिरुद्बुद्धमात्रा विभावादिभिरपरिपुष्टतया [1]रसतामनापाद्यमानाश्च स्थायिभावा भावशब्दवाच्याः । ( घ )

तत्र व्यभिचारी यथा—"एवं वादिनि देवर्षौ" इत्यादि । अत्रावहित्था (ङ)

देवविषया रतिर्यथा मुकुन्दमालायाम्—

> दिवि वा भुवि वा ममास्तु वासो
> नरके वा नरकान्तक ! प्रकामम् ।
> अवधीरितशारदारविन्दौ
> चरणौ ते मरणेऽपि चिन्तयामि ॥ ( च )

मुनिविषया रतिर्यथा—

> विलोकनेनैव तवाऽमुना मुने !
> कृतः कृतार्थोऽस्मि निबर्हितांहसा ।

---

( वि, घ ) **राजानुगते**ति । स्वविवाहदिने भृत्य एव प्रधानम् । राजा च तदनुगः । एवं प्रधानमपि रसो निराकाङ्क्षवाक्यव्यङ्ग्यस्य भावस्य प्रधानस्य अनुग इत्यर्थः । उद्बुद्धमात्रा इत्यादिकं स्थायिनो भावा इत्यस्य विशेषणम् । तेषां रसतानाप्तौ हेतुः विभावादिरिति, तैरपरिपोषश्च तस्य विशिष्याऽनिश्चितत्वात् । तच्चाग्रे उदाहरणे दर्शयिष्यते ।

( वि, ङ ) **एवं वादिनी**ति । देवर्षौ हरेण पार्वतीघटनार्थवाक्यवादिनि सति इत्यर्थः । अधोमुखत्वं लज्जया । कमलपत्रगणनमनवधानसूचनाद् हर्षाकारगोपनाय । अवहित्था आकारगुप्तिः ।

( वि, च ) **दिवि वा भुवि वे**ति—हे नरकासुरान्तक मरणे जाते मम दिवि भुवि वा नरके वा वासोऽस्तु । तथापि तव चरणौ स्मरामि इत्यर्थः । मरणकालेऽपि स्मरामीति बहवः । तदा च दिवि वा इत्यादिकम् असम्बद्धं स्यात् । नहि त्वच्चरणस्मरणात् नरकवासप्रसक्तिः; येन तत्साहितोक्तिः । चरणौ कीदृशौ शोभयावधीरितशरत्कालपद्मौ ।

( वि, छ ) **विलोकनेनैवे**ति । नारदं प्रति श्रीकृष्णस्योक्तिरियम् । हे मुने ! तव अमुना विलोकनेनैव कृतार्थः कृतोऽस्मि । कृतार्थतां दर्शयति—**निबर्हिते**ति । निबर्हितं नाशितम् अंहः पापं येन तादृशेन । तथापि तव गरीयसीः गिरः शुश्रूषुः श्रोतु-

---

1 'रसरूपताम्' ( ङ. ढ. पु )

तथापि शुश्रुषुरह गरीयसी-

गिरोऽथवा श्रेयसि केन तृप्यते ॥ ( छ )

राजविषया रतिर्यथा मम—

त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् ।

न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥ ( ज )

एवमन्यत् ।

उद्बुद्धमात्रस्थायिनो[1] यथा—

हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।

उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥

अत्र पार्वतीविषया भगवतो रतिः । ( झ ) *

ननूक्तं प्रपानकरसवद् विभावादीनामेकोऽवभासो रस इति तत्र सञ्चारिणः पार्थक्याभावात् कथं प्राधान्येनाभिव्यक्तिरित्युच्यते-( ञ )

मिच्छुरस्मि । हेतुं विनैव श्रवणेच्छामुक्त्वा हेतुमपि वक्तुमाह—**अथवे**ति । केन जनेन श्रेयसि मङ्गले तृप्यते; अपि तु न केनाऽपीत्यर्थः ।

**( वि, ज ) त्वद्वाजिराजी**ति । तव वाजिराज्या निर्धूतं यद् धूलिपटलं तेन पङ्किलाम् । पङ्किलत्वात् पङ्कजलाभ्यां भूरिभारः । **भिये**ति-वोढुमसामर्थ्येन उत्तरोत्तरं भाविदुःखद्वेषरूपेण भयेनेत्यर्थः ।

**(वि,झ) स्थायिन** इति । स्थायिभावस्य भावत्वप्राप्तिर्यथा इत्यर्थः । क्वचित्तु स्थायी यथेत्येव पाठः । **हरस्त्वि**ति । कन्दर्पेण धनुषि आरोपिते आकालिके वसन्ते जाते तपस्यतो महेशस्य पार्वतीं दृष्ट्वा किंचिद् धैर्यपरावृत्तिवर्णनमिदम् । चन्द्रोदयस्यारम्भे प्राथमिकदशायां तदानीमेव तस्य धैर्यपरावृत्तेः । किंचित्त्वात् भगवतो रतिरत्रभवतां प्राप्ता इत्यर्थः । धैर्यपरावृत्तेः किञ्चिद् उद्भावेन रसतामनाप्तत्वेन भावत्वस्यैव प्राप्तिरित्यर्थः ।

**( वि, ञ )** संचारिणः प्रधानानि इत्यनेन प्रधानीभूतस्यैव व्यभिचारिभावस्य भावत्वप्राप्तिरुक्ता । विभावादीनां सर्वेषामेव रसादिबोधे एकीभावेन विषयतोक्ता । ननु तत्र व्यभिचारिभावस्य पार्थक्येन प्राधान्यमवगम्यते । अत एव कथमेवंवादिनीत्यत्राऽवहित्थायाः प्राधान्यमेवाशङ्कते—**ननूक्तमि**ति । रस इत्यत्र भाव एव रसः। भावस्यैवाप्राधान्यशङ्कया भावत्वाभावस्यैव शङ्कितत्वात् , पार्थक्याभावात् पृथक् प्राधान्याभावात्।

* अत्र रतेराविर्भवन्त्याः प्रकरणादिपर्य्यालोचनया परिपोषाभावात् न रसत्वम् । रसान्तरानङ्गत्वात् न व्यभिचारित्वम् । अतो भावनामात्रविषयत्वात् भावत्वमेव युक्तम् । एवम्—

"जरदम्बरसम्वरग्रन्थविधौ ग्रन्थकारोऽहम् ।

1 'भावो' ('क. पु. ) 'स्थायी यथा ( ट. पु )

यथा मरीचखण्डादेरेकीभावे प्रपानके ।
उद्रेकः कस्यचित्क्वापि तथा सञ्चारिणो रसे ॥ २४० ॥(ट, औ)+

अथ रसभासभावाभासौ—

अनौचित्यप्रवृत्तत्व आभासो रसभावयोः ॥ २४१ ॥

अनौचित्यं चात्र रसानां भरतादिप्रणीतलक्षणानां सामग्रीरहितत्वे [1]सत्येकदेशयोगित्वोपलक्षणपरं बोध्यम् । तच्च बालव्युत्पत्तये एकदेशतो दर्श्यते ।

(ठ, अ) *

उपनायकसंस्थायां मुनिगुरुपत्नीगतायाञ्च ।
बहुनायकविषयायां रतौ तथाऽनुभयनिष्ठायाम् ।
प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्यगादिगते ।

---

(वि, ट) **तथा सञ्चारिण** इति । **उद्रेक** इति अनुषङ्गः। रसो भाव उद्रेकनियमश्च निराकाङ्क्षवाक्यव्यङ्ग्यत्वेन ।

(वि, ठ) **अनौचित्यप्रवृत्ते**ति । रसानामनौचित्यप्रवृत्तत्वे इत्यन्वयः । **भरतादिप्रणीते**ति। भरतादिमुनिप्रणीतानि यानि लक्षणानि तेषां सामग्रीसमग्रत्वम् । तद्राहित्ये सति तदेकदेशयोगित्वोपलक्षणमनौचित्यमित्यर्थः । तल्लक्षणोक्तं यत् किञ्चिद सत्त्वे एकदेशयोगिता इत्यर्थः। भरताद्युक्तलक्षणं वक्ष्यमाणानौचित्यमालायां यद् यदालम्बनादिकमुक्तं तद्रसादेर्बोध्यम् ।

(वि, ड) **उपनायके**ति । उपनायकविषयायामित्यर्थः । इदं प्रियारतौ । **मुनिगुर्वि**ति। इदं मुनिगुर्वोरिव स्वपत्न्यां रतौ। अन्यस्यां तु परोढावर्जनादेव आभासस्यासिद्धेः । **बहुनायके**ति । अनूढवेश्याया रतौ तस्या उपनायकाभावात् । **अनुभवनिष्ठायामि**ति । नायकनायिकयोरेकतरमात्रनिष्ठत्वे इत्यर्थः। **प्रतिनायके**ति। इदं वीर-

(लो, औ) रसास्वादानन्तरं विकारेणाऽनुभूयमानः ।

(लो, अ) **सामग्री**ति । न खलु सामग्री सर्वथा नास्ति । किन्त्वेकदेशयोगित्वे सति आभासत्वमित्यर्थः ।

---

परिमितकदन्नवराटनविधानपारङ्गता गृहिणी ॥"

इत्यत्र दुर्गतस्यात्मदशापर्यालोचनया प्रादुर्भूतोऽपि हासः परिपोषविरहान्न रसप्रकृतिः ।

+ यथा प्रपानकरसे क्वचित् कस्यचिद्रसस्योद्रेकः, तद्वदत्रापि संचारिण उद्रिक्ततया चमत्कारे सति तन्मुखेन व्यपदेश इति भावः ।

* अनौचित्यादृते नास्ति रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषद् परा ॥ इति ।

अनौचित्यं हि लोकशास्त्रादिविरुद्धम् ।

1 'त्वेकदेश' (ग. घ. पु.)

**शृङ्गारेऽनौचित्यं रौद्रे गुर्वादिगतकोपे ।**
**शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये ।**
**ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे ।**
**उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र ॥ २४२ ॥ ( ड )**

तत्र रतेरुपनायकनिष्ठत्वे यथा मम—

'स्वामी मुग्धतरो वनं घनमिदं बालाऽहमेकाकिनी
क्षोणीमावृणुते तमालमलिनच्छायातमःसंहतिः ।
तन्मे सुन्दर ! मुञ्च कृष्ण ! सहसा वर्त्मेति गोप्या गिरः
श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥ (ढ, आ)

बहुनायकनिष्ठत्वे यथा—

कान्तास्त एव भुवनत्रितयेषु मन्ये
येषां कृते सुतनु ! पाण्डुरयं कपोलः ।

---

ग्मे: तत्र जेतव्यः प्रतिनायकः । तन्निष्ठत्वे गुर्वादिगते गुर्वादिविषये । एवमुत्तरोत्तरं गतपरं क्वचित् तद्विषयपरं क्वचित् तद्विशिष्टपरं योग्यतया बोध्यम् ।

**(वि, ढ)** सन्ध्याकाले पन्थानमावृत्य तिष्ठन्तं श्रीकृष्णं प्रति गोप्या उक्तिरियम् । मुग्धतरो भद्रानभिज्ञः, अविचारेणैव क्रोधकारीत्यर्थः । अत्र कृष्णविषया गोप्या रतिः । तथा हि मुग्धतरो मूढतरो मम तव आसङ्गं तर्कयितुमसमर्थः । घनवनादिकं रतिहेतुः । मुनिगुरुपत्नीगतत्वेनोदाहृतम् । तत्र गुरुपत्नीगतत्वे यथा—

मधौ प्रभूते पिकनाददूते मन्दानिलोद्धूतविकाशिचूते ।
प्रियामुखालोकनमात्रकर्म्मा गुरुर्न धर्म्माय न पाठनाय ॥

मुनिपत्नीगतत्वे यथा—

तपोविभावसंभवातुलविभूतिकः सौभरि-
मुनिर्नृपतिकन्यकाशतपरिग्रहः कामतः ।
प्रचुम्बति मुहुर्मुहुः कुचनिपीडमालिङ्गति
स्मितोत्तरमुदीक्षते परिहसत्यजस्रं प्रियाम् ॥

**( वि, ण ) कान्तास्त एव** इति । कान्ताः कमनीयपुरुषाः । अत्र

---

**( लो, आ ) स्वामी**ति । इह हि स्वामीति मुग्धतर इति च पदाभ्यां भयदत्वं पक्षे प्रियत्वाभावो रतिनागरत्वाभावश्च, वनस्य घनत्वे गृहगमनदुर्घटत्वम् , बाल्ये भयं यौवनं च, यौवनेन च एतादृशि वयसि अनुरूपपतिर्नास्ति, एकाकिनीत्यनेन अन्धकारावरणकथनेन च स्वैरयानासहत्वं गोप्यरसप्रकाशाभावश्च, सुन्दरेति सम्बोधने परित्यागार्थं चाटुः, स्वाभिलषणीयत्वञ्च । लोचनं समाप्तम् ।

अनुभयनिष्ठत्वे यथा—मालतीमाधवे नन्दनस्य मालत्याम् ।
पश्चादुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे रतेराभासत्वम् इति श्रीमल्लोचनकाराः ।
तत्रोदाहरणं यथा—रत्नावल्यां सागरिकाया अन्योऽन्यदर्शनात् प्राग्वत्सराजे रतिः ।
(ण)

प्रतिनायकनिष्ठत्वे यथा—हयग्रीववधे हयग्रीवस्य जलक्रीडावर्णने ।
अधमपात्रगतत्वे यथा—

जघनस्थलनद्धपत्रवल्ली गिरि[1]मल्लीकुसुमानि कापि भिल्ली ।
अवचित्य गिरौ पुरो निषण्णा स्वकचानुत्कचयाञ्चकार भर्त्रा । (त)

तिर्य्यग्गतत्वे यथा—

मल्लीमतल्लीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाह्वयन्ती ।
चञ्चद्विपञ्चीकलनादभङ्गीसङ्गीतमङ्गीकुरुते स्म भृङ्गी ॥ (थ)

आदिशब्दात्तापसादयः । रौद्राभासो यथा—

रक्तोत्फुल्लविशाललोलनयनः [2]कम्पोत्तराङ्गो मुहु-
र्मुक्त्वा कर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः ।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्त्तय-
न्नंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः ॥ (द)

---

बहुवचनादनूढनायिकाया वेश्याया नायकबहुत्वलाभः । **वत्सराज** इति । अत्र वत्सराजस्येति क्वचिद् अप्रामाणिकः पाठः ।

**(वि, त) जघनस्थले**ति—कापि भिल्ली किराती जघनस्थले नद्धा धृता पत्रवल्लिः पत्रलता यया सा तथा । गिरिमल्लीकुसुमानि कुटजपुष्पाणि अवचित्य गिरौ पुरो निषण्णा सती भर्त्रा स्वप्रयोज्येन स्वकचान् अर्थादवचितकुसुमैः उत्कचयाञ्चकार उद्दीप्तांश्चकारेत्यर्थः । दीप्त्यर्थकचधातोः इदं रूपम् । अत्र च वल्लि इत्यत्र ह्रस्वान्तवल्लिशब्दस्य रूपम् । दीर्घान्तत्वे कप्रत्ययप्रसङ्गात् । अत्राऽधमस्य भर्त्तूरतिः ।

**(वि, थ) मल्लीमतल्लीष्वि**ति । मतल्ली पुष्पविशेषः । वल्ल्यन्तरे स्थित्वेत्यर्थः । चञ्चद्विपञ्चीकलनादभङ्गीसङ्गीतं चञ्चन्त्या विपञ्च्या वीणायाः कलनादभङ्ग्या सङ्गीतम् ।

**(वि, द) तापसादय** इति । अत्र च तापसस्य जीमूतवाहनस्य नृपस्य मलयवत्यां रतौ बोध्यम् । **रक्तोत्फुल्ले**ति । कर्णात् प्राप्तापमानस्य युधिष्ठिरस्य कटुकोक्तिभिराध्मातः कुपितोऽर्जुनः युध्यमानं कर्णं त्यक्त्वा युधिष्ठिरं हन्तुं प्रवृत्तः । अपेतभीर्गुरुहननभयरहितो हरेः कृष्णस्य पश्यतः इति—पश्यन्तं हरिमनादृत्य इत्यत्रानादरे षष्ठी । स्वं स्वीयम् । अंसो भुजमूलं, तस्य आस्फोटे पटुः । हीननिष्ठे शान्ते गुर्वाद्यालम्बने हास्ये ब्रह्मवधाद्युत्साहेऽधमपात्रगते वीरे च नोदाहृतम् । क्रमेण यथा

---

1 'पत्रवल्ली गिरि–' (क. ख. पु.) 2 कम्पोत्तरङ्गो (ख. पु.)

भयानकाभासो यथा—

**अशक्नुवन् सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनम्।**
**प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यत् दिवसानि कौशिकः ॥ (ध)**
**स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः। एवमन्यत्र।**

**भावाभासो लज्जादिके तु वेश्यादिविषये स्यात् ॥ २४३ ॥ (न)**

---

चण्डालयोनाविह जन्म लब्धं द्विजातिजन्मापि न काङ्क्षितं मे।
पुण्ये वने क्वापि वपुर्विहास्यन् पुनर्भवच्छेदमहं समीहे ॥ १ ॥
अपानवायुं सततं विमुञ्चन् असंयमव्यग्रकपूर्वकेशः।
अध्यापयत्वेष गुरुः सदा मे लालाक्तवक्त्रो मलदिग्धवासाः ॥ २ ॥
अनिवृत्तपिपासा हि क्षुद्रवीरजशोणितैः।
द्रोणस्य रुधिरेणाद्य तृप्यन्तु मम सायकाः ॥ ३ ॥
नरेद्रपुत्रान् मृगया प्रवृत्तान् विद्धं मृगं नेतुमुपात्तवेगाः।
अमी किराताः शरपूर्णचापा धावन्ति मत्वा तृणवत्तमेव ॥ ४ ॥

**(वि, ध) अशक्नुवन्नि**ति—कौशिको वासवो यस्यासुरस्य सहस्ररश्मेरिव दर्शनं सोढुमशक्नुवन् बिभ्यत् हेमाद्रिगुहां प्रविश्य दिनानि निनाय। अधीरलोचनः कातरात् चञ्चललोचनः। शब्दशक्तिमूल उपमाध्वनिरियम्। तथा हि कौशिकः पेचकः सहस्ररश्मेर्दर्शनं सोढुमशक्नुवन् अद्रिगुहां प्रविश्य यथा दिनानि नयति, अधीर-बुद्धिरलोचनो दिवान्धत्वात्, तथा च पेचक इव इन्द्र इत्युपमाध्वनिः। अत्र इदम-वधेयम्। रसभावतदाभासादीनामसंलक्ष्यक्रमव्यङ्ग्यत्वं वक्ष्यते। तच्च स्थायि-भावस्य व्यङ्ग्यस्य बोधक्रमापरिचयादेव। अत्र श्लोके भयस्य स्थायिभावस्य बिभ्यदि-त्येतद्वाच्यत्वात् व्यङ्ग्यत्वमेव नास्ति, कथं व्यङ्ग्यक्रमापरिचयाधीनमसंलक्ष्य-क्रमव्यङ्ग्यत्वम् अतोयं न रसाभासध्वनिः, किन्तूपमाध्वनिरेव। तदुदाहरणं तु

जातिदुष्टोऽपि संश्लाघ्यः स कालयवनो नृपः।
युद्धोद्युक्तं यमालोक्य श्रीकृष्णोऽपि पलायितः ॥

**( वि, न )** वेश्यादिविषये। वेश्यादिनिष्ठे यथा—

लीलानम्रमुखी शिरोंऽशुकमवाकृष्यानयन्ती पुरो
नेत्रोपान्तविलोकनेन परितो यूनां धयन्ती मनः।
दृष्टा वारविलासिनी ननु सखे! कस्याऽपि पुण्यात्मनः
पुण्यौघं परिपाकमाशमयितुं लीलोत्तरं गच्छति ॥

अत्र वेश्यालज्जामिश्रितत्वम्।

स्पष्टम्—

भावस्य शान्तावुदये सन्धिमिश्रितयोः क्रमात्। ( प )*
भावस्य शान्तिरुदयः सन्धिः शबलता मता ॥ २४४ ॥

क्रमेण यथा—

सुतनु ! जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत्।
इति निगदति नाथे तिर्य्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥

अत्र बाष्पमोचनेन ईर्ष्याख्यसञ्चारिभावस्य शमः। †

चरणपतनप्रत्याख्यानात्प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते।
व्रजति रमणे निःश्वस्योच्चैः स्तनस्थित[1]हस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता[2] ॥ + (फ)

( वि, प ) सन्धिरुत्तरोत्तरविरुद्धभावमिश्रणम्। सैव शबलता। तत्र उत्तरोत्तरभावस्य पूर्वपूर्वापेक्षया बलवत्त्वात्। सन्धिस्तु द्वयोस्तुल्यकक्षत्वे। सुतन्विति स्पष्टम्।

( वि, फ ) "हे निभृत ! कितवाचार !" इत्युक्त्वा इत्यर्थः। स्तनास्थितहस्तया मानिन्या इत्यर्थः।

* **भावस्य शान्ता**विति। भावस्य उदयो व्यपशालिनो व्यभिचारिण एव नतु स्थायिनः, तस्य स्रक्सूत्रवृत्त्या सन्ततमविच्छेदिनः शान्त्यादिवर्णनं विरसमेव। तत्र विरुद्धसामग्रीप्राबल्येन प्रशमः। स्वसामग्रीप्राबल्येन उदयः। उभयसामग्रीप्राबल्यात् परस्परानुपमर्देन बोधः सन्धिः। पूर्वपूर्वोपमर्देन उत्तरोत्पत्तिः शबलता इति चतुष्टयं भावशान्त्यादिपदेन बोध्यते।

† **सुतन्वि**ति- हे सुतनु ! कोपं जहिहि त्यज। पादानतं मां पश्य। कदाचिदपि तव एवंविधः कोपः न खलु अभूत्। नाथे पत्यौ इति निगदति कथयति सति तिर्यगामीलिताक्ष्या वक्रभावेन ईषन्मुद्रितनयनया कयाचिन्नायिकयाऽनल्पं बहुलं नयनजलम् अश्रु मुक्तं पातितम्। किन्तु किञ्चिन्नोक्तम्। अत्र शान्तावेव चमत्कारप्रतीतेरीर्ष्यायाः शमः।

+ **चरणे**ति—चरणयोः पतनेऽपि प्रत्याख्यानात् निराकरणात् प्रसादपराङ्मुखे प्रसन्नतारहिते हे निभृत ! कितवाचार ! इत्युक्त्वा रुषा क्रोधेन परुषीकृते निष्ठुरे रमणे प्रिये व्रजति परित्यज्य प्रस्थिते सति उच्चैर्निःश्वस्य स्तनस्थितहस्तया वक्षसि स्थापितहस्तया कयाचित् नायिकया नयनसलिलेन बाष्पेण आच्छन्ना आवृता दृष्टिः सखीषु निवेशिताऽर्पिता।

1 'स्तनाहित-' ( ख. पु. ) 2 निपातिता ( ख. पु. )

अत्र विषादस्योदयः ।

नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥

अत्र हर्षविषादयोः सन्धिः

काकार्य्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय न[1] श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति[2] ॥ ( व )

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता । *

इति साहित्यदर्पणे रसादिनिरूपणो नाम
तृतीयः परिच्छेदः ।

---

( वि, व ) काकार्य्यमिति—उर्वशीविरहे मरणे प्रवृत्य निवृत्तस्य पुरूरवस उक्तिरियम् । अत्र कुलमित्यन्ते वितर्कः । सेत्यन्ते औत्सुक्यम् । श्रुतमित्यन्ते अर्थनिर्द्धारणरूपा मतिः । मुखमित्यन्ते स्मरणम् । कृतधियः इत्यन्ते शङ्का । दुर्लभेत्यन्ते दैन्यम् । उपैहि इत्यन्ते धृतिः । कः खलु इत्यादौ चिन्ता । एतेषां व्यभिचारिभावानां पूर्वपूर्वापेक्षया बलवत्ता ।

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यविरचितायां साहित्यदर्पणटीकायां तृतीयपरिच्छेदविवरणम् ।

---

* अकार्यम् अन्यासक्तिरूपं क्व ? शशो मृगभेदः लक्ष्म चिह्नं यस्य तस्य शशलक्ष्मणः चन्द्रस्य कुलं क्व ? क्वद्वयेन ज्ञानद्वयस्य महानवस्थितिप्रतिपत्तिः । तेनाऽत्यन्ताऽनौचित्यं व्यज्यते । अत्र शान्तसंचारिवितर्कावगमः । भूयोऽपि पुनरपि साऽद्भुतसौन्दर्या उर्वशी दृश्यते, कथं दृक्गोचरा भवेत् ? अत्र व्यङ्ग्येन शृङ्गारसंचार्यौत्सुक्येन शान्तसंचारिवितर्कबाधनम् । नोऽस्माकं श्रुतं शास्त्रश्रवणं दोषाणां प्रमादादीनां प्रशमाय आत्यन्तिकनाशाय श्रुतम् । अत्र व्यङ्ग्यया शान्तसंचारिण्या मत्या पूर्वौत्सुक्यबाधनम् । अहो कोपेऽपि तस्या मुखं कान्तं मनोहरम् । अत्र व्यङ्ग्येन शृङ्गारसंचारिणा स्मरणेन पूर्वोक्तमतेर्बाधनम् । अपगतं कल्मषं पापं येभ्यस्तेऽपकल्मषाः । कृते महात्मभिराचरिते पुण्यकर्म्मणि धीर्येषां ते कृतधियः पण्डिताः किं वक्ष्यन्ति । अत्र व्यङ्ग्यया शान्तसंचारिण्या शङ्कया

1 'मे' ( क. ख. पु. ) 2 'पास्यति' ( क. ख. पु. )

पूर्वोक्तस्मरणबाधनम्। स्वप्नेऽपि अदृष्टाश्रुतापूर्वघटकेऽपि सा उर्वशी दुर्लभा। अत्र व्यङ्ग्येन शृङ्गारसंचारिणा तदप्राप्तिप्रयुक्तदैन्येन पूर्वोक्तशङ्काबाधनम्। हे चेतः! स्वास्थ्यमुपैहि प्राप्नुहि। अत्र व्यङ्ग्यया शान्तसंचारिण्या धृत्या पूर्वोक्तदैन्य-बाधनम्। कः खलु धन्यः नाहमिव मन्दभाग्यः युवाऽधरं धास्यति पास्यति। अत्र व्यङ्ग्यया शृङ्गारसंचारिण्या चिन्तया पूर्वोक्तधृतिबाधनम्। एवं चात्र शान्तोपमर्देन शृङ्गारस्य विश्रान्तिः। सा च शत्रुविजयपूर्वकराज्यलाभ इव प्रकर्षनिदानम्' इति।

# चतुर्थः परिच्छेदः

अथ काव्यभेदमाह—( अ )

**काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यश्चेति द्विधा मतम् ॥ १ ॥**

तत्र—

**वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम् ॥ २ ॥**

[1]वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम् । ( क, आ ) ❀

**भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ ।**
**अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च ॥ ३ ॥** (इ) +

तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः । लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं बाधितस्वरूपम् । विवक्षितान्यपरवाच्यस्त्वभिधामूलः । अत

---

( वि, क ) काव्यलक्षणे कृते तदेव काव्यं कतिविधमित्याकाङ्क्षायामाह—**काव्यं ध्वनिरि**त्यादि । **ध्वन्यतेऽस्मिन्नि**ति—ध्वन्यते व्यज्यते व्यङ्ग्यार्थः शब्दादिना अस्मिन् काव्ये इत्यर्थः ।

( वि, ख ) लक्षणामूलाभिधामूलयोर्यथासंख्यं स्वरूपमाह—**अविवक्षिते**ति—व्याचष्टे—**तत्रे**ति । **अविवक्षितमि**ति—वाच्याविवक्षायां बीजमाह—**बाधित**-

---

( लो, अ ) एवं काव्यस्य स्वरूपमुक्त्वा विशेषं निरूपयितुमवतारयति—**अथे**ति—भिद्यते अनेनेति भेदः ।

( लो, आ ) **वाच्ये**ति—वाच्यादतिशयस्तात्पर्यविषयत्वात् ।

( लो, इ ) लक्षणाऽभिधा च मूले कारणेऽर्थाद् व्यङ्ग्यात् व्यञ्जने ययोः । यस्य ध्वनेः व्यङ्ग्यार्थरूपोपाधिलक्षणाभिधामूलत्वेन द्वैविध्यप्रतिपादनात् तदुपाधिकस्य काव्यस्य द्वैविध्यम् । ध्वनिशब्दो ह्यनेकार्थः, तथा हि ध्वन्यत इति ध्वनिः, रसादिरर्थः । ध्वनतीति ध्वनिः शब्दवाच्यादिरर्थो वा । ध्वन्यतेऽस्मिन्निति ध्वनिः, शब्दादिगता शक्तिः । ध्वननं ध्वनिः रसादिप्रतीतिः । ध्वन्यते अस्मिन् इति ध्वनिः काव्यम् ।

---

❀ **काव्यमि**ति—वाच्यार्थरसयोरान्तरात्मिकस्य व्यङ्ग्यस्य उत्कर्षाऽनुत्कर्षाभ्यां ध्वनिगुणीभूतव्यवस्था इति भावः ।

+ **अविवक्षिते**ति—न विवक्षितम् अनुपयुक्तम् अन्वयायोग्यं वाच्यं वाच्योऽर्थः यत्र स ध्वनिः अविवक्षितवाच्यः । ( वाच्यं ) विवक्षितम् ( अन्वययोग्यमपि ) अन्यपरं ( व्यङ्ग्यनिष्ठं ) वाच्यं वाच्योऽर्थः यत्र स ध्वनिः विवक्षिताऽन्यपरवाच्यः ।

1 वाच्यादित्यादिकारिका ग. ज. पु. नास्ति ।

एवात्र वाच्यं विवक्षितम् अन्यपरं व्यङ्ग्यनिष्ठम्।

अत्र हि वाच्योऽर्थः [1]स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः। यथा प्रदीपो घटस्य। अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः। अविवक्षितवाच्यस्य भेदावाह-(ख, ई)

**अर्थान्तरं संक्रमिते वाच्येऽत्यन्तं तिरस्कृते।**
**अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति ॥ ४ ॥**

अविवक्षितवाच्यो नाम ध्वनिरर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति (उ) तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसंक्रमितत्वादर्थान्तरसंक्रमितवाच्यत्वम्। यथा—(ग) *

---

**स्वरूपमि**ति—वाच्यतावच्छेदकरूपेण विवक्षाभावात् तेन रूपेण बाधो विशिष्टाभावरूपः। तेन अजहत्स्वार्थात्मिकायाम् उपादानलक्षणायां वाच्यस्याऽबाधेऽपि वाच्यतावच्छेदकरूपेण तद्बाधः, जहत्स्वार्थायां तु अर्थयोरेव बाधः। **वाच्यं विवक्षितमि**ति—वाच्यतावच्छेदकरूपेण बोध्यम्। **व्यङ्ग्यनिष्ठमि**ति—व्यङ्ग्यनिष्ठा तात्पर्यपर्याप्तिर्यस्य तादृशम्।

(वि, ग) **भेदावाहे**ति—वाच्येऽर्थेऽर्थान्तरमवच्छेदकान्तरं संक्रमिते प्रापिते अर्थाद्बोद्धुज्ञाने इत्यर्थः। **अत्यन्तं तिरस्कृत** इति—वाच्यार्थस्यावच्छेदकान्तरेणापि अविवक्षणात् अत्यन्तं तिरस्कारः, तत्रार्थान्तरसंक्रमितवाच्यं व्याचष्टे—**मुख्यार्थस्ये**ति।

(लो, ई) अन्यपरमिति कारिकापदार्थो व्यङ्ग्यनिष्ठमिति भावः, व्यङ्ग्ये निष्ठा तात्पर्यं यस्य वाच्यार्थस्य, एतेन गुणीभूतव्यङ्ग्यव्यवच्छेदः। **अत्र ही**ति—अयमाशयः, अविवक्षितवाच्ये लक्ष्योऽर्थः स्वरूपं प्रकाशयन् व्यङ्ग्यार्थं प्रकाशयति, तत्र लक्षणामूला व्यञ्जना। इह तु वाच्योऽर्थः तथा इत्यभिधामूला।

(लो, उ) **संक्रमित** इति—योगकाकादिसाहाय्यसूचनं वाच्ये इति काकाक्षिन्यायेनोभयत्र सम्बध्यते। अनुपयुज्यमानत्वमर्थात् स्वरूपमात्रेण संक्रमितं इति कारिकापदार्थः। **परिणमती**ति—परिणामश्च तत्त्वादपरिच्युतस्य धर्मिणोऽवस्थान्तरगमनम्। जाड्याद्यतिशयः स्वशब्दाभिधानाऽलभ्यः।

---

* अनुपयुज्यमानः—प्रकृतान्वये बाधितः। अर्थान्तरे वाच्यलक्ष्यसाधारणेऽर्थे परिणमति अर्थात् यत्र वाच्योऽपि प्रकारान्तरेण लक्ष्य इत्यर्थः। यथा—काकेभ्यो दधि रक्ष्यताम् इत्यादौ वाच्योऽपि काकः दध्युपघातकरूपेण लक्ष्यः। अयम् उपादानलक्षणास्थले एव संभवति। अर्थान्तरे (स्वस्यैव विशेषरूपे) संक्रमितं वाच्यं यत्र सः अर्थान्तरसंक्रमितवाच्यः।

1 'स्वं प्रकाशयन्नेव' (ट. ठ. पु.)

कदली कदली करभः करभः
करिराजकरः करिराजकरः ।
भुवनत्रितयेऽपि बिभर्त्ति तुला-
मिदमूरुयुगं न चमूरुदृशः ॥

अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे बाधिता •जाड्यादिगुणविशिष्टकदल्यादिरूपमर्थं बोधयन्ति जाड्याद्यतिशयश्च व्यङ्ग्यः ( घ ) । यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरे परिणमति तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम् । ( ङ ) * यथा–

निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ।

अत्रान्धशब्दो मुख्यार्थे [2]बाधितोऽप्रकाशरूपमर्थं बोधयति । अप्रकाशातिशयश्च व्यङ्ग्यः । अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावान्नार्थान्तर-

(•वि, घ ) **कदली कदली**त्यादि । चमूरुदृशः हरिणेक्षणायाः ऊरुयुगं भुवनत्रितयेऽपि कस्यापि तुलां सादृश्यं न बिभर्त्तीत्यर्थः । तथा च तेन कस्यापि सादृश्याऽधारणात् कोऽपि तदुपमानं न अस्तीत्यत्राह---**कदली**ति । कदली रम्भा करभः ऊर्वाकारः, पाणिपार्श्वभागः "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इति कोषात् । करिराजस्य हस्तिश्रेष्ठस्य करः, शुण्डा, एषु उद्देश्येषु द्वितीयकदल्यादिपदानां पौनरुक्त्यात् तदर्थानां विधेयत्वाऽसम्भवात् तानि पदानि जाड्यादिविशिष्टकदल्यादिपराणि । तदाह—जाड्यादिविशिष्टकदल्यादिरूपमर्थं बोधयन्तीति तथा च प्राथमिककदल्यादिपदेभ्यः कदल्याद्यंशप्राप्तौ जाड्यादिवैशिष्ट्यमात्रे द्वितीयकदल्यादिशब्दानां लक्षणा । ततः कदली जाड्या करभोऽशोभनः करिराजकरः कर्कश इत्यर्थः ।

( वि, ङ ) **निःश्वासान्ध** इति । निःश्वासेन अन्धः आदर्श इव चन्द्रमा न प्रकाशते न दीप्यते । अत्राऽचेतनस्य आदर्शस्याऽन्धत्वबाधात् लक्ष्यार्थमाह -**अत्रे**ति । तथा च निःश्वासेन अप्रकाश आदर्श इवेत्यर्थः ।

ननु शक्यतावच्छेदकाभिन्नेन अप्रकाशत्वेन रूपेण बोधनात् कथं नेयमर्थान्तरसंक्रमितवाच्यलक्षणा इत्यत आह—**अन्धत्वाऽप्रकाशत्वयो**रिति—शक्यता-

(**लो, ङ**) अत्यन्ततिरस्कृत इति कारिकापदार्थं विवृणोति---**यत्र पुनरि**ति– अत्र परिणमतीत्युपचारपदप्रयोगः तेन प्रवर्तते इत्यर्थः ।

( **लो, ऋ** ) **अन्धत्वे**ति—अयमाशयः, न ह्यत्रार्थस्याप्रकाशत्वं विशेषः,

* अयं च उपादानलक्षणातिरिक्तस्थल एव सम्भवति ।

2 बाधिते ( क. ख. पु. )

संक्रमितवाच्यत्वम् । ( ङ, ञ ) *

यथा—

भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण
गोलाणईकच्छकुडङ्गवासिणा दरीअसीहेण ( च )

अत्र भ्रम धार्म्मिकेत्यतो भ्रमणस्य विधिः प्रकृतेऽनुपयुज्यमानतया भ्रमण-निषेधे पर्य्यवस्यतीति विपरीतलक्षणाशङ्का न कार्य्या । यत्र खलु विधिनिषेधा-

---

वच्छेदकं सामान्यं लक्ष्यतावच्छेदकं यदि तद्विशेषो भवेत् तदा एव अर्थान्तरसंक्रमित-वाच्यलक्षणा । यथा घटपदस्य नीलघटपदत्वे अत्र तु लक्ष्यतावच्छेदकमप्रकाशत्वमेव सामान्यम् । अन्धत्वमेव तद्विशेष इति अतो न तथा इति भावः । इदं तु प्रायिकमेव न सार्वत्रिकं "रामोऽस्मि सर्व सहे" इत्यत्र दुःखसहिष्णुत्वरामत्वयोः करभः करभः इत्यत्र शोभाराहित्यकरभत्वयोश्च तथात्वाभावात् । किन्तु अत्रान्धत्वरूपस्वार्थ-परित्यागादेव न तथात्वमिति बोध्यम् ।

( वि, च ) भम धम्मिअ इत्यत्रापि विपरीतलक्षणाभ्रमं केषाञ्चित् निरसयितु-माह—भमेति ।

भ्रम धार्मिक विश्वस्तः स श्वाऽद्य मारितस्तेन ।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥ इति संस्कृतम् ।

गोदावरी नदी तत्तीरे कुञ्जे कृतसंकेतायाः तत्रैव प्रतिदिनं पुष्पावचयनेन तत्-संकेतभञ्जकं स्वपोषितकुक्कुरोपद्रवेणाऽपि अनिवृत्तं धार्मिकं प्रति उक्तिरियम् । स श्वा तव उपद्रावकः कुक्कुरः ।

( वि, छ ) भ्रमणविधिः प्रकृते अनुपपद्यमानतया इति—सिंहवत्त्वेन कथिते स्वसंकेतस्थले भ्रमणोपदेशस्य बाधितार्थकत्वात् निवृत्तीच्छया उक्तवाक्यस्य प्रवर्त्तकत्वानुपपत्तेश्च निषेधे पर्यवस्यतीति विपरीतलक्षणयेति शेषः । उत्पद्यमाना-वेवेति—वाक्यार्थबोधोत्पत्तिदशायाम् एव इत्यर्थः । तद्दशायां क्वचित् विधिः निषेधे क्वचित् निषेधो विधौ पर्यवस्यतीत्यर्थः । तत्र तद्दशायां विधेः निषेधे पर्यवसानं यथा—

औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् ।
मम मन्दभागिन्याः कृते सखि त्वामपि परिभवति ॥

इत्यत्र नायिकायाः सोल्लुण्ठवाक्ये मम कृते इति विधेः न मम कृते इति लक्षणया पर्यवसानम् । निषेधस्य विधौ पर्यवसानं यथा—"मा पथिक रात्र्यन्ध शय्यायामावयो-

---

किन्तु सामान्यं ततश्च सामान्ये सर्वविषयाणामन्तर्भावात् विशेष एवार्थान्तरं भवितु-मर्हतीति, न पुनर्विशेषस्य सामान्यमिति ।

---

* यत्र सामान्येन विशेषार्थस्य प्रतीतिः तत्र अर्थान्तरसंक्रमितवाच्यत्वम् ।

वुत्पद्यमानावेव[1] निषेधविध्योः पर्य्यवस्यतस्तत्रैव तदवसरः। ( छ, ऋ )

यत्र पुनः प्रकरणादिपर्य्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्येते तत्र ध्वनित्वमेव। तदुक्तम्। ( ज, लृ )

क्वचिद्बाध्यतया ख्यातिः क्वचित्ख्यातस्य बाधनम्।
पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु॥ ( झ, ए )

---

निमङ्क्ष्यसि" इति स्वयं दूतिकाया उक्तौ स्वशय्यायां गमननिषेधस्य स्वशय्यायामागमनविधौ लक्षणया पर्यवसानम्। यत्तु निःशेषच्युतचन्दनमित्यादावपि तदन्तिकगमननिषेधस्य तदन्तिकगमनविधौ लक्षणया पर्यवसानमिति ग्रन्थकृता पूर्वमुक्तं तन्न रुचिरम्, तत्र भ्रम धार्मिक इत्यादाविव प्रथमं वाच्यनिषेधस्यैव बोधात् उत्तरकालमेवाधमत्वोक्तेश्च्युतनिर्मृष्टपदग्रामकालपुलककथनात् तात्पर्यपर्यालोचनया एव तदन्तिकगमनविधेः व्यञ्जनयैव प्रतीयमानत्वात्। अत एव काव्यप्रकाशकृता तत्र तदन्तिकगमनविधेः व्यङ्ग्यत्वमेवोक्तम्।

( वि, ज ) **तत्र ध्वनित्वमेवे**ति—व्यङ्ग्यत्वमेवेत्यर्थः, न तु लक्ष्यत्वमेवेत्यर्थः। ध्वनिकाव्यं तु गमनलक्षणायामपि रमणव्यञ्जनया अविहतमेव। तद्वत् इहापि प्रथमं भ्रमणविधिः शक्त्यैव प्रतीयते। पश्चादेव तस्याः कुलटात्वस्य प्रकरणादिना प्रतीतौ भ्रमणनिषेधो व्यञ्जनयैव प्रतीयते, इत्यतोऽत्र विपरीतलक्षणाशङ्का न कार्या इत्यर्थः।

( वि, झ ) **क्वचित् बाध्यतये**ति—ख्यातिः प्रतीतिः। यथा गङ्गायां घोष इत्यादौ घोषनिवासस्य यथा वा "उपकृतं बहु तत्र किमुच्यते" इत्यपकारिणं प्रत्युक्त्वा उपकारस्य च प्रथममेव बाध्यतया ख्यातिः। **क्वचित् ख्यातस्ये**ति—प्रथमं प्रतीतस्य इत्यर्थः। यथाऽत्रैव श्लोके, निःशेषेत्यादौ च। उत्तरत्र अभिधैव तु इत्युक्त्या निषेधविध्योस्तु व्यङ्ग्यत्वमेवेति दर्शितम्।

---

( लो, ऋ ) **उत्पत्स्यमानावेवे**ति—अनन्तरमनुपपद्यमानान्वयसिद्ध्यर्थमिति शेषः। तदवसरस्तस्या विपरीतलक्षणाया अवसरः।

( लो, लृ ) विधिनिषेधयोरित्यत्र पूर्वमन्वयानुपपत्त्या पर्यवसितयोरिति पूरणीयम्।

( लो, ए ) **क्वचिदि**ति—अत्रोत्तरम् अभिधैव निर्वाहवचनम्। यत्परः शब्दः स शब्दार्थ इति व्यङ्ग्यार्थस्याप्यभिधाने यत्परत्वेन ख्यातस्य बाधनेऽप्यभिधाव्यापारस्वीकारात्। एतत्त्वग्रे निराकरिष्यते।

---

1 उत्पत्स्यमानावेव ( कै. ख. पु. )

अत्राद्ये मुख्यार्थस्यार्थान्तरे संक्रमणं प्रवेशः; न तु तिरोभावः। अत एवात्राजहत्स्वार्था लक्षणा। द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था। (ञ)

**विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः।**

**[1]असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा ॥ ५ ॥ (ट, ऐ)** *

※विवक्षितान्यपरवाच्योऽपि ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः।

**तत्राद्यो रसभावादिरेक एवात्र गण्यते।**

**एकोऽपि भेदोऽनन्तत्वात् संख्येयस्तस्य नैव यत् ॥ ६ ॥**

---

**(वि, ञ)** इत्थमविवक्षितवाच्यध्वनेरर्थान्तरसंक्रमितवाच्यत्वात्यन्ततिरस्कृतवाच्यत्वेन द्वैविध्यमुक्त्वा तदुदाहृतस्य च आद्यस्यार्थान्तरसंक्रमितवाच्यस्य तादृशपरिभाषाया बीजमाह—**अत्राद्ये** इति। अर्थान्तरे शक्यतावच्छेदकार्थान्तरेऽवच्छेदकान्तरे, शक्यतावच्छेदकरूपेण बोधनमित्यर्थः, न तु तिरोभावः नतु अबोधनमित्यर्थः। अत एवेति स्वार्थं स्वाश्रयशब्दस्य मुख्यार्थमजहती उपस्थापयन्ती अजहत्स्वार्था (राजदन्तादिसमाससिद्धा) नच कदली कदलीत्यादौ प्रथमकदलीपदेनैव कदल्या उपस्थितौ तत्र लक्ष्यार्थस्य जडताया अभेदान्वयसम्भवे किमर्थं कदल्यंशे लक्षणेति वाच्यम्, लक्ष्यतावच्छेदकजडत्वाश्रयत्वेन तेन रूपेण तदुपस्थापनस्य अनिवार्यत्वात्। **द्वितीये त्विति**—अत्यन्ततिरस्कृतवाच्ये इत्यर्थः। अत्यन्ततिरस्कृतत्वात् केनापि रूपेणाऽबोधितत्वात् जहत्स्वार्था, उक्तरूपं स्वार्थं जहती अनुपस्थापयन्ती।

**(वि, ट)** विवक्षितान्यपरवाच्यस्यापि प्रथमं भेदद्वयमाह—**विवक्षिताभिधेयापीति**—विवक्षितवाच्य इत्यर्थः। प्रथममिति पश्चात्तूभयोरपि प्रभेदबाहुल्यस्य वक्ष्यमाणत्वात्। तद्द्वैविध्यमाह। **असंलक्ष्येति**—व्यङ्ग्यो यत्र असंलक्ष्यक्रमः अपरिचेयज्ञानोत्पत्तिक्रमः, वाच्यज्ञानान्तरं व्यङ्ग्यज्ञानं जायते इति क्रमो यत्र अपरिचेय इति भावः। रसभावादीनाम् अत्यन्तास्वाद्यतया शीघ्रबोध्यत्वेन उत्पलपत्रशतभेदनस्येव क्रमापरिचयात्। अपरो वस्त्वलङ्काररूपो व्यङ्ग्यस्तु लक्ष्यक्रमः। तद्ज्ञानोत्पत्तिक्रमस्य लक्षणीयत्वात्।

---

**(लो, ऐ)** विवक्षिताभिधेय इत्यस्यार्थः विवक्षितान्यपरवाच्यो ध्वनिरिति। तत्र च रसवति काव्ये झटित्यास्वादपर्यन्तगमनाद्वस्त्वलङ्काररूपव्यङ्ग्ययोरपि प्रतीतिर्न विलम्बिता, नीरसे तु प्रतीतिविलम्बात्तत्साजात्येन संलक्ष्यक्रमव्यङ्ग्यव्यवहारः।

---

* असंलक्ष्यः अज्ञेयः क्रमः पौर्वापर्यं (व्यञ्जकेन वाच्येन=विभावानुभावादिना सह) यस्य सः, यत्र वाच्यव्यङ्ग्ययोः क्रमस्तु अज्ञेय इति भावः।

1 'असंलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः', इति पाठव्यत्ययः (च.ज.पु.)

※ तारकितः पाठो (च. पु.) नास्ति।

उक्तस्वरूपो [1]रसभावादिरसंलक्ष्यक्रमव्यङ्ग्यः । अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात् + क्रमोऽवश्यमस्ति किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न † संलक्ष्यते । ( ठ ) एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात् संख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तम् । तथा हि—एकस्यैव शृङ्गारस्य एकोऽपि सम्भोगरूपो भेदः परस्परालिङ्गनाधरपानचुम्बनादिभेदात् प्रत्येकञ्च विभावादिवैचित्र्यात् संख्यातुमशक्यः, का गणनात्र सर्वेषाम् । ( ड )

**शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येनुस्वानसन्निभे ।**
**ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः ॥ ७ ॥** ❀

क्रमलक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन अर्थश-

( वि, ठ ) आद्यः असंलक्ष्यक्रमः । **विभावादिप्रतीतिकारणकत्वादि**ति । प्रत्येकं तत् प्रतीतिकारणकत्वादित्यर्थः । "प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते" इत्युक्तत्वात् । "तत् समूहालम्बनप्रतीतिस्तु रस एव" इत्युक्तत्वाच्च । लाघवात् शीघ्रप्रतीतिकत्वात् ।

( वि, ड ) एकोऽपि भेद इत्यादिकं व्याचष्टे- **एषु चे**ति । **एकभेदमेवे**ति- असंलक्ष्यक्रमत्वमेकमुपाधिमाश्रित्य इति शेषः । विभावानुभावभेदाभेदगणने अनन्तत्वम् , तद्दर्शयति—**तथाही**ति । विभावादिवैचित्र्यं कन्यामध्याप्रगल्भत्वादिभेदेन उत्तममध्यमाधमत्वभेदेन वैचित्र्यं बोध्यम् ।

( वि, ढ ) लक्ष्यक्रमव्यङ्ग्यध्वनिं विभजति—**शब्दार्थोभये**ति—तत्र अनुस्वानसन्निभ इति यदुक्तं तद् व्याचष्टे—**क्रमलक्ष्यत्वादेवानुरणनरूप** इति । अनुरणनं प्रतिध्वनिः । स हि प्रथमध्वनेरनन्तरं जायते तदुत्पत्तिक्रमश्च लक्ष्यते तत् तुल्यो यो व्यङ्ग्यस्तस्य त्रैविध्यं व्याचष्टे—**तस्य शब्दशक्त्युद्भवत्वेन** इति । शब्दस्य अर्थस्य

( लो, ओ ) संलक्ष्यक्रमव्यङ्ग्यभेदानाह—**शब्दार्थे**ति । अनुस्वानेति कारिकापदस्यार्थं विवृणोति—**अनुरणनमि**ति ।

+ विभावादीनां प्रतीतिरेव कारणं यस्य, तथा भावः तत्त्वात् ।

† उत्पलपत्रशतानां व्यतिभेदः युगपद्विदारणं तद्वत् ।

❀ यथा ध्वनिप्रतिध्वन्योः क्रमो लक्ष्यते तथा यत्र वाच्यप्रतीयमानयोरर्थयोः प्रतीतिक्रमो लक्ष्यते स संलक्ष्यक्रमः । अविवक्षितवाच्येऽपि क्रमो लक्ष्यते परन्तु व्यङ्ग्यव्यञ्जकयोर्बाधप्रतिसन्धानेन विच्छेदात् ततोऽस्य भेदः । अत्र तु क्रममात्रं लक्ष्यते न विच्छेदोऽपि ।

1 रसेति नास्ति ( क. पु. )

त्त्युद्भवत्वेन शब्दार्थशक्त्युद्भवत्वेन त्रैविध्यात् संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यम्। ( ढ, ओ )

तत्र—

**वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा ॥ ८ ॥**

अलङ्कारशब्दस्य पृथगुपादानादनलङ्करणं[1] वस्तुमात्रं गृह्यते ( औ ) । तत्र वस्तुरूपशब्दशक्त्युद्भवो व्यङ्ग्यो यथा—( ण )

पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअपओहरं पेक्खि ऊण जइ वससि ता वससु ॥ ( अ )

---

च शक्तिः सामर्थ्यम्। न तु अभिधारूपा वृत्तिः तया व्यङ्ग्याबोधनात् अर्थस्य तदभावाच्च। तेन सामर्थ्येन उद्भव उत्पन्नविषयता यस्य तादृशव्यङ्ग्यस्येत्यर्थः । तत् त्रैविध्यात् तत्सम्बन्धेन संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनिकाव्यस्य त्रैविध्यमित्यर्थः ।

( वि, ण ) तत्र काव्यस्य शक्त्युत्थत्वप्रयोजकं शब्दशक्त्युद्भवं व्यङ्ग्यं द्विधा विभजति—**तत्र वस्त्वलङ्काररूपत्वादि**ति । पृथक् उपादानादिति वस्तुत्वस्य केवलान्वयित्वेन अलङ्कारस्यापि वस्तुत्वात्। तथा च गोवृषन्यायात् वस्तुपदस्यालङ्कारभिन्नवस्तुपरतां व्याचष्टे—**अलङ्करणमि**ति। अलङ्करणमलङ्कारः तद्भिन्नमित्यर्थः। अनलङ्कार इति बहुपुस्तकेषु पाठः तल्लेखकप्रमादादेव। अलङ्कारशब्दस्य पुंलिङ्गत्वेन तस्य नञ् तत्पुरुषे लिङ्गत्यागाभावात्।

( वि, त ) **पन्थिअ ण एत्थे**ति-

"पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस" ॥ इति संस्कृतम्।

निवासार्थिनं पथिकं प्रति स्वयं-दूत्या उक्तिरियम्। हे पथिक ! प्रस्तरस्थलेऽत्र ग्रामे मनाक् स्वल्पमपि स्रस्तरं शयनीयास्तरणं नास्ति। प्रस्तर एव वयं स्वपिम इति भावः। मनागित्यत्रापि अर्थोऽध्याहार्यः । उन्नतमुद्भूतं पयोधरं मेघं प्रेक्ष्य गमनप्रतिबन्धात् यदि वस्तुमिच्छसि तदा वस इति आपाततो भावार्थः। अत शब्दशक्त्युत्थं गूढं व्यङ्ग्यार्थं

---

( लो, औ ) अनलङ्करणं वैचित्र्यमात्ररहितम्।

(लो, अ) स्रस्तरं-तृणादिशय्या। प्रस्तराः पाषाणाः। पयोधरः मेघः। व्यङ्ग्यपक्षे स्रस्तरं शास्त्रं रत्यनुशासकम्। उन्नतपयोधरां मामित्यर्थः। न चेह स्रस्तरशब्दस्य शास्त्रार्थत्वेन उपमाध्वनिः; सादृश्यस्याऽविवक्षितत्वात् । रहस्यसंगोपनार्थमेव हि द्व्यर्थप्रयोगः ।

---

1 अनलङ्कारमिति पाठान्तरम्।

अत्र स्तथरादिशब्दशक्त्या यद्युपभोगक्षमोऽस्ति तदास्स्वेति वस्तु व्यज्यते।
( त ) अलङ्काररूपो यथा—दुर्गालङ्घितविग्रह इत्यादि।

अत्र प्राकरणिकस्य उमानाममहादेवीवल्लभभानुदेवनृपतेर्वर्णने द्वितीयार्थसूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनमसम्बद्धं मा प्रसाङ्क्षीदितीश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते। तदत्र उमावल्लभ इवेत्युपमालङ्कारो व्यङ्ग्यः। ( थ )

यथा वा—

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद ! प्रभो !
अहितः सहितः साधुयशोभिरसतामसि ॥

अत्रामित इत्यादावपि शब्दाभावाद् विरोधाभासो व्यङ्ग्यः। (द,आ)*

---

दर्शयति—अत्रेति। प्राकृतश्लिष्टस्य स्तथरशब्दस्य शास्त्रमप्यर्थः। प्रकरणानियन्त्रणवशात् सोऽर्थो व्यङ्ग्यस्तथा च "परदारान्न गच्छेदि"ति स्मृत्यादिशास्त्रं नास्ति इत्यर्थः। इति आदिपदात् प्रस्तरस्थलपयोधरपदयोरपि परिग्रहः। तथा हि शय्याविरहात् प्रस्तरस्थं स्त्रीजनं पुरुषो लातिरत्यर्थं गृह्णाति इति प्रस्तरस्थलः तत्र इत्यर्थेन उत्तुङ्गस्तनदर्शनेन च "यद्युपभोगक्षमेत्यादि" व्यञ्जनात् परम्परया शब्दशक्तिमूलता।

( वि, थ ) शब्दशक्त्युद्भवोपमालङ्कारव्यञ्जनामाह—**दुर्गालङ्घितेति**। व्याख्यातमिदम्। द्वितीयार्थः पार्वत्यादिः तेन सूचितं पार्वतीवल्लभस्य वर्णनमित्यर्थः। **मा प्रसाङ्क्षीदिति**—प्रसक्तं माभूदित्यर्थः। तत्प्रसक्तौ कवेरुन्मत्ततापत्तेः। अतः कवेरीश्वरभानुदेवयोरुपमानोपमेयभावे तात्पर्यात् उपमानोपमेयभावः कल्प्यते संव्यज्यते इत्यर्थः। स एव च उपमालङ्कारः। तं व्यङ्ग्यं विशदयित्वा दर्शयति-**तदत्रेति**।

( वि, द ) शब्दशक्त्या व्यङ्ग्यविरोधभासालङ्कारमाह—**यथा वा—अमित** इति। हे हर्षद प्रभो ! समितः युद्धात् प्राप्तैरुत्कर्षैरमितः अपरिच्छिन्नोसि, उत्कर्षबाहुल्यात् त्वं कीदृशः असतामहितः शत्रुः साधुयशोभिः सहितः। अत्र अमितः परिमाणरहितः समितः परिमाणयुक्तश्चेति। अहितो हितशून्यः सहितो हितयुक्तश्चेति विरोधः। विरोधस्य वाचकाभावात् व्यङ्ग्यतामाह—**अत्रेति**।

---

( लो, आ ) **अमित** इति। समितः संग्रामात् प्राप्तैरुत्कर्षैरपरिमितः, असतामहितः शत्रुः। मानं मितं तेन सहितः। हितेन रहितः कथं तेन युक्त इति विरोधः। **अपिशब्दाभावादिति**। अपिशब्दसद्भावे "कुपतिमपि कलत्रवल्लभ-

---

* अत्र विरोधप्रतिपादकस्याऽप्यादिपदस्याभावात् पश्चादनुसन्धानेन विरोधप्रतिभासाच्च व्यङ्ग्य इत्यर्थः। ननु वाच्यविरोधालङ्कारादस्य को भेद इति चेदुच्यते-यत्र विरोधपदार्थानां समन्वये शब्दश्रवणादेव विरोधः प्रतिभासते तत्र वाच्ये विरोधः

व्यङ्ग्यस्यालङ्कार्य्यत्वेऽपि ब्राह्मणश्रमणन्यायादलङ्कारत्वमुपचर्य्यते। (ध)*

**वस्तु वालङ्कृतिर्वापि द्विधार्थः सम्भवी स्वतः।**
**कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य चेति षट्।**
**षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः।**
**अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम्॥ ६॥ (इ)**

स्वतःसम्भवी औचित्याद् बहिरपि सम्भाव्यमानः। प्रौढोक्त्या सिद्धो न

---

**(वि, ध)** ननु व्यङ्ग्यार्थ एव आस्वाद्यः तस्य शोभको यः स एवालङ्कारः। तथा च उपमादेर्व्यङ्ग्यत्वे परेण शोभ्यमान एव सः न शोभकः। तत्कथमत्र व्यङ्ग्योपमादेरलङ्कारत्वमित्यत आह—**व्यङ्ग्यस्ये**ति–अलङ्कार्य्यत्वे वाच्यालङ्कारान्तरेणैव शोभ्यत्वेऽपि इत्यर्थः। श्रमणः सन्यासी तद्दशायां तस्य ब्राह्मण्याभावेऽपि यथा तस्य दशान्तरीयं ब्राह्मण्यमादाय ब्राह्मणत्वमुपचर्य्यते तथा वाच्यतादशायामलङ्कारत्वमादाय व्यङ्ग्योपमादेरलङ्कारत्वमुपचर्य्यते इत्यर्थः।

**(वि, न)** अर्थशक्त्युद्भवं दर्शयितुं व्यञ्जकार्थस्य वस्त्वलङ्काररूपाद्विविधस्य स्वतः सम्भवित्वादित्रैविध्येन षड्विधत्वमाह–**वस्तु वाऽलङ्कृतिर्वे**ति। षड्विधव्यङ्ग्यानां द्वादशविधत्वमाह—**षड्भिस्तैरि**ति। **बहिरपी**ति। शब्दप्रमाणात् बहिः। प्रमाणेनापि सिद्धत्वात् उचितसम्भावन इत्यर्थः। **प्रौढोक्त्ये**ति–कवितन्निबद्धयोः प्रतिभामात्राधीनोक्त्या इत्यर्थः। **नतु औचित्येने**ति—तस्याऽर्थस्याऽलौकित्वेनौचित्याभावात्।

---

मित्यादौ अपिशब्दबलात् झटिति विरुद्धार्थ एवाभासते। अन्यथा अपिशब्दस्य निरर्थकतापत्तेः। अमित इत्यादौ तु अपेरभावात् प्राकरणिकतया प्रथमम् अविरुद्धार्थ एव प्रतिभासते। अनन्तरम् अमितः सन्कथं सामित इति विरोधप्रतिभासनाद् विरोधाभासो व्यङ्ग्य इति। अपिशब्दाभावादित्युपलक्षणम्: अन्येषामपि विरोधाभिधायि शब्दानामभावेऽपि विरोधाभासस्य व्यङ्ग्यत्वं बोद्धव्यम्।

**(लो, इ)** **वस्तु वे**ति—स्वतःसम्भविकविप्रौढोक्तितन्निबद्धवस्तुप्रौढोक्तिसिद्धाभिः वस्त्वलङ्काररूपाभिः षड्विधाभिः व्यञ्जनाभिः व्यङ्ग्ययोर्वस्त्वलङ्कारयोः द्वादशविधत्वेन द्वादशप्रकारमर्थशक्त्युद्भवव्यङ्ग्यध्वनिकाव्यमिति।

---

यथा अजस्य गृह्णतो जन्मेत्यादौ। यत्र तु शब्दश्रवणाऽविरुद्ध एव प्रकृतार्थः प्रतीयते पश्चात्तस्यैव शब्दस्य पुनरनुसन्धानेन विरोधस्तत्र ध्वनिरेव।

* ननु ध्वनित्वे कथमेषामलङ्कारत्वम् इत्यत आह—**व्यङ्ग्यस्ये**ति। स्थानान्तरदृष्टालङ्कारसाजात्येनाऽत्र तद्व्यपदेशो भाक्तः। परमलङ्कार्य्य एवाऽयम्। यथा श्रमणदशायां पूर्वदृष्टब्राह्मणत्वप्रत्यभिज्ञानाद् ब्राह्मणव्यवहारः।'

न्वौचित्येन । ( न ) *

तत्र क्रमेण यथा—

दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥ ( प )

अनेन स्वतःसम्भविना वस्तुमात्रेण एतत्प्रतिपादिकाया भाविपरपुरुषोपभोगजनखक्षतादिगोपनरूपं वस्तुमात्रं व्यज्यते । ( फ )

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥

अनेन स्वतःसम्भविना वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालङ्कारो व्यज्यते । ( ब )

आपतन्तममुं दूरादूरीकृतपराक्रमः ।
बलोऽवलोकयामास मातङ्गमिव केसरी ॥

---

**( वि, प )** स्वतःसम्भविवस्तुव्यङ्ग्यं वस्त्वाह—**दृष्टिं हे** इति । नदीजलानयनवर्त्मनि वने कृतसंकेतायाः कुलटायाः तज्जलानयनच्छलेन जिगमिषोर्भाविनखक्षतसम्वरणोक्तिरियम् । **इहापी**ति—स्वगृह इव अस्मद्गृहेऽपीत्यर्थः । अस्य मदीयस्य शिशोः पिता कुलटात्वात् स्वपतित्वेनाऽनुक्तिः । विरसाः स्वादरहिताः कौपीः कूपसम्बन्धिनीः अपः जलाभिप्रायेण इत्यनेन मम बाध्यादिना अशक्तादिने पिवतीत्युक्तम् । आलिखन्तु इति, तदा लेखनसम्भावनासत्त्वेऽपि यास्यामीत्यर्थः । जरठच्छेदाः कठिनच्छिन्नभागाः नीरन्ध्रा अविरलाः । नलग्रन्थयः नलाख्यतृणपर्वदेशाः ।

**( वि, फ )** **स्वतःसम्भविने**ति—अस्य श्लोकार्थस्याऽनलीकत्वेन प्रमाणान्तरेणापि गम्यत्वसम्भवात् ।

**( वि, ब )** स्वतःसम्भविवस्तुव्यङ्ग्यमलङ्कारमाह—**दिशी**ति । पाण्ड्याः पाण्ड्यदेशीयाः राजानः । व्यतिरेकालङ्कार इति उपमानात् रवितेजसो रघुप्रतापस्याधिकरूपः । सच व्यङ्ग्य एव असहनेनैव तत्प्राप्तेः ।

**( वि, भ )** स्वतःसम्भव्यलङ्कारव्यङ्ग्यं वस्त्वाह—**आपतन्तममुमि**ति । आपतन्तम् आगच्छन्तम् अमुं वेणुदारिनामासुरं रामो बलरामः । वेणुदारिणः

---

* यद्यपि स्वतःसम्भवित्वादिकं व्यङ्ग्यार्थेऽपि सम्भवति तथापि तस्य काव्याङ्गभूतस्य चमत्कारैकरूपतया प्रतीतिकाले तादृग्विशेषप्रतिसन्धानं न भवति ।

अत्र उपमालङ्काररूपेण स्वतःसम्भविना व्यञ्जकार्थेन बलदेवः क्षणेनैव वेणुदारिणः क्षयं करिष्यतीति वस्तु व्यज्यते। ( भ )

गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम्॥

अत्र स्वतःसम्भविना विरोधालङ्कारेणाधरो निर्दष्टः शत्रवो व्यापादिताश्चेति समुच्चयालङ्कारो व्यङ्ग्यः। ( म, ई ) *

सज्जेइ सुरहिमासो ण आप्पअइ जुअइजणलक्खसहे।

---

क्षयमिति बलोपमानस्य सिंहस्य वेणुदार्युपमानमात्रसंक्षयकारित्वेन तदुपमानोपमेययोरपि तद्धर्मलाभात्।

( वि, म ) स्वतःसम्भव्यलङ्कारव्यङ्ग्यमलङ्कारमाह—**गाढकान्ते**ति। यो राजा युधि निजाधरं निर्दशन् अरिवधूजनस्य ओष्ठरूपाणि विद्रुमस्य प्रवालस्य दलानि रतकालीनगाढकान्तदशनक्षतव्यथारूपात् संकटादापदोऽमोचयत्। युधि क्रोधेन स्वाधरं निर्दश्य तत्पतिं हत्वा तथा चकारेत्यर्थः। **अत्रे**ति—अधरदंशकत्वाधरदंशमोचकत्वयोः वस्तुगत्या अविरोधेऽपि आपततो विरोधस्य आभासमानत्वात् विरोधाभासालङ्कारेण इत्यर्थः। **समुच्चयालङ्कार** इति—द्वयोरेककालोत्पत्तिरूप इत्यर्थः। चकारद्वयस्य समं शब्दस्य वाऽभावात् व्यङ्ग्यएव इत्यर्थः।

( वि, य ) कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्तु आह—**सज्जेइ** इति।

---

( लो, ई ) **विरोधालङ्कारेणे**ति—विरोधमूलेन कार्यकारणपौर्वापर्यविपर्ययरूपेणावातिशयोक्त्यलङ्कारेणेत्यर्थः। तथा ह्यत्र स्वाधरनिर्दशनं कारणभूतं वैरिस्त्रीणाम् ओष्ठानां च कान्तदन्तक्षतमोचनं कार्यभूतं समकालतया निर्दिष्टम्। किञ्चात्र निर्दशनरूपक्रूरपिशाचो ममाधरं बलिरूपं प्राप्यान्यानधरान् सुखिनः करोत्विति बुद्ध्वैव निजाधरं दष्टवानिति तस्य राज्ञः बुद्धिमपेक्ष्य उत्प्रेक्षा च। ततश्चात्र समुच्चयोत्प्रेक्षयोरेकाश्रयानुप्रवेशः सङ्करश्च।

( लो, उ ) **सज्जे**ति—"सज्जयति सुरभिमासो न चार्पयति युवतिजनलक्ष्य-

---

* **विरोधालङ्कारेणे**ति—विरोधाभासालङ्कारेण इत्यर्थः। ओष्ठविषयकयोः दशनमोचनयोर्विरोधः ( यो निजाधरं दशति स कथं परेषामधरान् मोचयति इति विरोधः ) ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वात्। ओष्ठदशनेन ओष्ठदशनव्यथामोचनं विरुद्धम्। विरुद्धं च ओष्ठदशनव्यथामोचनक्रिययोः कारणकार्ययोरपि समकालिकत्वं च। तेन च स्वाधरदशनशत्रुव्यापादनयोरेककालिकत्वरूपैकधर्मसम्बन्धात् समुच्चयालङ्कारः। अन्ये तु वदन्ति विरोधालङ्कारेण इत्यस्य वास्तव-

अहिणअसहआरमुहे णअपल्लवपत्तले अणंगस्स सरे ॥ ( उ )

अत्र वसन्तः शरकारः कामो धन्वी, युवतयो लक्ष्यं, पुष्पाणि शरा इति कविप्रौढोक्तिसिद्धं वस्तु प्रकाशीभवन्मदनविजृम्भणरूपं वस्तु व्यनक्ति । ( य )

रजनीषु विमलभानोः करजालेन प्रकाशितं वीर !
धवलयति भुवनमण्डलमखिलं तव कीर्त्तिसन्ततिः सततम् ॥

अत्र कविप्रौढोक्तिसिद्धेन वस्तुना कीर्त्तिसन्ततेश्चन्द्रकरजालादधिककाल-प्रकाशकत्वेन व्यतिरेकालङ्कारो व्यङ्ग्यः । ( र )

दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुबिन्दवः ॥

---

"सज्जयति सुरभिमासो न चार्पयति युवतिजनलक्ष्यशते ।
अभिनवसहकारमुखान् नवपल्लवपत्तलान् अनङ्गस्य शरान्॥" इति संस्कृतम् ।

प्रथमप्रवृत्तवसन्तवर्णनमिदम् । सुरभिमासोऽभिनवसहकारमुखान अभिनवानि सहकाराणि मुखम् आदिर्येषां तादृशान् अनङ्गस्य शरान् सज्जयति । युवतिजनरूपे लक्ष्यशते शरव्यशते न चार्पयति । शरसज्जनस्य वर्त्तमानत्वात् अनिष्पन्नत्वेन तन्नि-ष्पत्त्यानन्तरमेव तादृशलक्ष्यशतेऽर्पयितुं प्रेरयिष्यति इति भावः । शतपदात् द्वित्रि-युवत्यां त्वर्पयितुं प्रेरयतीति लभ्यते । न चार्पयतीति हेतुकारितान्तम् । अनङ्गशरान कीदृशान्-नवपल्लवपत्तलान् नवपल्लवैः पत्तला पत्ररचना येषां तादृशान् । "शराणां पत्ररचना पत्तला परिकीर्त्यते" इति कोषः । **वस्तुप्रकाशीभवदिति**—न च सुर-भिमासादौ शरकारादिरूपकालङ्कार एव प्रकाशीभवति इत्यतोऽलङ्कारस्यैव व्यञ्जकत्व-मात्रेति वाच्यम् । सुरभिमासादौ शरकाराद्यभेदाऽप्रकाशात् किन्तु सुरभिमासादौ शरसज्जनादेरेव प्रकाशात् ।

**( वि, र.)** कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारमाह—**रजनीष्विति** । हे वीर विमलभानोः निर्मलकिरणस्य चन्द्रस्य **करजालेन** भुवनमण्डलं धवलयतीत्यर्थः । **व्यतिरेकालङ्कार** इति—अधिककालं व्याप्य प्रकाशनात् उपमानात् चन्द्रकरात् आधिक्यरूप इत्यर्थः ।

**( वि, ल )** कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्त्वाह—**दशाननेति** । दशा-ननस्य किरीटेभ्यः मणिव्याजेन मणिपतनच्छलेन राक्षसश्रियः अश्रुबिन्दवः पृथिव्यां

---

सहान् । अभिनवसहकारमुखान् नवपल्लवपत्तलान् अनङ्गस्य शरान्॥" इति संस्कृतम् ।

---

विरोधमूलाऽसङ्गत्यलङ्कारेण इत्यर्थः । स्वाधरनिर्दशनवैरिविधूजनौष्ठव्यथामोचनयोः कारणकार्ययोः वैयधिकरण्येन निर्देशात् विरोधस्य स्फुटत्वम् । तत् सर्वं चिन्त्यम् ।

अत्र कविप्रौढोक्तिसिद्धेनापह्नुत्यलङ्कारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते। ( ल )

धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं
हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः।
एकोऽपि त्रिकलिङ्गभूमितिलक! त्वत्कीर्त्तिराशिर्ययौ
नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे॥

अत्र कविप्रौढोक्तिसिद्धेन रूपकालङ्कारेण भूमिष्ठोऽपि स्वर्गस्थानामुपकारं करोपीति विभावनालङ्कारो व्यज्यते। ( व )

शिखरिणि क नु नाम कियच्चिरं
किमभिधानमसावकरोत्तपः।
सुमुखि! येन तवाधरपाटलं
दशति बिम्बफलं शुकशावकः॥

अत्रानेन कविनिबद्धस्य कस्यचित् कामिनः प्रौढोक्तिसिद्धेन[1] वस्तुना तवाधरः पुण्यातिशयलभ्य इति वस्तु प्रतीयते। ( श )

सुभगे कोटिसंख्यत्वमुपेत्य[2] मदनाशुगैः।
वसन्ते पञ्चता त्यक्ता पञ्चतासीद् वियोगिनाम्॥

---

पर्यस्ताः पतिताः। **अपह्नुत्यलङ्कारेणे**ति—मणिपाताऽपह्नुत्या व्याजपदेन अश्रुबिन्दुसाधनात्।

( **वि, व** ) कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारमाह—**धम्मिल्ल** इति। हे त्रिकलिङ्गभूमितिलक! कलिङ्गदेशभूत्रयतिलक! एकोऽपि तव कीर्त्तिराशिः पुरन्दरपुरीवामभ्रुवां सुराङ्गनानां विग्रहे शरीरे नानामण्डनतां ययौ। तदेव दर्शयति—**धम्मिल्ल** इति। धमिल्लः संयताः कचाः। **विभावने**ति—स्वर्गस्थितिरेव स्वर्गस्थानामुपकारकारणम्। तदभावेऽपि स्वर्गस्थोपकारकरणरूपकफलव्यक्तिरूपा विभावना, सा च स्वर्गस्थित्यभाववाचकशब्दाभावात् व्यङ्ग्या।

( **वि, श** ) कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्त्वाह—**शिखरिणि** इति। असौ शुकशावकः क नु शिखरिणि कस्मिन् पर्वते कियच्चिरं किमभिधानं किं नामकं तपः अकरोत्। येन हेतुना तव अधरवत् पाटलं बिम्बफलं दशति। तव अधरतुल्यवस्तुदंशनमपि तपःफलमिति श्लोकस्य भावार्थः।

( **वि, ष** ) कविनिबद्धवस्तुप्रौढोक्तिसिद्धवस्तु व्यङ्ग्यमलङ्कारमाह—**सुभग** इति। वसन्ते मदनाशुगैः कोटिसंख्यत्वम् उपेत्य लब्ध्वा, पञ्चता पञ्चसंख्यता त्यक्ता,

---

1 प्रौढोक्तिरूपेण (प. फ. पु.) 2 मुपेतं ( च. ज. पु. )

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन [1]कामशराणां कोटिसंख्यत्वप्राप्त्या निखिलवियोगिमरणेन वस्तुना शराणां पञ्चता शरान् विमुच्य वियोगिनः श्रितेवेत्युत्प्रेक्षालङ्कारो[2] व्यज्यते । ( ष )

मल्लिकामुकुले चण्डि ! भाति गुञ्जन् मधुव्रतः ।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन उत्प्रेक्षालङ्कारेण कामस्यायमुन्मादकः कालः प्राप्तस्तत्कथं मानिनि मानं न मुञ्चसीति वस्तु व्यज्यते । ( स )

महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।
अनुदिणमणण्णकम्मा[3] अंगं तणुअं पि तणुएइ ॥ ( ऊ )

अत्र अमाअन्ती इति कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण

८

---

वियोगिनां पञ्चता मरणकालीनपञ्चभूतविश्लेषः आसीत् । **अत्रेति—सुभगे** इति । सम्बोधनात् कामुक एवात्र वक्ता ननु कविः । तत्प्रौढोक्तिसिद्धेन वियोगिनां मरणेन इत्यन्वयः । **उत्प्रेक्षा व्यज्यत** इति—तद्वाचकेवकाराद्यभावाद् व्यञ्जना ।

**( वि, स )** कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्त्वाह —**मल्लि-केति । शङ्खमापूरयन्निवे**ति । मल्लिकामुकुलस्य शङ्खाकारत्वात् भृङ्गगुञ्जनस्य शङ्खशब्दतुल्यत्वात् । मानिनीं प्रतीयमुक्तिरित्यभिप्रायेण कविनिबद्धवक्तृप्रौढोक्तिसिद्धमुदाहरणमिदम् । अत एव कथं मानं न मुञ्चसि इति व्याख्या ।

**( वि, ह )** कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारमाह—**महिला-सहस्से**ति ।

"महिलासहस्रभरिते तव हृदये सुभग ! साऽमान्ती ।
अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति ॥" इति संस्कृतम् ।

नायकस्य बहुनायिकाभावनादुःखेन कृशाया नायिकाया अवस्थां नायके कथयन्त्या-स्तत्सख्या उक्तिरियम् । महिला स्त्री तासां सहस्रेण भरिते तव हृदये अमान्ती अव-काशमलभमाना सा अनुदिनं दिवसं व्याप्य अनन्यकर्म्मा त्यक्तान्यकार्य्या सती तनु स्वतः कृशं अङ्गं तनयति तनूकरोति कृशतरं करोति । नामकारितान्तस्य तनुशब्दस्य रूपमिदम् । **काव्यलिङ्गे**ति—काव्यलिङ्गं हेत्वलङ्कारः । हृदये स्थानालाभस्य अङ्गत-

---

**( लो, ऊ )** महिलासहस्रभरिते तव हृदये सुभग साऽमान्ती ।
अनुदिनमनन्यमना अङ्गं तनुकमपि तनूकरोति ।

**( लो, ऋ ) अत्रे**ति—रूपणादयः कवेर्व्यापाराः कवेश्च प्राधान्यव्यङ्ग्य-

---

1 कामेति नास्ति ख. पु.  2 अलङ्कारः इति नास्ति ख. पु.
3 मणा इति पाठान्तरम् ।

तनोस्तनूकरणेऽपि तव हृदये न वर्त्तत इति विशेषोक्त्यलङ्कारो व्यज्यते । (ह, ऋ)*

न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता । अतः कविनिबद्धवक्तृप्रौढोक्तिः कविप्रौढोक्तेरधिकं सहृदयचमत्कारिणीति पृथक् प्रतिपादिता । ( क )

एवं वाच्यार्थस्य व्यञ्जकत्वे उदाहृतम्[1]। (ख) एषु च अलङ्कृतिव्यञ्जनस्थले रूपणोत्प्रेक्षणव्यतिरेचनादिमात्रस्य प्राधान्यं सहृदयसम्वेद्यं, न तु[2]रूपादीना-

---

नूकरणहेतुत्वात् । **हृदये न वर्त्तते** इति—तनयतीति वर्त्तमाननिर्देशात् अद्यापि हृदये वृत्त्यलाभः । विशेषोक्तिरिति अङ्गतनूकरणरूपकारणसत्वेऽपि हृदये स्थानलाभरूपका-र्य्यस्याभावरूपा विशेषोक्तिः ।

**( वि, क )** ननु—प्रौढोक्तिसिद्धत्वेनैव उभयसंग्रहसम्भवे किमर्थं कविनिबद्ध-वक्तृकत्वेन पृथगुपादानमित्यत आह—**न खल्वि**ति । कव्यपेक्षया कविनिबद्धस्य रागातिशयात् पृथगुपादानमित्यर्थः ।

**( वि, ख ) एवं वाच्यार्थस्ये**ति—इदमत्रावधेयम् । गाढकान्तदशनेत्यादौ दर्शितस्य विरोधालङ्कारस्य व्यञ्जकस्य वाचकाऽपिकाराभावाद् व्यङ्ग्यत्वमेव, एवं सज्ज-यति सुरभिमास इत्यादौ वसन्तादेः शरकरणादिरूपवस्तुनो व्यञ्जकस्य व्यङ्ग्यत्वमेव इत्यतोऽत्र प्रायश इति पूरणीयम् । काव्यप्रकाशकृन्मते तु व्यञ्जकवस्त्वलङ्कारयोः वाच्य-त्वाद्यनियम एव । अत एव लक्ष्यव्यङ्ग्ययोरपि व्यञ्जकत्वमुदाहार्य्यमिति तेनोक्तम् । ननु रूपणमेव रूपकालङ्कारः । उत्प्रेक्षणमेव उत्प्रेक्षालङ्कारः, व्यतिरेचनमेव व्यतिरेकाल-ङ्कारः तथा च यत्र रूपकालङ्कारस्य व्यङ्ग्यत्वम् तत्र किं रूप्यमानवस्तूदाहरणं न स्यात् । कारः। एवमुत्प्रेक्ष्यमाणव्यतिरिच्यमानवस्तुनोरित्यत आह—**एषु चे**ति—तत्तद् वस्त्वपेक्षया तदलङ्कार एव अधिकचमत्कारीति तत्तदुदाहरणमेव तत्तत् इति भावः । यद्यपि सुभगे कोटिसंख्यात्वम् इत्यत्र उत्प्रेक्षालङ्कारः, दिशि मन्दायते इत्यत्र व्यतिरेकाल-ङ्कारश्च व्यङ्ग्य उक्तः । रूपकालङ्कार व्यङ्ग्यत्वं तु नोक्तं तथापि—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमती
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।

---

बोधनार्था रूपणादयो व्यापारा यथात्र चमत्कुर्वन्ति न तथा वाच्येषु । रूपकाद्य-लङ्कारेषु हि वाच्यानां रूप्याणां मुखादीनामेव रूपणादिव्यापाराद् रूपकादिभ्यश्चन्द्रा-दिभ्यश्च प्राधान्यमित्यर्थः ।

---

* अत्र अमान्ती इत्यस्य महिलासहस्रभरितत्वं हेतुः, तनूकरणे अमान्तीत्वं च हेतुः इति द्वाभ्यां काव्यलिङ्गालङ्काराभ्यां विशेषोक्तिर्व्यज्यते ।

1 एवमित्यादिरुदाहृतमित्यन्तः पाठः ( क. ख. पु. ) नास्ति:

2 'प्या' ( क. ख. पु.

मित्यलङ्कतेरेव प्राधान्यम् । लक्ष्यार्थस्य यथा निःशेषच्युतचन्दनमित्यादि । व्यङ्ग्यार्थस्य यथा—उअ णिच्चलेत्यादि । अनयोः खलु स्वतःसम्भविनौ लक्ष्यव्यङ्ग्यार्थौ व्यञ्जकौ । एवमन्येष्वेकादशभेदेषूदाहार्यम् । (ग)

**एकः शब्दार्थशक्त्युत्थे ॥ १० ॥**

**उभयशक्त्युद्भवे व्यङ्ग्ये एको ध्वनेर्भेदः । यथा—(घ)**

**हिममुक्तचन्द्ररुचिरः सपद्मको**

**मदयन् द्विजान् जनितमीनकेतनः ।**

---

करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं

वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥

इत्यत्र मधुकरे कामुकरूपणं व्यङ्ग्य बोध्यम् ।

**(घि, ग) लक्ष्यार्थस्य यथे**त्यादि–इदमत्रावधेयम्–"भम्म धम्मिअ" इत्यादावप्यभ्रमणं व्यङ्ग्यमुक्तम् । तत्तुल्ययुक्तिके निःशेषेत्यादौ तदन्तिकगमनं लक्ष्यमित्युक्तमितीदं स्वोक्तिविरुद्धम् । "क्वचिद् बाध्यतया ख्याति" रित्याद्युक्तयुक्तेरुभयत्र समानत्वात् ।

**( वि, घ )** उभयशक्त्युत्थमुदाहरणमाह—**एको**ति । एकः प्रभेद इत्यर्थः । शब्दशक्त्युत्थे व्यञ्जने तत्प्रपञ्चस्य अर्थशक्त्युत्थे व्यञ्जने तत्प्रपञ्चस्य दर्शितत्वात् । उभयशक्त्युत्थप्रपञ्चस्य तावतैव गतार्थत्वात् एक इत्युक्तम् । न तु दर्शयिष्यमाणोदाहरणेऽलङ्कारस्य व्यङ्ग्यत्वात् अलङ्काररूपतया एक इत्युक्त इति केनचिदुक्तं युक्तम् ।

"क्षणदासावक्षणदावनमवनं व्यसनमव्यसनम् ।

बत वीर ! तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥"

इत्यत्राऽर्थान्तरन्यासघटकशब्दशक्त्याऽर्थान्तरन्यासरूपाऽर्थशक्त्या च विधिरपि त्वामनुवर्त्तते इति वस्तुव्यञ्जनाया अपि सम्भवात् स्वतःसम्भव्यार्थव्यङ्ग्यत्वेन भेदान्तरप्रसक्तेर्दुर्वारत्वाच्च ।

**( वि, ङ ) हिममुक्ते**ति—माधवः कृष्णः प्रमदाजनस्य महोत्सवो महोत्सवे हेतुश्चिराय अभवत् । अत्र शुद्धसारोपा लक्षणा । कीदृशः हिममुक्तचन्द्र इव रुचिरः । सपद्मकः पद्मया लक्ष्म्या हस्तपादस्थरेखारूपपद्मेन वा सहितः । द्विजान् ब्राह्मणान मदयन् आनन्दयन् । जनितो मीनकेतनः प्रद्युम्नः येन तादृशः । प्रसादिताः प्रीणिताः सुरा देवा येन तादृशश्च । अत्र माधवो वसन्तोऽपि शब्दशक्त्या अर्थशक्त्या च

---

**( लो, ऋ ) हिमे**ति—हिममुक्तचन्द्र इव पक्षे हिममुक्तचन्द्रेण रुचिरः । पद्मा लक्ष्मीः पद्मं कमलं च । मीनकेतनः प्रद्युम्नावतारः, सामान्यमदनश्च, सुराः त्रिदशाः, सुरा मद्यम् । माधवो हरिर्वसन्तश्च । अत्र माधवशब्दप्रतिपाद्यतया हरिवसन्तयोः औपम्यप्रतिपादकस्य हिममुक्त इत्यादिशब्दस्य शब्दपरिवृत्तिसहत्वादर्थशक्तेर्दार्ढ्यम् ।

अभवत् प्रसादितसुरो महोत्सवः
प्रमदाजनस्य स चिराय माधवः ॥ ( ङ ) ×

अत्र माधवः कृष्णो माधवो वसन्त इवेत्युपमालङ्कारो[1] व्यङ्ग्यः । ( ऋ )

एवं च व्यङ्ग्यभेदादेव व्यञ्जकानां काव्यानां भेदः ।

**तदष्टादशधा ध्वनिः ॥ ११ ॥**

अविवक्षितवाच्योऽर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। विवक्षितान्यपरवाच्यस्तु असंलक्ष्यक्रमव्यङ्ग्यत्वेनैकः . संलक्ष्यक्रमव्यङ्ग्यत्वेन[2] च शब्दार्थोभयशक्तिमूलतया पञ्चदशेति अष्टादशभेदो ध्वनिः। (च) । एषु च—

**वाक्ये शब्दार्थशक्त्युत्थस्तदन्ये पदवाक्ययोः । ( ऌ )**

तत्र अर्थान्तरसंक्रमितवाच्यो ध्वनिः पदगतो यथा—( छ )

---

व्यज्यते । तथा हि माधवशब्दस्य वसन्तेऽपि शक्त्या सपद्मक इत्यत्र सपद्मकशब्दरूपस्य पद्मसहितेऽपि शक्त्या, द्विजान् इत्यत्र द्विजशब्दस्य पक्षिष्वपि शक्त्या, जनितमीनकेतन इत्यत्र सुराप्रसादनेऽप्यस्य शब्दस्य शक्त्या च वसन्तप्रत्यायने शब्दशक्तिः । हिममुक्तेत्यत्र प्रमदाजनस्येत्यत्र श्लिष्टशब्दाभावात् अर्थशक्तिः । ततश्च वसन्तस्याऽप्राकरणिकत्वेन तत्प्रत्यायनस्य प्रकृतेऽनुपयोगाद् वसन्त इव कृष्ण इत्युपमाप्रतीतिः । तदाह—**उपमालङ्कार** इति ।

( **वि, च** ) अष्टादशत्वं दर्शयति—**अविवक्षितेति** । **पञ्चदशेति**—शब्दशक्त्युत्थौ द्वौ, अर्थशक्त्युत्थश्च द्वादश, उभयशक्त्युत्थे एक इति पञ्चदश ।

( **वि, छ** ) **वाक्य** इति—उभयशक्त्युत्थो व्यङ्ग्यो वाक्यमात्रव्यङ्ग्य इत्यर्थः । व्यञ्जकार्थवाचकश्लिष्टशब्दानां च एकव्यङ्ग्यव्यञ्जने वाक्यत्वनियमात् । **तदन्ये** इति—तदन्ये व्यङ्ग्याः पदेन वाक्येन च व्यङ्ग्या इत्यर्थः । **तत्रेति**—तत्र ध्वनिपदं व्यङ्ग्यपरम् । पदगतः पदमात्रव्यङ्ग्यः ।

---

( **लो, ऌ** ) शब्दपरिवृत्तिसहत्वासहत्वाभ्यामेव हि सर्वत्र शब्दार्थशक्तिमूलत्वस्य व्यवस्थापनम् । अत एव चास्य भेदस्य बहुपदनिष्ठत्वेनैव सम्भवाभिप्रायेण ग्रन्थकृत्पदनिष्ठत्वं नास्तीति वक्ष्यति । तथैव च प्राचीनैरुक्तम् । "पंथिअ ण एत्थ" इत्यादौ परिवृत्त्यसह एव सत्थरपयोधरशब्दयोरेव व्यञ्जकत्वमिति शब्दशक्तिमूलत्वम् । व्यञ्जकत्वस्य बहुनिष्ठत्वेऽपि पदसमुदयनिष्ठत्वाभिप्रायेण वाक्यनिष्ठत्वम् ।

---

× वसन्तपक्षे-हिमात् शिशिरात् मुक्तेन चन्द्रेण रुचिरः । पद्मेन सह वर्त्तमानः सपद्मकः । द्विजान् कोकिलादीन् पक्षिणः मदयन् आनन्दयन् जनितमीनकेतनः विहितकामावेशः । प्रसादिता निर्मलीकृता सुरा मद्यं येन प्रसादितसुरः । स माधवः वसन्तः प्रमदाजनस्य स्त्रीजनस्य महोत्सवः अभवत् ।

1 उत्प्रेक्षालंकारः ( ट. ठ. पु. ) 2 'क्रमव्यङ्ग्यवाच्यत्वेन च' (ड. थ. पु.)

धन्यः स एव तरुणो नयने तस्यैव नयने च।
युवजनमोहनविद्या भवितेयं यस्य सम्मुखे सुमुखी॥
अत्र द्वितीयनयनशब्दो भाग्यवत्तादिगुणविशिष्टनयनपरः। ( ज )
वाक्यगतो यथा—

त्वामस्मि वच्मि विदुषां [1]समुदायोऽत्र तिष्ठति।
आत्मीयां मतिमादाय[2] स्थितिमत्र विधेहि तत्॥

अत्र प्रतिपाद्यस्य सम्मुखीनत्वादेव लब्धे[3] प्रतिपाद्यत्वे त्वामिति पुनर्वचनमन्यव्यावृत्तिविशिष्टं त्वदर्थं लक्षयति। एवं वच्मीत्यनेनैव कर्त्तरि लब्धे अस्मीति पुनर्वचनम्[4]। तथा विदुषां समुदाय इत्यादिवचनेनैव वक्तुः[5] प्रतिपादने सिद्धे पुनः वच्मीति वचनम् उपदिशामि इति वचनविशेषरूपमर्थं लक्षयति[6]। एतानि च लक्षितानि स्वातिशयं व्यञ्जयन्ति। एतेन मम वचनं तवात्यन्तं हितं तदवश्यमेतत्कर्त्तव्यमित्यभिप्रायः। ( झ )

तदेवमयं वाक्यगतोऽर्थान्तरसंक्रमितवाच्यो ध्वनिः। अत्यन्ततिरस्कृतवाच्यः पदगतो यथा—निःश्वासान्ध इवेत्यादि। वाक्यगतो यथा—उपकृतं बहु तत्रेत्यादि। अन्येषां वाक्यगतत्वे उदाहृतम्। पदगतत्वे[7] यथा—

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः।

---

( वि, ज ) **द्वितीयनयनशब्द** इति—अत्र लक्ष्यार्थस्य अतिशयो व्यङ्ग्य इति वक्ष्यति।

( वि, झ ) त्वामस्मीत्यत्र त्वदाद्यनेकलाक्षणिकपदानां लाक्षणिकत्वं दर्शयति—**अत्रे**ति। **अन्यव्यावृत्तिविशिष्टमि**ति—तथा च त्वामेव अहमेव इत्यर्थः। **एतानि चे**ति—एतानि लक्ष्यार्थे रूपाणि वस्तूनीत्यर्थः। **स्वातिशयमि**ति—स्वापेक्षयाऽधिकार्थ एव स्वातिशयः। तमधिकमर्थमाह—**एतेने**ति। अभिप्रायो अभिप्रायस्थव्यङ्ग्यार्थः।

( वि, ञ ) असंलक्ष्यक्रमं पदगतं व्यङ्ग्यमुदाहरति—**लावण्यमि**ति।

---

( लो, ए ) **लावण्यमि**ति—सर्वावयवगतः कोऽप्यतिशयः लावण्यम्।

---

1 'समवायः' ( क. पु. ) 2 'आस्थाय' ( क. पु. )
3 'लभ्ये' ( द. पु ) 4 'अन्यव्यावृत्तिविशिष्टं मदर्थं लक्षयति' इत्यधिकः पाठः ( ब. भ. पु. ) 5 'कर्तु' ( ज. झ. पु. )
6 'अर्पयति' ( च. पु. ) बोधयति ( ज. पु. ) 7 'गतत्वं' ( क. पु. )

तदा [1]सुधास्पदमभूदधुना तु ज्वरो[2] महान् ॥ (ए)

अत्र लावण्यादीनां [3]तादृगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यम्। अन्येषां तु तदुपकारित्वमेवेति[4] तन्मूल एव ध्वनिव्यपदेशः। (ज)

तदुक्तं ध्वनिकृता—

एकावयवसंस्थेन भूषणेनेव कामिनी।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥ ❀

एवं भावादिष्वप्यूह्यम् (ट)

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः।

---

अत्रेति—लावण्यादीनां यदनुभवैकगोचरत्वं तत्तद् व्यञ्जकानामित्यर्थः। व्यञ्जकानामित्यत्र ज्ञापकानामित्यर्थः। तेन अनुभवैकगोचरत्वं तदादिपदानां वाच्यमेव बोध्यं, न तु व्यङ्ग्यम् किन्तु विप्रलम्भ एव व्यङ्ग्यः। तदाद्यनेकपदानां चात्र न वाक्यत्वं विभिन्नवाक्यस्थत्वेन परस्परानन्वयात्। न च तदा सुधास्पदमभूदित्यत्र सर्वेषां तदादिपदार्थानामन्वयात् वाक्यत्वमेवेति वाच्यम्। तल्लावण्यमित्यनेनैव विप्रलम्भव्यञ्जनेन तदा सुधास्पदमित्यन्वयापेक्षां विनैव व्यञ्जकत्वेन पदत्वेनैव व्यञ्जकत्वात्। महावाक्यव्यङ्ग्यत्वेऽपि पदगतव्यङ्ग्यमूलो व्यवहारः।

(वि, ट) तन्मुखेनैव काव्यशोभाप्रतीतिरित्यत्र संवादं दर्शयति—**तदुक्तमि**ति। ध्वनिना व्यङ्ग्येन भारती वाक्यरूपा। पदव्यङ्ग्ये रसादिरूपेऽसंलक्ष्यक्रमे उदाहृते भावादिरूपाऽसंलक्ष्यक्रमस्यापि पदव्यङ्ग्यत्वमूह्यमित्याह।

(वि, ठ) शब्दशक्त्युद्भवं वस्तुपदव्यङ्ग्यमाह—**भुक्तिमुक्तिकृदि**ति— उपनायकागमनं दृष्ट्वा सन्तोषं व्यञ्जयन्त्या उक्तिरियम्। वाच्यार्थे सदागमः सच्छा-

---

कान्तिरुज्ज्वलता च पृथक् पृथगवयवाश्रिता। ज्वरः पीडादायकः। लावण्यादीनाम् इत्यतः पूर्वं प्रतीतेर्विभावादिसामग्रीसाध्यत्वेऽपि पूरणीयम्।

**(लो, ए) भुक्ती**ति। भुक्तिर्भोगः, सम्भोगश्च। मुक्तिः निःश्रेयसम् इतरव्यापारव्यासङ्गपरित्यागसुखं च। एकान्तः परमार्थस्वरूपं संकेतस्थानं च। सदागमः सच्छास्त्रं सतः पुरुषस्यागमनं च।

---

❀ यद्यपि वाक्यव्यङ्ग्य एव सर्वो ध्वनिस्तथाप्यन्वयव्यतिरेकाभ्यां यत्र पदे वाक्ये वा चारुत्वमधिकमुपलभ्यते तस्यैव व्यञ्जकत्वं व्यवस्थाप्यते। एकावयवसंस्थेन हस्तादौ एकाङ्गे स्थितेन भूषणेन अलङ्कारेण कामिनीव पदद्योत्येन पदप्रकाश्येन ध्वनिना सुकवेः भारती वाक्यं भाति शोभते।

1 'सुधास्यन्द' (क. ख. पु.)
2 'ज्वरोपमम्' (च. ज. पु.) 3 'तादृशस्वभावैकगोचर' (ठ. पु.)
4 'तदुपकारकत्वमेवेति' (ठ. पु)

कस्य नानन्दनिस्यन्दं[1] विदधाति सदागमः (ठ, ए)

अत्र सदागमशब्दाः सन्निहितमुपनायकं प्रति सच्छास्त्रार्थमभिधाय सतः पुरुषस्यागमः इति वस्तु व्यनक्ति। (ड)

ननु सदागमः सदागम इवेति [2]उपमाध्वनिरिति चेन्न सदागमशब्दयोरुपमानोपमेयभावाविवक्षणाद् रहस्यसंगोपनार्थमेव हि द्व्यर्थपदप्रतिपादनं[3] [4]प्रकरणादिपर्य्यालोचनेन च सच्छास्त्राभिधानस्यासम्बन्धत्वात्। (ढ) ॐ

अनन्यसाधारणधीर्धृताखिलवसुन्धरः।
राजते कोऽपि जगति स राजा पुरुषोत्तमः॥ †

---

स्त्रम्। भुक्तिमुक्ती स्वर्गभोगमोक्षौ। एकान्तं सम्यगादेशनं तत्त्वज्ञानोपदेशः। व्यङ्ग्यार्थे तु सदागमः सत्पुरुषोपनायकागमः। भुक्तिमुक्ती सुरतोपभोगगृहकर्मत्यागौ। एकान्तस्य समादेशनं रहस्योपदेशः।

(वि, ड) अत्र श्लिष्टसदागमपदशक्तिमूलकव्यञ्जकत्वमेव अन्यव्यञ्जकपदानामिति तत्पदस्यैव व्यञ्जकत्वं तदाह—अत्रेति—सच्छास्त्रमापाततः प्रकरणगम्यं सामान्यतोऽभिधाय उपनायकं प्रति सत्पुरुषागमं व्यनक्ति इत्यर्थः।

(वि, ढ) सत्पुरुषागमसच्छास्त्रयोरुपमाध्वनित्वमाशङ्कते—नन्विति। समाधत्ते—नेति। उपमाऽविवक्षाबीजमाह—रहस्येति। ननु रत्नस्य संगोपनमुपमा चास्त्वित्यत्र आह—प्रकरणादीति। आदिपदात् तात्पर्य्यपरिग्रहः। सच्छास्त्रमापातत एव प्राकरणिकम्। सत्पुरुषागम एव प्रतिसन्धानेन प्राकरणिकः। प्रतिसन्धानेन सत्पुरुषागमस्यैव आस्वाद्यत्वेन अप्राकरणिकसच्छास्त्रस्य प्रकृतासम्बन्धत्वात्; तस्या आस्वाद्यत्वाभावात् तदुपमाया अपि अनास्वाद्यत्वेन तावता सम्बन्धीकरणस्यापि अनुपयोगात्।

(वि, ण) शब्दशक्तिमूलमलङ्कारं पदद्योत्यमाह—अनन्येति। धृता पालिता,

---

ॐ यत्र ..हिशब्दशक्तिमहिम्नोपस्थापितो द्वितीयोऽर्थोऽप्रकृततयाऽनुपपद्यमानः प्रकृतस्योपमानत्वेन स्वात्मानं व्यवस्थापयति तत्रैवोपमाध्वनेर्विषयः। अत्र तु व्यङ्ग्यार्थस्य विवक्षिततया प्रकृतत्वम्। नच तर्हि प्रकृततया वाच्यः स एवास्तु द्वितीयोऽर्थ इति वाच्यम्। रहस्यगोपनार्थमप्रकृतस्यैव मुख्यतः प्रतिपाद्यमानत्वात्। उक्तं च "द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु"। अत्र श्लिष्टस्य सदागमपदस्यैव व्यञ्जकत्वे प्राधान्यम्—अन्यपदानां तत्सहकारेण व्यञ्जकत्वात्।

† अनन्यसाधारणी धीर्यस्य सः। धृता परिपालिता कूर्मरूपेण पृष्ठे स्थापिता च अखिला वसुन्धरा येन सः। पुरुषेषु उत्तमः श्रेष्ठः राजा नारायणश्च राजते।

1 सन्दोहं (ख. पु.) 2 'न कथमुपमाध्वनिः ?' (इति क. ख. पु.)
3 'द्व्यर्थपदोपादानं' (ख. पु. 4 प्रकरणादिपदपर्या— (ग. घ. पु.)

अत्र पुरुषश्रेष्ठः[1] पुरुषोत्तम इवेत्युपमाध्वनिः । अनयोः शब्दशक्तिमूलौ संलक्ष्यक्रमभेदौ । ( ण )

सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।
आश्चर्यं तव सौकुमार्य्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति[2] तेनासितुम् ॥ ( त,ओ )

अत्र स्वतःसम्भविना वस्तुना कृतपुरुषपरिचया स्नाताऽसीति वस्तु व्यज्यते । तच्चाधुना क्लान्ताऽसि न तु पूर्वं कदाचिदपि तवैवंविधः क्लमो दृष्ट इति बोधयतोऽधुनापदस्यैवेतरपदार्थोत्कर्षादधुनापदस्यैव पदान्तरापेक्षया वैशिष्ट्यम् । ※

तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ।

---

पक्षे कूर्माऽनन्तमूर्त्या ऊढा । अस्य पदस्यापि शक्त्या व्यङ्ग्यत्वेऽपि न वाक्यव्यङ्ग्यत्वं पुरुषोत्तमपदश्लेषाधीनप्रतीतिकत्वादस्य श्लिष्टार्थस्य । **उपमाध्वनिरि**ति–अस्य पुरुषोत्तमपदस्य गङ्गोपनादिप्रयोजनकत्वाऽभावेन उपमायामेव तात्पर्य्यात्संलक्ष्यक्रमभेदौ वस्त्वलङ्कारौ ।

**( वि, त )** स्वतःसम्भविवस्तुव्यङ्ग्यं वस्तुपदद्योत्यमाह—**साय**मिति । स्नानवर्त्मनि उपनायकोपभुक्तां स्नातागतां क्लान्तां सखीं प्रति सख्या उपहासोक्तिरियम् । अधुना तव सौकुमार्य्यमाश्चर्य्यम् । येन सौकुमार्य्येण अभितः सर्वाङ्गं क्लान्ताऽसि । ननु वर्त्मनि आतपात् ईदृशः क्लम इत्यत्राह—**साय**मिति । मलयजेन चन्दनेन इति । एतद्द्वयमपि क्लमनिवारकम् । ननु स्नानादुत्तरं मुहूर्त्तद्वयात्मकसायंकाले आतपसत्त्वात् तत एव क्लम इत्यत्राह—**यातोऽस्तो**ति । अम्बरमणिः सूर्य्यः । द्रुतगमनात् क्लममपि निरस्यति—**विस्रब्ध**मिति—विस्रब्धं यथेष्टम्, आगतिक्रियाविशेषणमिदम् । विश्रब्धमन्येति क्वचित् पाठः । ननु क्लमः कथं जात इत्यत्राह—**येनाऽधुना** इति । येन क्लमेन तव नेत्रद्वन्द्वम् अमीलनव्यतिकरं मीलनसम्बन्धरहितं यथा स्यात्तथा आसितुं स्थातुं न शक्नोति ।

**( वि, थ )** स्वतःसम्भाविवस्तुव्यङ्ग्यमलङ्कारं पदव्यङ्ग्यमाह–**तदप्राप्ती**त्यादि-

---

**( लो, ऐ ) साय**मिति—न विद्यते मीलनेन व्यतिकरः सम्पर्को यत्र तत् अमीलनव्यतिकरं यथा स्यात्तथाऽऽसितुं स्थातुमित्यर्थः ।

---

※ क्लमस्य सौकुमार्यजन्यत्वे समयान्तरेऽप्येवं स्यात् । अतः समयान्तव्यावर्त्तकादधुनापदात् सम्भोगाधीन एव क्लमः इति भावः । अतः अधुनापदस्य व्यञ्जकत्वम् ।

1 'पुरुषोत्तमः' ( इति क. पु. ) 2 'शक्नोऽसि' ( ग. घ. पु )

चिन्तयन्ती जगत्सूतिं[1] [2]परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ॥ ( थ, औ ) *

अत्राशेषचयपदप्रभावादनेकजन्मसहस्र[3]भोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसिततया भगवद्विरहदुःखचिन्ताह्लादयोः प्रत्यायनमित्यतिशयोक्तिद्वयप्रतीतिरशेषचयपदद्वयद्योत्या । अत्र च व्यञ्जकस्य [4]कविप्रौढोक्तिमन्तरेणापि सम्भवात्स्वतःसम्भविता । ( द ) †

---

श्लोकद्वयं पूर्ववर्णितव्यवसायाद् अन्या गोपकन्यका निरुच्छ्वासतया निरुद्धप्राणवायुतया मुक्तिं गता । मुक्तिहेतुं श्रीकृष्णचिन्तनमाह—**चिन्तयन्ती**ति । जगत्सूतिं जगज्जनकं श्रीकृष्णं तथापि समस्तपापपुण्यक्षये एव मुक्तिरित्यतस्तदुपपादयति—**तदप्राप्ती**ति—तच्चिन्तेति च ।

( **वि, द** ) **अत्रे**ति—तदप्राप्तिदुःखस्य तच्चिन्ताह्लादस्य चोपभोगेन तज्जनकपापपुण्ययोरेव क्षयः सम्भवति: नतु समस्तपापपुण्ययोः । अतः समस्तपापपुण्यनाशकसमस्ततत्फलदुःखसुखेष्वनुक्तेपु उक्तदुःखसुखयोरारोपः । अयमेव चात्रातिशयोक्त्यलङ्कारः । अतोऽत्र तदलङ्कारद्वयम् । अनुक्ते उपमेये उक्तोपमानारोपस्य तत्त्वात् । यथा कमलमनम्भसीत्यत्र अनुक्ते उपमेये मुखे उपमानकमलारोपः। प्रकृतानीत्यत्र उपमेयानि अनुक्तानि उक्तसुखदुःखद्वयं चाऽप्रकृतत्वात् उप-

---

( **लो, औ** ) **तदप्राप्ती**ति—मुक्तिं गुरुयन्त्रणाया मोक्षम् । न तस्य प्राणा उत्क्रामन्ति तत्रैव समवलीयन्ते; इति श्रुतेः । निरुच्छ्वासतया मोक्षेऽपि सम्बन्धः ।

---

* अन्या काचिद् गोपकन्यका निरुच्छ्वासतया निरुद्धप्राणवायुतया परंब्रह्मस्वरूपिणं सच्चिदानन्दरूपिणं जगत्सूतिं जगतः सूतिरुत्पत्तिर्यस्मात् तादृशं श्रीकृष्णं चिन्तयन्ती भावयन्ती सती मुक्तिं गता । ( निरुच्छ्वासतया नाऽस्या प्राणाः समुत्क्रामन्ति । अत्रैव समवलीयन्ते इति श्रुतेः मोक्षकाले निरुच्छ्वासता । निरुच्छ्वासतया प्राणायामेन इति केचित्: निरुच्छ्वासतया प्राणोत्क्रमणं विना इति केचित् ) कीदृशी—**तदप्राप्ती**ति—तस्य श्रीकृष्णस्य अप्राप्त्या वियोगेन यत् महादुःखं तेन विलीनानि नष्टानि अशेषाणि समग्राणि पातकानि यस्यास्तथाभूता । पुनः कीदृशी—**तच्चिन्ते**ति—तस्य श्रीकृष्णस्य चिन्तया भावनया या विपुलः महान् आनन्दः, तेन क्षीणः नष्टः पुण्यस्य चयः समूहो यस्यास्तथाभूता "प्रारब्धकर्म्मणां भोगादेव क्षय इति न्यायात्

† अत्र जन्मसहस्रैरुपभोग्यानि सुकृतदुष्कृतयोः फलानि कृष्णस्य वियोगदुःखेन चिन्ताह्लादेन च कयाऽपि अनुभूतानि । एवं दुष्कृतसुकृतराशितादात्म्येन अध्यवसितौ भगवद्वियोगदुःखचिन्ताह्लादौ प्रतीयेत इति अतिशयोक्तिद्वयम् अशेषचयपदाभ्यां

1 'जगद्योनिं ( प. व. पु 2 'परं ( क. ख. पु )
3 सहस्रेति ( ग. घ. पु. ) नास्ति । 4 कवीति नास्ति ( ख. पु. )

पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम् ।
देव ! त्रिपथगात्मानं गोपयत्युग्रमूर्द्धनि ॥

इदं मम । अत्र पश्यन्तीति कविप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण न केऽप्यन्ये दातारस्तव सदृशा इति व्यतिरेकालङ्कारोऽसंख्यपदद्योत्यः[1] । ( ध )

एवमन्येष्वप्यर्थशक्तिमूलसंलक्ष्यक्रमभेदेषूदाहार्य्यम् । तदेवं ध्वनेः [2]पूर्वोक्तेष्वष्टादशसु भेदेषु मध्ये शब्दार्थशक्त्युत्थो व्यङ्ग्यो वाक्यमात्रे भवन्नेकः । अन्ये पुनः सप्तदश वाक्ये पदे चेति चतुस्त्रिंशदिति पञ्चत्रिंशद्भेदाः ।

**प्रबन्धेऽपि मतो धीरैरर्थशक्त्युद्भवो ध्वनिः ॥ १३ ॥**

[3]प्रबन्धो महावाक्यम् । ( न )

अनन्तरोक्तद्वादशभेदोऽर्थशक्त्युत्थः । यथा महाभारते गृध्रगोमायुसंवादे—

---

मानानि अतस्तदारोपादतिशयोक्तिद्वयम् । उपमेयस्यानुक्तत्वेन चातिशयोक्त्यलङ्कारो व्यङ्ग्य एव । तद्द्वयव्यञ्जकौ चात्राशेषचयशब्दौ पापपुण्ययोः, अशेषचयत्वाभ्यां नाशकयोर्दुःखसुखयोरशेषचयत्वव्यञ्जनात् । अत्र अशेषचयपदयोरेकवाक्यस्थत्वेऽपि द्वाभ्यां व्यङ्ग्यद्वयव्यञ्जनान्नैकवाक्यत्वेन व्यञ्जकत्वमतः पदत्वेनैव व्यञ्जकत्वम् ।

**( वि, ध )** संक्षेपार्थमलङ्कारस्य वस्त्वलङ्कारव्यञ्जनामुपेक्ष्य प्रौढोक्तिसिद्धालङ्कारस्य व्यङ्ग्यमलङ्कारपदद्योत्यमाह—**पश्यन्ती**ति । त्वद्दानजलवाहिन्या नद्या असंख्यपथगामित्वदर्शनात् पथत्रयगामिन्या गङ्गाया लज्जया शिवशिरसि आत्मगोपनम् । **काव्यलिङ्गेने**ति—दर्शनस्य आत्मगोपनहेतुत्वात् हेत्वलङ्कारेण इत्यर्थः ।

**( वि, न ) महावाक्यमि**ति—कुलकरूपमहावाक्यमित्यर्थः । तदप्राप्तिमहादुःखेत्यादिश्लोकद्वयस्य महावाक्यत्वेऽपि तत्र व्यञ्जकपदद्वयसत्त्वात् तद्व्यङ्ग्यस्यैवोदाहरणत्वेन तद्दर्शितम् ।

---

द्योत्यते । बहुजन्मार्जितानि सर्वाणि पापानि पुण्यानि च मुहूर्त्तव्यापिना दुःखसुखभोगेन क्षपयितुं न शक्यते । अतो भवद्वियोगदु.खचिन्ताह्लादयोरनेकजन्मभोग्यदुष्कृतसुकृततादात्म्येनाऽध्यवसायं विना अशेषपापपुण्यक्षयो नोपपद्यते । तेनायमर्थ.—भगवदप्राप्तिर्महादुःखमेव जन्मसहस्रभोग्यदुष्कृतफलम् । तदुपभोगेन विलीनानि अशेषाणि पातकानि यस्याः । तथा तच्चिन्ताह्लाद एव जन्मसहस्रसुकृतफलम् । तद्भोगेन क्षीणः पुण्यचयः यस्याः सा ।

1 'व्यंग्यः' ( क. ख. पु ) 2 पूर्वेति नास्ति ( च. पु. ) 3 'प्रबन्धे महावाक्ये' ( इति क. ख. पु. )

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले ।
कङ्कालबहुले[1] घोरे सर्वप्राणिभयङ्करे ॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ ( अ ) *

इति [2]दिवसे शक्तस्य[3] गृध्रस्य श्मशाने मृतं बालमुपादाय तिष्ठतां दिवसे[4] तं परित्यज्य गमनमिष्टम् । ( प )

आदित्योऽयं स्थितो मूढाः ! स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन ॥

---

( वि, प ) **अलं स्थित्वे**त्यादि—श्मशाने मृतबालकम् अत्यजतस्तद्बन्धून् प्रति गृध्रवाक्यमिदं श्लोकद्वयरूपं महावाक्यम् । **दिवसे शक्तस्य** इति—दिवसे एव भक्षणासमर्थस्येत्यर्थः । **गमनमिष्टमि**ति—वक्तुर्गृध्रस्य इष्टं मृतबन्धूनां गमनमित्यर्थः । तथा च 'बालकं त्यक्त्वा यूयं गच्छध्वमिति वस्तु स्वतःसम्भविवस्तुनः उक्तप्रबन्धार्थस्य व्यङ्ग्यमित्यर्थः ।

( वि, फ ) आदित्योऽयम् इत्यादिश्लोकद्वयरूपं महावाक्यं गोमायोरुक्तिः । **बहुविघ्न** इति—तथा च विघ्नशून्यमुहूर्त्तान्तरे जीवनसम्भावना दर्शिता । एवं कनक-

---

( लो, अ ) **अलमि**ति—कालधर्मो मरणम् । अस्य च श्लोकस्य पद्यान्तर-मचिवस्यैव महावाक्यतेति स्पष्टार्थम् । महावाक्यान्तरमुदाहरति ।

( लो, आ ) **आदित्य** इति—स्नेहं जीवनोपायानुसरणबीजम् । मुहूर्त्तः सन्ध्या-कालः; बहुविघ्नः भूताद्यावेशसम्भावनादायित्वात् । अतः स्वतःसम्भविना वस्तुना

---

* **अलमि**ति—मृतं बालकं सन्ध्यासमये श्मशाने समानीतं दृष्ट्वा दिवसे एव मृतस्य मांसभक्षणाक्षमस्य रात्रौ अन्धत्वात् असमर्थस्य गृध्रस्य तद्बन्धुविसर्जनपर-मिदं श्लोकद्वयम् । हे जनाः ! अस्मिन् श्मशाने स्थित्वा अलम् । कीदृशे श्मशाने गृध्रै-र्गोमायुभिः शृगालैश्च संकुले व्याप्ते, तथा कंकाला अस्थीनि बहला यत्र एवंभूते अत एव घोरे दारुणे, तथा सर्वेषां प्राणिनां भयङ्करे त्रासजनके इत्यर्थः । एवं निष्प्रयोजना सम्भाविताऽनिष्ठा च एवंविधस्थले भवतां स्थितिरनुचिता इति भावः । ननु बालकस्य जीवनं सम्भाव्यते तत्राह—**न चेहे**ति—इह संसारे कालधर्म्मे मृत्युम् उपागतः प्राप्तः प्रियः मित्रं द्वेष्यः शत्रुर्वा यदि अथ वा कश्चिन् उदासीनोऽपि न जीवितः अद्य यावत् इति शेषः । तथा च मृतस्य पुनर्जीवनमसम्भावितम् इत्यर्थः । प्राणिनां संसारिणाम् ईदृशी मरणानन्तरम् अपरावृत्तिरूपा गतिः स्वभावः। अतः खेदो न कार्य्यः ।

1 'बहले' ( ख. पु. )  2 दिवा ( ग. पु. )
3 प्रभवतः ( ग. पुं. )  4 'दिवसे' ( इति क. पु. नास्ति )

अमुं कनकवर्णाभं बालमप्राप्तयौवनं
गृध्रवाक्यात् कथं बाला[1] स्त्यजध्वमविशङ्किताः ॥ *

इति निशि समर्थस्य गोमायोर्दिवसे परित्यागोऽनभिलषित इति वाक्य-समूहेन द्योत्यते। अत्र स्वतःसम्भवी व्यञ्जकः। एवमन्येष्वेकादशभेदेषूदा-हार्य्यम्[2]। ( फ,आ )

---

वर्णत्वेन रूपविपर्य्ययाभावादप्राप्तयौवनत्वेन च मृत्युहेतुयौवनाधीनाऽकार्य्याभावा-ज्जीवनसम्भावना दर्शिता। **बाला** इति–शिशुबुद्धय इत्यर्थः। मूढा इति क्वचित् पाठः। **नाभिलषित** इति। तथा च अत्रापि स्वतःसम्भविना एतत्प्रबन्धार्थेन बालकपरित्यागानभिलाषरूपं वस्तु व्यज्यते इत्यर्थः। **एवमन्येष्वि**ति। स्वतः सम्भवि-वस्तुव्यङ्ग्यालङ्काराद्येकादशभेदेष्वित्यर्थः।

---

वस्तु व्यज्यते। **उदाहार्य्यमि**ति—तथा च रघुवंशे "समयुज्यत भूपतिर्युवा" इत्यादिना "उभयां सिद्धिमुभाववापतुः" इत्यन्ते तुल्ययोगितया काव्यलिङ्गेन वा रघुराघवयोर्व्यतिरेकालङ्कारः प्रतीयते। किञ्च कुमारसम्भवे हिमगिरिवर्णनप्रौढोक्त्य-प्रौढोक्तिसिद्धालङ्कारसंसृष्टे हिमगिरेरितरोत्कर्षः प्रतीयते। अर्थशक्तिभूरित्युपलक्षणम्। शब्दशक्त्युद्भवोऽपि क्वचित् प्रबन्धव्यङ्ग्यो दृश्यते। यथा माघकाव्ये शिशुपालदूतोक्तौ सन्धौ काव्ये वस्तुमात्ररूपो विग्रहः उपमाध्वनिरपि तथाविधः सम्भाव्यते।

---

* **आदित्योऽयमि**ति—निशि एव मृतमांसभक्षणात्तमस्य दिवान्धस्य शृगालस्य मृतबालकबन्धूनां श्मशाने रात्रिं यावत् अवस्थानार्थं वचनमिदम्। हे बालाः अयम् आदित्यः स्थितः। अतः रात्रिचरेभ्यो भयमधुना नास्तीति भावः। अतः यूयं साम्प्रतम् अधुना स्नेहं ( मृते बालके ) कुरुत। मृतस्य जीवनासम्भवात् निष्फलमव-स्थानम्, अत आह–**बहुविघ्न** इति। अयं मुहूर्त्तः सन्ध्यात्मकः बहुविघ्नः भूतावेशा-दिरूपविघ्नबहुलः। कदाचित् अपि बालः ( भूतावेशापगमात् परं ) जीवेत्? अपि सम्भावनायां यूयम् अविशङ्किताः लोकापवादशङ्कारहिताः गृध्रस्य वाक्यात् बालाः विचाररहिताः सन्तः अमुं बालं कथं त्यजध्वम् ( आत्मनेपदमार्षम् ) कीदृशं बालं कनकवर्णवत् आभा कान्तिर्यस्य तादृशं तथा न प्राप्तं यौवनं येन तथाभूतम्। अत्र बालत्वेन मृत्युकालाभावः। कनकेत्यादिना मृत्युचिह्नवैवर्ण्याद्यभावः। अप्राप्तेत्यनेन परदाराभिगमनादिपापराहित्येन आयुःसत्त्वं सूच्यते।

1 मूढा इति पाठान्तरम्।

2 "एवं वाच्यार्थव्यञ्जकत्वे उदाहृतम्। लक्ष्यार्थस्य यथा–'निःशेषच्युतचन्दनम्' इत्यादि। व्यङ्ग्यार्थस्य यथा—'उअ णिच्चल' इत्यादि। अनयोः स्वतःसम्भ-विनोर्लक्ष्यव्यङ्ग्यार्थौ व्यञ्जकौ, एवमन्येषु एकादशभेदेषूदाहार्यम्।" इत्यधिकः पाठः ( क. ख. पु )

**पदांशवर्णरचनाप्रबन्धेष्वस्फुटक्रमः ॥ १४ ॥**

**असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिस्तत्र पदांशे[1] प्रकृतिप्रत्ययोपसर्गनिपातादि-भेदादनेकविधः । ( ब )**

यथा—

**चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं**
**रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।**
**करं व्याधुन्वन्त्याः[2] पिबसि रतिसर्वस्वमधरं**
**वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥**

**अत्र "हता" इति न पुनर्दुःखं प्राप्तवन्त इति हन्प्रकृतेः ( भ, इ )**

**मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।**
**मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥**

**अत्र "तु" इति निपातस्यानुतापव्यञ्जकत्वम् । ( म )**

---

( **वि, ब** ) **पदांश** इति—अस्फुटपदक्रमस्य अक्रमव्यङ्ग्यध्वनिरर्थ इत्याह—**असंलक्ष्ये**ति । अत्र ध्वनिपदं काव्यपरम् । व्यङ्ग्यपरत्वे व्यङ्ग्यो व्यङ्ग्य इत्यन्वयानुपपत्तेः । पदांशादिव्यङ्ग्य इत्यर्थः । तत्र पदांशद्योत्यानां बहुविधत्वमाह—**तत्रे**ति ।

( **वि, भ** ) **चलापाङ्गामि**ति । शकुन्तलां व्याकुलयन्तं भ्रमरं प्रति दुष्यन्तस्योक्तिरियम् । **तत्त्वान्वेषात्** इति । किं ब्राह्मणस्य औरसकन्यात्वेन मत्परिणयायोग्या, किं वा तस्य पुष्टकन्यात्वेन मत्परिणययोग्या इत्येवं तत्त्वस्यान्वेषणादित्यर्थः । **हन्प्रकृतेरि**ति । हन्धातुरूपप्रकृतेरित्यर्थः। अत्र मृत्युकथनात् विप्रलम्भातिशयो व्यङ्ग्यः।

( **वि, म** ) **मुहुरङ्गुली**ति—शकुन्तलां प्राप्य तत्सम्भोगविघ्ने सति अनुनीयमानस्य दुष्यन्तस्य उक्तिरियम् । **अंसविवर्त्ती**ति भुजमूले परावर्त्तमानम् । अङ्गुलिः शकुन्तलायाः । **अत्रे**ति—नञा एव चुम्बनाभावलाभे तुशब्देन चुम्बनस्य अत्यन्तव्यवच्छेदलाभात् विप्रलम्भानुतापातिशयो व्यङ्ग्यः ।

---

( **लो, इ** ) **पदांशे** इति—इह यद्यपि प्रकृत्यादेः केवलस्य न व्यञ्जकत्वम्, तथापि वाचकसमुदायप्रविष्टस्य रसादिषु तदतिशयाधायकत्वं सहृदयानुभवसिद्धम् । **हता** इत्यादि—अत्र हननप्रतीतेरनन्तरं निर्वेदव्यङ्ग्यत्वमिति शेषः । तथा ह्यत्र हता इत्यस्य स्थाने क्तप्रत्ययं स्थापयित्वा हनः स्थाने प्रकृत्यन्तरनिवेशने न तथा प्रतीतिः ।

---

1 'पदांशः' ( ख. पु. ) 'पदांशप्रकृति' ( क. पु. )
2 'व्याधुन्वन्त्याः' इति ( क. पु. )

**"न्यक्कारो ह्ययमेव मे यदरयः" इत्यादौ "अरय" इति बहुवचनस्य, "तापस" इत्येकवचनस्य, "अत्रैव" इति सर्वनाम्नः, "निहन्ति" इति "जीवति" इति च तिङः, "अहो" इत्यव्ययस्य, "ग्रामटिका" इति करूपतद्धितस्य, " विलुण्ठन " इति व्युपसर्गस्य, "भुजैः" इति बहुवचनस्य व्यञ्जकत्वम् ॥**

**( य, ई )**

---

( वि, य ) **न्यक्कार** इति—अत्र व्यञ्जकत्वमित्यत्र विषादव्यञ्जकत्वमित्यर्थः। **बहुवचनस्ये**ति—मम एकोऽप्यरिर्नास्ति बहु तत्सत्त्वे सम्भाविते विषादः। **एकवचनस्ये**ति—बह्वीभिः पिपीलिकाभिरप्यपकर्त्तुशक्यत्वे एकस्मिन्नपकारिणि तु अत्यन्तविषादः । **अत्रैवेति** इति—विप्रकृष्टमार्गवर्त्तिखरदूषणाद्यनेकराक्षसवधोऽपि सह्यः । अत्रैव लङ्कायामित्यत्र विषादः । तिङ इति—मदनवधाने पूर्वं निहन्तु, वर्त्तमानमपि हननमित्यत्र विषादः । अहो इति—अदृश्यविपर्ययदर्शनात् विस्मयेन अत्यन्तविषादः । करूपेति कप्रत्ययस्य तद्धितत्वं पाणिनिमते । अल्पार्थकस्य तस्य विषादातिशयव्यञ्जकत्वम्। तथा हि–यदि लुण्ठने स्वर्गोऽपि स्वल्पग्रामः कप्रत्ययवशात् चात्यन्तस्वल्पः । तद्विलुण्ठनोच्छूनभुजानामिदानीं किमपि कर्त्तुमक्षमत्वेन वैयर्थ्यमित्यन्तविषादः । व्युपसर्गस्येति विशेषलुण्ठनबोधनात् । भुजैरिति एकद्वित्रिभुजवैयर्थ्यं सह्यं बहूनां वैयर्थ्यादित्यत्यन्तविषादः ।

---

( लो, ई ) न्यक्कार इत्यादौ उदाहरणद्वये पदांशव्यञ्जकत्वस्य प्रकृतत्वेऽपि प्रसङ्गात् पदव्यञ्जकत्वकथनम् । एवम्—

> "रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
> मस्मद्भाग्यविपर्ययादिह परं देवो न जानाति तम् ।
> वन्दी वैष यशांसि गायति मरुत् यस्यैकबाणाहत-
> श्रेणीभूतविशालशालविवरोत्कीर्णैः स्वरैः सप्तभिः ॥"

अत्रासाविति सर्वनाम्ना साक्षात् क्रियमाणा तदीयलोकोत्तरप्रसिद्धिर्व्यज्यते । भुवनेष्वित्यत्र बहुवचनेन गुणैरित्यत्र प्रकृत्या बहुवचनेन च । ते ते विशेषा अस्मद्भाग्यविपर्ययादित्यत्र च न तव न मम किन्त्वस्माकं सर्वेषामपि भाग्यविपर्यया-दित्यस्मद्भाग्यविपर्ययादित्यत्र न खल्वभाग्यात् किन्तु भाग्यविपर्ययात् । एवं हि पूर्वमस्माकं भाग्यमवस्थितम् । संप्रति तु अनवधानेन तस्य विपर्ययो जात इति प्रतिपादनादात्मना प्रतिपादनेन च ते ते सहृदयसंवेद्या अर्थाः प्रतीयन्ते । तथा रक्तोत्फुल्लेत्यादौ हरेः पश्यत इत्यत्रानादरषष्ठ्या किञ्च न केवलं रसादिध्वनेरेव पदांशप्रकाशता, किन्तु वस्त्वलङ्कारयोरपि । अत्रालङ्कारस्य यथा—

> "पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
> दिशि दिशि पवमानो वीरुधां लासकश्च ।

आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं तदेतदपरं यच्चैकतानं मनः ।
मौनं चेदमिदं च शून्यमधुना यद्विश्वमाभाति ते
तद्ब्रूयाः सखि ! योगिनी किमसि भोः किं वा वियोगिन्यसि ॥ ?

( र ) ❀

अत्र तु " आहार " इति विषयसप्तम्याः, "समस्त" इति "पर" इति च विशेषणद्वयस्य, "मौनं चेदम्" इति प्रत्यक्ष[1]परामर्शिनः सर्वनाम्नः, "आभाति" इति उपसर्गस्य, "सखि" इति प्रणयस्मरणस्य, "असि भोः" इति [2]सोत्प्रासोपहासस्य " किं वा " इत्युत्तरपक्षदार्ढ्यसूचकस्य वाशब्दस्य, "असि" इति

---

नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि च निवृत्ता मानिनीमानचर्चा ॥"

अत्र किरतीति वर्त्तमानप्रत्ययेन निवृत्तेत्यत्र क्तप्रत्ययेन कार्यकारणपौर्वापर्य-व्यत्ययरूपातिशयोक्तिः प्रतीयते । उदाहरिष्यते गुणरीतिनिरूपण इति शेषः ।

( वि, र ) **आहारे** इति–ध्यायन्तीं वियोगिनीं योगधर्मिणीं दृष्ट्वा कस्यचिदियं पृच्छा । अत्र नायिकाया विप्रलम्भातिशयः समस्तपदव्यङ्ग्यः । एकतानमेकमात्र-विषयः । तव स्थाने यदा विश्वं शून्यमाभाति इत्यन्वयः ।

( वि, ल ) **विषयसप्तम्या** इति । मनसा अपि आहारविषय इत्यर्थः । न तु आहारक्रियायामधिकरणम् इत्यर्थः । **समस्ते**ति । न तु यत् किञ्चिद्विषये एतद् विशेषणस्य समासपदैकदेशः, किन्तु पदस्यापि पदे व्यञ्जकत्वमस्तीति दर्शितम् । **प्रत्यक्षपरामर्शिन** इति । अनुभूयमानत्वपरामर्शिन इत्यर्थः । क्वचित्तु प्रत्यक्षपराम-र्शिण इति सम्यक् पाठः । मौनात् मिथ्यात्वसूचनाच्च तस्य विप्रलम्भव्यञ्जकत्वम् । इदमपि पदमेव न पदैकदेशः । **उपसर्गस्ये**ति । आङुपसर्गेण मिथ्यात्वरूपं सम्यक् प्रतिभाति इति भावबोधनात् विप्रलम्भव्यञ्जनम् । **प्रणयस्मरणस्ये**ति—तेन दृश्यमानो विप्रलम्भो न त्वया गोपनीय इत्यर्थः । **सोत्प्रासोपहासस्ये**ति–सोत्प्रासः रामनाक्स्मितम् । वियोगकथनात् मन्दस्मितोपहासः । **उत्तरपक्षे**ति—वियोगपक्ष

---

❀ तव आहारे अन्नादिभोजनविषये विरतिः विरागः । समस्ते विषयग्रामे चन्द-नादिभोग्यपदार्थनिचये परम् अत्यन्तं निवृत्तिः । नासाया अग्रे नयनं वर्त्तते । यत् च एकतानम् एकस्मिन् विषये एकलग्नं मनः। इदं च मौनम् । इदं च विश्वं जगत् अधुना शून्यम् । यत् आभाति तव चित्ते तत् ब्रूयाः त्वं किं योगिनी असि किं वा वियोगिनी असि । योगिनीवियोगिन्योः साधर्म्यात् इयं जिज्ञासा ।

1 'य' ( क, पुं ) 2 'सोपहासोत्प्रासस्य' ( क, ख, पु )

वर्त्तमानोपदेशस्य तत्तद्विषयव्यञ्जकत्वं सहृदयसंवेद्यम् । ( ल )

वर्णरचनयोरुदाहरिष्यते । प्रबन्धे यथा—महाभारते शान्तः । रामायणे करुणः । मालतीमाधवरत्नावल्यादौ शृङ्गारः । एवमन्यत्र । ( व, उ )

**तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः ।**
**सङ्करेण त्रिरूपेण संसृष्ट्या [1]चैकरूपया ।**
**वेदखाग्निशराः शुद्धैरिषुबाणाग्निसायकाः ॥ १५ ॥**

---

एव दृढ इत्यर्थः । **वर्त्तमानोपदेशस्ये**ति-विप्रलम्भविशेषः ।

( वि, व ) **प्रबन्ध** इति । प्रबन्धोऽत्र ग्रन्थरूपः । **शान्त** इति । स्वर्गारोहणरूपमहाभारतश्रोतुः युधिष्ठिरशमज्ञातुः शान्तरसो बोध्य इत्यर्थः । **रामायणे**ति । रामशोकज्ञातुः रामायणश्रोतुः करुणरस इत्यर्थः । **मालती**ति—माधववत्सराजरतिज्ञातुस्तन्नाटकश्रोतुः शृङ्गार इत्यर्थः ।

( वि, श ) **एकपञ्चाशदि**ति—पूर्वदर्शिताः पञ्चत्रिंशत् कुलकरूपमहावाक्यव्यङ्ग्याः द्वादशपदैकदेशादिव्यङ्ग्याः चत्वार इत्येकपञ्चाशत् एषां परस्परयोजने संख्यां दर्शयति—**सङ्करे**ति । अङ्गाङ्गित्वरूपेण एकाश्रयानुप्रवेशरूपेण संदिग्धरूपेण च त्रिविधेन संकरेण योजने तस्य त्रिरूपता । किमयम्-अयं वेति संशयास्पदत्वरूपः एकः, तयोः परस्परानुग्राहकानुग्राह्यभावरूपो द्वितीयः, तयोरेकव्यञ्जकेन व्यञ्जनरूपस्तृतीयः । संसृष्टिः तु एतत् त्रितयराहित्येनैकपदे स्थितिः । एभिर्याः संख्या भवन्ति ता आह—**वेदे**ति—"अङ्कानां वामतः क्रम' इति रीत्या वेदाश्चत्वारः तद्वामे खं शून्यम् ।

---

( लो, उ ) **प्रबन्ध** इत्यादि । अयमाशयः—न केवलं वस्त्वलङ्कारध्वनिवदर्थान्तरमाह । वाक्यव्यङ्ग्येऽपि तत्समुदायभूते महाभारतादिप्रबन्धेऽपि; अन्यथा काव्यत्वहानेरिति ।

( लो, ऊ ) **तदेवमि**ति—एवं व्यङ्ग्यस्य पदवाक्यगतत्वेनवृत्तौ पञ्चत्रिंशद्भेदाः संख्याताः । तदनन्तरमर्थशक्त्युद्भवस्य प्रबन्धगतत्वेन द्वादश । रसस्य पदांशवर्णरचनाप्रबन्धगतत्वेन चत्वार इति मिलित्वा ध्वनिकाव्यस्य एकपञ्चाशद्भेदाः शुद्धा इत्यर्थः । **संकरेणे**ति । संकरस्याङ्गाङ्गिभावैकव्यञ्जकानुप्रवेशसन्देहभेदात् त्रिभिः प्रकारैः परस्परनिरपेक्षयैकप्रकारया संसृष्ट्या चान्योऽन्यमिश्रणे शुद्धभेदानामेव पञ्चाशतः सम्भूय वेदाश्चत्वारः, खं शून्यम्, अग्नयस्त्रयः, शराः पञ्च; एवं "चाङ्कविन्यासे वैलोम्यस्य गणितशास्त्रप्रसिद्धत्वात्" पञ्चसहस्राणि; शतत्रयं चत्वारश्च भेदाः "५३०४"। तथा हि प्रथमभेदस्य सजातीयमिश्रणे चत्वारो भेदाः; विजातीयैः पञ्चाशता प्रत्येकं ध्वनिना विमिश्रणे चत्वारो भेदाः इति मिलित्वा चतुरधिकं भेदशतद्वयं द्वितीयस्य भेदशतद्वयमेव । यदि प्रथमभेदस्य द्वितीयभेदेन सह

---

1 'चाप्यनेकधा' ( ट. ठ. पु. )

शुद्धैः शुद्धभेदैरेकपञ्चाशता योजनेनेत्यर्थः। ( श, ऊ ) ×

दिङ्मात्रं तूदाह्रियते—

अत्युन्नतस्तनयुगा तरलायताक्षी
द्वारि स्थिता तदुपयानमहोत्सवाय।

---

तद्वामेऽग्नयस्त्रयः। तद्वामे शराः पञ्च। नन्वेवमित्थमेकपञ्चाशत् चतुर्गुणेन चतुरधिकद्विशतमेव भवति। तत्कथमेतादृशी संख्येति चेन्न। एकस्यैव स्वजातीयेन एकेन स्वस्वजातीयैः पञ्चाशता च चतुर्गुणने एकस्यैव चतुरधिकद्विशतरूपत्वम्। एवं तदुत्तरस्य पूर्वेण सह चातुर्विध्यं पूर्वगणनायां प्रविष्टमित्यतः तस्य चातुर्विध्यस्य अगण्यत्वात् तस्य द्विशतरूपत्वम्। एवं तदुत्तरस्य पूर्वद्वाभ्यां चतुश्चतुर्विधत्वस्य अगण्यत्वात् चतुर्न्यूनद्विशतरूपत्वम्। एवं रीत्या चरमस्य चतुरूपत्वमात्रं गुण्यमिति अन्त्युक्तरूपा संख्या। काव्यप्रकाशे तु दर्शितक्रमेण क्रमशो ह्रासमविचार्य्य सर्वेषामेव चतुरधिकद्विशतरूपत्वेन एकपञ्चाशत एव तादृशसंख्यात्वेन 'वेदखाग्निवियच्चन्द्राः' इत्येवं संख्या एव उत्सर्गसिद्धा दर्शिताः। वस्तुतस्तु अत्यन्तविचारे वेदखाग्निशररूपा या संख्या ग्रन्थकृता दर्शिता साऽपि न सम्भवति। तथा हि एकपञ्चाशत एव उक्तचातुर्विध्यं न सम्भवति, पदैकदेशपदव्यङ्ग्ययोः पदवाक्यव्यङ्ग्ययोश्च शब्दशक्त्युत्थव्यङ्ग्ययोरर्थान्तरसंक्रमितवाच्याऽत्यन्ततिरस्कृतवाच्यव्यङ्ग्ययोश्च एकव्यञ्जकानुप्रवेशरूपसंकराऽसम्भवात् चातुर्विध्याभावात्। एषु शुद्धैकपञ्चाशन्मीलनेन संख्यामाह—**शुद्धैरिषुबाणे**ति। व्याचष्टे—**शुद्धैरि**ति। योजनेन संस्थातुं योजनेन।

**(वि, ष) अत्युन्नते**ति—प्रवासादागच्छन्तं पतिं द्वारि स्थित्वा दृष्टवती नायिकां कस्मिंश्चिन्निवेदयतः कस्यचिदुक्तिरियम्। स्तनयुगं पूर्णकुम्भौ आयतमक्षियुगं नवनी-

---

मिश्रयणं; द्वितीयभेदस्य प्रथमभेदेन सह तत्तदेवोति। द्वितीयभेदे प्रथमभेदापेक्षया चत्वारो भेदाः पातनीयाः। एवं तृतीयेऽष्टौ चतुर्थे द्वादश इति क्रमेणान्येषामपि स्वकीयाद्यभेदापेक्षया सर्वेषां भेदचतुष्टयपातनम्। **शुद्धैरि**ति। इषवः पञ्चबाणाः; पञ्च अग्नयः त्रयः सायकाः पञ्च एवं पञ्चसहस्राणि शतत्रयं पञ्चाशत् पञ्च च; "५३५५"

× अत्र अग्रिमाग्रिमभेदस्य योजने एकैकभेदह्रासात् एवं प्रकारेण एवं योजनं भवति।

"एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु।
समार्द्धेनासमो गुण्यः एतत् संकलितं लघु॥"

इत्युक्तदिशा द्विपञ्चाशदर्द्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत्। तथा ( ५१×२ ) ÷२=२६। ५१×२६=१३२६ संख्या जायन्ते। तेषु चतुर्भिर्गुणितेषु ( १३२६=४=५३०४ पञ्चसहस्राणि चतुरधिकं शतत्रयं संकीर्णभेदाः।

सा पूर्णकुम्भनवनीरजतोरणस्रक्[1]-
सम्भारमङ्गलमयत्नकृतं विधत्ते ॥ ( ५ ) +

अत्र स्तनावेव पूर्णकुम्भौ, दृष्टय एव नवनीरजस्रज इति रूपकध्वनि-रसध्वन्योरेकाश्रयानुप्रवेशः सङ्करः ।

धिन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि
धूताध्वनीनहृदयानि मधोर्दिनानि ।

---

रजतोरणस्रक्सम्भारः । **रसध्वन्यो**रिति-एतत् वाक्यव्यङ्ग्यत्वात् शृङ्गारस्य । ध्वनिपदमत्र व्यङ्ग्यरसपरम् । एकाश्रय एतत् वाक्यम् ।

( **वि, स** ) ध्वन्योः संसृष्टिमाह-**धिन्वन्त्यमूनि** इति । अमूनि मधोर्दिनानि धिन्वन्ति लोकान् प्रीणयन्ति । कीदृशानि-मदेन मूर्च्छन् वर्द्धमानः अलिध्वनिर्येषु । तथा निस्तन्द्र उन्निद्रः चन्द्रः तादृशवदनायाः यद् वदनारविन्दं तस्य सौरभ्यं सौगन्ध्यं तस्य सौहृदेन संपर्केण सगर्वाः समीरणा यत्र तादृशानि । अत्रेति चन्द्रस्य निद्राभावात् तन्द्रापदस्याप्रकाशे लक्षणा समीरणस्योत्कृष्टत्वं तद्व्यङ्ग्यम्, तथा समीरणस्य गर्वाभावात् उत्कृष्टे लक्षणा सुखस्पर्शत्वं तद्व्यङ्ग्यम् । एषां व्यङ्ग्यानां त्रिविधसंकराभावात् एकपदसंस्थितिरूपा संसृष्टिः । तदाह-**निस्तन्द्रे**त्यादीति । इदमुपलक्षणम् । अलिध्वनिचन्द्रसमीरणैः कामोद्दीपकैः व्यङ्ग्यस्य शृङ्गारस्य अप्यत्र प्रतीतिरित्यतस्तस्य चन्द्रोज्ज्वलत्वेन समीरणोत्कृष्टत्वेन तस्य सुखस्पर्शत्वेन च लक्षणा-मूलकव्यङ्ग्ये न प्रकर्षणादनुग्राह्यानुग्राहकभावरूपसंकरोप्यत्रैव श्लोके बोध्यः । संशयास्पदरूपसङ्करश्चात्र नोदाहृतः । तदुदाहरणं च काव्यप्रकाशकृता दत्तमन्वेष्टव्यम् । यथा-

खणपाहुणिआ देअर जाआए किं पिदे भणिआ ।
रुअइ पडाहेपिलहीधरम्मि अणुणिज्वउ वाराई ॥'' इति ।

---

( **लो, ऋ** ) **धिन्वन्ती**ति—धिन्वन्ति प्रीणयन्ति । अध्वनीनाः पथिकाः निस्तन्द्रसौहृदसगर्वशब्दा निर्मलाद्यभावप्रौढरूपार्थपर्य्यवसानादत्यन्ततिरस्कृतवाच्याः ।

---

+ अत्युन्नतं स्तनयुगं यस्याः सा । तरले आयते दीर्घे च अक्षिणी यस्याः सा । सा नायिका द्वारि द्वारे स्थिता सती तदुपयानमहोत्सवाय तस्य नायकस्य उपयानम् आगमनमेव महोत्सवः तस्मै अयत्नकृतम् अनायासेनैव विहितम् । पूर्णकुम्भो नवनीरजानां तोरणस्रजः तोरणमालाः तेषां सम्भार एव आयोजनमेव मङ्गलं तद्विधत्ते करोति यथा महोत्सवकाले पूर्णकुम्भौ द्वारपार्श्वे स्थापयन्ति तोरणं च माल्यादिना भूषयन्ति, तद्वत् सा नायकागमनमहोत्सवे स्तनरूपकुम्भद्वयं स्थापितवती चक्षुरूपनवनीरजैः तोरणस्रक् सम्भारं विहितवती ।

1 'श्री' ( घ. पु. ) 2 'दृष्टय एव नीरजतोरणस्रजः' ( ख. पु. )

निस्तन्द्रचन्द्रवदनावदनारविन्द–
सौरभ्यसौहृदसगर्वसमीरणानि ॥ (स, ऋ)

अत्र निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां संसृष्टिः ।

अथ गुणीभूतव्यङ्ग्यम्—

**अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये ॥ १६ ॥**

अपरं काव्यम् । अनुत्तमत्वं न्यूनतया साम्येन च सम्भवति ।

**तत्र स्यादितराङ्गं[1] काक्वाक्षिप्तं च वाच्यसिद्धयङ्गम्[2] ।**
**संदिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढम् ।**
**व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ ॥ १७ ॥ (ह, ऋ) ***

---

क्षणप्राघुणिका देवर जायया किमपि ते भणिता ।
रोदिति पश्चाद् भागवलभीगृहे-अनुनीयतां वराकी ॥ इति संस्कृतम् ।

गृहपतिप्रसक्तामुपनायिकामुत्सवे तद्गृहागतां तत्पत्न्या भर्त्सितां पश्चात् गृहे रुदतीमनुनेतुं गृहपतिज्येष्ठभ्रातृपत्न्याः सोपहासोक्तिरियम् । अत्र क्षण उत्सवस्तत्र प्राघुणिका अभ्यागता उत्सवागतेत्यर्थः । तद्देवर सा ते तव जायया किमप्यप्रियं भणिता सती पश्चाद् वलभीगृहे रोदितीति । तादृशी वराकी दुःखिता अनुनीयतामित्यर्थः । भवता इति शेषः । अत्र च अनुनयो वाच्यार्थः । तद्व्यङ्ग्य उपभोग इति । अयं किं स्वतःसम्भविवस्तुव्यङ्ग्यवस्तुध्वनिः किंवा अनुनयपदे उपभोगलक्षणा; तद्व्यङ्ग्य तस्याः दुःखापसारणमित्ययमर्थान्तरसंक्रमितवाच्यलक्षणा मूलध्वनिरिति ध्वन्योः संशयास्पदत्वम् । एतादृशव्यङ्ग्योपयोगाय पश्चाद्गृहमुक्तं निर्जनत्वात् ।

**( वि, ह )** गुणीभूतव्यङ्ग्यकाव्यमाह–**अथेति** । **काव्यमनुत्तमत्वमिति** । व्यङ्ग्यानुत्तमत्वेन काव्याऽनुत्तमत्वम् । **भेदास्तस्योदिता** इति—तस्य गुणीभूत-व्यङ्ग्यकाव्यस्य एवमष्टविधव्यङ्ग्यभेदात् तस्याऽष्टौ भेदा उदिता इत्यर्थः ।

---

**( लो, ऋ )** एवं ध्वन्याख्यं काव्यस्य भेदं निरूप्य गुणीभूतव्यङ्ग्यमवतारयति **अथेति—तत्र स्यादिति**—काक्वा आक्षिप्तं वाच्यवत् स्फुटीकृतम् । वाच्यसिद्धेरङ्गं कारणम् । अस्फुटं सहृदयानामपि क्लेशप्रत्येयम् । एवं पूर्वव्यङ्ग्याद्भेदः । असुन्दरं वाच्यापकृष्टचमत्कारकम् । व्यङ्ग्यमिति प्रतिपदमन्वयः । भेदाः विशेषाः ।

---

* **तत्र स्यादिति**—इतरस्य वाक्यार्थीभूतस्य वाक्यतात्पर्यविषयतया प्रधानस्य अङ्गमुपकारकम् । काक्वाक्षिप्तं काकुर्ध्वनेर्विकारः तया आक्षिप्तम् झटिति प्रकाशितं, यया काक्वा विना वाक्यार्थ एव नात्मानं लभते तया प्रकाश्यमित्यर्थः । वाच्यसिद्धयङ्गं वाच्यस्य वाच्यार्थस्य सिद्धिः विश्रान्तिः तत्र अङ्गं, निदानं वाच्यस्य सिद्धिरेव यदधीनेत्यर्थः । संदिग्धप्राधान्यं संदिग्धं चमत्कारजनने वाच्यव्यङ्ग्ययोः सन्देह-

[1] 'अपराङ्गं' ( घ. च. पु. ) [2] 'सिद्ध्यंग्यं' ( घ. च. पु. )

**इतरस्य रसादेरङ्गं रसादि**[1] ।

यथा—

> **अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।**
> **नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥** ( क, लृ ) *

**अत्र शृङ्गारः करुणस्याङ्गम् ।**

---

( **वि, क** ) रसादेरङ्गं रसादि इत्युभयत्र आदिपदात् भावाद्यङ्गताऽपि रसादेः, एवं वाच्याङ्गत्वमपि वस्त्वलङ्कारयोरित्युक्तम् । **अयं स** इति—भूरिश्रवसः समरपतितं हस्तमादाय रुदत्यास्तत्पत्न्या उक्तिरियम् । **अत्रेति**—रसोत्कर्षणादिना व्यङ्ग्यः शृङ्गारः मृतालम्बनकत्वेन रसतामनापन्नो मृतालम्बनकस्य करुणस्याङ्गम् । रसतापन्नस्य तस्य शृङ्गारेण प्रकर्षणात् पूर्वानुभूतसुखस्मरणे हि करुणप्रकर्षः ।

( **लो, लृ** ) यथोद्देशमुदाजिहीर्षुरितराङ्गमिति विवृणोति, इतरस्यार्थात्, प्रधानभूतस्य रसादेः, रसशब्देनात्र भावादीनामुपग्रहः आदिशब्देन वाच्यस्याङ्गम् उत्कर्षकारि रसादि अत्रादिशब्दादनुरणनरूपम् । **अयं स** इति—इदं हि महाभारते, समरच्छिन्नं भूरिश्रवसो हस्तमादाय तत्कान्ताया विलपनम् ।

---

विषयभूतं प्राधान्यं यत्र तत्, यत्र वाच्यकृतो व्यङ्ग्यकृतो वा चमत्कार इति सन्देह इत्यर्थः । तुल्यप्राधान्यं तुल्यमर्थाद् वाच्येन समानं प्राधान्यं यत्र तत्, चमत्कारजनने वाच्यव्यङ्ग्ययोर्द्वयोरपि चमत्वेन तुल्यता बोध्या । अस्फुटं सहृदयानामपि कष्टज्ञेयम्, अगूढम् असहृदयैरपि झटिति संवेद्यम्, अतः स्फुटतया वाच्यसदृशम् । तदेतदुक्तम्—

> "नान्ध्रीपयोधर इवातितरां प्रकाशो
> नो गुर्जरीकुच इवातितरां निगूढः ।
> अर्थो गिरामपि हितः पिहितश्च कश्चित्
> सौभाग्यमेति मरहट्टवधूकुचाग्रः ॥"

तस्माद् गूढं सहृदयमात्रवेद्यं व्यङ्ग्यं ध्वनिरेव । असुन्दरं स्वभावादेव वाच्यापेक्षयाऽचारु ।

* सः पूर्वानुभूततत्तच्छृङ्गारवस्तु अयं दृश्यमानदुरवस्थः ( पूर्वानुभूतावस्थां विशेषणैराह ) उत्कर्षतीति उत्कर्षी "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिप्रत्ययः । रशनायाः काञ्च्या उत्कर्षी । पीनयोः पृथुलयोः स्तनयोः विमर्दनः विमर्दनकारी । नाभेः उर्वोः जघनस्य च स्पर्शी । नीव्याः नाभितलवसनग्रन्थेः विस्रंसनः मोचकः । **अत्रेति**—शृङ्गारः नायिकाविषयः नायकाश्रयः । करुणस्य नायिकाश्रयस्य अङ्गम् । अत्र करुणमादाय अस्य काव्यस्य ध्वनित्वम् । शृङ्गारस्थायिनमादाय गुणीभूतव्यङ्ग्यत्वं बोध्यम् ।

1 ततः, 'व्यङ्ग्यम्' इत्यधिकः पाठः ( क. ख. पु. ) ।

मानोन्नतां प्रणयिनीमनुनेतुकाम-
स्त्वत्सैन्यसागररवोद्गतकर्णतापः ।
हा हा कथं नु भवतो रिपुराजधानी-
प्रासादसन्ततिषु तिष्ठति कामिलोकः ॥ ( ख ) +

अत्रौत्सुक्यत्राससन्धिसंस्कृतस्य करुणस्य राजविषयरतावङ्गभावः ।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।

---

( **वि, ख** ) भावस्याङ्गं करुणमाह—**मानोन्नतामि**ति । उन्नतमानामित्यर्थः । हाहेति त्रासविज्ञातुर्वक्तुस्तद्विषयकशोकः । भवतो रिपुराजधानीप्रसादसन्ततिषु कथं कामिलोकस्तिष्ठति इति अन्वयः । अत्रेति औत्सुक्यं मानिन्यनुनयकामनया व्यङ्ग्यम्,। तद्विरुद्धः त्रासः यथोक्तकर्णतापपदव्यङ्ग्य इत्यनयोः सिद्धिः । तादृश-सन्धिविशिष्टानां रिपुराजधानीकामिलोकानां शोच्यावस्थाज्ञातुर्वक्तुः शोकरूपः करुणो राजविषयरतिभावस्याङ्गमित्यर्थः । अत्र च हाहाशब्दः क्रोधव्यञ्जक-हुङ्कारवन्निरर्थकः । शोकव्यञ्जक इति ग्रन्थकृतोऽभिप्रायः तदेव व्यङ्ग्यभूतस्य हाहाशब्दप्रतिपाद्यस्य शोकरूपकरुणस्य व्यङ्ग्यत्वोपपत्तेः । हाहाशब्दस्य वाच्य एव शोकरूपः करुणः । हाहेत्युक्ते शोचामीति प्रतीत्या तद्वाच्यतासिद्धेः । अन्यथा गोशब्दस्यापि गौर्न वाच्यः स्यात् । अतो ग्रन्थकृतः छिद्रमेवात्र ।

( **वि, ग** ) वाच्यार्थस्याऽङ्गं सादृश्यरूपं वस्त्वाह—**जनस्थान** इति । दरिद्रस्योक्तिरियम् । मया रामत्वं प्राप्तं रामसदृशोऽहं जात इत्यर्थः । शब्दात्मकं सादृश्यमाह—**जनस्थान** इति । मया कनकरूपया मृगतृष्णाया मरीचिकयाऽन्धितधिया जनानां स्थाने भ्रान्तम् असारे संसारे कनकस्यापि तुच्छत्वेन तस्योपादेयत्वभ्रमजनकत्वादु-पादेयजलभ्रमकनकमृगतृष्णयाऽन्धितधिया भ्रान्तम् । मया वै इति सम्बोध्य प्रतिपदं

---

( **लो, ए** ) अङ्गपरिपोषकत्वाद् वाच्याङ्गभूतमनुरणनरूपं शब्दशक्तिमूलमुदा-हरति-एवं च रसभावादेरङ्गं रसभावादि, वाच्यस्य चानुरणनरूपं व्यङ्ग्यमिति द्विधेत्यर्थः । **जनस्थान** इति । जनस्थानं—नगरग्रामादि, दण्डकारण्यं च । कनकं प्रति मृगतृष्णा विफलाशा, कनकमृगे तृष्णा च वै निश्चितं देहि प्रयच्छ विदेहजा सीता च । अलं

---

+ हे राजन् ! भवतः रिपुराजधान्याः प्रासादसन्ततिषु अट्टालिकासमूहेषु मानो-न्नताम् अतिमानवतीं प्रणयिनीं प्रियाम् अनुनेतुकामः प्रसादयितुमिच्छुः कामिलोकः तव सैन्यसागरस्य रवेण आक्रमणशब्देन उद्गतः ज्ञातः कर्णयोः तापः पीडा यस्य सः तादृशः सन् कथं नु तत्र तिष्ठति ?

कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ ( ग, ए )

अत्र रामत्वं प्राप्तमित्यवचनेऽपि शब्दशक्तेरेव [1]रामत्वमवगम्यते। वचने[2] तु सादृश्यहेतुकतादात्म्यारोपणमाविष्कुर्वता तद्गोपनमपाकृतम्। तेन[3] वाच्यं

---

स्थाने २ देहीति वचः। मया भर्त्तुः ईश्वरस्य परिपाटीषु परिचर्य्यासु अलमित्यर्थका घटना न कृता तद्वत् रामेणाऽपि लङ्काभर्त्तुः रावणस्य वदनानां मुखानां परिपाट्यां परिपाटनस्य निमित्तमिषुघटना कृता। किन्तु कुशलं दारिद्र्यापनायकं वसु धनं यस्य तादृशता तु मया न प्राप्ता। अत्र तुशब्देन रामवाक्छेदात् रामेण तु कुशलवसुता प्राप्ता इत्यर्थः प्रतीयते—तत्र च कुशलवौ सुतौ यस्यास्तादृशी सीतेत्यर्थः।

( वि, घ ) अत्र विषादाधिक्यव्यञ्जकया कुशलवसुताऽप्राप्त्या प्राप्ततत्कात् रामात् उपमानाद् वैलक्षण्यरूपो व्यतिरेकालङ्कारः नञो वाच्यः। तत्प्रकर्षकतया रामसादृश्यं व्यङ्ग्यम्। तदङ्गमिति मनसिकृत्य व्यङ्ग्यस्य सादृश्यस्य अगूढत्वात् गुणीभूतत्वमुपपादयितुमाह—**अत्र रामत्वमि**ति। अवचनेऽपीति अनुक्तावपीत्यर्थः। **वचने तु** इति। तदुक्तौ इत्यर्थः। तादात्म्यारोपणं रामत्वप्राप्त्या रामतादात्म्यारोपम्। तदारोपश्च सादृश्यमूलकः इत्याह—**सादृश्यहेतुरि**ति—आविष्कुर्वता वक्त्रा तद् गोपनं ध्वनित्वहेतुतद्गूढत्वम्। तद्गोपनात् सादृश्यस्य गुणीभूतत्वमुपपादितम्। यद्यपि एकशब्दरूपं सादृश्यं श्रोत्रग्राह्यमेव न तु वाक्यं, व्यङ्ग्यस्यैव च गुणीभूतत्वे गुणीभूतव्यङ्ग्यं भवति। तथापि शब्दस्य सादृश्यत्वेन रूपेण व्यङ्ग्यत्वमेव न श्रोत्रग्राह्यत्वम्। तथा च तस्याऽपराङ्गत्वमुपपादयति—**तेन वाच्यमि**ति—व्यङ्ग्यमित्यर्थः। न च तद् गोप-

---

व्यर्थम्। काभर्त्तुः कुत्सितस्वामिनः यद् वदनं तस्य परिपाटीषु परम्परासु लङ्काभर्त्तुः रावणस्य वदनानां मुखानां परिपाट्यां पङ्क्तौ इषुघटना शरयोगश्च। कुशलम् आयतिशुद्धं वसु धनं यस्य एवंभूतता, कुशलवौ सुतौ यस्याः सा सीता च।

( लो, ऐ ) **अत्रे**ति वचने तु रामोऽस्मीत्युक्त्वा पुनः सादृश्यहेतुकतादात्म्यारोपणं जनस्थान इत्यादि वचनप्रतिपादनेनाऽपि लभ्यम्। तद्गोपनं व्यङ्ग्यभूतरामतादात्म्यारोपस्य गोपनम्। वाच्यं मयाप्तं रामत्वमिति पदाभिधेयम्। सादृश्यस्य व्यङ्ग्यतो व्यङ्ग्यत्वेऽपि स्फुटप्रतिभासने वाच्यत्वमुक्तम्। व्यङ्ग्यमिति पाठे तु सुगमा एव व्याख्या। सादृश्यं रामेण सहेत्यर्थः। वाक्यं जनस्थान इत्यादि। एवमर्थशक्तिमूलानुरणनरूपस्य व्यङ्ग्यस्याऽपि व्यङ्ग्यत्वे उदाहार्य्यम्।

---

1 'रामसदृशत्वमव—' ( च. छ. पु. ) 2 वचनेन (क. ख. पु.)
3 'तेनावाच्यं' ( ज. झ. पु. )

साट्टश्यं वाक्यार्थान्वयोपपादकतयाङ्गतां नीतम् । ( घ, ऐ ) ❀

काक्वाक्षिप्तं यथा—

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥

---

नात् अगूढरूपगुणीभूतव्यङ्ग्यप्रभेद एवायमिति वाच्यम् । तथात्वेऽपि अपराङ्गतानपायात् । वाच्यार्थो रामव्यतिरेको नञो वाच्यः, तत्प्रकर्षान्वयोपपादकतया इत्यर्थः । न तु रामव्यतिरेकस्यान्वयनिष्पादकतया अबाधितत्वेन तद् विनापि तन्निष्पत्तेः । प्रकर्षद्वाराऽपराङ्गत्वाच्च । ननूपमानापेक्षया उपमेयस्याधिक्यं व्यतिरेकालङ्कारः । स च साट्टश्यहेतुकोपमानत्वघटित एव । तथा च व्यतिरेकालङ्कारशरीरघटकमेव साट्टश्यम्; कथं तत्प्रकर्षकमिति चेन्न । एकविशेषणेनाऽपि तद् घटनसम्भवे बहुविशेषणसम्भवात्तत्प्रकर्षकत्वमपि लभ्यते तच्च सहृदयैकवेद्यम् ।

**( वि, ङ ) काक्वाक्षिप्तमि**ति—काक्वा उच्चारणेन शिरश्चालनसहकृतध्वनिविशेषेणाक्षिप्तम् । शाब्दबोधस्य प्राक् पदार्थविधया सहसा प्रत्यायितमित्यर्थः । **मथ्नामी**ति—दुर्योधनेन सह सन्धिकरणे प्रवृत्तं युधिष्ठिरं श्रुत्वा क्रुद्धस्य भीमस्य सहदेवं प्रत्युक्तिरियम् । भवतामित्यनेन अस्माकम् असमीहितकारित्वात् नास्माकं नृपतिरिति सूचितम् । सुयोधनमिति दुर्योधनस्यापरं नाम । कृतकौरवशतवधप्रतिज्ञस्य तत्क्रोधसत्त्वेन मथ्नामीत्युक्तिर्बाधितार्था । अतो नञः शिरश्चालनसहकृता काकुः प्रतीयते । तया व्यञ्जनया अपरनञोऽर्थोपस्थापनात् न मथ्नामीत्यर्थो लभ्यते ।

---

❀ **अत्रे**ति—श्लिष्टैकशब्दप्रतिपाद्यत्वरूपसाट्टश्यावगमात् रामेण सहोपमा इवादिशब्दभावादवाच्यत्वेन व्यङ्ग्येत्यर्थः, सा च उपमानभूताद् रामात् स्वव्यतिरेकरूपालङ्कारस्य वाच्याङ्गतां नीता न च रामत्वं प्राप्तमित्यनेन रामाभेदप्राप्तिरेव प्रतीयते इति रूपकमेवेदमिति वाच्यम् । समानविभक्तिकत्वाभावाद् भेदान्वयबोधस्य अशाब्दत्वात् । नच श्लेषस्याऽयं विषय इति वाच्यम् । यत्र शब्देन द्वितीयोऽर्थः साक्षात् प्रतिपाद्यते स श्लेषस्य विषयः । यत्र तु शब्दसामर्थ्यादपरोऽर्थ आक्षिप्यते नतु शब्देनोच्यते स व्यञ्जनाया एव विषयः । शब्दस्य साक्षात्प्रतिपादकं तत्रैव यत्र शब्दप्रतिपादितोऽर्थः समभिव्याहृतशब्दान्तरेण सार्द्धं विवक्षितमन्वयं लभते यथा—येन ध्वस्तमित्यादौ । प्रकृते तु प्रतिपन्नो द्वितीयोऽर्थो रामेणेत्यन्वयप्रतियोगिपदविरहेणान्वयं भजते । अतो रामेण यथा जनस्थाने भ्रान्तं मया तथा इत्यर्थो व्यञ्जनालभ्य एव ।

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यस्य निषेधस्य सहभावेनैव स्थितम् ।

( ङ, ओ ) *

दीपयन् रोदसीरन्ध्रमेष ज्वलति सर्वतः ।
प्रतापस्तव राजेन्द्र ! वैरिवंशदवानलः ॥

अत्रान्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः। प्रतापस्य दवानलत्वारोपसिद्ध्यङ्गम्।

( च )

---

तच्च मथनायोगव्यवच्छेदरूपम् । तदाह—**अत्र मथ्नाम्येवे**ति । आदिपदात् पिबाम्येव इत्यादिकं बोध्यम् । **इत्यादि व्यङ्ग्यमि**ति—इत्यादि एकदेशरूपं व्यङ्ग्यमित्येवार्थः । एवकारार्थक नञ्द्वये एकनञर्थस्यैव व्यङ्ग्यत्वात् ।

**( वि, च )** वाच्यसिद्ध्यङ्गमुदाहरति—अनुपपन्नस्य वाच्यार्थस्य यद् व्यङ्ग्या-न्वयेनैव सिद्धिः तादृशं व्यङ्ग्यं वाच्यसिद्ध्यङ्गम् । **दीपयन्नि**ति—रोदसीरन्ध्रं द्यावा-पृथिव्योरन्तरालम् । **अत्रे**ति । अन्वयस्य वैरिकुलस्य वंशपदवाच्यस्य वेणुत्वारोपण-रूपो व्यङ्ग्य इति कुलवेणुद्वयार्थकस्य वंशपदस्य प्रकरणात् कुले नियन्त्रणेन वेणो-स्तद् व्यङ्ग्यत्वेन तद्रूपणस्यापि व्यङ्ग्यत्वात् दवानलत्वारोपसिद्ध्यङ्गमिति कुले दवा-नलबाधेन वेणावेव तद् बाधात् । अत्रेदमवधेयम् । यदि प्रकरणवशात् अनेकार्थस्य वंशपदस्य प्रथमं कुलबोधकत्वम्; तदैव वेणुरूपोऽर्थो व्यङ्ग्यो भवति तदेव तु न; दवा-नलस्य कुले बाधात् । किन्तु कुलवेण्वोरुभयोरेकदा एव दवानलान्वयार्थं तात्पर्य्याद्

---

**( लो, ओ )** सहभावेनैव स्थितमित्यनेन ध्वनित्वनिरासः ।

---

* काकुः—" भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते । " भवतां नृपतिः करोत्वित्यनेन स्वाऽसम्मतिसूचिका वक्रोक्तिः । अहं समरे युद्धे कौरवाणां दुर्योधना-दीनां शतं न मथ्नामि । अत्र प्रतिज्ञातकुरुकुलक्षयस्य भीमस्य "न मथ्नामि" इत्युक्ति-र्विरुद्धेति नञा काकुः प्रतीयते । तया च काक्वा नञर्थान्तरं प्रतीयते । तेन च न मथ्नामि इति न अर्थात् मथ्नाम्येवेत्यवधारणं गम्यते ।

एवमग्रे सर्वत्र दुःशासनस्य उरस्तः हृदयात् रुधिरं रक्तं न पिबामि । सुयोधनस्य उरू सक्थियुग्मं गदया न संचूर्णयामि ! भवतां नृपतिः न तु मम नृपतिः । पणेन ग्रामपञ्चकरूपेण सन्धिं मैत्रीं करोतु इत्यर्थः । अत्र "वर्त्तमानसामीप्ये वर्त्तमानवद् वा" इति वर्त्तमानसामीप्ये लट् । **अत्रे**ति । वाच्यो यो मथनादिनिषेधस्तत्समकाल-प्रतीतिकतया स्थितमित्यर्थः । तुल्यकालतया स्थितस्य वाच्यार्थस्य व्यङ्ग्यार्थोपस्थिता-वनुपयोगात् काकुरेव नियमविशिष्ठविधिव्यञ्जिका इत्यर्थः । अतो विरोधिलक्षणाया अपि नायं विषयः मुख्यार्थबाधाद्यनुसन्धानात् प्रागेव काक्वा विवक्षितार्थोपस्थितेः । यद्यप्यगूढव्यङ्ग्यान्तःपातित्वमस्य युज्यते तथापि काकुरूपविच्छित्तिविशेषात् पृथग्गणनम् ।

वंशयोरुपस्थित्या अर्थद्वयमेव वाच्यम्। ननु वेणुरूपोऽर्थो व्यङ्ग्यस्तथा च परम्परितरूपमेवेदं वेणुत्वरूपणस्य दवानलरूपणकारणत्वात् तद् वक्ष्यति स्वयमेव—

"यत्र कस्यचिदारोपः परारोपस्य कारणम्।

तत् परम्परितम्। इति।

उदाहरिष्यति च—

"आहवे जगदुद्दण्डराजमण्डलराहवे।

श्रीनृसिंहमहीपाल! स्वस्त्यस्तु तव बाहवे॥" इति

अत्र हि राजमण्डलस्य ग्रासकरूपसम्बन्धितया राहुबाधात् बाहौ राहुरूपणमनुपपन्नमतो नृपमण्डले चन्द्रमण्डलत्वस्यारोपो बाहौ राहुरूपणकारणमिति। अत एव काव्यप्रकाशकृताऽपि सद्वंशमुक्तामणिरित्यत्र राज्ञो मुक्तामणयारोपणस्य सत्कुले बाधात् सत्कुले सह वेणुरोपणं तत्कारणमित्युक्तम्। अतो दीपयन् रोदसीरन्ध्रमित्यादिकं परम्परितरूपकोदाहरणमेव, न वाच्यसिद्धयङ्गोदाहरणम्। अन्यथा स्वोक्तेः काव्यप्रकाशकृदुक्तेश्च विरोधापत्तेः। न हि दीपयन् इत्यादौ आहवे जगदुद्दण्डेत्यादौ च एकस्य वाच्यसिद्धयङ्गत्वमन्यस्य परम्परितरूपकत्वमित्यत्र विनिगमकं नास्ति। वाच्यसिद्धयङ्गोदाहरणं तु—

"गच्छाम्यच्युत! दर्शनेन भवतः किं तृप्तिरुत्पद्यते

किन्त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा।

इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-

माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः॥"

इति काव्यप्रकाशकृद्भिर्दत्तमेवान्वेष्टव्यम्। तथा हि इत्यामन्त्रणेत्यादिर्वाच्यार्थः। पूर्वार्द्धामन्त्रणेत्यादिवाक्यार्थस्य अप्रतीतिकाले असिद्धेस्तद्-व्यङ्ग्यार्थस्य हे अच्युत! मद्विधनायिकादर्शनेनाऽपि धैर्य्यच्युतरहित इत्येवंविधायाः भङ्ग्याः प्रतीत्यैव सिध्यति। न च नृपमण्डले चन्द्रमण्डलारोपणमपि व्यङ्ग्यं सदेवालङ्कारः। तथा च परम्परितरूपकालङ्कारवाच्यसिद्धयङ्गयोः संकर एवेति वाच्यम्। व्यङ्ग्यत्वेऽलङ्कारत्वाभावस्य ब्राह्मणश्रमणेत्यादिना एव उक्तत्वात्। प्रथमं नृपमण्डले राहोरन्वयासम्भावेन राजमण्डलपदादेकदैव नृपचन्द्रमण्डलयोः उपस्थित्या द्वयोरपि वाच्यत्वाच्च। ननु तत्कथम्—

"भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्।

मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्।"

इत्यत्र विशेषजले रूपितं हलाहलं व्यङ्ग्यं भुजगरूपणसिद्धिकृदित्युक्त्या हलाहलस्य व्यङ्ग्यत्वमुक्त्वा काव्यप्रकाशकृता वाच्यसिद्धयङ्गोदाहरणत्वेन तदुक्तमिति चेन्न। तत्र उद्दीपकतया प्राकरणिकमनेकार्थस्य विषशब्दस्यार्थो जलम् इत्यतोऽप्राकरणिकं हलाहलं व्यङ्ग्यमित्युक्तम्। न च दीपयन्नित्यत्रापि प्राकरणिकत्वेन वंशपदार्थकुलवाच्यं

(ल, ओ) यच्चोक्तं तेनैव, "यत्र यत्रैवंविधानां विभावानुभावसात्त्विकसंचारिणा-मभिधानमभिनयो वा तत्र तत्र शृङ्गारादिरसाविर्भावः" इति सुग्रहैव व्याप्तिः पक्षधर्मता च। (व, ओ) *

तथा—

"यार्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम्[1]।
सैवानुमितिपक्षे नो गमकत्वेन संमता॥" इति (श, अ)

इदमपि नो न विरुद्धम्। नह्येवंविधा प्रतीतिरास्वाद्यत्वेनास्माकमभिमता,

(वि, व) व्याप्तिविवेककारेण सम्बन्धविशेषणविभावादीनां यथोक्तानन्दरूप-सव्याप्यता पक्षधर्मता च साध्यते, दूषयितुं तदप्युत्थापयति—**यच्चोक्तमि**ति। **सात्त्विकसंचारिणामि**ति—शृङ्गाररसानुमित्यभिप्रायेणोक्तम्, तेषां शृङ्गाररसस्यैव व्याप्यत्वात्। क्वचित्तु विभावानुभावसंचारिणामित्येव पाठो न सात्त्विकेत्यादिः। अभिधानं वाचकः शब्दः, अभिधेयो नाट्यम्, तद्व्यञ्जिका क्रिया, तदुभयमपि स्वविषय-बोधाश्रयतासम्बन्धेन रसाश्रयसामाजिकवृत्तिरिति व्याप्तिः। पक्षधर्मता च सुग्रहेत्यर्थः।

(वि, श) अस्मिन्नेतस्य कारिकामाह—**यार्थान्तरे**ति। अर्थान्तरस्य रसस्याभिव्यक्तौ आस्वादने निबन्धनकारणं वो युष्माकं या सामग्रीष्टा सैव विभावादिरूपा सामग्री नोऽस्माकं मते गमकत्वेन अनुमापकत्वेन सम्मतेत्यर्थः।

(वि, ष) दूषयति—**इदमपी**ति। अनुमितिर्हि न स्वप्रकाशानन्दरूपा इत्यर्थः। निर्भरस्तद्रूपः, तादृश एव सिषाधयिषित इत्यर्थः। सिषाधयिषितत्वं चात्र इच्छा-

(लो, ओ) अत्र महिमभट्टदर्शितां व्याप्तिं दूषयित्वा व्याप्तिग्रहणाभावं द्रढयति—**यच्चे**त्यादि। **पक्षधर्मते**त्यन्तेन। तस्मादतः शृङ्गाररसाविर्भाव इति रूपः।

(लो, अ) भवद्भिरेवंविधा व्याप्तिरन्वेष्टव्येत्यत आह—**यार्थे**ति। अर्थान्तराभिव्यक्तौ या सामग्री कारणम् इष्टा सैवास्माकमनुमितौ लिङ्गमित्यर्थः। सामग्रीभावेऽपि हि व्यङ्ग्यार्थप्रतिपत्तौ यतः कुतश्चिदपि यदेव तदेव प्रतीयते। एवं व्यङ्ग्यस्य प्रकाशने लिङ्गमवश्यमन्वेष्टव्यम्। तस्य व्याप्तिग्रहणं विना आभासतैव स्यादिति भवतामपि व्याप्तिग्रहणं विना व्यङ्ग्यज्ञानं न सम्भवतीति भावः। सम्मतेत्यत्रेति-पदस्य यच्चोक्तमित्यत्र सम्बन्धः।

(लो, आ) सिद्धान्तमाह—**इदमपी**ति। इदं महिमभट्टस्य समनन्तरोक्तम्।

* संदिग्धसाध्यधर्मा पक्षः, तस्य धर्मता पक्षधर्मता। काव्यमात्रं पक्षः तद्वृत्तित्वं विभावाद्यभिधानस्यास्तीति पक्षधर्मता। व्याप्त्या सामान्यसिद्धिः पक्षधर्मतया विशेषसिद्धिः यथा वह्निमान् धूमादित्यत्र व्याप्त्या सामान्यसिद्धिः पक्षधर्मतया पर्वते वह्निमत्त्वादिविशेषसिद्धिः।

1 निबन्धिनी।

किन्तु स्वप्रकाशमात्रविश्रान्तः सान्द्रानन्दनिर्भरः। तेनात्र सिषाधयिषितादर्था-दर्थान्तरस्य साधनाद्धेतोराभासता। ( ष आ )

यच्च, " भम धम्मिअ-" इत्यादौ प्रतीयमानं वस्तु,

जलकेलितरलकरतलमुक्तपुनःपिहितराधिकावदनः।
जगदवतु कोकयूनोर्विघटनसङ्घटनकौतुकी कृष्णः॥

इत्यादौ च रूपकालङ्कारादयोऽनुमेया एव। ( स, इ )

---

विषयत्वमात्रम्, न तु अनुमितत्वम्. रसेऽनुमित्यभावात्। आभासता असिद्ध-साधनरूपाभासता। इदं दूषणं सौलभ्यादेवोक्तम्। वस्तुतस्तु सामाजिके साक्षात्-क्रियमाणः स्वप्रकाशानन्दोऽनुमीयत एव न, अनुमित्याभावात्, न हि तस्य नियम-तोऽनुमितिः भवति, रसबोधस्तु नियमत एव। तथा ज्ञातविभावादिरूपा सामग्री रसाबोद्धुर्जनस्याप्यस्तीति व्यभिचारश्चेति बोध्यम्।

**( वि, स )** यत्र वस्तुनोऽलङ्कारस्य वा व्यञ्जना तत्र वस्त्वलङ्कारौ अनुमान-गम्यौ एवेति नैयायिकमतं दूषयितुमुत्थापयति—**यच्चे**ति। यच्च पर्यवस्यतीति दूरेन्वयः। उक्तमिति तस्य शेषः। तथा च यच्च पर्यवस्यतीत्युक्तमित्यर्थः। प्रतीयमानं वस्तु, अभ्र-मणम्। अलङ्कारव्यञ्जनास्थलं दर्शयति—**जलकेली**ति। जलकेलौ श्रीकृष्णेन स्वीय-करदत्तजलेन राधिकामुखचन्द्रं पुनः पुनरभिषिच्य स्वीयकरेण पिधीयते च मुच्यते च। ततस्तादृशचन्द्रस्य पिधानमोचनाभ्यां कोकमिथुनस्य संघटनविघटने भवतः। पिधाने रात्रौ विरहिणस्तस्य प्रातःकालभ्रमात् संघटनम्, मोचने चन्द्रोदय-विशिष्टसन्ध्याकालभ्रमाद् विघटनम्। कृष्णस्य तादृशकौतुकवर्णनमिदम्। पिधानमोचने कृष्णस्यैव करेण नतु राधिकायाः, तत्करस्य जलकेलितरलत्वे कृष्णमुखस्यैव सिच्यमानत्वस-म्भवेन स्वमुखस्य पिधानाऽयोगात्। यद् वा—राधिकाकरेण पिधानमोचनयोरपि जलसेक-द्वारा कृष्णकरप्रयोज्यत्वात्तद्द्वारा कृष्णकरेणैव पिधानमोचने। **इत्यादौ रूपकादय** इति। अत्र श्लोके मुखे चन्द्ररूपणम् आदिपदद्वयात् श्लोकान्तरे अलङ्कारान्तरमित्यर्थः।

---

सिषाधयिषितोऽर्थो रसादेरनुमानान्तर्भावः। साधितमर्थान्तरम्। तत्र काव्ये शृङ्गारा-दिरस इत्यादिज्ञानस्याऽनुमेयत्वम्।

**( लो, इ )** एवं रसादेरनुमानागोचरत्वं व्यवस्थाप्य वस्त्वलङ्कारयोरपि व्यङ्ग्य-योस्तद्दर्शयति—**यच्चे**ति। चः पूर्वोक्तसमुच्चये। पर्यवस्यतीत्यत्र दूरस्थितेन इतिशब्देन सम्बन्धः। यदुक्तं महिमभट्टेन तदप्ययुक्तमित्यर्थः। किमुक्तमित्याह—**जलकेलीत्या**दि। जलकेलीत्यादौ रूपकालङ्कारः। राधिकामुखस्य चन्द्रत्वस्य व्यङ्ग्यत्वाच्चन्द्रदर्श-नादर्शनाभ्यां हि रात्रिसद्भावाभावबुद्ध्या चक्रवाकयोर्विघनसंघटने भवतः।

तथा हि—

अनुमानं नाम पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टाल्लिङ्गाल्लिङ्गिनि[1] ज्ञानम्[2]। ( ह, ई, ) *

ततश्च[3] वाच्यादसंबद्धोऽर्थस्तावन्न प्रतीयते, अन्यथातिप्रसङ्गः स्यादिति + बोध्यबोधकयोरर्थयोः कश्चित्सम्बन्धोऽस्त्येव। ( क, उ )

ततश्च बोधकोऽर्थो लिङ्गम्, बोध्यश्च लिङ्गी, बोधकस्य चार्थस्य पक्षसत्त्वं निबद्धमेव। [4]पक्षसत्त्वविपक्षव्यावृत्तत्वेऽनिबद्धेऽपि सामर्थ्यादवसेये[5] तस्मा-

( वि,ह ) तत्र वस्तुरूपं व्यङ्ग्यमुपक्रम्य तस्यानुमेयतां घटयति—**तथा ही**ति। लिङ्गिनि साध्ये विषये ज्ञानम्।

( वि, क ) लिङ्गस्य त्रिरूपता च साध्यव्याप्तिसत्त्वे एव सम्भवतीति। अत-स्तान् दर्शयति—**ततश्चे**ति। असम्बन्धोऽव्याप्यः। अतिप्रसङ्गाऽव्यापकस्यापि प्रती-त्यापत्तिः। कश्चित्सम्बन्धो व्याप्तिरूपः।

( वि, ख ) **बोधकस्य चार्थस्य** इति। गोदावरीतीरदेशे भीरुणा धार्मिकेण न भ्रमणीयम्, तत्र सिंहसत्त्वादित्यनुमानेन बोधकार्थः सिंहसत्त्वम्। **सामर्थ्यादि**-ति—अव्यभिचारिसहचारादित्यर्थः।

( लो, ई ) कथमनुमेय इत्याह—**तथाही**ति। नाम प्राकाश्ये। पक्षे पर्वतादौ सपक्षे महानसादौ च विपक्षे जलहृदादौ व्यावृत्तत्वम्। लिङ्गाद् व्याप्याद् धूमादेः लिङ्गिनि व्यापके वह्न्यादौ।

(लो, उ) अत्र प्रकृते, 'भ्रम धार्मिक' इत्यादौ बोध्याऽर्थो व्यङ्ग्यो बोधको वाच्यः।

* लिङ्गं व्याप्यम्, लिङ्गी तु व्यापकः। यथा धूमो लिङ्गम्, वह्निस्तु लिङ्गी। सपक्षसत्त्वविपक्षव्यावृत्तत्वेन तयोर्व्याप्तिज्ञानं भवति। धूमे लिङ्गे, सपक्षो निश्चित-साध्यधर्मा महानसादिः तत्र सत्त्वं सपक्षसत्त्वम्, विपक्षो निश्चितसाध्याभाववान् जल-हृदादिः तद्व्यावृत्तत्वं तद्रहितत्वम्। पक्षः सन्दिग्धसाध्यधर्मा पर्वतः तत्र सत्त्वम्। एतैर्विशिष्टाल्लिङ्गाद् धूमाल्लिङ्गिनि वह्निविषये ज्ञानमनुमितिरित्यर्थः।

+ यदि असम्बन्धार्थस्य प्रतीतिस्तदा यतः कुतश्चिदर्थाद् यस्य कस्याप्यर्थस्य प्रतीतिर्भवेत्: एकस्मिन् श्लोकेऽपरश्लोकस्यापि प्रतीतिः स्यादित्यतिप्रसङ्गः स्यादित्यर्थः।

1 'नो' ( क. ख. पु. ) 2 'व्यक्ति' इत्यादिः, 'लिङ्गिनि ज्ञानम्' इत्यन्तः तारांकितः पाठो ट. पु. नास्ति।

3 'वाच्यादसंबद्धो व्यङ्ग्यार्थो न प्रतीयते' तथात्वेऽतिप्रसङ्गात्। ततश्च व्यङ्ग्य व्यञ्जकभावेन संबन्धेन भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन त्रिरूपाल्लिङ्गाल्लिङ्गिनो ज्ञान मनुमानं यत्तद्रूपे पर्यवस्यति इति (च.पु.) 4 'सपक्ष' (क.ख.पु.) 5'अनुमेये'(क.पु.)

तत्र यद्वाच्यार्थाल्लिङ्गरूपाल्लिङ्गिनो व्यङ्ग्यार्थस्यावगमस्तदनुमान एव पर्यवस्यति" इति, । (ख, ऊ )

तन्न[1] । तथा ह्यत्र, 'भम धम्मिअ' इत्यादौ गृहे श्वानिवृत्त्या विहितं भ्रमणं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति इति यद्वक्तव्यं तत्र अनैकान्तिको हेतुः । ( ग,ऋ ) +

भीरोरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण च गमनस्य[2] सम्भवात् । पुंश्चल्या वचनं प्रामाणिकं न वेति सन्दिग्धासिद्धेश्च[3] । (घ,ऋ) 'जलकेलि' इत्यत्र, य आत्म-

---

**पर्यवस्यती**ति—यच्च पर्यवस्यतीत्युक्तमित्यर्थः प्रागेव व्याख्यातः ।

**( वि,ग )** दूषयितुं तदभिमतार्थमनुवदति—**तन्न तथा ही**ति । **सिंहोपलब्धे**रिति—कुलटावाक्योपलब्धसिंहादित्यर्थः । अनुमापयतीत्यत्र कुलटा कर्त्री । दूषयति—**तत्रे**ति । अनैकान्तिको व्यभिचारी ।

**( वि,घ )** व्यभिचारं ग्राहयति—**भीरोरपी**ति । प्रियानुरागः सिंहवद्देशं प्रविष्ट-प्रियानुरागः। हेतोः सन्दिग्धासिद्धिमपि दर्शयति—**पुंश्चल्या** इति । पुंश्चलीवाक्ये प्रामाण्यसन्देहात् । पक्षे गोदावरीतीरे हेतोः सिंहसत्त्वस्य सन्देहात् सन्दिग्धासिद्धिरित्यर्थः ।

**( वि, ङ )** 'जलकेलि' इत्यादौ अलङ्कारस्यानुमेयतामपि हेतोर्व्यभिचाराद् दूषयति—**जलकेलीत्यत्रे**ति । आत्मा दर्शनीयरूपः ।

**( लो, ऊ )** बोधकस्य चार्थस्य—लिङ्गरूपस्य दृप्तसिंहसद्भावस्य । पक्षे गोदावरी-तीरनिकुञ्जरूपे आश्रये सामर्थ्यादवगेय इति न खलु सपक्षसत्त्वविपक्षव्यावृत्तत्वाभावः । लिङ्गात्साध्यावगमः स्यात्—लिङ्गिनः साध्यस्य भीरोरभ्रमणरूपव्यङ्ग्यस्य ।

**( लो, ऋ )** दूषयति—**तन्ने**ति । तन्न युक्तम् । कुतो न युक्तमित्याह—**तथा ही**ति **अत्र—गृहे** इति । अयमर्थः—यस्य खलु भीरोर्गृहे श्वनिवृत्त्या भ्रमणं विहितं स कथं सिंहोपलब्धिस्थाने भ्रमिष्यति । अनैकान्तिकः साध्यव्यभिचारी ।

**( लो, ॠ )** कुतोऽनैकान्तिक इत्यत आह—**भीरोरपी**ति । प्रियानुरागेण चेत्यनन्तरं भयस्थान इति शेषः । पुंश्चल्या वचनम्—भ्रम धार्मिकेत्यादिवचनम् । किञ्च यः खलु वीरः स्पर्शादिशङ्कया शुनो बिभेति स सिंहसद्भावस्थानं प्रत्युत मृगयादिकुतूहलेन गच्छतीति दर्शनाद्विरुद्धो भ्रमणरूपसाध्यविरुद्धस्य साधनात् ।

---

+ अत्र व्यतिरेकव्याप्तिर्दर्शिता । यथा—गोदावरीतीरम् भीरुभ्रमणायोग्यं सिंह-वत्त्वाद्; यन्नैवं तन्नैवम्—यथा गृहम् । अत्रोपलभ्यमानभयकारणवत्त्वं हेतुः । यद्य-दुपलभ्यमानभयकारणवत् तत्तद्भीरुभ्रमणायोग्यम्, यथा महदरण्यम् ( अन्वयी ) यद्यन्न भीरुभ्रमणायोग्यं न तदुपलभ्यमानभयकारणवद् यथा गृहम् । ( व्यतिरेकी )

1 'तन्न' इति नास्ति (घ. पु) 2 'भ्रमणस्य' (ट.ठ.पु.) 3 'सिद्धश्च' (क.ख.पु.)

दर्शनादर्शनाभ्यां चक्रवाकविघटनसङ्घटनकारी स चन्द्र एव[1] ' इत्यनुमितिरेवाय-मिति न वाच्यम् उत्त्रासकादावनैकान्तिकत्वात् । ( ङ, लृ )

एवंविधोऽर्थ एवंविधार्थबोधक एवंविधार्थत्वात्, ' यन्नैवं तन्नैवम् ' इत्यनुमानेऽपि [2]आभासमानयोगक्षेमो हेतुः; एवंविधार्थत्वादिति हेतुना एवं-विधानिष्टार्थसाधनस्याप्युपपत्तेः । ( च, ए )

तथा यत्, "दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे इत्यादौ" नलग्र-न्थीनां स्तनलिखनम्[3], एकाकितया च स्रोतोगमनम्, तस्याः परकामुकोपभोगस्य लिङ्गिनो लिङ्गमित्युच्यते, तच्च तत्रैवाभिहितेन स्वकान्तस्नेहेनापि सम्भवतीति अनैकान्तिको हेतुः । ( छ, ऐ ) यच्च, " निःशेषच्युतचन्दनम् " इत्यादौ

---

**उत्त्रासकादावि**ति । उत्त्रासको हि आत्मनो दर्शनादर्शनाभ्यां चक्रवाकसंघटन-विघटनकारी । न चासौ चन्द्र इति व्यभिचारः । आदिपदात् सूर्यपरिग्रहः । सोऽपि तथाविधोऽपि न चन्द्रः ।

( **वि, च** ) सामान्यासिद्ध्यव्याप्त्या व्यङ्ग्यस्यानुमेयताप्रदर्शनमपि दूषयितुमाह—**एवंविधे**ति । आभासमान आभासो हेतोरुपलभ्यमानो व्यभिचारः कोकत्रासकर्त्तृत्त्वः स्वदर्शनादर्शनरूपः । एवंविधार्थत्वादितिहेतुस्तत्तुल्ययोगक्षेमस्तत्तुल्यव्यभिचारः । स हेतुः साध्याभावेन सहचरितत्वेन व्यभिचरतीत्यर्थः । तद्दर्शयति—**एवंविधार्थत्वा-दि**ति । **एवंविधानिष्टार्थस्ये**ति—तथा च एवंविधार्थव्यभिचारी हेतुरित्यर्थः ।

(**वि, छ**) श्लोकान्तरेऽपि व्यङ्ग्यान्तरस्यानुमेयतां हेतोर्व्यभिचारेण दूषयितुमाह—**तथा यद्दृष्टिमि**ति । स्रोतोगमनमित्यत्र स्रोतोगमनकथनं चेत्यर्थः । अत्रेत्थमनुमा-नम्, इयं परकामुकोपभोगेच्छावती नलग्रन्थिना स्तनदारणसम्भावनासत्त्वेऽपि स्रोतो-गमने एकाकिप्रवृत्तत्वाद् इति । ग्रन्थकृतस्तु स्तनाघातस्रोतोगमनयोः पृथक्कथनेऽपि न पृथक् हेतुद्वयम् । किन्तु हेतुविशेषणमेव तद्द्वयं बोध्यम् । हेतोर्व्यभिचारं दर्श-यति—**स्वकान्ते**ति । अपिकारात् तदुभयेनापीति बोध्यम् ।

( **वि, ज** ) निःशेषच्युतेत्यादावपि दूत्यास्तत्कामुकोपभोगस्य व्यङ्ग्यस्यानुमेयतां दूषयितुमाह—**यच्चे**ति ।

---

( **लो, लृ** ) उत्त्रासकः—यस्य करतालदानादिनोत्त्रासेन पक्षिणो न घटन्ते, तदभावे च संघटन्ते ।

( **लो, ए** ) योगक्षेम इतिकर्तव्यता आभासस्य; यथा इतिकर्तव्यता कार्यनि-ष्पादनं तथैवेवंविधार्थत्वादितिहेतोरिति भावः । कुत इत्याह—**एवमि**ति ।

( **लो, ऐ** ) इममेवाभिमतमर्थमुदाहरणेष्वपि हेत्वाभासं दर्शयन् द्रढयति—**तथे**ति । हेतुर्वाच्योऽर्थः ।

---

1 'इव' (ङ.पु.) 2 'आभाससमानयोग' (क.पु) 'इत्यसमानयोग' ( ञ. पु )
3 तनूल्लिखनम्' ( क. पु. )

[1]दूत्यास्तत्कामुकोपभोगोऽनुमीयते, तत् किं प्रतिपाद्यया[2] दूत्या? तत्कालसान्निहितैर्वान्यैः ? तत्काव्यार्थभावनया वा सहृदयैः ? ( ज )

आद्ययोर्न विवादः । तृतीये तु तथाविधाभिप्रायविरहस्थले व्यभिचारः । ( झ, ओ )

ननु वक्त्राद्यवस्थासहकृतत्वेन विशेष्यो हेतुरिति न वाच्यम् ( ञ, औ ) एवंविधव्याप्त्य[3]नुसन्धानस्याभावात् । ( ट ) किञ्च, एवंविधानां काव्यानां कविप्रतिभामात्रजन्मनां प्रामाण्यानावश्यकत्वेन सन्दिग्धासिद्धत्वं हेतोः । ( ठ, अ )

( वि, झ ) **आद्ययोर्न विवाद** इति—दूतिकर्तृकमनुमानं तावन्न सम्भवत्येव, तस्यास्तदुपभोगस्य प्रत्यक्षसिद्धत्वेन सिद्धसाधनात् । तत्काले सन्निहितजनस्तु यदि न व्यङ्ग्यबोद्धा तदा तस्यानुमानमपि नास्तीत्यतस्तत्रापि न विवादः । यदि तु व्यङ्ग्यबोद्धा तदा तृतीयपक्षे एवान्तर्भाव इत्यर्थः । सामाजिकबोधविषयस्यैव तदास्वाद्यस्य मया विचार्यत्वेन तत्रैवानुमेयत्वादनुमेयत्वविवादात् । तदनुमेयतां दूषयति—**तृतीये त्विति**। तथाविधाभिप्रायो दूत्यास्तत्कामुकोपभोगाभिप्रायः । तद्विरहेणोक्तस्य चन्दनच्यवनादेरुपभोगव्याप्यता नास्तीति तत्रैव व्यभिचार इत्यर्थः ।

( वि, ञ ) स्नानादिव्यावृत्तचन्दनच्यवनादेर्विशेषणदानेन व्यभिचाराभावोक्तिं दूषयितुमाह—**वक्त्राद्यवस्थेति** । वक्त्र्यवस्थादिरित्यर्थः । आदिपदात् स्तनाकर्षणचुम्बननखक्षतपरिग्रहः । अवस्था तु रतिक्लिष्टत्वम् । तथा च तादृशावस्थादिसहकृतत्वेन चन्दनच्यवनादिहेतुर्विशेषणीय इत्यर्थः ।

( वि, ट ) समाधत्ते—**एवंविधेति** । एवंविधविशेषणघटितव्याप्त्यनुसन्धानस्येत्यर्थः । न हि श्लोके तादृशविशेषणमस्ति । व्याप्त्यादिपदादादृशविशिष्टहेतुपरिग्रहः ।

( वि, ठ ) तत्रापि हेतोः सन्दिग्धत्वमपि दर्शयति—**किञ्चेति** । **प्रामाण्यानावश्यकत्वेनेति**—वक्त्र्या चन्दनच्यवनाद्यकथनेऽपि सम्भाव्यैव कवेस्तदुक्त्यनुवाद-

---

[ लो, ओ ] **न विवाद** इति—न खलु वयं दूत्यास्तत्कालसन्निहितानां वानुमानं निराकुर्मः । **तथाविधेति**—न खलु, ' निःशेषच्युतचन्दनम् ' इत्यादिप्रतिपादिकाया अभिप्रायः केनचिन्निश्चिततया विषयीकृत इत्यर्थः ।

( लो, औ ) **नन्विति**—वक्त्री यादृशीमवस्थां प्राप्य तथोक्तवती सावस्था हेतोर्विशेषणीकर्तव्येत्यर्थः ।

(लो, अ) **किञ्चेति**—सन्दिग्धासिद्धत्वम्—न खलु कविः सिद्धमेवार्थं वर्णयति ।

---

1 'यानि चन्दनच्यवनादीनि गमकत्वेनोपात्तानि तानि कारणान्तरादपि भवन्ति । यतः स्नानकार्यत्वेनात्रैवोक्तानि । अतो नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि ।' ( च. पु. ) 2 'प्रतिपाद्यतया' ( क. पु ) 3 '–व्याप्त्याद्यनु–'( क. ख. पु. )

**व्यक्तिवादिना चाधमपदसहायानामेवैषां पदार्थानां व्यञ्जकत्वमुक्तम्, तेन च तत्कान्तस्याधमत्वं प्रामाणिकं न वेत्यपि कथमनुमानम्। ( ड, आ॰)**

**एतेनार्थापत्तिवेद्यत्वमपि व्यङ्ग्यानामपास्तम्। अर्थापत्तेरपि पूर्वसिद्धव्याप्ति[1]-च्छायामुपजीव्यैव प्रवृत्तेः। ( ढ, इ )**

**यथा—**

**" यो जीवति स कुत्राप्यवतिष्ठते, जीवति चात्र गोष्ठ्यामविद्यमानश्चैत्रः " इत्यादि। ( ण, ई )**

---

सम्भवादित्यर्थः। कव्यनूदितवाक्यलब्धचन्दनच्यवनादिना हि सामाजिकैः सम्भोगोऽनुमातव्यः। तच्चन्दनादिकं वक्त्र्युक्तमनुक्तं वेति सन्देहात्सन्दिग्धमित्यर्थः।

**( वि, ड )** ननु व्यभिचारिणा सन्दिग्धेन वा चन्दनच्यवनादिना कथमुपभोगस्य भवन्मते व्यञ्जनापीत्यत आह—**व्यक्तिवादिना चे**ति। व्यञ्जनावादिनेत्यर्थः। फलबलेन व्यञ्जकत्वसिद्धेस्तथोक्तमित्यर्थः। न ह्यनुमान इव व्यञ्जनायामपि व्यभिचारादिकमङ्गमिति भावः। अनुमानपक्षे अधमसन्निहितप्रेषितत्वे सतीति विशेषणदानमपि न सम्भवतीत्याह—**तेन चे**ति। तेन अधमपदेन उक्तमधमत्वमित्यर्थः। इदमुपलक्षणम्। अधमत्वस्य प्रामाणिकत्वेपि तस्य दूतीगमनेच्छाराहित्ये सति तावताप्यनुमानासम्भव इत्यपि बोध्यम्।

**( वि, ढ )** व्यङ्ग्यानामर्थापत्तिवेद्यत्वमपि खण्डयति—**एतेनार्थापत्ति**रिति। व्याप्तिच्छायां व्याप्तिरीतिमव्यभिचरितसहचारमित्यर्थः।

**( वि, ण )** तादृशं सहचारं दर्शयति—**यो जीवती**ति। तमुपजीव्य प्रवृत्तामर्थापत्तिं दर्शयति—**जीवति चे**ति। तस्मादेतद्गोष्ठीभिन्नस्थलेऽस्तीत्यर्थापत्तिलभ्योऽर्थः। तथा च दर्शितोदाहरणेषु हेतोर्व्यभिचारेण व्याप्तिच्छायोपजीवनासम्भवान्नार्थापत्तिरिति भावः।

**( लो, आ )** व्यक्तिवादिना व्यञ्जनाव्यापारस्थापनार्थमुपयुक्तेन। अधमपदं न पुनस्तस्याधमस्यान्तिकमित्यत्र स्थितम्।

**( लो, इ ) एतेने**ति—एतेनानुमानहेत्वाभासदर्शनेन। कुतः ? इत्याह—**अर्थापत्तेरपी**ति। पूर्वसिद्धां—पूर्वगृहीतां व्याप्तिच्छायाम्।

**( लो, ई )** यदि खलु पूर्वं जीवतः कुत्रापि स्थानमवगच्छेत्। अर्थापत्तिस्वरूपं हि—दृष्टः श्रुतो वा अन्यथा नोपपद्यते इति, तदर्थकल्पनमर्थापत्तिरिति। तद्धट्टा विवृणवते— दृष्ट इति। प्रत्यक्षानुमानोपमानार्थापत्त्यभावलक्षणः पञ्चभिः प्रमाणैरुपलब्धः शब्दस्य च प्राधान्यख्यापनार्थं भेदेन निर्दिशति—श्रुत इति। श्रुत इति शब्दलक्षणेन ज्ञातोऽर्थोऽर्थविशेषोऽन्यथा नोपपद्यत इति। शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यत इति

---

1 'व्याप्तीच्छामुप' ( क. पु. )

किञ्च—वस्त्रविक्रयादौ तर्जनीतोलनेन दशसंख्यादिवत् सूचनाबुद्धिवेद्योऽप्ययं न भवति; सूचनाबुद्धेरपि संकेतादिलौकिकप्रमाणसापेक्षत्वेनानुमानप्रकारताङ्गीकारात्। (त, उ)

यच्च—"संस्कारजन्यत्वेन रसादिबुद्धिः स्मृतिः" इति केचित्। तत्रापि प्रत्यभिज्ञायामनैकान्तिकतया हेतोराभासता। (थ, ऊ)

"दुर्गालङ्घित—" इत्यादौ च द्वितीयार्थो नास्त्येव" इति यदुक्तं महिमभट्टेन तदनुभवसिद्धमपलपतो गजनिमीलिकैव। (द, ऋ)

---

(वि, त) सूचना नाम कश्चिद् व्यापारः कैश्चिदुच्यते तद्गम्य एव व्यङ्ग्यार्थः इति मतं दूषयितुमाह—**किञ्चे**ति। **दशसंख्यादिवदि**ति—दशसंख्यादिर्यथा तर्जन्यादितोलनाधीनसूचनाबुद्धिगम्यस्तथा व्यङ्ग्यार्थोऽपीत्यर्थः।

सूचनाप्यनुमितावन्तर्भवतीति सिद्धान्तयति—**सूचनाबुद्धेरपी**ति। अनुमानप्रकारता अनुमितिस्वरूपता। तथा च यत्राङ्गुलितोलनादौ व्यभिचारशङ्का न भवति तत्रानुमानम्। चन्दनच्यवनादौ तु व्यभिचारग्रहात् सम्भोगादिबुद्धिव्यञ्जनाधीनैवेति भावः।

(वि, थ) रसादिबुद्धेः स्मृतिरूपत्वं संस्कारजन्यत्वेनानुमन्यमानानां मतं दूषयितुमाह—**तत्रापी**ति। इदं चापातत एव; सर्वांशे संस्कारजन्यत्वस्य हेतोरव्यभिचारात्। किन्तु स्वप्रकाशानन्दस्वरूपस्य रसस्य स्मृतित्वासम्भव एव दोषः।

(वि, द) द्वितीयार्थो महेशरूपो नास्त्येवेति—बुद्धिविषयो नास्त्येवेत्यर्थः। अपलपत इत्यस्य, उपरि, इति शेषः। गजनिमीलिकाऽवज्ञा।

---

दर्शनात्। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र रात्रौ भुङ्क्ते इति वाक्यशेषः कल्प्यते। प्रभाकरगुरुस्त्वाह—दृष्टः श्रुतो वेति। लौकिकीयमनास्थोक्तिः। ततो लोकप्रसिद्धयोपलब्धिमात्रे वर्तते, न तु विकल्पप्रतिपादन इति। शब्दो हि कल्प्यतेऽर्थप्रतीत्यै विप्रकृतसाधनं तद्वरम् अर्थ एव कल्प्यतामिति। तेन भट्टमते श्रुतार्थापत्तौ, रात्रौ भुङ्क्ते। इति शब्दः कल्पते। गुरुमते तु अर्थापत्तौ रात्रिभोजनमर्थ एव। एवमत्र वाक्यविशेषः कल्प्यताम्, मैवम्। पीनो देवदत्त इत्यादौ रात्रिभोजने, जीवंश्चैत्रोऽत्र गोष्ठ्यां न विद्यत इत्यत्र कुत्राप्यवस्थाने पूर्वानुभवव्याप्तिमुपजीव्यैवार्थापत्तेः प्रवृत्तिरिति। व्यङ्ग्यानामनुमानाविषयत्वेन नार्थापत्तिविषयत्वमिति भावः। व्याप्तिश्च साहचर्यनियमः। व्याप्तिशरीरं दर्शयति—**यथे**ति।

(लो, उ) अधुना व्यङ्ग्यानामनुमानाविषयत्वेन चेष्टाप्रमाणाविषयत्वमपीत्याह—**किञ्चे**ति। अयं—व्यङ्ग्यः। संकेतादिलौकिकप्रमाणसापेक्षत्वेनेत्यनेन यत्र यत्रोर्ध्वतर्जनी तत्र तत्र दशसंख्येति पुनर्गृहीतव्याप्तिपुरस्कारवचनम्।

(लो, ऊ) स्मृतिर्न च रसादिधीः इतिकारिकापदार्थं विशदयति—**यच्चे**ति। अनैकान्तिकत्वं सोऽयं देवदत्त इत्यादिज्ञानरूपायाः प्रत्यभिज्ञाया अपि संस्कारजन्यत्वात्

(लो, ऋ) **गजनिमीलिकैवे**ति—पर्यालोचनं विनापि लोकापवादशङ्कया

[1]तदेवमनुभवसिद्धस्य तत्तद्रसादिलक्षणार्थस्य अशक्यापलापतया तत्तच्छ-ब्दाद्यन्वयव्यतिरेकानुविधायितया च अनुमानादिप्रमाणावेद्यतया च अभिधादि-वृत्तित्रयाबोध्यतया च तुरीया वृत्तिरुपास्यैवेति सिद्धम्। ( ऋ )

इयं च व्याप्त्याद्यनुसन्धानं विनापि भवतीत्यखिलं निर्मलम्। * ( लृ )

तत् किन्नामिकेयं वृत्तिरित्युच्यते—

**सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः।**
**रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः॥ ५॥**

एतच्च विविच्योक्तं रसनिरूपणप्रस्ताव इति सर्वमवदातम्। ( ध, ए )

इति साहित्यदर्पणे व्यञ्जनाव्यापारस्थापनो नाम पञ्चमः परिच्छेदः।

---

( वि, ध ) रसव्यञ्जनाया रसनेत्यपि नाम केचिदाहुरित्याह—**रसव्यक्तौ पुनरि**ति। रसवृत्तौ रसबोधकवृत्तावित्यर्थः। इत्थं व्यङ्ग्यार्थबोधस्य मानसबुद्धिरूपत्व-मात्रं न दूषितम्। तत्रायमभिप्रायः—मनसस्तावद् बाहः स्वातन्त्र्यमेव नास्ति। स्मृत्युपनयसहकारेण बोधनं तु व्यङ्ग्यार्थस्य पूर्वानुभवाभावेन स्मरणासम्भावनयैव निरस्तम्। नह्युक्तानन्दरूपो रसो दूत्यादेः कामुकसम्भोगादिरूपोऽर्थो वा पूर्वमनुभूतः। इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यकृतायां साहित्यदर्पणटीकायां पञ्चमपरिच्छेदविवरणम्।

---

मत्तगजवच्चक्षुषी निमील्य वचनमित्यर्थः।

( लो, ऋ ) एतद् विविच्योक्तमत्रैव द्वितीयपरिच्छेदे। उपसंहरति—**तदेवमि**ति।

( लो, लृ ) न च शब्दसमर्पितस्य विभावादेर्ज्ञानस्यैव रसादेर्जनकत्वात् काव्यमत्र साक्षान्न हेतुत्वेन व्याप्रियत इति वाच्यम्; स्वाङ्गमव्यवधायकमितिन्यायेन विभावाद् विभावनस्यावान्तरव्यापारीकरणेन काव्यस्यैवास्वादो भावकत्वात् यथा स्वार्थस्य ज्ञानद्वारेण तत्संसर्ग भावयतां पदानामेव करणत्वाभ्युपगमो भट्टनैयायिकादीनाम्। किञ्च सद्वारकरणम् इति न्यायेनान्तरालवर्तिव्यापारान्तरविरहादसम्भाव्यं विभावादिसंवलन-ज्ञानस्यास्वादं प्रति कारणत्वम्। नन्वेवं व्याप्त्याद्यनुसन्धानमन्तरेणाकस्माद् वाच्यार्थ-स्यावगतौ कथं नातिप्रसङ्ग इत्याशङ्क्याह—**इयं चे**ति। उत्पत्तिमन्तरेणापि अनुभव-सिद्धाया व्यङ्ग्यार्थप्रतीतेरन्यार्थोपपत्त्यैव।

( लो, ए ) व्यञ्जनाव्यापारकल्पनं श्रीश्रीमदानन्दवर्धनाचार्यस्येतिभावः। रसस्य रसनव्यापारप्रकाशत्वं स्मारयति—**रसने**ति। रसनिरूपणप्रस्तावे, सत्त्वोद्रेकाद् इत्यादि-कारिकाव्याख्यायाम्। सर्वम्—व्यञ्जनाव्यापारस्थापकं प्रमेयजातम्।

इति साहित्यदर्पणलोचने व्यञ्जनाव्यापारस्थापनो नाम पञ्चमः परिच्छेदः।

---

1 *तारकितः पाठो ( ज. भ. पु. नास्ति )

# षष्ठः परिच्छेदः

एवं ध्वनिगुणीभूतव्यङ्ग्यत्वेन काव्यस्य भेदद्वयमुक्त्वा पुनर्दृश्यश्रव्यत्वेन भेदद्वयमाह ।

**दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् । ( क, अ )**

**दृश्यं तत्राभिनेयं तद् ॥ १ ॥ ( ख, आ )**

तस्य रूपकसंज्ञाहेतुमाह—

**रूपारोपात्तु रूपकम् ॥ २ ॥ ( इ )**

तद्दृश्यं काव्यं नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते ( ग )

कोऽसावभिनय इत्याह—

**भवेदभिनयोऽवस्थानुकारः स चतुर्विधः ।**

**आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा ॥ ३ ॥ ( घ, ई )**

नटै[1] रङ्गादिभी रामयुधिष्ठिरादीनामवस्थानुकरणमभिनयः । ( ङ )

(वि, क) श्रव्यं काव्यमुक्त्वा नाट्यात्मकं दृश्यकाव्यं वक्तुमाह—**एवं ध्वनी**ति ।

( वि, ख ) अभिनेयं नाट्यम् ।

( वि, ग ) नाट्यं रूपकमिति पर्यायाद्रूपकसंज्ञाहेतुं वक्तुमाह—**तस्ये**ति । रामादिस्वरूपारोपणादिति वेशाभिनयाभ्यां तदारोपस्यानेन बोधनादित्यर्थः ।

(वि, घ) तदारोपहेतुत्वेन प्राप्तमभिनयं पृच्छति—**कोऽसावि**ति । **आहार्य** इति । आङ्गिकवाचिकौ द्वावप्याहार्यौ । सात्विकः च तेन चातुर्विध्यम् । तत्र नाट्यस्य सत्त्वानुद्रेकात् रसावेशाभावेन क्रियमाणावाहार्य्यौ । सत्वोद्रेकाद्रसावेशेन क्रियमाणौ सात्त्विकौ ।

( वि, ङ ) तच्चतुःसाधारणमभिनयलक्षणमाह—**नटैरङ्गादिभि**रिति । अङ्गं शरीरम् । आदिपदात् वचनपरिग्रहः । अवस्थास्तदीया धर्माः मनःकथावाक्य-पाण्डुत्वादिरूपवेशसाधारणाः । तस्या अनुकरणं ताद्रूप्येण प्रत्यायनम् ।

( लो, अ ) परिच्छेदसङ्गतिमाह—**एवमि**ति ।

( लो, आ ) दृश्यं दर्शनीयप्रधानम् । श्रव्यं श्रोतव्यमात्रम् । अभिनेयं नटैरङ्गादिभिरिति शेषः ।

( लो, इ ) अन्यस्य रामादेः रूपेणान्यान् नटान् रूपयतीति रूपकम् ।

( लो, ई ) अङ्गकृतः आङ्गिकः । वचसा वाचिकः । आहार्य्यं मुकुटकेयूरादि-रचना । सात्त्विकः स्तम्भस्वेदादिः ।

1 '–टैर्वागाङ्गादिभिः' ( ख. घ. च. पु. )

रूपकस्य[1] भेदानाह—

नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥ ४ ॥

किञ्च—

नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ।
संलापकं श्रीगदितं शिल्पकञ्च विलासिका ।
दुर्म्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ।
अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।
विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ॥ ५ ॥

सर्वेषां प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणाञ्च ।

[2]नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।
विलासर्द्ध्यादिगुणवद् युक्तं नानाविभूतिभिः ।
सुखदुःखसमुद्भूतिनानारसनिरन्तरम् ।
पञ्चादिका[3] दशपरास्तत्राङ्काः परिकीर्त्तिताः ।
प्रख्यातवंशो राजर्षिर्धीरोदात्तः, प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्य्य[4] निर्वहणेऽद्भुतम्[5] ।
चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः ।

---

(वि, च) दशविधं रूपकमुक्त्वाष्टादशविधरूपकमुत्कीर्त्तयति । **किञ्च नाटिके**ति । नाट्यात्मकमित्येकम् । **विना विशेषमि**ति—तदुक्तस्तत्तद्विशेष एव भेदकः । तं विहाय सर्वेषां लक्ष्म लक्षणं नाटकवदेवेत्यर्थः ।

(वि, छ) नाटकलक्षणमाह । **नाटकमि**ति—ख्यातेतिवृत्तादयः स्वयमेव व्याख्यायन्ते ।

(लो, उ) लक्ष्म वक्ष्यमाणं लक्षणम् ।

(लो, ऊ) यथोद्देशं लक्षणमाह—**नाटकमि**ति । यदुक्तं कविना । नानाविभूतिसंयुक्तमृद्धिविलासादिभिर्गुणैश्चैवेति । निर्वहणेऽन्तिमसन्धौ चत्वारः पञ्च वा

---

1 'रूपकभेदानाह'(ख.ग.पु.) 2 इतः पूर्वं, 'तत्र' इत्यधिकः पाठः (क.ख.पु.)
3 'पञ्चाधिका' (क. पु.) 4 'कार्यो' (क. ख. ज. झ. पु.) 5 'अद्भुतः' (क. ख. झ. पु.)

**गोपुच्छाग्रसमाग्रन्तु[1] बन्धनं तस्य कीर्त्तितम् ॥ ६ ॥ ( ऊ )**

ख्यातं रामायणादिप्रसिद्धं वृत्तम्—यथा रामचरितादि। सन्धयो वक्ष्यन्ते। नानाविभूतिभिर्युक्तमिति महासहायम्। सुखदुःखसमुद्भवत्त्वं[2] रामयुधिष्ठिरादिवृत्तान्तेष्वभिव्यक्तम्। राजर्षयो दुष्यन्तादयः। दिव्याः श्रीकृष्णादयः। दिव्यादिव्यो यो दिव्योऽप्यात्मनि नराभिमानी—यथा श्रीरामचन्द्रः। गोपुच्छाग्रसमाग्रमिति[3] क्रमेणाङ्काः सूक्ष्माः कर्त्तव्या इति केचित्। ( ऋ )

अन्ये त्वाहुः यथा गोपुच्छे केचिद् बाला ह्रस्वाः केचिद् दीर्घाः तथेह कानिचित् कार्य्याणि मुखसन्धौ समाप्तानि कानिचित् प्रतिमुखे। एवमन्येष्वपि कानिचित् कानिचिदिति।

**प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः।**
**भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः। ( त्र**

---

( **वि, ऋ** ) **एक एवेति**। नाटकेऽवान्तरनानारससम्भवेऽपि तदङ्गान्येव। समस्तरसनिर्वाहः शृङ्गारवीरयोरेक एव त्वङ्गी प्रधानमित्यर्थः।

( **वि, अ** ) **ख्यातं रामायणादी**ति—कार्य निर्वहणेऽद्भुतमिति यदुक्तं तत्तत्प्रकीर्णार्थसमुच्चयीकरणरूपे निर्वहणेऽद्भुतं कार्यमित्यर्थः। निर्वहणसन्धिर्हि नानास्थले प्रकीर्णार्थानां वैशिष्ट्यरूपमैकात्म्यमिति वक्ष्यते। सन्धयो वक्ष्यन्ते। तत्रैकेनैव प्रयोजनेनान्वितानां कथांशानामवान्तरैकार्थसंबन्ध इति सन्धिसामान्यलक्षणम्। तत्र च एकेनैकेनेत्यर्थः। तत्र इतिवृत्तस्योत्साहसहितबीजसमुत्पत्तिर्मुखसन्धिः। इतिवृत्तमभिनेतव्यप्रसङ्गः। बीजं तदङ्कुरः तस्यैव यत्नयुक्त उद्भेदः प्रतिमुखसन्धिः। ह्रासोन्मेषवानुद्देश्यप्राप्त्याशायुक्तः फलप्रधानोपायस्योद्भेदो गर्भसन्धिः। गर्भसन्धितोऽधिकतया उद्भिन्नो मुख्यफलोपायः शापादिना विघ्नितो विमर्षसन्धिः। बीजवतां प्रकीर्णानां सकलसन्ध्युक्तार्थानामेकार्थताप्रापणं निर्वहणसन्धिः। अयमुपसंहृतिसन्धिरित्युच्यते। एते पञ्च सन्धयः।

**महासहायमि**ति। रामादेः सुग्रीवादयो महासहायाः। नायकः प्रधानपात्रम्। पञ्चाधिकदशपरास्तत्राङ्का इत्युक्तत्वात् परिच्छेदरूपस्याङ्कस्य स्वरूपमाह—**प्रत्यक्षे**ति। **प्रत्यक्षनेत्रे**ति। अङ्क इति कीर्त्तित इत्यग्रेन्वयः।

---

इत्युपलक्षणमात्रं कार्यव्यापारिणां प्रयत्ने नाल्पत्वं विधेयम्, बहुत्वेऽभिनयदुःखावहत्वात्।

( **लो, ऋ** ) सूक्ष्माः स्वल्पाः।

( **लो, ॠ** ) कोऽसावङ्क इत्याह—**प्रत्यक्ष** इति। नेतारौ नायकौ नायिका च।

---

1 'समाङ्कं तु' ( क. पु. ) 2 'समुद्भूतत्वं' (क. ख. पु.) 3 'समाङ्क–' ( क. पु.)

विच्छिन्नावान्तरैकार्थः किञ्चित्-संलग्नबिन्दुकः ।
युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्नच ।
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् । ( लृ )
आवश्यकानां कार्याणामविरोधाद् विनिर्मितः ।
नानेकदिननिर्वर्त्यकथया संप्रयोजितः ।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ।
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गौ[1] मृत्यू रतं तथा ।
दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरं च यत् ।
शयनाधरपानादि नगराद्युपरोधनम्[2] ।
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः । ( ञ, ए )
देवीपरिजनादीनाममात्यवणिजामपि ।
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः[3] । ( ट )

नेता नायकः, तच्चरितं प्रत्यक्षं यत्र तादृशः । **रसभावे**ति । भावो नायकनायकयो-राकूतम् । क्षुद्रचूर्णकमदीर्घसमासं संस्कृतम् । **विच्छिन्ने**ति । व्यापकप्रसङ्गस्य एक-देशरूपोऽर्थो विच्छिन्नसमापितो यत्र तादृशः । **किञ्चित्संलग्नबिन्दुक** इति । अवान्तरार्थविच्छेदेऽपि प्रसङ्गान्तरोक्त्याकाङ्क्षोत्थापकं वस्तु बिन्दुसंज्ञकम् । "अवान्तरार्थ-विच्छेदे बिन्दुरविच्छेदकारणम्" इति वक्ष्यमाणत्वात् । किञ्चित्तद्वान् इत्यर्थः । बीजमभि-नेतव्यप्रसङ्गस्याङ्कुर इत्यर्थः । नच तत्संहृतिमान् तद्विच्छेदवान् । अङ्केऽभिनेतव्यवस्तुनां निषेधमाह—**दूराह्वानमि**ति । दूरस्थजनस्याह्वानमित्यर्थः । भोजनमन्नभोजनम् । दन्तच्छेद्यनखच्छेद्ययोर्वस्तुनोरपि भक्षणनिषेधः । तदपि नाभिनेतव्यमित्यर्थः । एषामभिनयःसदस्यानाममङ्गलमित्य भिप्रायः ।

( वि, ट ) देवीपरिजनादीनां प्रत्यक्षचित्रचरितैर्युक्त इत्यन्वयः । **भावरसोद्भ**-

तयोरेकस्य द्वयोर्वा चरितं तत्र प्रत्यक्षं दर्शनीयमिति भावः । चूर्णकानां क्षुद्रत्वं झटिति बोधफलं विच्छिन्नावान्तरैकार्थत्वादि अन्तिमाङ्कवर्जं न्यायसिद्धम् ।

( लो, लृ ) तत्र सर्वार्थविच्छेदात् । पद्यानां प्राचुर्यमभिनयदुःखावहत्वात् हेयम् ।

( लो, ए ) **नानेके**त्यादिना—एकदिने कथैवाङ्केऽभिनेया इति त्रिचतुरैरिति पूर्ववदुपलक्षणम् । दूराह्वानमित्यादिभिर्वर्जित इति सम्बन्धः । वधयुद्धादिकञ्च यस्य कस्यचित् मुखेनान्येन वा कविप्रतिभोत्थितेन प्रकारेण दर्शनीयम् । तथार्थोपक्षेप-कैरिति वक्ष्यते ।

1 'शापोत्सर्गो' (क.ट.पु.) 2 'राद्यवरोधनम्' (क.पु.) 3 'रसोत्तरैः' (ख.घ.ठ.पु.)

**अन्तर्निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः ॥ ७ ॥**

बिन्द्वादयो वक्ष्यन्ते । आवश्यकं सन्ध्यावन्दनादि । ( ठ )

अङ्कप्रस्तावाद्गर्भाङ्कमाह—

**अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान्[1] ।**
**अङ्कोऽपरः स गर्भाङ्कः सबीजः फलवानपि ॥ ८ ॥** (ड)

यथा बालरामायणे रावणं प्रति कञ्चुकी—

> **श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः ।**
> **भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम् ।**

इत्यादिना विरचितः सीतास्वयम्वरो नाम गर्भाङ्कः ॥ ( ढ, ऐ)

**तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम् ।**

---

वेरिति । भावो लीला रसो वैदग्ध्यम् । तेन रसभावसमुज्ज्वल इत्यनेन न पौनरुक्त्यम् ।

('वि, ठ ) **सन्ध्यावन्दनादी**ति । रसान्तरप्रसक्तस्य नायकस्येति बोध्यम् ।

( **वि, ड** ) गर्भाङ्कः प्रधानाङ्कमध्येऽवान्तरविच्छेदरूपोऽपरोऽङ्कस्तल्लक्षणमाह—**अङ्कोदरे**ति । प्रथमतोऽभिनयेन नटप्रवेशो रङ्गद्वारम् । तद्वक्ष्यति "यस्मादभिनयात् पूर्वम्" इत्यादिनाऽत्र चाभिनयो नाट्यवस्तुप्रदर्शनम् । गर्भाङ्कः प्रथमाङ्क एवेति नियमाभावात् आह—**रङ्गद्वारामुखादी**ति । आमुखं प्रस्तावना तल्लक्षणमग्रे वक्ष्यते । रङ्गद्वारामुखे प्रथमाङ्के । आदिपदात् वक्ष्यमाणलक्षणकशुद्धसंकीर्णविष्कम्भकद्वयस्य-प्रवेशकस्य च परिग्रहः । वक्ष्यते हि—वृत्तवर्त्तिष्यमाणकथांशप्रदर्शकोभिनम्रो विष्कम्भकः । सच मध्यविधजनप्रवर्त्तितः शुद्धः । मध्यनीचाभ्यां प्रवर्त्तितः संकीर्णः । नीचजनमात्रप्रवर्त्तितः प्रवेशकः । तेषान्तु सकलाङ्क एव सम्भवः । **अङ्कोदर** इति । मुख्यनाटकमध्ये केनापि पात्रेण नाटकान्तरप्रदर्शनं गर्भाङ्क इत्यर्थः । तत्प्रदर्शनफलमाह—**सबीज** इति तत्प्रदर्शनात् , मुख्यनाटकाभिनेतव्यार्थस्याङ्कुरफलयोर्लाभात् तद् द्वयवानित्यर्थः ।

( **वि, ढ** ) तं गर्भाङ्कं दर्शयति—**यथा बालरामायण** इत्यादि—तत्र हि केनापि कविना निबद्धं श्रवणैरित्यादिगुणयुक्तं सीतास्वयम्वरं नाम नाट्यं कञ्चुकिना रावणे निवेदितम् । तच्छ्रवणात् सीताहरणकनकमृगरामक्रोधरूपबीजस्य सीताहरणरूपकस्य च सूचनात् तद्द्वयवत् । **इत्यादिना विरचित** इति । इत्यादिना दर्शितः केनापि विरचित इत्यर्थः । कञ्चुकिवाक्येन तद्विरचनाऽभावात् ।

( **वि, ण** ) प्रसङ्गतो गर्भाङ्कमुक्त्वा प्रकृतनाटके यद्यदभिनेतव्यं तदाह—**तत्र पूर्वमि**ति—पूर्वरङ्गश्च नटाभिनयरूपरङ्गद्वारादिसूत्रधारनिष्क्रामणान्तःक्रियाकलापः ।

---

( **लो, ऐ** ) नृत्यपात्रभूतोऽपि रावणोऽस्य गर्भाङ्कस्य नटान्तरैरभिनेयस्य द्रष्टा ।

---

1 'सुखादिमान्' (चै. ज. पु.) 2 अतः परम्, 'अत्र' इत्यधिकः पाठः (ङ.पु.)

**कथनं कविसंज्ञादेर्नाटकस्याप्यथा[1] मुखम् ॥ ६ ॥ ( ण, ओ )**

तत्रेति नाटके—

**यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।**
**कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ।**
**प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।**
**तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये ॥ १० ॥ ( त, औ )**

अस्याः[2] स्वरूपमाह—( अ )

**आशीर्वचनसंयुक्ता नित्यं[3] यस्मात् प्रयुज्यते ।**
**देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता । ( आ )**
**मङ्गल्यशङ्खचन्द्रा[4]ब्जकोककैरवशंसिनी ।**
**पदैर्युक्ता द्वादशभिरष्टभिर्वा पदैरुत ॥[5] ११ ॥ (थ, इ )**

**नाटकस्ये**ति—नाटकसंज्ञाया अपि कथनमित्यर्थः ।

**( वि, त )** अस्य पूर्वरङ्गरूपसंज्ञाव्युत्पत्तिमाह—**यन्नाट्ये**ति । नाट्यवस्तुनो अभिनेतव्यस्य वृत्तरूपवस्तुनो रामायणादेः । कुशीलवाश्च सूत्रधारादिनटाः । **प्रत्यहारादी**ति–सूत्रधारनटादीनां क्रियाविशेषाः प्रत्याहारादयः ।

**(वि, थ)** नान्दीसंज्ञाव्युत्पत्तिमाह—**आशीर्वचने**ति । आशंसानुरूपा समृद्धिर्नान्दी । नान्दिस्वरूपपदव्युत्पत्तौ नान्दी समृद्धिरिति चोच्यते इति स्तुतिवचनसंयुक्ता नान्दी यस्मात् प्रवर्त्तते सभासत्सु श्राव्यते । अतस्तद् वचनमेव तत्सम्बन्धान्नान्दी । देवद्विजनृपादीनामाशीर्वचनेत्यन्वयः । एतादृशनान्दीकथनञ्च न मुनेः तन्मते रङ्गद्वारमेव नान्दी । किन्तु मुनिभिन्नानां कारिकाकृतामेवेदृशनान्दीकथनमित्यग्रे व्यक्तीभविष्यति । यद् यद् वस्त्वात्मिका सा तत्तदाह—**मङ्गल्ये**ति । एषामन्यतरदेव शंसनीयमित्यर्थः । **पदैः द्वादशभिरि**ति । अत्र चपदं श्लोकपादो विभक्त्यन्तं पदञ्च ।

**( लो, ओ ) संज्ञादी**ति—आदिशब्दात् गोत्रादिः । नाटकस्याऽपि संज्ञास्वरूपादिकथनमिति सम्बन्धः ।

**( लो, औ )** प्रत्याहारादिकान्यङ्गानि रङ्गविघ्नशान्त्यर्थं नटमात्रकर्त्तव्यान्याकरेषु बोद्धव्यानि । कविकर्त्तव्यत्वाभावात् नेह लक्ष्यन्ते ।

**( लो, अ )** अस्या नान्द्याः ।

**(लो, आ) आशीरि**ति । देवद्विजनृपादीनामाशीराशंसा तत्प्रतिपादकेन वचनेन युक्ता । नाटकादिषु नित्यमवश्यं प्रयुज्यते, नत्वस्याः कदाचित्कत्वस्थितिः । नान्दीति नदिधातोः सिद्धा ।

1 'थो' ( ट. ड. पु. ) 2 'तस्याः' ( क. ख. पु ) 3 'स्तुतिः' (क. ख. पु)
4 'चक्राब्ज' ( ढ. पु ) 5 'पादैः' ( ट. ड. पु )

अष्टपदा यथा । अनर्घराघवे । "निष्प्रत्यूहम्" इत्यादि ।

द्वादशपदा यथा मम तातपादानां पुष्पमालायाम्—( द )

शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री ।

अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः ॥ *

एवमन्यत्र ।"

एतन्नान्दीति[1] कस्यचिन्मतानुसारेणोक्तम् ।

वस्तुतस्तु "पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गम्[2]" इत्यन्ये । ( ध )

यदुक्तम्—यस्मादभिनयो ह्यत्र प्राथम्यादवतार्य्यते[3] ।

यथासम्भवं विवक्ष्यते । तदन्यैनटैर्युक्तेत्यर्थः ।

( वि, द ) अष्टपदा अनर्घराघवे इति । अत्र निष्प्रत्यूह इत्यादि ।वरमति महाकल्प इत्यादि श्लोकद्वयाष्टपादैरष्टपदत्वम् । नच

निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः

कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने ।

याभ्यामर्द्धविबोधमुग्धमधुरश्रीरर्द्धनिद्रायितो

नाभिपल्लवपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः ॥

इत्यत्र विभक्त्यन्तपदानां द्वादशत्वमप्यस्ति, तत्कथमष्टपदत्वं दर्शितमिति वाच्यम् । उभयसत्त्वेऽपि अष्टपदत्वानपायात् तद्दर्शनौचित्यात् व्याख्यानम । अष्टपदत्वासम्भवे विभक्त्यन्तपदरूपद्वादशपदवती नान्दीमुदाहरति ।

( वि, ध ) एतन्नान्दीति । आशीर्वचनरूपा नान्दीत्यर्थः । रङ्गविघ्नोपशान्तये इत्यनेन पूर्वरङ्गस्य रङ्गविघ्नोपशान्तिफलत्वस्योक्तत्वात् तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये इति तदर्थान्मुनीतरनाट्यकारिकाकृतः कस्यचित् मताभिप्रायेणोक्तम् । वस्तुतस्तु पूर्वरङ्गस्य रङ्गद्वारमेवाङ्गं नतु नान्दीत्यन्ये आहुरित्यर्थः ।

( वि, न ) रङ्गद्वारस्याऽङ्गदर्शिकां कारिकां दर्शयति—यस्मादभिनयो ह्यत्रेति ।

( लो , इ ) उतेत्यनेन क्वचित् पदैरष्टभिर्द्वादशभिर्वा युता ।

( लो, ई ) एतदिति । एतन्नाटकादेः प्रथमं पादम् । कस्यचित् कोलाहलादेः । नटैरेव नर्त्तकैरेव काव्यत्वान्तःपातित्वाभावात् इत्यर्थः ।

* शिरसि धृता सुरापगा गङ्गा येन तादृशे स्मरारौ शिवे अरुणा सपत्न्या गङ्गायाः संदर्शनात् कोपेन रक्तवर्णा मुखेन्दुरुचिर्यस्याः सा । अथ स्वकान्ते शिवे चरणयुगे आनते प्रणते सति स्मितेन सरसा अनुरागार्द्रा गिरीन्द्रपुत्री पार्वती भवतः भूतिहेतुः अस्तु ।

1 'एषा ना' ( ट. ञ. पु. ) 2 'इति' अस्मात् परम्, 'अपर' (इति ख. पु) 'ङ्गमित्युच्यते' ( इति ज. झ पु ) 3 'गम्यते' ( ग. घ. पु. )

रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥ इति

उक्तप्रकारायाश्च नान्द्याः रङ्गद्वारात् प्रथमं नटैरेव कर्त्तव्यतया न महर्षिणा निर्देशः कृतः । (न)

कालिदासादिमहाकविप्रबन्धेषु च— (ई)

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यभिन्न[1]विषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते ।
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः । (उ)

एवमादिषु नान्दीलक्षणायोगात् । (प)

उक्तञ्च—

रङ्गद्वारमारभ्य कविः कुर्य्यादिति ।

अत एव प्राक्तनपुस्तकेषु "नान्द्यन्ते सूत्रधारः—इत्यनन्तरमेव वेदान्तेषु

---

प्राथम्यादित्यार्शावचनतोऽपि प्राथम्यादित्यर्थः । **वागङ्गे**ति । वागभिनयात्मकमङ्गाभिनयात्मकमित्यर्थः । अत्र प्राथम्यादित्यनेन पूर्वरङ्गाङ्गत्वं रङ्गद्वारस्य दर्शितम् । ननु नान्द्या इति भावः । तस्याः पूर्वरङ्गानङ्गत्वे महर्षेस्तथात्वाप्रदर्शनमपि साधकमित्याह । **उक्तप्रकारया** इति । द्वादशपदाष्टपदप्रकाराया इत्यर्थः । महर्षिणा नान्दीमात्रस्यैवानिर्दिष्टत्वात् । उक्तप्रकाराया अपि तस्या अनिर्देशः **नटैरेवे**ति । नाट्येऽवश्यं नान्दी कर्त्तव्या इति महर्षिभिन्नानां मतानुसारिभिर्नटैरेवेत्यर्थः । ननु महर्षिमतानुसारिभिरित्यर्थः । महर्षिणा तदनिर्देशात्तदाह—**न महर्षिणे**ति । महर्षिणा तदनिर्देशे तस्या द्वादशपदत्वादिविशेषणाव्यभिचारे हेतुरित्याह—**कालिदासादी**ति ।

**(वि, प) वेदान्तेषु** इति । स स्थाणुर्महेशो वा युष्माकं श्रेयसेऽस्तु इति अन्वयः । एकपुरुषं प्रधानं पुरुषम् । रोदसी द्यावापृथिव्यौ । अभिन्नविषयोऽन्यत्राप्रवृत्तिः । अनन्यविषय इति क्वचित् पाठः । **अक्षरमत्र** पदम् । वर्णस्यार्थाभावेन यथार्थाभावात् । अर्थश्च ईश् ऐश्वर्य्ये इति कर्त्तृविहितवरप्रत्ययान्तः धात्वर्थः । प्राणादयः प्राणापानादयः पञ्चवायव इत्यर्थः । अन्तर्नियमितोक्तो मुमुक्षुभिर्यो मृग्यते ध्यायते । **नान्दीलक्षणे**ति । द्वादशत्वाष्टपदत्वाभावेन तल्लक्षणाभावादित्यर्थः ।

**(वि, फ)** तथा च **रङ्गद्वारमेव** नान्दी । सैवावश्यं कर्त्तव्येति दर्शयति—**उक्तञ्चे**ति । उक्तमत्र महर्षिणेति बोध्यम् । अत एव तत्र रङ्गद्वाररूपैव नान्दी महर्षेरभिमता । तस्या एवादौ सूत्रधारेण कर्त्तव्यत्वादेवेत्यर्थः । अत्र च नान्द्यन्ते रङ्गद्वा-

---

**(लो, उ) वेदान्ते**ति । यथार्थाक्षर ईश्वरशब्द ईशिधातोः सिद्धत्वादैश्वर्य्ययोगरूढरूपोऽर्थस्तस्मिन् एव तात्त्विक इत्यर्थः ।

---

1 'त्यनन्य' (क. ख. पु.)

इत्यादिश्लोकलिखनं दृश्यते। यच्च पश्चात् नान्द्यन्ते सूत्रधार इति लिखनं तस्यायमभिप्रायः। नान्द्यन्ते सूत्रधार इदं प्रयोजितवान्। इतः प्रभृति मया नाटकमुपादीयत इति कवेरभिप्रायः सूचित इति। (फ, ऊ)

**पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते।**
**प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत्ततः। (ब, ऋ)**
**दिव्यमर्त्येषु तद्रूपो मिश्रमन्यतरस्तयोः।**
**सूचयेद् वस्तु बीजं वा मुखं पात्रमथापि वा॥ १२॥ (भ, ॠ)**

काव्यस्यार्थस्य स्थापनात् स्थापकः। तद्वदिति। सूत्रधारसदृशगुणाकारः। इदानीं पूर्वरङ्गस्य सम्यक् प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः।

स स्थापको दिव्यं वस्तु दिव्यो भूत्वा मर्त्यं मर्त्यो भूत्वा मिश्रञ्च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत्। (वस्त्विवतिवृत्तं यथोदात्तराघवे—

रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम्।)

---

रूपनान्द्यन्त इत्यर्थः। **यच्च पश्चादि**ति। वेदान्तेषु इत्यादिश्लोकस्य पश्चादित्यर्थः। नान्द्यन्ते रङ्गद्वाररूपनान्द्यन्ते सूत्रधार इदं वेदान्तेषु इत्यादि प्रयोजितवान्। इतः परं मया कविना नाटकमुपादीयते। इत्येवं कवेरभिप्रायो नान्द्यन्त इत्यादिना कविनैव सूचित इत्यर्थः।

( **वि, व** ) पूर्वरङ्गानन्तरकृत्यमाह—**पूर्वरङ्गमि**ति। स्थापकः सूत्रधारसदृशं नटान्तरम्। **तद्वदि**ति। सूत्रधारवदित्यर्थः। काव्यमत्र नाटकरूपम्।

( **वि, भ** ) दिव्यमर्त्येषु इत्यादिकं स्वयमेव व्याख्यास्यति। दिव्यं मर्त्यं चेति क्वचित् पाठः।

( **वि, म** ) **वृत्तमि**ति—वृत्तमभिनेतव्यवृत्तान्तः। रामो मूर्ध्नि इत्यादिना रामो गुरोः पितुराज्ञां मूर्ध्नि निधाय काननमगादित्यन्वयः। तद्भक्त्या रामभक्त्या

( **लो, ऊ** ) नान्दीलक्षणं समनन्तरोक्तप्रकारम्। **यच्च पश्चादि**ति। वेदान्तेषु इत्यादि पदानन्तरं ततः श्लोकात्।

( **लो, ऋ** ) **पूर्वरङ्ग** इति। एवं प्रत्याहारमारभ्य कविकर्त्तव्यरूपरङ्गद्वारपर्यन्ताङ्गमध्यम् इति शेषः।

( **लो, ॠ** ) मिश्रं दिव्यमर्त्याभ्यामिति, वृत्ताभ्यामित्यर्थः।

( **लो, ऌ** ) प्रोत्सिक्ताः प्रकर्षेण दर्पिष्ठाः।

---

1 'दिव्यमर्त्ये' ( क. पु. ) 'दिव्यैर्मर्त्यैः' ( ट. ड. पु. )

तौ सुग्रीवविभीषणावनुगतौ नीतौ परां सम्पदम्[1]
प्रोत्सिक्ता[2] दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥ ( मं, लृ )

बीजं यथा रत्नावल्याम्—

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ( य )

अत्र हि समुद्रे [3]वहनभङ्गमग्नोत्थिताया रत्नावल्या अनुकूलदैवलालितो वत्सराजगृहप्रवेशो यौगन्धरायणव्यापारमारभ्य रत्नावलीप्राप्तौ बीजम्। मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः। ( र, ए )।

यथा—

आसादितप्रकटनिर्म्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तिः।
उत्खाय गाढतमसं घनकालमुग्रं रामो दशास्यमिव सम्भृतबन्धुजीवः ॥ (ल, ऐ)

---

मात्रा जनन्या। तौ पुराणौ श्रुतौ। प्रोत्सिक्ताः उद्धताः। दशकन्धरप्रभृतयः समस्ता द्विषः ध्वस्ताः। नेनेति शेषः। अत्राभिनेतव्यस्य समस्तवस्तुसूचकम्।

( वि, य ) **बीजमि**ति—अभिनेतव्यार्थमूलमङ्कुरः। **द्वीपादन्यस्मादि**ति। दूरस्थेनाऽपि वरेण स्वीयकन्यापरिणयस्य भावित्वेन निजपत्नीमाश्वासयतः स्थापकस्य सूत्रधारस्य च उक्तिरियम्। अन्यद्वीपादितोऽप्यानीयाभिमुखीभूतो विधिर्घटयतीत्यर्थः।

( वि, र ) अत्रेति वहनं नौका। वहित्रेति क्वचित् पाठः। गृहप्रवेशो बीजमित्यन्वयः। श्लेषादिनेत्यत्र आदिपदादन्यापदेशपरिग्रहः।

( वि, ल ) तत्र श्लेषेणाह। **आसादिते**ति—गाढतमसमतिशयान्धकारमुग्रं घनकालं प्रावृट्कालम् उत्खाय उन्मील्य शरत्समय एष प्राप्त आगतः। रामो दशास्यमिव दशास्योऽपि गाढतमो गाढमोह उग्रश्च। शरत्समयरामयोर्विशेषणान्याह—**आसादि**तेत्यादीनि—शरत्पक्षे प्रकटो व्यक्तीभूतो निर्मलचन्द्र एव हासः। **आसादिते**ति। रामपक्षे चन्द्रहासः खड्गः—रावणवधार्थ काले एव तदासादनं बोध्यम्। शरत्पक्षे विशुद्धश्चासौ कान्तः कमनीयश्चेति विग्रहः। रामपक्षे वह्नौ विशुद्धा कान्ता पत्नी यस्य तादृशः। शरत्पक्षे संभृतं जनितं बन्धुजीवकुसुमं येन तादृशः, रामपक्षे

---

( लो, ए ) यौगन्धरायणः अमात्यविशेषः।

( लो, ऐ ) **आसादिते**ति—चन्द्रहासः प्रभाखड्गश्च। कस्य जलस्य। अन्तं स्वरूपम् कान्ता वह्निप्रवेशशुद्धा सीता। तमोऽन्धकारः मोहश्च बन्धुजीवाख्यं कुसुमम्। बन्धूनां जीवाः प्राणाश्च।

---

1 'उन्नतिम्' ( क. पु. ) 2 प्रोत्खाता' ( ख. पु. ) 'दुर्वृत्ता' ( ट. ड. पु. )
3 'वहित्र' ( ग. पु. )

पात्रं यथा शाकुन्तले—

• तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥ ( व )

**रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।**
**रूपकस्य कवेराख्यां गोत्राद्यपि[1] स कीर्त्तयेत् ।**
**ऋतुञ्च कञ्चित् प्रायेण भारतीं वृत्तिमाश्रितः ॥ १३ ॥**

स स्थापकः । प्रायेणेति—क्वचिदृतोरकीर्त्तनमपि । यथा रत्नावल्याम् ।

भारतीवृत्तिस्तु—( श )

**भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः[2] ॥ १४ ॥ ( ष )**

संस्कृतबहुलो वाक्प्रधानो व्यापारो भारती ।

**तस्याः प्ररोचना वीथी तथा प्रहसनामुखे ।**
**अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना ॥ १५ ॥ (स, ओ )**

---

सम्भृतो जनितो बन्धूनां रणपतितवानराणां जीवोऽमृतत्रष्ण्या येन तादृशः । अत्र चन्द्रशर्मादिपदश्लेषवान् वाग्विशेषः । आदिपदग्राह्योऽन्यापदेशस्तु नोदाहृतः । तच्च मम तारावतीचन्द्रशेखरनाटके यथा—

"उद्यते शशिनि पूर्वभूधरं राजितं कल्पचन्द्रशेखरम् ।
एष यास्यति शशी महार्णवं तातपादमिव वन्दनमिच्छुः ॥"

अत्र हि चन्द्रस्य तातमहार्णवगमनान्यापदेशेन प्रस्तुतवस्तुनश्चन्द्रशेखरनृपस्य वने तपःप्रसक्तस्य तातपादवन्दनार्थगमनसूचकम् । एवमन्यत्राप्यनुसन्धेयम् ।

( **वि, व** ) **तवास्मी**ति—तव नव्याः । प्रसभं बलात् । हारिणा मनोहारिणा । एष पुराणेषु श्रुतः । अत्र पात्रं राजा ।

( **वि, श** ) **रङ्गं प्रसाद्ये**ति—रङ्गमत्र वस्तु, एतत् सूचनरूपं नाट्यैकदेशम् । **यथा रत्नावल्यामि**ति । तत्र वसन्तोत्सवस्य वर्णने वसन्तर्त्तोरपि वर्णनात् ।

( **वि, ष** ) **भारती**ति—नराश्रयः पुंप्रयोज्यः । स्त्रीवाचां प्राकृतत्वात् पुंसामप्यधनानां वचःप्राकृतत्वात् प्राय इत्युक्तम् ।

( **वि, स** ) **तस्या** इति । भारत्या इत्यर्थः । तत्र प्ररोचनालक्षणमाह—**अत्रोन्मुखीकार** इति ।

---

( **लो, ओ** ) तस्या भारतीवृत्तेः । वीथी वीथ्यङ्गानि । प्रहसनं प्रहसनाङ्गानि वक्ष्यमाणानि ।

---

1 'द्यमपि' ( ख. पु. ) 2 'जनाश्रयः ( घ. च. पु. )

प्रस्तुताभिनयेषु प्रशंसातः श्रोतृणां प्रवृत्त्युन्मुखीकरणं प्ररोचना।

यथा रत्नावल्याम्—

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम्।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः॥

वीथीप्रहसने वक्ष्येते। (ह)

**नटी विदूषको वापि पारिपार्श्विक एव वा।**
**सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥**
**चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।**
**आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा॥ १६॥ (क)**

सूत्रधारसदृशत्वात् स्थापकोऽपि सूत्रधार उच्यते। तस्यानुचरः पारिपार्श्विकस्तस्मात किञ्चिदूनो नटः।

**उद्धात्यकः[1] कथोद्धातः प्रयोगातिशयस्तथा।**
**प्रवर्त्तकावलगिते पञ्च प्रस्तावनाभिदाः॥ १७॥ (ख)**

तत्र—

**पदानि त्वगतार्थानि तदर्थगतये नराः।**

---

(वि, ह) **श्रीहर्ष** इति। श्रावक एवात्र यद्यपि कविः तथापि राज्ञः श्रीहर्षस्य प्रीतये तत्रैव कवित्वारोपः कृतः। **वस्त्वेकैकमपीहे**ति। इह एषु। निपुणकवि-परिषत्स्वीयनाट्यदक्षत्वात्तेषु वस्तुषु मध्ये। एकैकं वस्तु इत्यर्थः। **किं पुनरि**ति। किं पुनर्वक्तव्यमित्यर्थः। गुणानां फलप्राप्तिहेतुत्वात् उपादेयानाम्। अत्राभिनेतव्यस्य वत्सराजचरितस्याऽभिनेतृणां नटानां परिषदश्च प्रशंसा। **संस्कृते**ति। तदङ्गता। **वीथीप्रहसने** इति। तद्द्वयमुखरूपकविशेषौ नाटकप्रभेदौ वक्ष्येते। तौ च संस्कृतेनैवेति तद्द्वयं भारत्या अङ्गम्।

(वि, क) आमुखरूपमाह-**नटी**ति।

(वि, ख) ईदृशीं प्रस्तावनामुक्त्वा तस्याः पञ्चभेदानाह—**उद्धात्यक** इति।

(वि, ग) तत्र उद्धात्यकलक्षणमाह—**पदानी**ति। अगतार्थानि इत्यत्रार्थो योजकवक्तृहृदयस्थितोऽर्थः। **तदर्थगतय** इति। पदद्वयेऽवगतिपरोऽर्गामिः। तथा च वक्त्रा स्थापकेनानवगततादृशार्थानि स्वोच्चारितपदानि, तदर्थस्य योजकनरहृदयस्थितस्यार्थस्यावगतयेऽन्यैः स्थापकोच्चारितभिन्नैः पदैर्योजयन्ति। स्वहृदयस्थितार्थतां प्रतिपादयन्तीत्यर्थः।

---

1 '—घात—' इति (ग. घ. पु.)

**योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥ १८ ॥ ( ग )**

यथा मुद्राराक्षसे सूत्रधारः—"क्रूरग्रहः सकेतुश्चन्द्रमसंपूर्णमण्डलमिदानीम्। अभिभवितुमिच्छति बलात्" ( औ )

इत्यनन्तरं नेपथ्ये, "आः' क एष मयि जीवति[1] चन्द्रगुप्तमभिभवितुमि-च्छती"ति। अत्रान्यार्थवन्त्यपि पदानि हृदिस्थार्थाऽगत्या अर्थान्तरे संक्रमय्य पात्रप्रवेशः। ( घ, अ )

**सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा।**
**भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते ॥ १९ ॥ ( ङ )**

---

**( वि, घ ) क्रूरग्रहे**ति—चन्द्रग्रहणं भविष्यतीति प्रतिपादयतः स्थापकस्योक्तिरियम्। स क्रूरग्रहः केतू राहुरित्यर्थः। एषां पदानां चन्द्रगुप्तनृपतिमन्त्रिणा चाणक्यब्राह्मणरूपनरेण राक्षसरूपात् क्रूरग्रहात् क्रूरो ग्रहो यस्य तस्मात्। चन्द्रगुप्तनृपत्यभिभवरूपे स्वहृदयस्थितेऽर्थे संक्रमः कृतः। तादृशार्थता दर्शितेत्यर्थः। तदाह—**अत्रार्थवन्त्यपी**ति। राहुचन्द्ररूपार्थवन्त्यपीत्यर्थः। हृदिस्थोऽर्थो राक्षसचन्द्रगुप्तरूपः। पात्रं चाणक्यः।

**( वि, ङ )** कथोद्घातलक्षणमाह—**सूत्रधारस्ये**ति। इदानीं स्थापककृत्याभावात् सूत्रधार एव स्थापककृत्यं करोतीत्यभिप्रायेणाह—**सूत्रधारस्ये**ति। वाक्यादानं वाक्यानुकरणम्। अर्थादानं वाक्यानुकरणं विना तदर्थानुशीलनम्।

---

**(लो, औ) क्रूरग्रहे**ति—क्रूरो दारुणग्रहो राहुः, पक्षे-क्रूरो दारुणो ग्रह आग्रहः चन्द्रगुप्ताभिभवरूपः यस्य। चन्द्रं शशिनं चन्द्रगुप्ताख्यं राजानञ्च।

**( लो, अ )** पदानि क्रूरग्रह इत्यादीनि। हृदिस्थः सूत्रधारस्येत्यर्थः। प्रकृतश्चन्द्रोपरागरूपस्तस्यागत्याऽबोधेन। अर्थान्तरे प्रकृतग्रन्थाभिधेये। अत्राह भारिडः—

विस्मृतं न प्रतीतं वा यत्र वाक्यं प्रकाश्यते।
प्रश्नोत्तरमनोहारी स उद्घात्यक उच्यते ॥

यथा पाण्डवाभ्युदये—

का श्लाघा गुणिनां क्षमापरिभवः कोऽक्षः सुकुल्यैः कृतः
किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते।
को मृत्युर्व्यसनं गुणं दधति के यैर्निर्जिता शत्रवः
केन ज्ञातमिदं विराटनगरे छन्नस्थितैः पाण्डवैः ॥

अतः सूत्रधारनिष्क्रान्तौ पाण्डवप्रवेशः।

---

1 'जीवति सति' इत्यस्य स्थाने 'स्थिते' इति ( ङ, ढ. पु. )
2 'मभियोक्तु' इति ( ख. पु. ) 3 'हृदयस्था-' ( क. पु. )

वाक्यं यथा रत्नावल्यां–'द्वीपादन्यस्मादपि'इत्यादि सूत्रधारेण पठिते–(नेपथ्ये) एवमेतत् । कः सन्देहः । 'द्वीपादन्यस्मादपि' इत्यादि पठित्वा यौगन्धरायणस्य प्रवेशः । वाक्यार्थो यथा वेण्याम्—

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥ ( आ )

इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा—'( नेपथ्ये ।) आ दुरात्मन् वृथा मङ्गलपाठक ! कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः ।' ततः सूत्रधारो[1] निष्क्रान्तः । भीमसेनस्य प्रवेशः । ( छ, इ )

**यदि प्रयोग एकस्मिन् भूयो[2]ऽप्यन्यः प्रयुज्यते ।**
**तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ॥ २० ॥ ( ज )**

यथा कुन्दमालायाम्–'( नेपथ्ये ।) इत इतोऽवतरत्वार्य्या ।

सूत्रधारः–कोऽयं खल्वार्य्याह्वानेन साहायकं मे सम्पादयति । ( विलोक्य ।) कष्टमतिकरुणं वर्त्तते ।

लङ्केश्वरस्य भवने सुचिरं स्थितेति
रामेण लोकपरिवादभयाकुलेन ।

( वि, च ) **द्वीपादि**ति—अत्र यौगन्धरायणमन्त्रिरूपपात्रस्य तद्वाक्यं पुनरनुकृत्य प्रवेशः ।

( वि, छ ) **निर्वाणे**ति—पाण्डुतनयाः निर्वाणवैराग्नयः सन्तो माधवेन सह नन्दन्तु । कुरुराजसुताश्च दुर्योधनादयोऽनुरक्तप्रसन्नीकृतभूमिष्ठलोका त्यक्तयुद्धाश्च सन्तः सभृत्याः। स्वस्था भवन्तु इत्यर्थः। **अर्थं गृहीत्वे**ति। एतद् वाक्यानुकरणं विना तदर्थानुशीलनेनैव आ इत्याद्युक्तवतः भीमस्य प्रवेशः ।

( वि, ज ) प्रयोगातिशयलक्षणमाह—**यदि प्रयोग** इति । **भूय** इति । पुनरप्यन्य इत्यर्थः । प्रयोगोऽन्य इति क्वचित् पाठः ।

( वि, झ ) **इत इतोऽवतरत्वि**ति । सूत्रधारपत्न्या आह्वानेनागमनोपदेशः कृतः । **लङ्केश्वरस्ये**ति । जनपदात् अयोध्यातो निर्वासितां निष्कामितां गर्भगुर्वी-

( लो, आ ) **निर्वाणे**ति—शमः कोपाद्यभावः विनाशश्च । रक्ता रञ्जिता प्रसाधिता प्रकर्षेण साधिता, रक्तेन रुधिरेण प्रसाधिता मण्डिताश्च । विग्रहो युद्धं देहश्च । स्वस्थाः कुशलिनः स्वर्गस्थाश्च ।

( लो, इ ) भीमसेनस्य प्रवेश इत्यनन्तरं प्रथमार्थमादाय इति शेषः ।

1 'सूत्रधारनिष्क्रान्तौ' ( क. पु. ) 2 'प्रयोगोऽन्यः' ( ख. घ. पु. )

निर्वासितां जनपदादपि गर्भगुर्वीं
सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥

अत्र नृत्यप्रयोगार्थं स्वभार्य्याह्वानमिच्छता सूत्रधारेण 'सीतां वनाय परिकर्षति लक्ष्मणोऽयम्'इति सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः सूचितः। ( ऋ, ई )

**कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत् ।**
**तदाश्रयस्य[1] पात्रस्य प्रवेशस्तत्प्रवर्त्तकम् ॥ २१ ॥ ( ञ )**

यथा "आसादिते"त्यादि । 'ततः प्रविशति यथानिर्दिष्टो रामः' ।

**यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते ।**
**प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः ॥ २२ ॥ ( ट )**

यथा शाकुन्तले—सूत्रधारो नटीं प्रति । तवास्मि गीतरागेणेत्यादि । ततो राज्ञः प्रवेशः ।

**योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि ॥ २३ ॥**

अत्र आमुखे । उद्घात्यकावलगितयारितराणि । वीथ्यङ्गानि वक्ष्यमाणानि। (ठ)

---

मित्यन्वयः । प्रयोगातिशयपदयोगार्थं घटयन् व्याचष्टे—**स्वप्रयोगमतिशयान** इति । **एव प्रयोगः सूचित** इति—सीतालक्ष्मणयोः प्रवेशरूपोऽन्यः प्रयोगः सूचित इत्यर्थः । सूचित इत्यत्र प्रयोजित इति क्वचित् पाठः ।

**( वि, ञ )** प्रवर्त्तके कालाश्रयेणाह—**कालमि**ति । तदाश्रयस्य तत्सूचितस्य ।

**( वि, ट )** अवलगितलक्षणमाह—**यत्रैकत्रे**ति । यत्रैकत्र प्रयोगे सतीत्यन्वयः। समावेशात् तत्प्रयोगस्य समानिर्दिष्टत्वात् अन्यत्कार्य्यं प्रसाध्यते इत्यर्थः ।

**( वि, ठ ) तवास्मी**ति । अत्र गीतप्रशंसारूपप्रयोगे सति राज्ञः प्रवेशरूपमन्यत्कार्य्यं साधितम् । प्रवर्त्तके कालाश्रयणमतो भेदकं बोध्यम् । इत्थं प्रस्तावनारूपस्य उद्घातकादिपञ्चभेदमुक्त्वा तत्रैव प्रयोगे यथालाभं वीथ्यङ्गान्यपि प्रयोजनीयानीत्याह—**योज्यान्यत्रे**ति । वीथ्याख्योपरूपात्मकनाटकप्रभेदस्य वक्ष्यमाणस्याङ्गम् । उद्घात्यकावलगितादीनि तयोर्देशाङ्गानि वक्ष्यन्ते । आमुखप्रभेदतयापि उद्घात्यकावलगिते उक्ते । अतस्तद् भिन्नैकदेशे तदङ्गान्यप्यत्र योजनीयानीत्याह—**उद्घात्यकावलगितयोरितराणी**ति ।

---

**( लो, ई ) इत** इति । अत्रार्य्यपदार्थः सीतारूपो नेपथ्ये पात्राभिमतः। नटीरूपस्तु सूत्रधारेणावगतः स्वप्रयोगमतिशयानः प्रकृतार्थप्रतिपादनात् ।

---

1 'तदाश्रयश्च' ( क. ख. पु. )

नखकुट्टस्तु ( ड )

नेपथ्योक्तं श्रुतं यत्र त्वाकाशवचनं तथा ।
समाश्रित्याऽपि कर्त्तव्यमामुखं नाटकादिषु ।
एषामामुखभेदानामेकं किञ्चित् प्रयोजयेत् । ( ढ )
तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक् ।
प्रस्तावनान्ते निर्गच्छेत् ततो वस्तु प्रयोजयेत् ॥ ( ण )

वस्त्वितिवृत्तम् । ( उ )

**इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते । ( ऊ )**
**आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरम् ।**
**अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः ।**
**तस्येतिवृत्तं कविभिराधिकारिकमुच्यते ॥ २४ ॥**

फले प्रधानफले । यथा बालरामायणे रामचरितम् । ( त )

**अस्योपकरणार्थन्तु प्रासङ्गिकमितीष्यते ॥ २५ ॥**

अस्याधिकारिकेतिवृत्तस्य उपकरणनिमित्तं यच्चरितं तत्प्रासङ्गिकम् । यथा सुग्रीवादिचरितम् ।

---

**( वि, ड )** पञ्चप्रभेदा आमुखस्यामी प्रविष्टपात्रसूचितपात्रान्तरप्रवेशघटिता उक्ताः । अप्रविष्टसूचितपात्रघटितोऽपि नखकुट्टाख्यः षष्ठप्रभेद इत्याह—**नखकुट्टस्तु** इति ।

**( वि, ढ )** तल्लक्षणमाह—**नेपथ्ये**ति । नेपथ्ये वेशरचनास्थले उक्तं पात्रं आकाशे वचनं यस्य तादृशं वा पात्रमाश्रित्य आमुखं कर्त्तव्यमित्यर्थः । इत्थमामुखस्य षड् भेदाः ।

**( वि, ण ) तेनार्थमि**ति । सूत्रभृत् पात्रं तदभिन्नमर्थं वा समाक्षिप्यैव सूचयित्वैव तादृशप्रस्तावनान्ते निर्गच्छेदित्यर्थः ।

**( वि, त ) बालरामायणे रामचरितमि**ति । रामोऽहं रावणादिवधफले स्वामी, तस्य चरितमाधिकारिकमित्यर्थः ।

---

**( लो उ )** श्रुतं कस्यापि सम्मुखीनस्य मुखादितिवृत्तं प्रकृतग्रन्थाभिधेयम् । अस्य च प्रपञ्चनमर्थात् पत्रद्वारेणैव । यद्यपि नासूचितस्य पात्रस्य रङ्गभूमिषु प्रवेश इति वचनात् सर्वेषामपि पात्राणां सूचितानामेव रङ्गे प्रवेशस्तथापि प्रस्तावनानन्तरं प्रवेश्यपात्राणामुक्तप्रकारेण विच्छित्तिभिः सूचनमिति शेषः । क्वचित्तु सम्भ्रमादियुक्तानां पात्राणां प्रवेशेन सूचनं न पटाक्षेपोऽपि । यथा चन्द्रकलायां प्रविश्याऽपटाक्षेपेण संभ्रान्तः शबर इत्यादि ।

**( लो, ऊ )** बुधैर्ग्रन्थकारैः ।

पताकास्थानकं योज्यं सुविचार्य्येह वस्तुनि ॥ २६ ॥

इह नाट्ये । ( थ )

यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकन्तु तत् ॥ २७ ॥ ( द, ऋ )

तद्भेदानाह ।

सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ॥ २८ ॥ ( ध )

यथा रत्नावल्याम्—वासवदत्तेयमिति राजा यदा तत्कण्ठपाशं मोचयति तदा तदुक्त्या सागरिकेयमिति प्रत्याभिज्ञाय कथं प्रिया मे सागरिका । 'अलमलमतिमात्र'मित्यादि फलरूपार्थसंपत्तिः पूर्वापेक्षयोपचारातिशयाद् गुणवती उत्कृष्टा[1] ( न, ॠ )

'वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयम् ।

---

( वि, थ ) **उपकरणनिमित्तमि**ति । उपकरणमुपकारः साहाय्यमित्यर्थः । नाटकस्यान्तरङ्गमाह—**पताकास्थानकमि**ति । **इह नाट्ये** इति । **आमुखे** इति—वृत्तसाधारणे नाट्ये इत्यर्थः। तेनास्य आमुखे इतिवृत्ते च सम्भव इत्यग्रे व्यक्तीभविष्यति।

( वि, द ) **तल्लिङ्ग** इति । चिन्तितार्थसमानचिह्न इत्यर्थः ।

( वि, ध ) **सहसैवे**ति । उपचारतः क्रियातो गुणवती । अर्थसंपत्तिरुद्देश्य-संपत्तिः । सहसैवेत्यर्थः ।

( वि, न ) **वासवदत्तेयमि**ति । वासवदत्ता राजपत्नी । तद्वेशेन सागरिका आयास्यतीति कृतसङ्केते राज्ञि स्थिते तज्ज्ञात्वा वासवदत्तैव सागरिकाया आगमनात् पूर्वमागत्य सङ्केतभङ्गं कृत्वा राजानं क्षेपयित्वा गता । राजा च तामनुनेतुं पश्चाद् चलितः । ततस्तद्वेशा सागरिका आगत्य राजानमनागाद्य निर्वेदाल्लतापाशेनात्मानं बद्ध्वा मर्त्तुमुद्यता । राजा च वासवदत्तामनुनेतुं चलितः । पथि तां दृष्ट्वा वासवदत्ते-वायं म्रियत इति ज्ञात्वा पाशं मोचयन् सागरिकाया उक्त्या सागरिकेयमिति ज्ञात्वा गुणवतीमुद्देश्यफलसम्पत्तिमाप्तवान । अत्र वासवदत्तामरणरूपेऽन्यस्मिन्नर्थे चिन्तिते आगन्तुकेन लतापाशेन वासवदत्तामरणचिह्नायङ्कितम्रियमाणसागरिकारूपार्थप्रयोग इति पताकास्थानसामान्यलक्षणं बोध्यम् ।

( वि, प ) द्वितीयपताकास्थानमाह—**वचः सातिशयमि**ति । नानाबन्धो बीजप्रकाशननायकमङ्गलसूचनादिरूपः ।

---

( लो, ऋ ) आगन्तुकेन प्रकृतादितरेण ।

( लो, ॠ ) पूर्वापेक्षया पूर्वस्य वासवदत्ताज्ञानस्यापेक्षया ।

---

1 'उत्कण्ठा' ( पृ. व. पु. )

**पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम् ॥ २९ ॥ ( प ) ।**

यथा वेण्यां सूत्रधारः—

रक्तप्रसाधितभुवः क्षतविग्रहाश्च ।
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥

अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनान्नेतृमङ्गल[1] प्रतिपत्तौ सत्यां द्वितीयं पताकास्थानम् । ( फ )

**अर्थोपक्षेपकं[2] यत्तु लीनं सविनयं भवेत् ।**
**श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥ ३० ॥ ( ब )**

लीनमव्यक्तार्थम् , श्लिष्टेन सम्बन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणो-पेतं सविनयं विशेषनिश्चयप्राप्त्या सहितं सम्पाद्यते यत्तत्तृतीयं पताकास्थानम् । यथा वेण्यां द्वितीयेऽङ्के ( कञ्चुकी ) देव ! भग्नं भग्नम् । ( राजा ) केन । ( कञ्चु ) भीमेन । ( राजा ) कस्य ( कञ्चु ) भवतः । ( राजा ) आः, किं प्रलपसि ( कञ्चु ) ( सभयम् ) देव ! ननु ब्रवीमि । भग्नं भीमेन भवतः । ( राजा ) धिक् वृद्धापसद ! कोऽयमद्य ते व्यामोहः ? ( कञ्चु ) देव ! न व्यामोहः सत्यमेवं ब्रवीमि ।

भग्नं भीमेन भवतो मरुता रथकेतनम् ।
पतितं किङ्किणीजालं[1] बद्धाक्रन्दमिव क्षितौ ॥ ( भ )

---

( वि, फ ) **रक्तप्रसाधिते**ति । रक्तेण रुधिरेण मण्डितभूमयः । क्षतशरीराः स्वर्गस्था भवन्त्विति श्लेषलभ्योऽर्थः । तदाह—**अत्र रक्तादीना**मिति । अत्रानु-रक्ताद्यर्थे चिन्तिते शब्दरूपतल्लिङ्गोऽन्यो रुधिराद्यर्थ आगन्तुकेन शब्देन प्रयोगात् पताकास्थानसामान्यलक्षणसत्त्वम् । इदं पताकास्थानमामुखान्तर्गतं वक्ष्यमाणं च वृत्तान्तर्गतं बोध्यम् ।

( वि, ब ) तृतीयमाह—**अर्थोपक्षेपका**मिति । अर्थोपक्षेपकं प्रस्तुतवस्तु-सूचकं यत्तु वच इत्यर्थः । श्लिष्टेति व्याचष्टे । सम्बन्धयोग्येन इति उक्त्वात्र्यान्वयः सविनयमित्यत्र विनयो विशेषेण नयः निश्चयः तद् व्याचष्टे—**विशेषे**ति ।

( वि, भ ) **भग्नमि**ति—

भग्नं भीमेन मरुता भवतो रथकेतनम् ।
पतितं किङ्किणीजालं बद्धाक्रन्दमिव क्षितौ ॥

इति कञ्चुकिना वक्तव्ये सम्भ्रमात् खण्डश उक्तम् । दुर्योधनोरुभङ्गरूपार्थोपक्षेपकं भीमेनेत्यत्र भीमसेनरूपेण स्वानुष्ठानयोग्येन केतनभङ्गातिरिक्ताभिप्राययुक्तेन दुर्योधनस्य प्रत्युत्तरेणोपेतम् । अत्र लीनादिकं स्पष्टार्थमवधेयम् ।

---

1 'जीवार्थप्रतिपादनादमङ्गलप्र–' ( न. प. पु. ) 2 '–पणं' ( ग. च. पु. )
3 'क्काण' ( क. ख. पु. )

अत्र दुर्योधनोरुभङ्गरूपप्रस्तुतसंक्रान्तमर्थोपक्षेपणम् । ( म )

**द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।**
**प्रधानार्थान्तराक्षेपी पताकास्थानकं परम् ॥ ३१ ॥** ( य )

यथा रत्नावल्याम्—

उद्दामोत्कलिकां[1] विपाण्डुररुचिं[2] प्रारब्धजृम्भां क्षणा-
दायासं श्वसनो[3]द्गमादविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥ (र,ऌ)

अत्र भाव्यर्थः सूचितः । (ल)

---

( वि, म ) अर्थोपक्षेपकत्वं व्याचष्टे—**अत्रे**ति । अत्र केतुभङ्गरूपेऽन्यस्मिन् चिन्तिते ऊरुभङ्गरूपार्थप्रयोग आगन्तुकेन श्लिष्टशब्देनेत्यतः पताकास्थानसामान्य-लक्षणसत्त्वम् ।

( वि, य ) चतुर्थमाह—**द्व्यर्थो वचने**ति । सुश्लिष्टः अर्थद्वये शोभनश्लिष्टः । काव्यं श्लोकस्तत्र योजितः । प्रधानार्थान्तरस्य मुख्यतया प्रतिपाद्यार्थान्तरस्य सूचक इत्यर्थः ।

( वि, र ) **उद्दामे**ति—राजा परिगृहीतां माधवीलतामकालकुसुमितां वासव-दत्तायाः पराजयशंसिनीं तस्यैव दर्शयतो राज्ञ उक्तिरियम् । समदनां विरहिणीम् अन्यां नारीमिव । इमामुद्यानलतां पश्यन्नहं देव्या वासवदत्ताया मुखं कोपविपाट-लद्युतिं करिष्यामीत्यन्वयः । ममान्यनारीदर्शनेन इव तत्पराजयहेतुकुसुमितमाधवी-लतादर्शनेनापि तस्याः कोपो भावीत्यर्थः । उद्यानलताया विरहिनार्याश्च विशेषणा-न्याह—**उद्दामे**त्यादीनि । उत्कलिका उद्गतकलिका उत्कण्ठा च । तयोरुद्दामत्व-मतिशयः । विपाण्डुरं स्वभावाद् विरहाच्च । जृम्भा विकाशः श्वासविशेषश्च । श्वसनस्य वहिर्वायोर्निःश्वासस्य चोद्गमात् आयासं व्याकुलतां खेदञ्च आतन्वतीं कुर्वतीम् ।

( वि, ल ) **अत्र भाव्यर्थ** इति । राज्ञा सागरिकादर्शनात् वासवदत्तायाः भावी कोपो मुख्यतया प्रतिपाद्य इति प्रधानं सूचितम् । अत्र कुसुमितलतादर्शनाद् भाविनि कोपे चिन्तिते सागरिकादर्शनात् तत्कोप आगन्तुकेन श्लिष्टशब्देन प्रति-पादितः । अतः पताकास्थानसामान्यलक्षणसत्त्वम् ।

---

( लो, ऌ ) **उद्दामे**ति—उद्गता कलिका कोरक उत्कण्ठा च । जृम्भा विकाशः मुखनिःश्वासविशेषश्च । श्वसनो निःश्वासः वाह्यपवनश्च ।

---

1 'उद्दामोत्कलिकाविपाण्डुररुचम्' ( क. पु. ) 2 'रुचं' ( ख. पु. )
3 '—द्यमैः' ( च. ज. पु. )

एतानि चत्वारि पताकास्थानकानि क्वचिन्मङ्गलार्थं क्वचिदमङ्गलार्थमपि सर्वसन्धिषु भवन्ति। काव्यकर्त्तुरिच्छावशाद् भूयो भूयोऽपि भवन्ति। यत्पुनः केनचिदुक्तं—'मुखसन्धिमारभ्य सन्धिचतुष्टये क्रमेण भवन्ती'ति तदन्ये न मन्यन्ते, एषामत्यन्तमुपादेयानामनियमेन सर्वत्रापि सर्वेषामपि भवितुं युक्तत्वात्। (व)

**७. यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा।**
**विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्॥ ३२॥ (ए)**

अनुचितमितिवृत्तं यथा—रामस्य च्छद्मना वालिवधः। तच्च उदात्तराघवे नोक्तमेव। वीरचरिते तु वाली रामवधार्थमागतो रामेण हत इत्यन्यथा कृतः।

**अङ्केष्वदर्शनीया या वक्तव्यैव च सम्मता।**
**या च स्याद् वर्षपर्यन्तं कथा दिनद्वयादिजा। (श, ऐ)**
**अन्या च विस्तरा सूच्या सार्थोपक्षेपकैर्बुधैः॥ ३३॥**

अङ्केष्वदर्शनीया कथा युद्धादिकथा।

(वि, व) **क्वचिन्मङ्गलार्थमि**ति। प्रथमे मन्तुं प्रवृत्तवासवदत्ताज्ञानादभिलषितसागरिकाप्राप्तेरुद्दामोत्कलिकामित्यत्र भाविन्याः सागरिकाप्राप्तेश्च बोधनात् मङ्गलार्थता। रक्तप्रसाधितेत्यादौ कुरूणां मरणस्य भग्नं भीमेनेत्यादौ दुर्योधनोरुभङ्गस्य च बोधनात् तेषाममङ्गलार्थता। **भूयो भूयोऽपि** इति। स्थाने स्थाने इत्यर्थः। **सन्धिचतुष्टये** इति। पताकास्थानस्य चतुष्कत्वात् प्रथमोपस्थितसन्धिचतुष्टये इत्यर्थः। **सर्वत्राऽपी**ति। पञ्चसन्धिष्वपि इत्यर्थः। सर्वेषामिति सर्वपताकास्थानानामित्यर्थः।

(वि, श) **या च स्याद्वर्षपर्यन्तमि**ति। तादृशी कथा दिनद्वयादिनाभिनेतव्या इत्यर्थः। **अन्या चे**ति—अन्या विस्तरा बाहुल्यादभिनेतुमशक्या। सा कथा अर्थोपक्षेपकैर्वक्ष्यमाणाऽर्थोपक्षेपकपरिभावितैर्विष्कम्भकादिपञ्चभिर्बुधैः सूच्येत्यर्थः। सूच्या इत्यत्र त्याज्या इति क्वचित् पाठः। अङ्केष्वदर्शनीयेत्यादिकं पूर्वत्र अन्या इत्यत्रान्वितम्। तेन सापि अर्थोपक्षेपकैः सूच्येत्यर्थः।

(लो, ए) **यत्स्यादि**ति। रामादेर्हि छद्मना वालिवधादेरभिधाने गूढतरतदभिप्रायपरिज्ञानानिपुणानां नाटककाव्यादिभिः रसास्वादमुखापरण्डद्वारेण कृत्याकृत्यप्रवृत्तिनिवृत्तियोज्यानां सुकुमारमतीनां राजपुत्रप्रभृतीनां श्रीरामचन्द्रादिमहापुरुषचरितमालोच्यानुचितासु कथासु प्रवृत्तिप्रसङ्गः स्यादिति। महापुरुषचरितमप्यनुचितमितिवृत्तम्। नाटकादौ परिहार्यमिति भावः। रसस्यानुचितत्वं वक्ष्यमाणव्यभिचारिभावादेः स्वशब्दवाच्यत्वम्।

(लो, ऐ) ननु यदि दूराह्वानादयोऽङ्केष्वदर्शनीयास्तत्कथं नाटकादवुपक्षेपणीया। एकदिनमात्रस्य च कथाया अङ्कदर्शनीयत्वेन दिनद्वयादिकथायाः कथं परिग्रहः कथाविस्तारो वा रसविघ्नहेतुत्वात्कथमङ्के दर्शनीय इत्यत आह—**अङ्केष्वि**ति।

**वर्षादूर्ध्वन्तु यद् वस्तु तत् स्याद् वर्षादधोभवम् ॥३४॥** (ष,ओ)

उक्तं हि मुनिना— (भरत)

अङ्कच्छेदे कार्य्यं मासकृतं वर्षसञ्चितं वाऽपि ।
तत् सर्वं कर्त्तव्यं वर्षादूर्ध्वं न तु कदाचित् ॥ (औ)

एवञ्च चतुर्दशवर्षव्यापिन्यपि रामवनवासे ये ये विराधवधादयः कथांशास्ते ते वर्षवर्षावयवदिनयुग्मादीनामेकतमेन सूचनीया न विरुद्धाः ।

**दिनावसाने कार्य्यं यद्दिनेनैवोपपद्यते ।**
**अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत् ॥ ३५ ॥** (स)

के ते अर्थोपक्षेपका इत्याकाङ्क्षायामाह—

**अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ ।**
**चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि ॥ ३६ ॥**
**वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।**
**संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ।**
**मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ।**
**शुद्धः स्यात् सतु संकीर्णो नीचमध्यमकल्पितः ॥३७॥** (ह, अ)

---

(**वि, ष**) वर्षादधोभवमुत्तरभवं द्वितीयवर्षादिनाऽपि निष्पाद्यम् । पूर्वत्र वर्षपर्यन्तत्वमिह तु वर्षादूर्ध्वत्वमिति भेदान्न पौनरुक्त्यम् । **वर्षादूर्ध्वमि**ति । तत् सर्वं वर्षादूर्ध्वं न कर्तव्यम् । इदमुपलक्षणम् । किन्तु मासपर्यन्तमपि न कर्त्तव्यम् । किन्तु अङ्कविच्छेदे एव कार्यमित्यर्थः ।

**(वि,स) दिनावसाने** इति । दिनावसानकार्यं यद्वस्तु दिनेनैवोपपद्यते क्रियाबाहुल्याभावात् । दिनेनैवाभिनेतुं शक्यत इत्यर्थः । दिनैकोपपादनीयं वस्तु कथं वाच्यमित्यत्राह—**अर्थोपक्षेपकै**रिति ।

(**वि, ह**) विष्कम्भस्य द्वैविध्यमाह—**मध्येने**ति । उत्कृष्टाधमपात्रभिन्नं

---

(**लो, ओ**) ननु एकवर्षकथैव यद्यर्थोपक्षेपेण वाच्या तदूर्ध्वं कथा किं परित्याज्या इत्यत आह—**वर्षा**दिति ।

(**लो, औ**) **अङ्कच्छेद** इति । तादिति, प्रसिद्धम् । सर्वं माससञ्चितं वर्षसञ्चितं वाऽपि कार्यं कृत्यम् अङ्कच्छेदेऽपि कर्त्तव्यम् । अर्थादर्थोपक्षेपकैः सूच्यमित्यर्थः ।

(**लो, अ**) यथोद्देशलक्षणमाह—**वृत्ते**ति । पात्रस्य मध्यत्वम् अतिमहतः श्रीरामचन्द्रादेर्न्यूनत्वेन । विष्कम्भके पात्राणां संस्कृतभाषित्वस्य लक्ष्येषु दर्शनात् । मध्यमपात्राणां हि प्राकृतभाषित्वम् । तदुक्तं भाषार्णवे—

भाषामध्यमपात्राणां नाटकादौ विशेषतः ।
महाराष्ट्री सौरसेनीत्युक्ता भाषा द्विधा बुधैः ॥ इति ।

तत्र शुद्धो यथा—मालतीमाधवे श्मशाने कपालकुण्डला । संकीर्णो यथा रामाभिनन्दे क्षपणककापालिकौ ॥

अथ प्रवेशकः—

**प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।**

**अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥ ३८ ॥** ( क, आ )

अङ्कद्वयस्यान्तरिति प्रथमाङ्केऽस्य प्रतिषेधः । यथा वेण्याम् अश्वत्थामाङ्के राक्षसमिथुनम् । अथ चूलिका—

**अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका ॥ ३९ ॥** ( ख )

यथा वीरचरिते चतुर्थाङ्कस्यादौ ( नेपथ्ये ) भो भो वैमानिकाः ! प्रवर्तन्तां रङ्गमङ्गलानीत्यादि । रामेण परशुरामो जित इति नेपथ्ये पात्रैः सूचितम् ।

अथाङ्कावतारः—

**अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ।**

**यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥ ४० ॥** (ग)

यथाभिज्ञाने पञ्चमाङ्के, पात्रैः सूचितः षष्ठाङ्कस्तदङ्कस्याङ्गविशेष इवाऽवतीर्णः ।

अथाऽङ्कमुखम्—

**यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाऽखिला ।**

**तदङ्कमुखमित्याहुर्बीजार्थख्यापकञ्च तत् ॥ ४१ ॥** ( घ )

यथा मालतीमाधवे—प्रथमाङ्कादौ कामन्दक्यवलोकिते भूरिवसुप्रभृतीनां

---

पात्रमध्यम् । **कपालकुण्डले**ति । तत्कृत्यमित्यर्थः । एवमुत्तरत्रापि ।

( **वि, क** ) **अङ्कद्वये**ति । अङ्कद्वयपदस्य द्वितीयाद्यङ्कपरत्वमित्यभिप्रायः । **शेषमि**ति । वृत्तवर्तिष्यमाणेत्यादिरूपम् ।

( **वि, ख** ) अन्तर्जवनिका । वेशरचनास्थानवेष्टनपटः । अर्थस्य सूचनेत्यन्वयः ।

( **वि, ग** ) **अङ्कान्त** इति । अङ्कान्ते पात्रैः सूचितोऽर्थादपरः अङ्कः यदवतरति इत्यर्थः । **तदङ्कस्याऽविभागत** इति । विभागस्तद्भेदः, तदभिन्नत्वेन प्रयोजित इत्यर्थः । अत्र द्वितीयान्तात् तस् । अङ्कविच्छेदेऽपि तदङ्कोत्थापिताऽऽकाङ्क्षयैवाऽवतीर्णोऽपराङ्क इत्यर्थः । तदाह—**तदङ्कस्याङ्गविशेष इवे**ति ।

(**वि, घ**) **यत्र स्यादङ्क** इति । अङ्कानां समस्ताङ्कवक्ष्यमाणानामर्थानामखिला सूचनेत्यर्थः । अङ्कावतारे तदङ्कमात्रसूचनम् अङ्कमुखे तु समस्ताङ्कसूचनेति भेदः । बीजार्थेति बीजभूतार्थख्यापनात् । बीजार्थख्यापकसंज्ञकञ्च तदित्यर्थः ।

---

( **लो, आ** ) नीचपात्रप्रयोजित इत्यत्र नीचत्वं हि असंस्कृतभाषित्वादेव । तेन मरुगादिभिश्च प्रवेशकस्य प्रयोजितत्वम् ।

**व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ॥ ४९ ॥** ( ण ) *

यथा रामचरिते सुग्रीवादेः, वेण्यां भीमादेः, शाकुन्तले विदूषकस्य चरितम् ।

**[1]पताकानायकस्यापि स्यात्स्वकीयफलान्तरम् ।**

**गर्भे सन्धौ विमर्षे वा निर्वाहस्तस्य जायते ॥ ५० ॥** ( त )

यथा सुग्रीवादेः राज्यप्राप्त्यादि ।

यत्तु मुनिनोक्तम्–'आगर्भादाविमर्षाद्वा पताका विनिवर्त्तते' इति । तत्र पताकेति

---

कथं स एव उदयननरेन्द्र इति संस्कृतम् । वत्सराज एव उदयननामा । अवान्तरार्थे सागरिकाविरहे उदयननृपत्वेन ज्ञानात् हि तस्य विरहवर्णनप्रवृत्त्याऽविच्छेदः । किन्तु तत्सूचकं विनैव नृपदर्शनरूपकारणसत्त्वात् प्रवर्त्तते इत्यतोऽङ्कावतारादिभेदः । अङ्कावतारे तु पूर्वप्रविष्टपात्रैः सूचनेति ।

( **वि, ण** ) पताकारूपामर्थप्रकृतिमाह—**व्यापी**ति । वृत्तं नायकसहायस्य तच्च व्यापि अनेककालव्यापि । प्रासङ्गिकं नायकप्रसङ्गवृत्तम् ।

( **वि, त** ) प्रकारान्तरमाह—**पताकानायकस्यापी**ति । अनायकस्यापीत्यकारप्रश्लेषः । तथा चाऽनायकस्य सुग्रीवादेरपि स्वकीयराज्यलाभादिफलान्तरं यत्तदपि पताकान्तरमित्यर्थः । अपिशब्दात् नायकस्य रामस्य सेतुबन्धादि फलान्तरमपि पताकान्तरमिति बोध्यम् । **गर्भे सन्धावि**ति । गर्भे विमर्षे वा सन्धौ इत्युभयत्र सन्धावित्यस्यान्वयः । गर्भविमर्शोपसंहृतिरूपा हि पञ्चसन्धयो वक्ष्यन्ते । तत्र गर्भविमर्शरूपसन्धिद्वये तस्य पताकासंज्ञकस्याऽनायकनायकद्वयफलान्तरस्य निर्वाहो निष्पत्तिरित्यर्थः ।

( **वि, थ** ) **आगर्भादि**ति । मुनिवाक्ये पताकेत्युत्कीर्त्य व्याचष्टे–**पताकानायके**ति । अत्रापि अकारप्रश्लेषः । अनायकफलरूपा पताकैव आगर्भाद् आविमर्षाद्

---

( **लो, इ** ) **कथमि**ति । कथमेष स उदयननरेन्द्रः । रत्नावल्यामेव द्वितीयबिन्दुर्यथा देवीगमनानन्तरमेवान्तराविच्छेदे विदूषकं प्रति राज्ञा वचनम् । धिङ् मूर्ख ! अलं परिहासेन आभिजात्येन गूढो देव्यास्त्वया न लाञ्छितः कोपः । तथा हि देवीमेव प्रसादयितुं गच्छाव इति ।

---

* प्रासङ्गिकं परार्थस्य स्वार्थो यस्य प्रसङ्गतः ।
सानुबन्धं पताकाख्यं प्रकरी च प्रदेशभाक् ॥
यद् वृत्तञ्च परार्थं स्यात् प्रधानस्योपकारकम् ।
प्रधानवच्च कल्प्येत सा पताकेति कीर्त्तिता ॥
फलं प्रकल्प्यते यस्याः परार्थं केवलं बुधैः ।
अनुबन्धविहीनं स्यात् प्रकरीमिति निर्दिशेत् ॥ ( नाट्यसू )

1 'पताका नायकस्य, स्याच्च स्वकीय' ( क. ख. पु. )

पताकानायकफलं निर्वहणपर्य्यन्तमपि पताकायाः प्रवृत्तिदर्शनादिति व्याख्यातमभिनवगुप्तपादैः। (थ)

**प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ॥ ५१ ॥ (द)**

यथा कुलपत्यङ्के रावणजटायुसंवादः (ध)

**प्रकरी नायकस्य स्यान्न स्वकीयं फलान्तरम् ॥ ५२ ॥ (न)**

**अपेक्षितन्तु यत्साध्यमारम्भो यन्निबन्धनः।**

**समापनन्तु यत्सिद्ध्यै तत्कार्य्यमिति सम्मतम् ॥ ५३ ॥ (प)**

यथा रामचरिते रावणवधः।

**अवस्थाः पञ्च कार्य्यस्य प्रारब्धस्य फलार्थिभिः।**

**आरम्भयत्नप्राप्त्याशानियताऽऽप्तिफलागमाः ॥ ५४ ॥ (फ)**

तत्र—

**भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये ॥ ५५ ॥**

यथा रत्नावल्याम्—रत्नावल्यन्तःपुरनिवेशार्थं यौगन्धरायणस्यौत्सुक्यम्। एवं नायकनायिकादीनामप्यौत्सुक्यमाकरेषु बोद्धव्यम्। (ब)

**प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः ॥ ५६ ॥**

यथा रत्नावल्यां " तह वि ण अत्थि अण्णो दंशणोवाओ त्ति जधा तधा

---

वा निवर्त्तते इत्यर्थः। अस्मिन्नभिनवगुप्तपादव्याख्याने हेतुमाह—**निर्वाहपर्य्यन्तमपी**ति। पताकाव्यापि प्रासङ्गिकरूपायाः। अनायकस्य फलान्तररूपाया एव पताकाया आगर्भाद् वा आविमर्शाद्वा निवृत्तिरित्यर्थः।

**(वि, द)** प्रकरीरूपामर्थप्रकृतिमाह—**प्रासङ्गिकमि**ति। प्रसङ्गादुपस्थितं प्रदेशस्थं प्रदेशविशेषे निष्पन्नमित्यर्थः।

**(वि, ध) रावणजटायुसंवाद** इति। तस्याऽर्थप्रकृतित्वं तु रावणाहृतसीतावर्णनप्राप्तिद्वारा।

**(वि, न)** नायकस्यापि फलान्तरं पताका। प्रकरी तु न नायकस्य फलान्तरमित्यर्थः। नच रावणस्याऽनायकत्वात् फलं तत्फलकत्वात् अस्य पताकात्वप्रसक्तिरिति वाच्यम्। अनायकत्वेन नायकसहायस्यैव विवक्षितत्वात्, नञः सदृशार्थकत्वात्।

**(वि, प)** कार्य्यरूपार्थप्रकृतिमाह—**अपेक्षितमि**ति। आरम्भो नाटकारम्भः। समापनमपि नाटकस्यैव। **रावणवध** इति। तत्सिद्धौ सत्यां हि नाटकसमापनम्।

**(वि फ)** अस्य कार्य्यस्य पञ्चावस्था आह—**अवस्था** इति। निष्पादकनिष्पाद्यरूपा अवस्था इत्यर्थः। तत्रारम्भयत्नप्राप्त्याशानियताप्तिरूपाः चतस्रोऽवस्था निष्पादिकाः। फलागमरूपा तु निष्पाद्या इत्यवधेयम्।

**(वि, ब)** तत्रारम्भलक्षणमाह—**भवेदि**ति। आकर इति तत्तन्नाटके इत्यर्थः।

**(वि, भ) तह वि** इति। तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा

आलिहिअ जधासमीहिदं करइस्सं। (भ, ई)

इत्यादिना प्रतिपादितो रत्नावल्याश्चित्रलेखनादिर्वत्सराजसङ्गमोपायः। तथा च रामचरिते समुद्रबन्धनादिः।

**उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः॥ ५७॥ ( म )**

यथा रत्नावल्यां तृतीयेऽङ्के वेशपरिवर्त्तनाभिसरणादेः [1]सङ्गमोपायाद् वासवदत्तालक्षणापायशङ्कया च अनिर्द्धारितैकान्तसङ्गमरूपफलप्राप्तिप्रत्याशा[2]। एवमन्यत्र। ( य )

**अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता॥ ५८॥**

अपायाभावान्निर्द्धारितैकान्तफलप्राप्तिर्नियताप्तिः।

यथा—रत्नावल्याम्,(राजा) देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामीति देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता। ( र )

**सावस्था फलयोगः स्याद् यः समग्रफलोदयः॥ ५६॥ ( ल )**

यथा रत्नावल्यां रत्नावलीलाभश्चक्रवर्त्तित्वलक्षणफलान्तरलाभसहितः। एवमन्यत्र।

---

आलिख्य यथासमीहितं करिष्यामीति संस्कृतम्। अङ्गुलिकम्पनानन्तरं तथाप्युक्तिः। सङ्गमोपायः तदङ्गभूतो व्यापारः। व्यापारस्यैव यत्नत्वेनोक्तत्वात्।

( वि, म ) प्राप्त्याशामाह—**उपाये**ति। उपायापायशङ्काभ्यां प्राप्तिसम्भवः। उद्देश्यप्राप्तिसम्भावना प्राप्त्याशा।

( वि, य ) वेशपरिवर्त्तनं सागरिकाया वासवदत्तावेशकरणम्। तेन राज्ञः समीपे तस्या अभिसारः। सङ्गमोपायस्य राज्ञः सागरिकासङ्गमोपायस्य। वासवदत्ताया आगमनरूपापायस्य शङ्कयेत्यर्थः।

( वि, र ) **नियतफलप्राप्तिः सूचिते**ति। अत्र देव्याः कोपशान्तिरूपफलस्य नियताप्तिः। नचास्य कथं कार्यावस्थात्वं सागरिकासङ्गमनरूपकार्यस्य तेनाऽनिष्पादनात् इति वाच्यम्। तत्कोपस्य तत्प्रतिबन्धकत्वेन तदभावस्य तत्कारणत्वात्।

( वि, ल ) फलागममाह—**सावस्थे**ति। फलयोगः फलागमः। समग्रफलोदयः समस्तोद्देश्यफलसिद्धिः। सामग्र्यञ्च मुख्योद्देश्यफलस्य उद्देश्यफलान्तरसाहित्यम्। तद्वक्ष्यति फलान्तरसहित इति। इयमवस्था पूर्वोक्तचतुरवस्थाभिर्निष्पाद्या।

---

( लो, ई ) **तथापि** इति। तथापि नास्ति अन्यो दर्शनोपाय इति। यथा तथालिख्य यथासमीहितं करिष्यामि। यथा चन्द्रकलायां लक्ष्मीवरप्रदानरूपफलप्राप्तिसहितो राज्ञश्चन्द्रकलालाभः।

1 'सङ्गोपायाद्' ( ट. ड. पु. ) 2 रूपेति नास्ति ( ज. झ. पु. )

**यथासंख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः ।**
**पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः ॥ ६० ॥** ( व, उ )

तल्लक्षणमाह—

**अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ॥ ६१ ॥**

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः।(श)

तद्भेदानाह—

**मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः ।** (ऊ)
**इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते ॥ ६२ ॥** ( ष )

यथोद्देशं लक्षणमाह—

**यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।** ( ऋ )
**प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम् ॥ ६३ ॥** ( स )

यथा रत्नावल्यां प्रथमेऽङ्के ।

**फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ।**
**लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत् ॥ ६४ ॥** ( ह )

---

**( वि, व ) यथासंख्यमि**ति । आभिः पञ्चावस्थाभिर्योगादिति वृत्तस्य पञ्चविधैव भागाः । पञ्चसन्धयो भवन्तीत्यर्थः ।

**( वि, श )** तल्लक्षणं सन्धिसामान्यलक्षणम् । कथांशानामित्यत्र एकान्वये सतीत्यस्य व्याख्या । **एकेने**ति । एकैकेन प्रयोजनेनेत्यर्थः । अवान्तरेत्यादेर्व्याख्या **अवान्तरे**ति ।

**( वि, ष )** तद्भेदान् सन्धिभेदान् । **क्रमादि**ति—उक्तपञ्चावस्थासाहित्येनैव सन्धिपञ्चकसिद्धेरुक्तत्वात् । तत्सहितमुखसन्ध्यादिक्रमेण इत्यर्थः । तथा चारम्भावस्थायुक्त इति । वृत्ताद्याभासो मुखसन्धिः । यत्नयुक्तः प्रतिमुखसन्धिः । प्राप्त्याशायुक्तो गर्भसन्धिः । नियताप्तियुक्तो विमर्शसन्धिः । फलागमयुक्तः उपसंहृतिः ।

**( वि, स ) यत्र बीजे**ति । बीजमितिवृत्तस्य । **प्रारम्भेणे**ति । उत्साहरूपप्रारम्भावस्थायुक्ता इत्यर्थः । प्रथमेऽङ्के इति तत्र कन्दर्पपूजायां सागरिकाया राज्ञो दर्शनं विधिना आनीय घटितं बीजम् । तच्च सागरिकायास्तत्सङ्गमोत्साहसहितम् ।

**( वि, ह ) मुखसन्धिनिवेशिन** इति । बीजसमुत्पत्तिरूपमुखसन्धावुद्दिष्टस्य इत्यर्थः ।

---

**( लो, उ )** आभिरवस्थाभिरारम्भादिभिः ।

**( लो, ऊ )** उपसंहृतिः निर्वहणापरपर्याया ।

**( लो, ऋ ) नानार्थे**ति । नानाविधानामर्थानां वाच्यरूपाणां रसानाञ्च सम्भवो यस्यामित्यर्थः ।

यथा रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञानमानतया किञ्चिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्तान्तेन किञ्चिदुन्नीयमानस्योद्देशरूप उद्भेदः। ( क )

**फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन।**
**गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः॥ ६५॥ ( ख )**

फलस्य गर्भीकरणाद्गर्भः।

यथा रत्नावल्यां द्वितीयेऽङ्के, (सुसङ्गता) "सहि अदक्खिणा दाणिं सि तुमं जा एवं भट्टिणा हत्थेण गहिदा वि कोवं ण मुञ्चसी"त्यादौ समुद्भेदः। पुनर्वासवदत्ताप्रवेशे ह्रासः। तृतीयेऽङ्के तद्वार्त्तान्वेषणाय गतः कथं चिरयति वसन्तकः।" इत्यन्वेषणम्। ( विदू ) 'ही ही भो कोसम्बीरज्जलम्भेणावि ण तादिसो पिअवअस्सस्स परितोसो जादिसो मम सआसादो पिअवअणं सुणिअ भविस्सदि' इत्यादौ उद्भेदः। पुनरपि वासवदत्ताप्रत्यभिज्ञानाद् ह्रासः। पुनः सागरिकायाः सङ्केतस्थानगमने अन्वेषणम्। पुनर्लतापाशकरणे उद्भेदः। ( ग, अ )।

---

( वि, क ) **वासवदत्तया चित्रफलके**ति। सागरिकालिखितेन राज्ञा स्वेन च युक्तं चित्रफलकं राज्ञा प्राप्तम्। वसन्तकहस्तात् स्खलितं वासवदत्तया तत् प्राप्य तत्र लिखितस्य तदुभयानुरागबीजमुन्नीतम्। तादृशो भेदरूपः प्रतिमुखसन्धिश्च वासवदत्तायामागतायां सुसङ्गतावसन्तकयोर्व्यापाररूपो यत्नसहितः।

( वि, ख ) **प्रागुद्भिन्नस्ये**ति। प्रतिमुखसन्धावुद्भिन्नस्येत्यर्थः। मुहुर्ह्रासान्वेषणवान् समुद्भेद इत्यन्वयः। ह्रासेत्यत्र त्रासेत्यपि क्वचित् पाठः।

( वि, ग ) **सही**ति। सखि! अदक्षिणा इदानीमसि त्वम्। या एवं भर्त्रा हस्ते गृहीताऽपि कोपं न मुञ्चसीति संस्कृतम्। **ही ही**ति। ही हीत्याश्चर्ये। भो भोः कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषः यादृशो मम सकाशात् प्रियवचनं श्रुत्वा भविष्यतीति संस्कृतम्। उद्भेदः सागरिकासङ्गमोपायस्य। **वासवदत्ताप्रत्यभिज्ञाना**दिति सङ्केतभङ्गार्थमागतां तां दृष्ट्वेत्यर्थः। पुनः सागरिकाकर्त्तृकम्। उद्भेदः फलप्रधानोपायस्य। लतापाशकरणाद्धि राज्ञः सागरिकादर्शनं ततो गर्भसन्धेः प्राप्त्याशायोगरूपावस्थायोगः।

---

( लो, अ ) **सही**ति। सखि! अदक्षिणेदानीमसि त्वम्। या एवं भर्त्रा हस्तेऽपि गृहीताऽपि कोपं न मुञ्चसि। ही ही भो परितोषे। कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषः यादृशं मम सकाशात् प्रियवचनं श्रुत्वा भविष्यति।

**यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ।**
**शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ॥ ६६ ॥ (घ)**

अथ शाकुन्तले चतुर्थाङ्कादौ (अनसूया) पिअंवदे जइवि गान्धव्वेण विवाहेण णिव्वुतकल्लाणा पिअसही सउन्तला अणुरुअभत्तुभाइणी सम्वुत्तेति णिव्वुदं मे हिअअं इत्यत आरभ्य षष्ठाङ्कोपक्षिप्तात् शकुन्तलाप्रत्यभिज्ञानात् प्रागर्थसञ्चयः शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः । अथ निर्वहणम्—(ङ, लृ)

**बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।**
**ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥ ६७ ॥ (च)**

यथा वेण्याम् (कञ्चुकी) (उपसृत्य सहर्षम्) "महाराज ! वर्द्धसे अयं खलु भीमसेनो दुर्योधनक्षतजारुणीकृतसर्वशरीरो दुर्लक्ष्यव्यक्तिः ।" इत्यादिना द्रौपदीकेशसंयमनादिमुखसन्ध्यादिबीजानां निजनिजस्थानोपक्षिप्तानामेकार्थयोजनम् । यथा वा शाकुन्तले सप्तमाङ्के शकुन्तलाभिज्ञानादुत्तरोऽर्थराशिः । एषामङ्गान्याह—(छ)

**उपक्षेपः परिकरः परिन्यासो विलोभनम् ।**
**युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।**
**उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे ॥ ६८ ॥**

---

(वि, घ) **गर्भतोऽधिक** इति । गर्भसन्धौ किञ्चिदुद्भिन्नो ह्रासमान्वेषणवांश्च उद्भेदः । अत्र ततोऽधिको ह्रासराहित्यात् । सान्तरायः सविघ्नः ।

(वि, ङ) **अनसूये**ति । वक्त्र्या उत्कीर्त्तनम् । प्रियंवदे । इत्यादिकम् उक्तिः । "प्रियंवदे ! यद्यपि गान्धर्वेण विवाहेन निवृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्त्तृगामिनी संवृत्ता इति निर्वृत्तं मम हृदयम्" इति संस्कृतम् । **षष्ठाङ्क** इति । तत्पूर्वं दुर्वाससः शापेन राज्ञः शकुन्तलासमागमरूपप्रधानफलस्य उपायः प्रतिरुद्धः । **विस्मरणरूपे**ति ।

"विचिन्तयन्ती यमनन्यमानसा तपोधनं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमोदितामिव । इति ।

दुर्वाससः शापेन विस्मरणम् । अयं शापप्रतिबन्धकप्रधानफलोपायरूपः विमर्शसन्धिः शकुन्तलाया राजसमागमप्रत्याशारूपावस्थासहितः ।

(वि, च) **ऐकार्थ्यमुपनीयन्त** इति । एकोद्देश्यनिर्वाहादेकार्थता । स्पष्टमपरम् ।

(वि, छ) अयं प्रकीर्णार्थैकात्मतापनयनरूपो निर्वहणसन्धिः । उद्देश्यशकुन्तलासमागमरूपफलागमावस्थासहितः । **एषामि**ति पञ्चसन्धीनामित्यर्थः ।

(वि, ज) तत्र मुखसन्धेर्द्वादशाङ्गान्याह—**उपक्षेप** इत्यादि ।

---

(लो, लृ) पिअंवदे इति । प्रियंवदे यद्यपि गान्धर्वेण विधिना निवृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्त्तृगामिनी संवृत्तेति निवृत्तं मे हृदयम् ।

अथोद्देशं लक्षणमाह—

**काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ॥ ६९ ॥ (ए)**

काव्यार्थ इतिवृत्तलक्षणप्रस्तुताभिधेयः । यथा वेण्यां भीमः—

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्य पाण्डववधूपरिधानकेशान्
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥(झ)

**समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः ॥ ७० ॥**

यथा तत्रैव—

प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम् ।
जरासन्धस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत ॥ (ञ)

**तन्निष्पत्तिः परिन्यासः ॥ ७१ ॥**

यथा तत्रैव—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।

---

**(वि,झ)लाक्षागृहानले**ति—"स्वस्था भवन्तु कुरुराजसुताः सभृत्याः" इति सूत्रधारस्योक्तिं श्रुत्वा प्रविष्टस्य भीमस्योक्तिरियम् । लाक्षेत्यादिभिः प्राणेषु वित्तनिचयेषु च येऽस्मान् प्रहृत्य धार्तराष्ट्रा मयि जीवति सति स्वस्था भवन्ति? इति । अत्र काकुध्वनिना न स्वस्था भविष्यन्तीत्यर्थः । लाक्षेत्यादिना प्राणेषु प्रहारप्रवेशेन वित्तनिचयेषु च प्रहारः । परिधानकेशानित्यत्र द्वन्द्वः । अत्र काव्यार्थस्य कुरुकुलवधप्रतिपादनस्योत्पत्तिः ।

**(वि,ञ)** परिकरलक्षणमाह—**समुत्पन्ने**ति ।

**प्रवृद्धं यद्वैरमि**ति—सन्धिकरणविमुखस्य भीमस्य सहदेवं प्रत्युक्तिरियम् । **शिशोरेवे**ति—मम यौवनापेक्षापि नैर्न कृता, शिशुकाल एव विपदानात् । आर्यो युधिष्ठिरः । किरीटी अर्जुनः । युवां नकुलसहदेवौ । विरूढं कृष्णदौत्येन जातं, सन्धिमित्यन्वयः । अत्र समुत्पन्नलाक्षागृहादिकथनरूपार्थबाहुल्यम् ।

**(वि,ट)**परिन्यासलक्षणमाह—**तन्निष्पत्तिरि**ति । काव्याभिधेयरूपस्येतिवृत्तस्य निष्पत्तिः—भावनिष्पत्तिकथनमित्यर्थः । **चञ्चदि**ति—द्रौपदीं प्रति भीमस्योक्तिरियम् । हे देवि द्रौपदि ! तव कचान् केशान् वेणीबद्धान् कुर्वन् भीम उत्तंस-

---

**( लो, ए )** समुत्पत्तिः समुत्पत्तिमात्रम् ।

स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि ! भीमः ॥ ( ट,ऐ )°

अत्र उपक्षेपो नाम इतिवृत्तलक्षणस्य काव्याभिधेयस्य संक्षेपेणोपक्षेपण-मात्रम् । परिकरस्तस्यैव बहुलीकरणम् । परिन्यासस्ततोऽपि निश्चयापत्तिरूपतया परितो हृदये न्यसनमित्येषां भेदः । एतानि चाङ्गानि उक्तेनैव पौर्वापर्य्येण भवन्ति अङ्गान्तराणि त्वन्यथापि । (ठ)

**गुणाख्यानं विलोभनम् ॥ ७२ ॥**

यथा तत्रैव ( द्रौपदी ) " नाथ ! किं दुक्करं तुए परिकुविदेण " ।

यथा वा मम चन्द्रकलायां चन्द्रकलावर्णने–सेयं तारुण्यस्य विलास इत्यादि । यत्तु शाकुन्तलादिषु, ग्रीवाभङ्गाभिरामम् इत्यादि मृगादिगुणवर्णनं तद्बीजार्थसम्बन्धाभावान्न सन्ध्यङ्गम् । एवमङ्गान्तराणामप्यूह्यम् । ( ड )

**सम्प्रधारणमर्थानां युक्तिः ॥ ७३ ॥ ( ढ )**

यथा वेण्यां सहदेवो भीमं प्रति, "आर्य ! किं महाराजसन्देशोऽयमव्युत्पन्न एवार्य्येण गृहीतः" इत्यतः प्रभृति यावद्भीमवचनम् ।

युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।
न लज्जयति दाराणां सभायां केशकर्षणम् ॥ इति ।

---

यिष्यति । उत्तंसनेन दुर्योधनोरुकपालङ्कारेण विशिष्टान् करिष्यतीत्यर्थः। भीमः कीदृशः? सुयोधनस्य स्त्यानावनद्धेन प्रवृद्धसम्बद्धेन घनशोणितेन शोणपाणिः । सुयोधनस्य कीदृशस्य? चञ्चता चलता भुजेन भ्रमितया गदयाभिघातेन संचूर्णितमूरुयुगलं यस्य तादृशस्य। अत्र भाविन्या ऊरुभङ्गनिष्पत्तेः कथनम् ।

( **वि, ठ** ) उक्तत्रयाणां भेदं विविच्य दर्शयति–**अत्रे**ति । ततोऽपि निश्चया-पत्तिरूपतया इति निश्चयस्य भाविकर्त्तव्यनिश्चयस्यापत्तिरपादानं बोधनमिति यावत् । हृदये बोद्धृहृदये ।

( **वि, ड** ) विलोभनलक्षणमाह–**गुणाख्यानमि**ति । **किमि**ति । किं दुष्करं त्वया कुपितेन इति संस्कृतम् । इदं भीमस्य बलाधिक्यरूपगुणकथनम् । **तारुण्य-स्ये**ति । अत्र विलासहासपदे तज्जनकपरे सारोपया लक्षणया प्रयुक्ते । अत्र चन्द्रकला-सौन्दर्य्याख्यानम् । **मृगादिगुणवर्णनमि**ति । गुणः–स्पृहणीयो धर्म्मः, अत्र क्रियारूपः । बीजार्थः–शकुन्तलाप्राप्तिबीजरूपोऽर्थः । मृगक्रियावर्णनस्य तदसम्बन्धत्वात् ।

(**वि, ढ**) युक्तिलक्षणमाह–**सम्प्रधारणमि**ति । उद्देश्यार्थोपपादकयुक्तिप्रदर्शनम्

---

( **लो, ऐ** ) **स्त्याने**ति–स्त्यानः सन् अवनद्धः दृढीभूत इत्यर्थः ।

**प्राप्तिः सुखागमः ॥ ७४ ॥**

यथा तत्रैव, मथ्नामि कौरवशतं समरे न कोपाद् इत्यादि । ( द्रौपदी ) ( श्रुत्वा, सहर्षम् )

"णाध अस्सुदपुव्वं क्खु एदं वअणं ता पुणो पुणो भण ।" (ण)

**बीजस्यागमनं यत्तु तत्समाधानमुच्यते ॥ ७५ ॥ ( त )**

यथा तत्रैव, ( नेपथ्ये ) भो भो विराटद्रुपदप्रभृतयः ! श्रूयताम्—

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्त्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने[1] यौधिष्ठिरं जृम्भते ॥ (थ)

अत्र, 'स्वस्था भवन्ति मयि जीवती'त्यादिबीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात्समाधानम् । ( द )

**सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ॥ ७६ ॥**

यथा बालचरिते—

उत्साहातिशयं वत्स ! तव बाल्यञ्च पश्यतः ।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः ॥

यथा वा मम प्रभावत्याम्, नयनयुगासेचनकमित्यादि । ( ध )

**( वि, ण )** प्राप्तिलक्षणमाह—**प्राप्तिरि**ति । **णाधे**ति । नाथ ! अश्रुतपूर्वं खलु ईदृशं वचनम्, तत्पुनः पुनर्भण इति संस्कृतम् ।

**( वि, त )** समाधानलक्षणमाह—**बीजस्ये**ति । उक्तस्य उद्देश्यबीजस्य प्रधाननायकसम्मतत्वेन कथनं तत् ।

**( वि, थ ) यत्सत्ये**ति । यत् यौधिष्ठिरं क्रोधज्योति इति सर्वत्र विशेषणम् । **द्यूतारणी**ति । द्यूतरूपायामरण्यां मन्थनकाष्ठे नृपसुताया द्रुपदसुताया द्रौपद्याः केशस्याऽम्बरस्य चाकर्षणात् सम्भृतक्रोधज्योतिरग्निः । अन्यदपि हि ज्योतिररण्यामाकर्षणात्सम्भृतं भवति ।

**( वि, द )** समाधानपदस्य योगार्थमत्रोपपादयति—**अत्रे**ति । अत्र भीमोक्तबीजस्य प्रधाननायकयुधिष्ठिरसम्मतत्वकथनम् ।

**( वि, ध )** विधानरूपाङ्गलक्षणमाह—सुखदुःखाभ्यां कृतोऽर्थ इत्यर्थः । **उत्साहे**ति । इदं रामं प्रति जनकस्य वाक्यम् । अत्र उत्साहेन सुखम् । बाल्येन च दुःखम् । नयनयुगेत्यत्र यथोक्तार्थेन सुखम् । तद्विरहाद् दुःखम् ।

---

1 'कुरुकुले' ( च. ढ. पु.) 'कुरुबले' ( ड. ढ. पु )

**कुतूहलोत्तरा[1] वाचः प्रोक्ता तु परिभावना ॥ ७७ ॥**

यथा वेण्यां द्रौपदी युद्धं स्यान्नवेति संशयाना तूर्यशब्दानन्तरम्, "णाध किं दाणिं एसो पलअजलहरत्थणिदमंसलो[2] खणे खणे समरदुन्दुभी ताडीअदि।" (न, अ)

**बीजार्थस्य प्ररोहः स्यादुद्भेदः ॥ ७८ ॥**

यथा तत्रैव, (द्रौपदी) "णाध! पुणो वि तुए समासासइदव्वा हम्। (भीमः)

भूयः परिभवक्लान्ति[3]लज्जाविधुरिताननम्[4]।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्। (प, आ,)

**करणं[5] पुनः[6] प्रकृतार्थसमारम्भः ॥ ७९ ॥ (फ)**

यथा तत्रैव,

"देवि, गच्छामो वयमिदानीं कुरुकुलक्षयाय इति।

**भेदः संहतभेदनम्[7] ॥ ८० ॥**

यथा तत्रैव।

'अत एवाद्यप्रभृति भिन्नोऽहं भवद्भयः'।

केचित्तु, **भेदः प्रोत्साहना**इति वदन्ति। (ब)

---

(वि, न) भावनालक्षणमाह—**कुतूहले**ति। **णाधे**ति। नाथ किमिदानीम् एष प्रलयजलधरस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताड्यते। इति संस्कृतम्। अत्र युद्धेच्छा द्रौपद्याः कुतूहलोत्तरा एता वाचः।

(वि, प) उद्भेदलक्षणमाह—**बीजार्थस्ये**ति। प्ररोह उत्पाद्यतानिश्चयः। **णाधे**ति। नाथ पुनरपि समाश्वासयितव्याऽहम् इति संस्कृतम्। अहमिति द्रौपद्या आत्मनिर्देशः। **भूय** इति। बन्धुरितं नामितं भूयो न पश्यसीत्यन्वयः। भविष्यत्सामीप्ये वर्त्तमाना अत्र भीमस्य कौरववधोत्पाद्यतानिश्चयः।

(वि, फ) करणलक्षणमाह—**करणमि**ति। स्पष्टम्।

(वि, ब) भेदलक्षणमाह—**भेद** इति। अद्य प्रभृतीति सहदेवे भीमस्योक्तिः।

---

(लो, अ) **णाधे**ति। नाथ किमिदानीम् एष प्रलयजलधरः स्तनितमांसल· क्षणे क्षणे समरदुन्दुभिस्ताड्यते।

(लो, आ) **णाधे**ति। नाथ पुनरपि त्वया समाश्वासयितव्याहम्।

---

1 'लोद्भवा' (ख. पु.) 2 'मत्थरो' (क. ख. पु.)

3 'वाक्षान्ति' (इति ड. ढ. पु.) 4 'वन्धुरिताननम्' (ड. ढ. पु.) 5 'कारणं' (ज. झ. पु.) 6 'मतम्' (ज. झ. पु.) 7 'संहतिभेदनम्' (ग. ट. पु.)

अथ प्रतिमुखाङ्गानि–

**विलासः परिसर्पश्च विधूतं[1] तापनं[2] तथा ।**
**नर्म्म नर्म्मद्युतिश्चैव तथा प्रशंसनं[3] पुनः ।**
**विरोधश्च[4] प्रतिमुखे तथा स्यात् पर्य्युपासनम् ।**
**पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥ ८१ ॥ ( भ )**

तत्र—

**समीहा रतिभोगार्थो विलास इति कथ्यते ॥ ८२ ॥ ( म )**

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः ।

यथा शाकुन्तले–

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ ( य, इ )

**[5]दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते ॥ ८३ ॥ ( र )**

---

( **वि, भ** ) प्रतिमुखसन्धेस्त्रयोदशाङ्गान्याह–**विलास** इति ।

( **वि, म** ) **रतिभोगार्थे**ति । रतिरनुरागः, तद्भोगस्तद्विषयो नायिकादिः, तत्र समीहा इच्छा । यद्यपि रतिर्निधुवनम्, तद्भोगाय इच्छेत्येवमर्थ एव उदाहरणानुसारी युज्यते । तथापि ग्रन्थकृद्व्याख्यानुरोधादित्थं व्याख्यातम् ।

( **वि, य** ) **कामं प्रिये**ति । शकुन्तलालिप्सोर्दुष्मन्तस्य उक्तिरियम्—**अकृतार्थेऽपी**ति । कामिन उद्देश्यसिद्धिरेव मनसिजस्य कृतार्थता, तद्रहितेऽपि मनसिजे इत्यर्थः । उभयप्रार्थना उभयस्य रतिमनुरागाधिक्यम् कुरुत इत्यर्थः । प्रकृते च शकुन्तलाया भावदर्शनात् तत्प्रार्थनाप्रार्थितस्य दुष्मन्तस्य रतिं कुरुत इत्यर्थः ।

( **वि, र** ) परिसर्पलक्षणमाह—**दृष्टनष्टे**ति । नष्टेति णश अदर्शने इति धात्वर्थानुसाराद् दृष्टस्यानर्थक्यम् । तथा च पूर्वदृष्टस्य पश्चाददृष्टस्य वस्तुनोऽनुसरणमित्यर्थः ।

---

(**लो, इ**) **कामिमि**ति । मनसिजेऽकृतार्थेऽपि स्त्रीपुंसयुगलस्य सम्भोगं विनाऽपि उभयप्रार्थना अन्योऽन्यप्रार्थना रतिं प्रीतिं कुरुते इत्यर्थः । नायिकाया नायके नायकस्य नायिकायां यदि प्रार्थना दृश्यते तदा उपभोगाभावेऽपि तयोः प्रीतिर्भवति तेन तस्या भावदर्शनेन प्रार्थना मयि अभिव्यक्तेति मनः समाश्वासि इति ।

---

1 'विधूतम्' ( ग. पु. ) 2 'तपनम्' ( ग. पु. ) 3 'प्रगमनम्' (क. ख.पु.)
4 'निरोधः' ( ज. फ़. पु ) 5 'इष्ट' ( क. पु. )

यथा शाकुन्तले ( राजा ) "भवितव्यमत्र तया" तथा हि—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ( ल )

**कृतस्यानुनयस्यादौ विधूतं[1] त्वपरिग्रहः ॥ ८४ ॥ ( व )**

यथा तत्रैव "अलं वो अन्तेउरिआविरहपज्जुस्सुएण राएसिणा उवरुद्धेण । केचित्तु "विधूतं स्यादरतिः" इति वदन्ति । ( श )

**उपायादर्शनं यत्तु तापनं नाम तद् भवेत् ॥ ८५ ॥ ( ष )**

यथा रत्नावल्याम्—( सागरिका )

दुल्लहजणाणुराओ लज्जा गुरुई परव्वसो अप्पा ।
पियसहि ! विसमं पेम्मं मरणं सरणं णवरि एक्कम् ॥ (स)

**परिहासवचो नर्म्म ॥ ८६ ॥**

यथा रत्नावल्याम्—(सुसङ्गता) सहि ! जस्स किदे तुमं आआदा सो अअं दे पुरदो चिट्ठदि । ( सागरिका ) ( साभ्यसूयम् ) "कस्स किदे अहं आअदा" ( सुसङ्गता ) अइ अप्पसंकिदे ! णं चित्तफलअस्स । (ह)

---

( वि, ल ) **भवितव्यमत्र तये**ति राज्ञः उक्तिरियम् । तया शकुन्तलया भवितव्यं स्थातव्यमिति । तत्र हेतुमाह—**अभ्युन्नते**ति । यतोऽस्य लतागृहस्य पाण्डुसिकते द्वारेऽभिनवा पदपङ्क्तिर्दृश्यते । कीदृशी पुरस्तात् पदस्य पूर्वभागेऽभ्युन्नता । पश्चाद्भागे जघनगौरवादवगाढा । अत्र पूर्वदृष्टशकुन्तलानुसरणम् ।

( वि, व ) विधूतलक्षणमाह—**कृतस्ये**ति । आदौ कृतस्यानुनयस्य प्रीतेः पश्चादपरिग्रह आहार्य्य इत्यर्थः ।

( वि, श ) **तत्रैवे**ति । शाकुन्तल एव इत्यर्थः । **अलमि**ति—अलं वोन्तःपुरिकाविरहपर्युत्सुकेन राजर्षिणा उपरुद्धेनेति संस्कृतम् । अत्र सख्या उपरोधवशात् शकुन्तलाया आदौ प्रीतिर्लभ्यते । उपरोधनिषेधाच्चाहार्यस्तदपरिग्रहः । **केचिदि**ति—आहार्यादीदृशनिषेधादरत्यवगमादत्र अस्वरसः ।

( वि, ष ) तापनलक्षणमाह—**उपाये**ति । उद्देश्याऽर्थोपायः ।

( वि, स ) **दुल्लहे**ति—

"दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि ! विषमं प्रेम मरणं शरणं केवलमेकम् ॥" इति संस्कृतम् ।

दुर्लभजनो राजा । णवरीति केवले देशी, एवं प्रधानं शरणमित्यन्वयः ।

( वि, ह ) नर्मलक्षणमाह—**परिहासे**ति । **सही**ति । "सखि ! यस्य कृते त्वमायाता सोऽयं ते पुरतस्तिष्ठती"ति संस्कृतम् । **कस्से**ति । "कस्य कृतेऽहमागता"

---

1 'विधूतं' ( ग. पु. )

[1]धृतिस्तु परिहासजा

नर्म्मद्युतिः ॥ ८७ ॥

यथा तत्रैव, ( सुसङ्गता ) सहि अदक्खिणा दाणिं सि तुमं जा एव्वं भट्टिणा हत्थावलम्बिदावि कोवं ण मुञ्चसि । ( साग० ) ( सभ्रूभङ्गमीषद् विहस्य ) सुसङ्गदे ! दाणिं वि ण विरमसि । केचित्तु दोषस्याच्छादनं हास्यं नर्म्मद्युतिरिति वदन्ति । ( क )

**प्रशंसनं वाक्यं स्यादुत्तरोत्तरम् ॥ ८८ ॥ ( ख )**

यथा विक्रमोर्वश्याम्—( उर्वशी ) जअदु जअदु महाराओ ( राजा ) मया नाम जितं यस्य त्वया जय उदीर्य्यते इत्यादि ।

**विरोधो व्यसनप्राप्तिः ॥ ८९ ॥**

यथा चण्डकौशिके—( राजा ) नूनमसमीक्ष्यकारिणा मयाऽन्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः । ग )

**कृतस्यानुनयः पुनः ।**

**स्यात् पर्य्युपासनम् ॥ ९० ॥**

यथा [1]रत्नावल्याम्, (विदू०) भो मा कुप्प । एसा हि कदलीघरान्तरं गदेत्यादि । (घ)

**पुष्पं विशेषवचनं मतम् ॥ ९१ ॥ ( ङ )**

इति संस्कृतम् । **अयी**ति । "अयि अन्यशङ्किते ननु चित्रफलकस्य" इति संस्कृतम् ।

**( वि, क )** नर्मद्युतिलक्षणमाह—**धृतिरि**ति । परिहाससहिष्णुता इत्यर्थः । **सही**ति । सखि अदक्षिणा इदानीमसि त्वम् । या एवं भर्त्रा हस्तावलम्बिताऽपि कोपं न मुञ्चसीति । सुसङ्गते ! इदानीमपि न विरमसि । अत्र सागरिकायाः सुसङ्गताकृत-परिहाससहिष्णुता । नर्मणि तस्याऽसूयताप्रदर्शनाद् असहिष्णुता इति भेदः । **केचिदि**ति । अत्र दोषाच्छादनाप्रतीत्या अस्वरसः ।

**( वि, ख )** प्रशंसनरूपाङ्गस्य लक्षणमाह–**प्रशंसनमि**ति । प्रशस्यतेऽनेन इति प्रशंसनम्, उत्तरोत्तरं तादृशं वाक्यमेव प्रशंसननामाङ्गमित्यर्थः ।

**( वि, ग )** विरोधलक्षणमाह—**विरोध** इति । राजा हरिश्चन्द्रः । स्फुरदर्चिः-समूहोज्ज्वलनो विश्वामित्रः ।

**( वि, घ )** पर्युपासनाङ्गलक्षणमाह—**कृतस्ये**ति । कृतस्य कोपहेतोरित्यर्थः । पुनरनुनयः कोपाकरणहेतुप्रदर्शनमित्यर्थः । **भो** इति । भो वयस्य मा कुप्य । एषा हि कदलीगृहान्तरं गतेति संस्कृतम् । **एषे**ति—कदलीगृहान्तरप्रवेशस्य प्रदर्शनम् ।

**( वि, ङ )** पुष्पनामाङ्गलक्षणमाह—**पुष्पमि**ति । अयं विशेषो विलक्षण-पदार्थ इत्येवमर्थकं वचनमित्यर्थः ।

1 'द्युतिस्तु' ( क. पु. )

यथा तत्रैव, ( राजा हस्ते गृहीत्वा स्पर्शं नाटयति । )

( विदू० ) भो वअस्स एसा अपुव्वा सिरी तुए समासादिदा ।

( राजा । ) वयस्य ! सत्यम् ।

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष[1] स्वेदच्छद्मामृतद्रवः ॥ ( च )

**प्रत्यक्षनिष्ठुरं वज्रम् ॥ ९२ ॥**

यथा तत्रैव, ( राजा ) कथमिहस्थोऽहं त्वया ज्ञातः ? ( सुसंगदा ) ण केवलं तुमं समं चित्तफलएण । ता जाव गदुअ देवीए णिवेदइस्सम् । (छ)

**उपन्यासः प्रसादनम् ॥ ९३ ॥** (ज)

यथा तत्रैव, ( सुसंगदा ) भट्टा ! अलं सङ्काए । मएवि भट्टिणीए पसादेण कीलिदं ज्जेव एदिहिं । ता किं कण्णाभरणेण । अदोवि मे गरुअरो पसादो एसो जं तुए अहं एत्थ आलिहिदत्ति कुविदा मे पिअसही साअरिआ । एसा ज्जेव पसादीअदु । केचित्तु—उपपत्तिकृतो योऽर्थ उपन्यासः स कीर्त्तित इति वदन्ति, उदाहरन्ति च तत्रैव, अदिमुहरा क्खु सा गब्भदासीति । (झ)

**चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ॥ ९४ ॥** (ञ)

---

( **वि, च** ) **भो** इति । "भो वयस्य एषाऽपूर्वा श्रीस्त्वया समासादिता" इति संस्कृतम् । **श्रीरेषे**ति । स्वेदच्छद्म घर्मव्याजः । पारिजातपल्लवाद् अमृतद्रवस्रवणात् ।

( **वि, छ** ) वज्ररूपाङ्गलक्षणमाह—**प्रत्यक्षे**ति । **न केवलमि**ति । न केवलं त्वं समं चित्रफलकेन । तद्यावद्गत्वा देव्यै निवेदयिष्यामि । इति संस्कृतम् । इदं सुसङ्गतावाक्यं राज्ञः साक्षान्निष्ठुरम् ।

( **वि, ज** ) उपन्यासलक्षणमाह—**उपन्यास** इति । प्रसादनं प्रसादन-प्रार्थना ।

( **वि, झ** ) भर्तः ! अलं शङ्कया मयापि भर्त्र्याः प्रसादेन क्रीडितमेव एतैः । तत् किं कर्णाभरणेन ? अतोऽपि मे गुरुतरः प्रसाद एष यत्त्वयाऽहमत्रालिखितेति कुपिता मे प्रियसखी सागरिका । एषैव प्रसाद्यतामिति संस्कृतम् । तैः कर्णाभरणैः किं त्वयेत्यादिः सागरिकोक्तेरनुवादः । अत्र सागरिकाप्रसादनप्रार्थना उपपत्तिकृत इति युक्त्युपपादसत्वादुक्तेत्यर्थः । **अदी**ति । अतिमुखरा खल्वेषा गर्भदासीति संस्कृतम् । गर्भदासी अन्तःपुरदासी । अत्र समं चित्रफलकेनेत्यादि निष्ठुरं सुसङ्गतया पूर्वमुक्तं वचनं विदूषकोक्त्युपपादकम् ।

( **वि, ञ** ) वर्णसंहाराङ्गलक्षणमाह—**चातुर्वर्ण्ये**ति । ब्राह्मणाद्यनेकवर्णानां मेलनकथनमित्यर्थः ।

---

1 'पतत्येष' ( ट. ढ. पु. )

यथा वीरचरिते तृतीयेऽङ्के—

परिषदियमृषीणामेष वीरो युधाजित्

[1]सममृषिभिरमात्यैर्लोमपादश्च वृद्धः।

अयमविरतयज्ञो ब्रह्मवादी पुराणः

प्रभुरपि जनकानामद्रुहो याजकास्ते[2] ॥ (ट)

इत्यत्र ऋषिक्षत्रादीनां वर्णानां मेलनम्। अभिनवगुप्तपादास्तु, वर्णशब्देन पात्राण्युपलक्ष्यन्ते। संहारो मेलनमिति व्याचक्षते उदाहरन्ति च रत्नावल्यां द्वितीयेऽङ्के—अदोवि मे अअं गरुअरो पसादो इत्यादेरारभ्य, णं हत्थे गेह्णिअ पसादेहि णं। ( राजा ) क्वासौ क्वासावित्यादि।

अथ गर्भाङ्गानि–( ठ )

**अभूताहरणं मार्गो रूपोदाहरणे क्रमः।**
**संग्रहश्चानुमानं च प्रार्थना क्षिप्तिरेव च।**
**[3]त्रोटकाधि[4]बलोद्वेगा गर्भे स्युर्विद्रवस्तथा ॥ ६५ ॥**
**तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम् ॥ ६६ ॥**

यथा अश्वत्थामाङ्के—

"अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा।

---

( वि, ट ) **परिषदियम्**इति। मिलितब्राह्मणाद्यनेकवर्णसभाप्रदर्शनमिदम्। इयमृषीणां परिषद् सभा। युधाजित्। केकयदेशपतिरपि ऋषिभिरमात्यैश्च समम् एष वृद्धो राजा लोमपादः। अयमपि जनकानां जनकवंशस्य प्रभुः सीरध्वजः अविरतयज्ञो ब्रह्मवादी च। अद्रुहः द्रोहशून्यास्ते प्रसिद्धा याजकाः एते इति शेषः।

( वि, ठ ) **पात्राणी**ति। नाट्यपात्राणीत्यर्थः। **अदोवी**ति। अतोऽपि मे अयं गुरुतरः प्रसाद इत्यादेरारभ्य इत्यर्थः। इत्यादेरित्यवधौ पञ्चमी। जं किण अहं तत एत्थ आलिहि देत्यादिकमादावित्याद्यवधिरूपेत्यर्थः। **णं हत्थे**ति। ननु हस्ते गृहीत्वा प्रसादय एनामित्यर्थः। क्वासौ क्वासाविति हर्षे वीप्सा। अत्र राजा सुसङ्गता सागरिकाश्च पात्राणि, एषां मेलनम्।

( वि, ड ) गर्भसन्धेर्द्वादशाङ्गान्याह—**अभूते**ति। अभूताहरणलक्षणमाह—**तत्र व्याजे**ति। **अश्वत्थामा हत** इति युधिष्ठिरस्य व्याजाश्रयवाक्यम्।

---

1 'सह नृपतिरमात्यैः' ( क. पु. ) 2 'मङ्ग भो याचकस्ते' ( क. पु. )
3 'तोट–' ( ञ. पु. ) 4 'दि' ( क. पु. )

स्वैरं शेषे गज इति किल[1] व्याहृतं सत्यवाचा[2]" ॥ (ड)

**तत्त्वार्थकथनं मार्गः ॥ ६७ ॥**

यथा चण्डकौशिके–( राजा ) भगवन् !

गृह्यतामर्जितमिदं भार्य्यातनयविक्रयात् ।
शेषस्यार्थे करिष्यामि चाण्डालेऽप्यात्मविक्रयम् ॥ (ढ)

**रूपं वाक्यं वितर्कवत् ॥ ६८ ॥**

यथा रत्नावल्याम् । ( राजा )

मनः प्रकृत्यैव चलं दुर्लक्ष्यञ्च तथापि मे ।
कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥ ( ण )

**उदाहरणमुत्कर्षयुक्तं वचनमुच्यते ॥ ६६ ॥ ( त )**

यथा अश्वत्थामाङ्के—

यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्म्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥ (थ)

---

**( वि, ढ )** मार्गरूपाङ्गलक्षणमाह—**तत्त्वार्थे**ति । अव्याजकथनमित्यर्थः । **गृह्यतामि**ति–विश्वामित्रं प्रति हरिश्चन्द्रनृपतेरुक्तिरियम् । भार्य्यायास्तनयस्य विक्रयणादर्जितमिदं वित्तं गृह्यतामित्यन्वयः । शेषस्य वित्तस्याप्यर्थे निमित्तमात्मविक्रयं करिष्यामि । तत्र राज्ञः आपद्यपि अव्याजकथनम् ।

**( वि, ण )** रूपात्मकमङ्गमाह—**रूपमि**ति । वितर्कोऽसम्भविवस्तुहेत्वनुसन्धानम् । **मनः प्रकृत्यैवे**ति–सागरिकाविरहिणो राज्ञोऽयं वितर्कः । दुर्लक्ष्यं लक्षितुं द्रष्टुमशक्यम् ।

**( वि, त )** उदाहरणरूपस्याङ्गस्य लक्षणमाह—**उदाहरणमि**ति । उत्कर्षयुक्तं स्वाहङ्कारयुक्तम् ।

**( वि, थ ) यो यः शस्त्रमि**ति । क्रुद्धस्याश्वत्थाम्न उक्तिरियम् । मयि रणे चरति सति पाण्डवीनां चमूनां मध्ये स्वभुजगुरुमदः सन् यो यः शस्त्रं बिभर्ति एवं यो यः पाञ्चालगोत्र इत्यादि । एवं **यो यस्तत्कर्म** इत्यादि । तत्कर्म मृतस्य मम पितुः शिरश्छेदनरूपम् । एवं यश्च यश्च मम प्रतीपः क्रोधान्धोऽहं जगतामन्तकस्य तस्य तस्यान्तक इत्यर्थः । तैर्जगदन्तकस्य क्रोधोद्दीपनाद् एव जगदन्तक इत्यर्थः ।

---

1 'पुनर्' ( क. पु. ) 2 'तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः । शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥" इत्युत्तरार्धस्त्वधिकः (क. पु.)

**भावतत्त्वोपलब्धिस्तु क्रमः स्यात्॥ १०० ॥**

यथा शाकुन्तले, ( राजा ) " स्थाने खलु विस्मितनिमेषेण चक्षुषा प्रियामवलोकयामि। तथा हि–

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन ॥ (द)

**संग्रहः पुनः। सामदानार्थसंपन्नः॥ १०१ ॥**

यथा रत्नावल्याम्-(राजा) साधु वयस्य ! इदं ते पारितोषिकम्। (इति कटकं ददाति )। ( ध )

**लिङ्गादूहोऽनुमानता ॥ १०२ ॥**

यथा जानकीराघवे नाटके ( रामः )।

लीलागतैरपि तरङ्गयतो धरित्री-
मालोकनैर्नमयतां जगतां शिरांसि ।
तस्यानुमापयति काञ्चनकान्तिगौर-
कायस्य सूर्य्यतनयत्वमधृष्यताञ्च ।। ( न )

**रतिहर्षोत्सवानान्तु प्रार्थनं प्रार्थना भवेत्॥ १०३ ॥**

यथा रत्नावल्याम्—प्रिये सागरिके !

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भास्तम्भनिभं [1]तथोरुयुगलं बाहू मृणालोपमौ।

---

( वि, द ) क्रमरूपाङ्गलक्षणमाह–**भावे**ति। भावस्यानुरागस्य तत्त्वेनोपलब्धिरित्यर्थः **उन्नमिते**ति–पदानि श्लोकघटकपदानि रचयन्त्याः अस्या आननं कर्तृ पुलकाञ्चितेन कपोलेन मयि अनुरागं कथयति इत्यर्थः। कीदृशमाननम् ? उन्नमितैकभ्रूलतम्।

( वि, ध ) **सामदाने**ति। साम्ना प्रीत्या दानेन च संप्रदानस्य दीयमानधनसंपत्तिरित्यर्थः। **साध्वि**ति–अत्र दीयमानकटकरूपधनसंपात्तिर्विदूषकस्य।

( वि, न ) अनुमानरूपाङ्गलक्षणमाह–**लिङ्गादि**ति। अनुमानता अनुमानम्। **लीले**ति। परशुरामवर्णनमिदम्। तस्य लीला व्यवसायः। सूर्य्यतनयत्वं सूर्य्यतुल्यतेजस्वित्वेन सूर्य्यपुत्रत्वमधृष्यत्वं चानुमापयति। तस्य कीदृशस्य गतैर्गमनैरपि धरित्रीं तरङ्गयतः चालयतः। आलोकनैर्जगतां शिरांसि नमयतस्तद्दृष्टमात्रैः सर्वैः प्रणम्यमानत्वात्। काञ्चनकान्तिवद् गौरकायस्य।

( वि, प ) प्रार्थनाङ्गरूपाङ्गलक्षणमाह–**रती**ति। रत्यर्थं यो नायिकाया हर्षो नायकस्य तादृशोत्सवानां प्रार्थनेत्यर्थः। **शीतांशुरि**त्यादि। शीतांशुरुपत्वादिना

---

1 'तवो' ( ज. क्र., पु. )

इत्याह्लादकराखिलाङ्गि ! रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥ (प)

इदञ्च प्रार्थनाख्यमङ्गम्। यन्मते निर्वहणे इह भूतावसरत्वाभावात्[1] प्रशस्ति-नामाङ्गं नास्ति तन्मतानुसारेणोक्तम्। अन्यथाङ्गानां पञ्चषष्टिसंख्यकत्वप्रसङ्गात्।(फ)

**रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्** ॥ १०४ ॥

यथा अश्वत्थामाङ्के—

एकस्यैव विपाकोऽयं दारुणो भुवि वर्त्तते।
केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः ॥ (ब)

**त्रोटकं पुनः। संरब्धवाक्** ॥ १०५ ॥

यथा चण्डकौशिके—(कौशिकः)।

आः पुनः कथमद्यापि न संभृताः[2] स्वर्णदक्षिणाः। (भ)

**अभिबलमभिसन्धिश्छलेन यः** ॥ १०६ ॥ (म)

---

आह्लादकराखिलाङ्गि ! एहि एहि रभसात् बलात् मदङ्गानि निःशङ्कमालिङ्ग्य अनङ्ग-तापविधुराणि तानि निर्वापय। तापशून्यानि कुरु इत्यर्थः।

अत्रालिङ्गनार्धानोत्सवप्रार्थना।

(**वि, फ**) अत्रैतदंशस्य निर्वहणसन्धेः प्रशस्तिनामाङ्गस्य वैकल्पिकी स्थितिः। अनयोर्मिलितस्थितसत्त्वे तु वक्ष्यमाणचतुःषष्टिसंख्यासन्ध्यङ्गानां न भवति। पञ्चष-ष्टित्वापत्तेः। तथा हि अत्र गर्भसन्धौ एतदङ्गसत्त्वे एतान्यङ्गानि त्रयोदश भवन्ति, मुखसन्ध्यङ्गानि च द्वादशोक्तानि, अन्यसन्धिद्वयाङ्गानि च त्रयोदश त्रयोदश। निर्वहणसन्ध्यङ्गानि चतुर्दशेति। पञ्चषष्टित्वं प्रसजति। अतो यन्मते निर्वहणसन्धौ प्रशस्तिनामकं चरमाङ्गं नास्ति तन्मते एवात्रेदम् अङ्गमन्यथा तु नेत्याह—**इदञ्चे**ति। तत्र प्रशस्तिनामाङ्गसत्त्वे हेतुमाह—**भूतावसरत्वाभावा**दिति। भूतानि प्राणिनो नाट्यपात्राणि तदवसरत्वं तद्वत्त्वम्। अङ्गानाम् इत्यङ्गानि भूतावसराण्युच्यन्ते। प्रशस्त्यङ्गस्य सदस्याशीर्वादत्वेन तथात्वाभावादित्यर्थः।

(**वि, ब**) क्षिप्तिरूपमङ्गमाह—**रहस्यार्थस्ये**ति। रहस्यार्थोऽभिनेतव्यार्थ इतिवृत्तरूपोऽर्थस्तस्य भेद उत्पत्तिसूचनम्। **एकस्ये**ति। एकस्य द्रौपदीकेशग्रहणस्य। द्वितीये मृतद्रोणस्य धृष्टद्युम्नेन केशग्रहेऽत्र सर्वसंहाररूपस्य रहस्यस्य उत्पत्तिसूचनम्।

(**वि, भ**) त्रोटकरूपाङ्गलक्षणमाह—**त्रोटकं पुन**रिति। संरब्धवाक् सक्रोध-वाक्। **आः पापे**ति। हरिश्चन्द्रं नृपं प्रति पृथिवीदानदक्षिणादानार्थं विश्वामित्रस्य सक्रोधवाक्।

(**वि, म**) अधिबलाङ्गलक्षणमाह—**अधिबल**मिति। अभिसन्धिरुद्देशघट-नार्थं छलेनानुसन्धानम्।

---

1 'भूतावसरत्वात्' (इति क. ख. पु) 2 'सम्भूताः' (क. पु.)

यथा वेण्यां, ( कृष्णः )—"एते भगवन्तो व्यासवाल्मीकिप्रभृतयोऽभिषेकं धारयन्तस्तिष्ठन्ति" । इति । अनेन प्राप्तराज्यस्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः । (द)

**शुश्रूषादिः प्रसादः स्यात् ॥ १३० ॥**

यथा तत्रैव–भीमेन द्रौपद्याः केशसंयमनम् ।

**आनन्दो वाञ्छितागमः ॥ १३१ ॥**

यथा तत्रैव, ( द्रौपदी ) "विसुमरिदं एदं वावारं णाधस्स पसादेण पुणोवि सिक्खिस्सम् ।" (ध)

**समयो दुःखनिर्य्याणम् ॥ १३२ ॥**

यथा रत्नावल्याम्—वासवदत्ता (रत्नावलीमालिङ्ग्य) "समस्सस बहीणिए समस्सस ।" (न)

**तद्भवेदुपगूहनम्**
**यत् स्यादद्भुतसंप्राप्तिः ॥ १३३ ॥**

यथा मम प्रभावत्यां नारददर्शनात् प्रद्युम्न ऊर्ध्वमवलोक्य—

दधद्विद्युल्लेखामिव कुसुममालां परिमल-
भ्रमद्भृङ्गश्रेणीध्वनिभिरुपगीतां तत इतः ।
दिगन्तं ज्योतिर्भिस्तुहिनकरगौरैः शवलय-[1]
न्नितः कैलासाद्रेः पतति वियतः किं पुनरिदम् ? ॥ ( प )

( वि, द ) कृतिरूपमङ्गमाह—**लब्धानुगमनमि**ति । अनुगमनं स्थिरीकरणम् । अभिषेकं धारयन्तः प्रापयन्तः । धारयन्तीति क्वचित् पाठः ।

(वि, ध) आनन्दरूपाङ्गमाह—**आनन्द** इति । **विसुमरिदं** इति । विस्मृतमिमं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्ये इति संस्कृतम् । व्यापारः केशसंयमनरूपः ।

( वि, न ) समयरूपमङ्गमाह—**समय** इति । **समस्सस** इति । समाश्वसिहि भगिनि ! समाश्वसिहीति संस्कृतम् । इयं सागरिकायाः मातुलकन्यकात्वेन परिचये सति वासवदत्ताया उक्तिः ।

( वि, प ) उपगूहनरूपमङ्गमाह—**तद्भवे**दिति । अद्भुतसंप्राप्तिः अद्भुतदर्शनम् । **दधदि**त्यादि । कैलासाद्रेरित्यपाये पञ्चमी । तथा च कैलासाद्रेरपेतो वियतो वियतोऽवधेः पतति कश्चित् पदार्थ इति शेषः । कैलासाद्रिरिति क्वचित् प्रामादिकः पाठः । तस्य कुसुममालाधारणाभावात् । कीदृशः पदार्थः ? विद्युल्लेखामिव कुसुममालां

1 'धवलयन्' ( क. पु. )

**सामदानादि भाषणम् ॥ १३४ ॥**

यथा चण्डकौशिके—( धर्म्मः ) "तदेहि । धर्मलोकमाधितिष्ठ ।" (फ)

**पूर्ववाक्यन्तु विज्ञेयं यथोक्तार्थोपदर्शनम् ॥ १३५ ॥**

यथा वेण्यां—( भीमः ) "बुद्धिमतिके ! क्व सा भानुमती परिभवतु सम्प्रति पाण्डवदारान्"। (ब)

**वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते ॥ १३६ ॥**

यथा सर्वत्र—"किन्ते भूयः प्रियमुपकरोमी"ति । (भ)

**नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ॥ १३७ ॥**

यथा प्रभावत्याम्—

राजानः सुतनिर्विशेषमधुना पश्यन्तु नित्यं प्रजा
जीयासुः सदसद्विवेकपटवः सन्तो गुणग्राहिणः ।
शस्यस्वर्णसमृद्धयः समधिकाः सन्तु क्ष्मामण्डले
भूयादव्यभिचारिणी त्रिजगतो भक्तिश्च नारायणे ॥

अत्र च उपसंहारप्रशस्त्योरन्ते एकेन क्रमेणैव स्थितिः । (म)

---

दधत् । मालां कीदृशीं? परिमलेन तत इतो भ्रमन्तीनां भृङ्गश्रेणीनां ध्वनिभिरुपगीताम् । पदार्थश्च कीदृशः ? तुहिनकरगौरैर्ज्योतिर्भिर्दिगन्तं शवलयन् । दिगन्तस्यापि श्यामत्वेन धवलज्योतिर्मिश्रणात् शवलता । अतः किं पुनरिदमित्यर्थः ।

**( वि, फ )** भाषणरूपमङ्गमाह—**सामदाने**ति । सम्प्रदानस्य शान्तत्वं साम तेन दानम् । आदिपदाद् दातुर्मुक्तिर्वा इति । यत्तु संग्रहरूपस्य गर्भसन्ध्यङ्गस्य सामदानार्थसम्पत्तिरिति लक्षणम्, तत्र दातुरेव सामप्रीतिरर्थश्च धनमिति भेदः । धर्मलोकं धर्म्मार्ज्जितं लोकम् ।

**( वि, ब )** पूर्ववाक्यरूपमङ्गमाह—**पूर्ववाक्यं त्वि**ति । यथोक्तार्थोपदर्शनम् परेण यथोक्तकटुवाक्यस्य स्मरणमित्यर्थः । भानुमती दुर्य्योधनस्य पत्नी तया दासीद्वारा प्राक् कटूक्तिः कृता ।

**(वि, भ)** काव्यसंहाररूपमङ्गमाह—**वरप्रदाने**ति । वरप्रदानार्थं संप्राप्तिस्तत्कालोपस्थितिरित्यर्थः । **सर्वत्रे**ति । सर्वनाटकान्ते इत्यर्थः । किन्ते इत्यादिना हि वरप्रदानार्थं तत्कालोपस्थितिर्लभ्यते ।

**( वि, म )** प्रशस्तिरूपमङ्गमाह—**नृपदेशादी**ति । नृपस्य देशादेः शान्तिः स्वस्त्ययनमाशीर्वाद इत्यर्थः । **राजान** इत्यादि । अधुना सुतानिर्विशेषं यथा स्यात् तथा राजानः प्रजाः पश्यन्तु । गुणग्राहिणः सन्तः शिष्टा जीयासुः उत्कर्षभाजो भवन्तु, यतस्ते सदसद्विवेकपटवः । क्ष्मामण्डले शस्यानां सुवर्णानाञ्च समृद्धयः समधिकाः सन्तु । नारायणे चाव्यभिचारिणी अप्रादाचित्की भक्तिः त्रिजगतां

इह च मुखसन्धौ उपक्षेपपरिकरपरिन्यासयुक्त्युद्भेदसमाधानानां, प्रतिमुखे च परिसर्पणप्रगमनवज्रोपन्यासपुष्पाणां, गर्भे अभूताहरणमार्गत्रोटकाधिबलावक्षेपाणां, विमर्शे अपवादशक्तिव्यवसायप्ररोचनादानानां प्राधान्यम्। "अन्येषाञ्च यथासम्भवं स्थिति"रिति केचित्। (य)

चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः।
कुर्यादनियते तस्य सन्धावपि प्रवेशनम्।
रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता॥ १३८॥

यथा वेणीसंहारे तृतीयाङ्के दुर्योधनकर्णयोर्महत् संप्रधारणम्। एवम्[1]अन्यत्राऽपि। यत्तु रुद्रटादिभिर्नियम एवेति उक्तं तल्लक्ष्यविरुद्धम्। (र)

इष्टानुसरणाश्चर्य्यलाभो वृत्तान्तविस्तरः।
रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा।
प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम्। (ल, ई)

---

भूयादिति नृपदेशादिशान्तिः। **अत्र चे**ति—काव्यसंहाररूपमङ्गोपसंहारः। अन्ते नाटकान्ते उपसंहारप्रशस्त्योर्निर्दिष्टक्रमेणैवोपस्थितिरित्यर्थः।

**(वि, य)** सन्धिषु यान्यङ्गान्युक्तानि तेषु कतिचित् अङ्गान्येव आवश्यकत्वेन प्रधानानीति केचिदाहुः। सन्धौ सन्धौ च तानि दर्शयति। **इह चे**ति। केचिदिति अस्वरसः। सर्वेषामङ्गानामनियमे नानावश्यकत्वदर्शनादुपसंहारप्रशस्त्यो-रेवावश्यकत्वदर्शनात्।

**(वि, र) चतुःषष्टिरि**ति। प्रार्थनाप्रशस्त्योर्मतभेदेन वैकल्पिकत्वस्योक्तत्वात्। समुच्चये तु पञ्चषष्टित्वापत्तेरित्युक्तं प्रागेव। सन्धीनामुक्तान्यङ्गानि प्रायिकत्वाभिप्रायेणैवोक्तानि। रसानुगुणानुरोधेन तु एकसन्धेरङ्गानि अन्यसन्धावपि कुर्य्यादित्याह—**कुर्य्यादनियते** इति। अनियते सन्धावपि तस्याङ्गस्य निवेशनं कुर्य्यात् इत्यन्वयः। **संप्रधारणमि**ति। मुखसन्धेर्युक्तिरूपमङ्गसंप्रधारणं तच्च गर्भसन्धावपि कृतमित्यर्थः। तत्र दुर्य्योधनकर्णाभ्यां युक्तिकरणात्। **तल्लक्ष्यविरुद्धमि**ति। लक्ष्येषु उदाहरणनाटकेषु अनियमदर्शनात् विरुद्धमित्यर्थः।

**(वि, ल)** इदानीमुक्ताङ्गानां यथासम्भवं षट् फलान्याह। **इष्टानुसरणे**ति। इष्टस्यार्थस्यानुसरणमित्यर्थः। **इष्टार्थरचने**ति। इष्टानुहरणेति क्वचित् पाठः। आश्चर्यलाभोऽद्भुतवस्तुलाभ इत्यर्थः। वृत्तान्तस्य विस्तरेण ज्ञानम्। रागप्राप्तिरनुरागलाभः। गोप्यानामर्थानां संगोपनम्। प्रकाश्यानामर्थानां प्रकाशनञ्चेति प्रयोगस्य मुखसन्ध्यादि-

---

**(लो, ई)** यद्वस्तु गोपयितुमिष्टं तदङ्गस्वरूपविज्ञापनेन सुखेन गोपयितु एवं प्रकाश्यानां प्रकाशश्चेत्यर्थः।

---

1 'मन्यदपि' (क. पु.)

**अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ।**
**अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते ॥ १३९ ॥**
**सम्पादयेतां सन्ध्यङ्गं नायकप्रतिनायकौ ।**
**तदभावे पताकाद्यास्तदभावे तथेतरः ॥ १४० ॥ ( व )**

प्रायेण प्रधानपुरुषप्रयोज्यानि सन्ध्यङ्गानि भवन्ति । [1]किन्तूपक्षेपादित्रयं बीजस्याल्पमात्रसमुद्दिष्टत्वादप्रधानपुरुषप्रयोजितमेव साधु । ( श )

**रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनम् ।**

---

प्रयोगस्य अङ्गानामुपक्षेपाद्यङ्गानां षट् फलानीत्यर्थः ।' यथा काव्यार्थोत्पत्तिरूपस्य उपक्षेपरूपस्य मुखसन्ध्यङ्गस्य इष्टानुसरणं फलम् । एवमन्याङ्गानामन्यानि पञ्चफलानि यथासम्भवं नाटकेषु अनुसन्धेयानि ।

( वि, व ) नाट्ये प्रयोगेऽङ्गानामावश्यकत्वमाह—**अङ्गहीन** इति । नारम्भक्षमः न कार्य्यारम्भक्षमः । **सम्पादयेतामि**ति । अनेन सन्ध्यङ्गनिर्वाहकौ प्रथमतो नायकप्रतिनायकावेवेति उक्तम् । तदभावे क्वचित् ताभ्यामनिर्वाहे पताकाद्यास्तन्निर्वाहकाः । पताका च 'व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ।' इत्यनेन नायकस्य वृत्तं पताकेत्युक्तम् । अत्र च तत्सम्बन्धात् नायकसहाय एव तत्त्वेनोक्तः । तदाद्यास्तन्निर्वाहकाः । आद्यपदात् नायिकासहायाः, तैरप्यनिर्वाह्यं यत् । इतरोऽपि तन्निर्वाहक इत्यर्थः ।

( वि, श ) उपक्षेपाद्यङ्गत्रयस्य च प्रधाननायकेतरेण समुद्दिष्टत्वे एव साधुता इत्याह—**किन्तूपक्षेपे**ति । तत्र हेतुमाह—**बीजस्ये**ति । प्रधानेतिवृत्तरूपस्य काव्यार्थस्य यन्मूलं तद्बीजं तस्याल्पमात्रसमुद्देशस्योपक्षेपकाद्यङ्गत्रयेण कृतत्वादप्रधानपुरुषभीमसेनादिसमुद्दिष्टत्वमेव साध्वित्यर्थः । प्रधानपुरुषस्य धीरोदात्तत्वेन कर्त्तव्येतिवृत्तबीजसमुद्देशस्य अल्पस्यापि तेन करणानौचित्याद् इति भावः । तथा हि काव्यार्थस्य समुत्पत्तिरूपं यदुपक्षेपरूपमङ्गं तेन वेगयां लाक्षागृहानलेत्यादि भीमोक्त्या कुरुकुलवधरूपकाव्यार्थस्य तस्य बीजसमुत्पत्तिः प्रतिपादिता । समुत्पन्नार्थबाहुल्यं यत्परिकरात्मकमङ्गं तेन 'प्रवृद्धं यद्वैरं मम' इत्यादि भीमोक्त्या तद् बाहुल्यं प्रतिपादितम् । काव्यार्थनिष्पत्तिकथनरूपं यत् परिन्यासात्मकमङ्गं तेन 'चञ्चद् भुजे'त्यादिभीमोक्त्या निष्पत्तिः प्रतिपादिता । एतत् त्रयञ्च प्रधाननायकोक्तं तद्धीरतापादकं स्यात् । नच समुत्पन्नार्थबाहुल्यकाव्यार्थनिष्पत्त्योः कथं बीजस्याल्पसमुद्दिष्टत्वमिति वाच्यम् । असमस्तोद्दिष्टस्यैवाल्पोद्दिष्टत्वमित्यभिप्रायात् । बीजोद्देशमात्रादेव नायकस्य धीरोदात्तत्वभङ्ग इत्यत्र एव तात्पर्य्यात् ।

( वि, ष ) **रसव्यक्तिमि**ति । तत्सन्धीनां यान्यङ्गान्युक्तानि । तानि तत्र-

---

1 'किन्तु प्रक्षेपादि' ( क. पु ) 'किन्तु प्रक्षेपाद्यङ्गत्रयं' ( ण. द. पु )

**नतु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥ १४१ ॥**

तथा च यद्वेण्यां दुर्योधनस्य भानुमत्या सह विप्रलम्भो दर्शितस्तत्तादृशेऽवसरेऽत्यन्तमनुचितम् । ( ष )

**स्वविरुद्धं तु यद् वृत्तं रसादिव्यक्त्येऽधिकम् ।**
**तदप्यन्यथयेद् धीमान् न वदेद्वा कदाचन ॥ १४२ ॥**

अनयोरुदाहरणं सत्प्रबन्धेष्वभिव्यक्तमेव । ( स )

अथ वृत्तयः—*

**शृङ्गारे कौशिकी वीरे सात्त्वत्यारभटी पुनः ।**
**रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ।**
**चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः ।**
**स्युर्नायकादिव्यापारविशेषा नाटकादिषु ॥ १४३ ॥ ( ह )**

वेति नियमः । किन्तु रसव्यञ्जनापेक्षया एव एषां निवेशनं न तु नाट्यशास्त्रोक्तस्थितिसम्पादनेच्छया इत्यर्थः । यद्यपीदं प्रागप्युक्तं तथापि रसव्यक्त्यनपेक्षया करणे दोषत्वप्रतिपादनाय पुनरुक्तम् । तदाह—**तथा चेति** । रसव्यक्त्यनपेक्षया निवेशनं तु नोचितमेवेत्यर्थः । **तादृशेऽवसरे** इति । वीररसे इत्यर्थः । न चाङ्गसन्निवेशनानौचित्ये दर्शयितव्ये रसनिवेशनानौचित्यप्रदर्शनमिदमसम्बद्धमिति वाच्यम् । अङ्गहीनरसाभावेन विप्रलम्भप्रदर्शनादेव तदङ्गस्यापि प्रदर्शनात् ।

**( वि, स ) स्वविरुद्धमिति** । स्वस्योपक्रान्तवृत्तस्य विरुद्धमधिकं यद् वृत्तं वृत्तान्तः तदपि रसाभिव्यक्त्येऽन्यथयेदुपक्रान्तरसाविरुद्धतया प्रतिपादयेत् । तदसम्भवे तु न वदेदित्यर्थः ।

**( वि, ह ) अथ वृत्तय** इति । **शृङ्गार** इति । नायकादीनां व्यापारविशेषाश्चतस्रो वृत्तयो नाटकादिषु नाटकप्रकरणादिदशरूपकेषु नाटिकाद्यष्टादशोपरूपकेषु च सर्वनाट्यस्य मातृका मूलभूताः जनन्य इत्यर्थः । नायकादीत्यादिपदात् समस्तपात्रपरिग्रहः । तेन वक्ष्यमाणोदाहरणेषु पात्रान्तरकर्तृत्वं नानुपपन्नम् । तत्र रसविशेषेषु वृत्तिविशेषानाह—**शृङ्गार** इत्यादि । वीरे सात्त्वतीत्यन्वयः ।

* वृत्तयः—वर्त्तन्ते अनुप्रासभेदा आसु इति वृत्तयः ।

सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ।
पृथक् पृथगनुप्रासमुशन्ति कवयस्तथा ॥

पृथक् पृथगिति परुषानुप्रासः । उपनागरिकानुप्रासः । कोमलानुप्रास इति वृत्तयोऽनुप्रासजातय एव । ( इत्यभिनवगुप्तो ध्वन्यालोके )

या विकासेऽथ विक्षेपे सङ्कोचे विस्तरे तथा ।
चेतसो वर्त्तयित्री स्यात् सा वृत्तिः सापि षड्विधा ॥

तत्र कौशिकी—

**या [1]श्लक्ष्णनेपथ्यविशेष[2]चित्रा**
**स्त्रीसङ्कुला पुष्कलनृत्यगीता ।**
**कामोपभोगप्रभवो[3]पचारा—( उ )**
**सा [4]कौशिकी चारुविलासयुक्ता ॥ १४४ ॥ ***
**नर्म च नर्मस्फूर्ज्जो नर्मस्फोटोऽथ नर्मगर्भश्च ।**
**चत्वार्य्यङ्गान्यस्याः ॥ १४५ ॥ ( क )**

तत्र—

**वैदग्ध्यक्रीडितं नर्म्म ।**
**इष्टजनावर्ज्जनकृत्तच्चापि त्रिविधं मतम् ।**

---

( वि, क ) **या श्लक्ष्णे**ति—श्लक्ष्णमुत्तमम् । नेपथ्यं वेशः । स्त्रीसंकुला स्त्रीव्यापारविमिश्रिता । पुष्कलं बहुलम् । अस्या अङ्गानि चत्वारि इत्याह—**नर्म चे**ति।

( वि, ख ) अत्र नर्मलक्षणमाह—**वैदग्ध्ये**ति । वैदग्ध्येन क्रीडितमित्यर्थः । तत्फलमाह—**इष्टे**ति । इष्टजनस्यावर्जनमनुरागेण नम्रता तत्कृद् इत्यर्थः । तच्च नर्म

---

( लो, उ ) कामेन मदनेन हेतुना य उपभोगः सम्भोगस्तत्कारणानि उपचाराश्चन्द्रचन्दनघनसारादयो यस्याम् ।

---

कौशिक्यारभटी चैव सात्त्वती भारती तथा
मध्यमारभटी चैव तथा मध्यमकौशिकी ॥
( सरस्वतीकण्ठाभरणे )

* या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता वा बहुनृत्तगीता ।
कामोपभोगप्रभवोपचारा तां कौशिकीं वृत्तिमुदाहरन्ति ॥ १ ॥
प्रस्तावपातप्लुतलङ्घितानि च्छेद्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युद्धानि च यत्र नित्यं तां तादृशीमारभटीं वदन्ति ॥ २ ॥
आरभटप्रायगुणा तथैव बहुकपटवञ्चनोपेता ।
दम्भाकृतवचनवती त्वारभटी नाम विज्ञेया ॥ ३ ॥
या स्यात्तु तेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा सा सात्त्वती नाम भवेत्तु वृत्तिः॥४॥ (नाट्यसूत्रे)
ऋग्वेदात् भारतीवृत्तिर्यजुर्वेदात्तु सात्त्विकी ।
कौशिकी सामवेदात्तु शेषा चाथर्वणात्तथा ॥ ५ ॥

1 'सूक्ष्म' ( ढ. पु. ) 2 'विधान' ( ज. पु. )
3 'प्रचुरो-' ( प. पु. ) 4 'कैशिकी' ( ज. झ. पु. )

**विहितं शुद्धहास्येन सशृङ्गारभयेन च ॥ १४६ ॥ ( ख )**

**तत्र केवलहास्येन विहितं यथा रत्नावल्याम्—**

**( वासवदत्ता ) ( फलकमुद्दिश्य, सहासम् ) " एसावि अवरा तव समीवे जा आलिहिदा एदं किं अज्जवसन्तस्स विण्णाणम् ?" ( ग )**

**सशृङ्गारहास्येन यथा शाकुन्तले, राजानं प्रति ( शकुन्तला ) असंतुट्ठो उण किं करिस्सदि (राजा) इदम् , (इति व्यवसितः। शकुन्तला वक्त्रं ढौकते)। (घ)**

**सभयहास्येन यथा रत्नावल्याम् । आलेख्यदर्शनावसरे ( सुसङ्गता ) "जाणिदो मए एसो वुत्तन्तो समं चित्तफलएण, ता देविए गदुअ णिवेदइस्सम् ।"**

**एतद् वाक्यसम्बन्धि नर्म्मोदाहृतम् । (ङ) एवं वेशचेष्टासम्बन्ध्यपि । (च)**

**नर्मस्फूर्जः सुखारम्भो भयान्तो नवसङ्गमः ॥ १४७ ॥**

**यथा मालविकायाम्—सङ्केतनायकमभिसृतायाम्-( नायकः )**

---

त्रिविधम् इत्याह । **तच्चे**ति । त्रैविध्यमाह—**शुद्धहास्येने**ति । शुद्धेन सशृङ्गारेण सभयेन च हास्येन विहितमिति त्रैविध्यम् । भयञ्च हास्यविषयं बोध्यम् ।

**( वि, ग ) एसावी**ति । एषाप्यपरा तव समीपे या आलिखिता एतन् किमार्यवसन्तकस्य विज्ञानम्? ( संस्कृतम् ) । चित्रफलके सागरिकया लिखितं राजानं दृष्ट्वा सुसङ्गतया तत्समीपे सागरिकाऽपि लिखिता । तत्र लिखितं राजानं दृष्ट्वा वासवदत्तया पृष्टं केन त्वमत्र लिखिता इति । ततो राज्ञोक्तं शिल्पविज्ञानार्थं समुल्लिखित-मिदमिति । ततस्तदन्तिके सागरिकां लिखितां दृष्ट्वा "एषा सा अवरे"त्याद्याः वासव-दत्तायाः पृच्छाः । अत्र शुद्धहास्येन विहितं नर्म, अन्तः क्रोधेन तस्याः शृङ्गारा-भावात् । प्रबन्धरसस्तु शृङ्गार इति तत्रेयं वृत्तिः ।

**( वि, घ ) असंतुट्ठो उणे**ति । असंतुष्टः पुनः किं करिष्यति ? इति ( संस्कृतम् ) ननु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण इति राज्ञ उक्त्यनन्तरं शकुन्तलाया इयं पृच्छा । ढौकते चुम्बनार्थम् । वक्त्रमाननम् आच्छादयति ।

**( वि, ङ ) जाणिदो** इति । ज्ञातो मयैष वृत्तान्तः । समं चित्रफलकेन । तद्देव्यै गत्वा निवेदयिष्यामीति (संस्कृतम्) । अत्र राज्ञो भीतियुक्तेन सुसङ्गताया हासेन विहितं नर्म वैदग्ध्यक्रीडितम् ।

**( वि, च )** वाचा इव वेशचेष्टाभ्यामपि संभवतीत्याह—**एवमि**ति । तत्र सागरिकायाः सङ्केतभङ्गार्थं तद्वेशाया वासवदत्ताया आगमने वेशेन बोध्यम् । क्वचित् नायिकायाश्च पलायमानादिचेष्टया अपि तद्बोध्यम् ।

**( वि, छ )** नर्मस्फूर्जमाह—**नर्मस्फूर्ज** इति । **मालविकायामि**ति । माल-विकानामनाटिकायामित्यर्थः । सङ्केतनायकं सङ्केतस्थलगतं नायकम्, नायिकायां

विसृज सुन्दरि ! सङ्गमसाध्वसं
ननु चिरात् प्रभृति प्रणयोन्मुखे ।
[1]प्रतिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥

( मालविका ) भट्टा ! देवीए भएण अप्पणो वि पिअं कादुं ण पारेमि इत्यादि । ( छ )

अथ नर्मस्फोटः ।

**नर्मस्फोटो भावलेशैः सूचितोऽल्परसो मतः ॥ १४८ ॥**

यथा मालतीमाधवे—

गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत्स्यात् किमन्यदितोऽथवा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥

अलसगमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाशितः।(ज)

**नर्मगर्भो व्यवहृतिर्नेतुः प्रच्छन्नवर्त्तिनः ॥ १४९ ॥**

यथा तत्रैव सखीरूपधारिणा माधवेन मालत्या मरणव्यवसायवारणम् । (झ)

---

मालविकायाम् । **विसृजे**ति । सुन्दरि ! सङ्गमे साध्वसं भयं विसृज । ननु भोश्चिरात् प्रणयोन्मुखे मयि अतिमुक्तलतायाः माधवीलतायाश्चरितं गृहाण । मयि कीदृशे ? सहकारतां चूतवृक्षतां गते, माधविकया चूतालिङ्गनात् , तद्वत् मामालिङ्गेत्यर्थः । **भट्टा** इति । हे भर्त्तः ! देव्याः भयेन आत्मनोऽपि प्रियं कर्त्तुं न पारयामि (संस्कृतम्)। आत्मनः प्रियमर्पयामीत्यन्वयः । अत्र मुखेन सङ्गमरूपनर्मारम्भो भयान्तः ।

( वि,ज ) नर्मस्फोटमाह—**नर्मस्फोट** इति । **गमनमलसमि**त्यादि । माधवस्य मालत्यां भावसूचिकेयमुक्तिः । अलसगमनादिकम् एतत् किन्तु तस्याः, ननु भोः किं स्यात् इतोऽन्यत्, अथ वा कियत्स्यादित्यर्थः । अधिकाधिकस्यापि सम्भावनीयत्वादिति भावः । अधिकाधिकस्य सम्भावनीये हेतुमाह—**भ्रमति भुवन** इति । ते ते भावा वसन्तनवेन्द्वादयः । अत्रोत्तरोत्तराधिकाधिकसम्भावनायां पूर्वोक्तैः सूचितस्य भावस्य लेश एवेत्याह—**अलसे**त्यादि । अलसगमनादिभिरित्यत्र अलसगमनादिभिः सूचितैरित्यर्थः । अनुरागो विप्रलम्भरसः । सम्भोगरूपनर्मेच्छावत्त्वात् अत्र नर्म ।

( वि, झ ) नर्मगर्भमाह—**नर्मगर्भ** इति । प्रच्छन्नवर्त्तिनः प्रच्छन्नीभूय तिष्ठतः नेतुर्नायकस्य इत्यर्थः । व्यवहृतिर्व्यवसायः । **सखीरूपे**ति । मालत्याः सखी लवङ्गिका । पित्रा राजाज्ञया जरते नन्दनाय दातुं कृतनिश्चया मालतीति देवतागृहे

---

1 'परि' ( क. पु )

यथा रत्नावल्यां ( काञ्चनमाला ) 'भट्टिणि ! इअं सा चित्तसालिआ, दाव वसन्तअस्स सण्णं करोमि' इत्यादि । ( य )

**नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः ॥ १०७ ॥**

यथा वेण्याम्—

प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।
स कर्णारिः स च क्रूरः क्रूरकर्मा वृकोदरः ॥ ( र )

**शङ्काभयत्रासकृतः संभ्रमो विद्रवो मतः ॥ १०८ ॥ (ल)**

यथा—

कालान्तककरालास्यं क्रोधोद्धूतं दशाननम् ।
विलोक्य वानरानीके संभ्रमः कोऽप्यजायत ॥ ( व )

अथ विमर्शाङ्गानि—

**अपवादोऽथ सम्फेटो व्यवसायो द्रवो द्युतिः ।**
**शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम् ।**
**प्ररोचना विमर्शे स्यादादानं छादनं तथा ॥ १०९ ॥ ( श )**
**दोषप्रख्याऽपवादः स्यात् ॥ ११० ॥**

---

**( वि, य ) भट्टिणि** इति । हे भर्त्रि ! इयं चित्रशालिका । तावद् वसन्तकस्य संज्ञां करोमीति संस्कृतम् । चित्रशालिकायां राज्ञः समीपे वासवदत्तावेशेन सागरिकामानेतुं तया सह वसन्तकेन संकेते कृते काञ्चनमालया तज्ज्ञात्वा वासवदत्तामेवानीय वसन्तकस्थाने सागरिकाऽऽगता इत्यङ्गुलिसंज्ञां कर्त्तुं वासवदत्तायामुक्तिरियं तस्याः ।

**( वि, र ) नृपादिजनिते**ति । नृपादौ केनापि जनिता भीतिरित्यर्थः । **प्राप्तावेकरथे**ति । स कर्णारिरर्जुनः स च क्रूरकर्म्मा क्रूरो वृकोदरो भीमः । एतावेकरथारूढौ भ्रातरौ प्राप्तावागतावित्यर्थः । कर्णारित्वेन क्रूरकर्म्मत्वेन च दुर्योधनस्य भीतिजननम् ।

**( वि, ल )** विद्रवरूपाङ्गमाह—**शङ्काभये**ति । शङ्कया अनिष्टशङ्कया भयत्रासौ तत्कृतो यः संभ्रमः व्याकुलता विद्रवो मत इत्यर्थः । भाव्यनिष्टद्वेषो भयम् । आकस्मिकानिष्टोत्पत्त्या कर्त्तव्यमूढता तु त्रासः ।

**( वि, व ) कालान्तके**ति । क्रोधोद्धूतं क्रोधकम्पितं दशाननं विलोक्य वानरानीके कोऽपि संभ्रमोऽजायत इत्यर्थः ।

**( वि, श )** विमर्शसन्धेस्त्रयोदशाङ्गान्याह—**अपवाद** इत्यादि ।

**( वि, ष )** दोषप्रख्या दोषप्रख्यापनम् । कौरवापसदस्य कौरवाधमस्य पदवी

यथा वेण्यां—( युधिष्ठिरः )। पाञ्चालक ! कच्चिदासादिता तस्य दुरात्मनः कौरवापसदस्य पदवी ? ( पाञ्चालकः)। न केवलं पदवी, स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः। ( ष )

**सम्फेटो रोषभाषणम्॥ १११॥**

यथा तत्रैव ( राजा )। अरे रे मरुत्तनय ! वृद्धस्य राज्ञः पुरतो निन्दितमप्यात्मकर्म श्लाघसे। शृणु रे !

कृष्टा केशेषु भार्य्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी।
तस्मिन् वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्य्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः॥

(भीमः) (सक्रोधम्) आः पाप ! (राजा) आः पाप ! इत्यादि। ( स )

**व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः॥ ११२॥**

यथा तत्रैव, ( भीमः )

निहताशेषकौरव्यः क्षीबो दुःशासनासृजा।
भङ्क्ता दुर्य्योधनस्योर्वोर्भीमोऽयं शिरसा नतः॥ ( ह )

**द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा॥ ११३॥**

यथा तत्रैव—( युधिष्ठिरः ) भगवन् ! कृष्णाग्रज ! सुभद्राभ्रातः !

---

पादचिह्नम्। सोऽपि दुरात्मा दुर्योधनः। अत्रोक्त्यामेव दोषप्रख्यापनम्।

( **वि, स** ) सम्फेटरूपमङ्गमाह—**अरे रे** इत्यादि। दुर्योधनस्य भीमं संबोध्य उक्तिरियम्। वृद्धस्य राज्ञः धृतराष्ट्रस्य। **कृष्टा** इति—तव भीमस्य तव अर्जुनस्य तस्य राज्ञो युधिष्ठिरस्य वा पशोस्तयोर्नकुलसहदेवयोर्वा पञ्चोर्भार्या, भुवनपतेर्मम आज्ञया नृपतीनां समक्षं द्यूतदासी केशेषु कृष्टा। ये नरेन्द्रा युष्माभिर्हतास्तैस्तादृशे वैरानुबन्धे किमपकृतं तद्वद। तान् जित्वा यो दर्पः स किं मामजित्वेति काकुध्वनिविशेषवशाज जित्वैव दर्प इति गम्यते। मां कीदृशम् ? बाह्वोर्वीर्यातिभाररूपेण द्रविणेन धनेन गुरुमदम्। **आः पापे**ति। भीमदुर्योधनयोः परस्परं प्रति उक्तिः। राजा दुर्योधनः। अत्र द्वयोरेव रोषभाषणम्।

( **वि, ह** ) व्यवसायरूपमङ्गमाह—**व्यवसायश्च** इति। प्रतिज्ञाहेतोः प्रतिज्ञार्थस्य संभवो निष्पत्तिः, तत्कथनमित्यर्थः। **निहते**ति। क्षीबो मत्तः। असृजा शोणितेन। भङ्क्ता भङ्गकर्त्ता।

( **वि, क** ) द्रवरूपमङ्गमाह—**द्रव** इति। गुरोर्व्यतिक्रान्तिः भर्त्सनमित्यर्थः। **भगवन्** इत्यादि। युधिष्ठिरस्य दुर्योधनानुरागक्रुद्धबलभद्रभर्त्सनमिदम्। कृष्णाग्र-

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम् ॥ (क)

**तर्जनोद्वेजने प्रोक्ता द्युतिः ॥ ११४ ॥**

यथा तत्रैव दुर्योधनं प्रति [1]कुमारेणोक्तम्—

जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितमधुक्षीबं रिपुं [2]भाषसे ।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
त्रासान्मे नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥ (ख)

**शक्तिः पुनर्भवेत् ।**

**विरोधस्य प्रशमनम् ॥११५॥**

यथा तत्रैव—

कुर्वन्त्वाप्ता हतानां रणशिरसि नरा वह्निसाद्देहभारान्
अस्रैर्मिश्रं कथञ्चिद्ददतु जलममी बान्धवा बान्धवेभ्यः ।

---

जेति सुभद्राभ्रातरिति च द्वयं स्वपक्षानुरागौचित्याय सम्बन्धप्रदर्शनम् । **ज्ञातिप्रीतिरि**ति । ज्ञातयो वयम् । क्षत्रियाणां धर्मोऽपि मनसि न कृत इत्यर्थः । अयुध्यमानवधवैमुख्यं हि क्षत्रियाणां धर्मः । वयं ह्ययुध्यमानाः । तवानुजस्य श्रीकृष्णस्य अर्जुनेन सह रूढं तत्सख्यमपि न गणितम् । शिष्ययोर्भीमदुर्योधनयोस्तुल्यः स्नेहानुबन्धः । कामं यथेष्टम् । भवतु वरम् । यन्मन्दभाग्ये मयि त्वं विमुखः । कोऽयं पन्थाः इत्यर्थः । अत्र गुरोर्बलभद्रस्य युधिष्ठिरेण भर्त्सनम् ।

**(वि, ख)** द्युतिरूपाङ्गलक्षणमाह—**तर्जने**ति । **कुमारे**णेति । भीमेनेत्यर्थः । क्वचित् कुमारवृकोदरेणेत्येव पाठः । **जन्मे**ति । विमलेन्दोः कुले जन्म व्यपदिशसि । अद्यापि गदां धत्से दधासि । दुःशासनस्य कोष्णेनाऽल्पोष्णेन शोणितमधुना क्षीबं मत्तं मां रिपुं भाषसे । न तु कार्येण प्राणदातारं भाषस इत्यर्थः । मधुकैटभद्विषि श्रीकृष्णेऽपि दर्पान्धः उद्धतं साहङ्कारं चेष्टसे । हे नृपशो ! मे मत्तस्त्रासात् समरं विहायाधुना स त्वं कथं पङ्के लीयसे इत्यर्थः । अत्र कथमिति काकुगम्यम् ।

**( वि, ग )** शक्तिरूपमङ्गमाह—**शक्तिरि**ति । विरोधस्य प्रशमनं समापनकथनमित्यर्थः । **कुर्वन्त्वाप्ता** इति । रणशिरसि हतानां देहभारान् । आप्ता बान्धवाः वह्निसात् कुर्वन्त्वित्यर्थः । तथा अमी बान्धवाः कथञ्चित् अस्रैर्मिश्रं जलं बान्धवेभ्यो ददतु । तथा हतनरगहने गृध्रकाकैः खण्डितान् ज्ञातिदेहान् मार्गन्ताम् । रिपुभिः सहायं भास्वानस्तं प्रयातः, बलानि संह्रियन्तामित्यर्थः ।

---

1 'भीमेन' ( क. पु. ). 2 'मन्यसे' ( ख. पु. )

मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान् गृध्रकाकैः
अस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥ (ग)

**प्रसङ्गो गुरुकीर्त्तनम् ॥ ११६ ॥**

यथा मृच्छकटिके ( चाण्डालकः ) । "एसो सागलदत्तस्स सुओ अज्जविस्सदत्तस्स णत्तिओ चालुदत्तो वावादितुं वज्झट्ठाणं णिज्जइ । एदेण किल गणिआ वसन्तसेणा सुअण्णलोहेण वावादिदेत्ति ।"

( चारुदत्तः )—

मखशतपरिपूतं गोत्रमुद्भासितं यत्
सदसि निबिडचैत्यब्रह्मघोषैः पुरस्तात् ।
मम निधनदशायां वर्त्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥

इत्यनेन चारुदत्तवधाभ्युदयानुकूलं प्रसङ्गाद् गुरुकीर्त्तनमिति प्रसङ्गः । (घ)

**मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः ॥ ११७ ॥**

मनःसमुत्पन्नो यथा मालतीमाधवे—

दलति हृदयं [1]गाढोद्वेगो द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।

( वि, घ ) प्रसङ्गरूपाङ्गमाह—**प्रसङ्ग** इति । **चाण्डालक** इति । हन्तुं नीयमानं चारुदत्तं दृष्ट्वा चाण्डालक आह इत्यर्थः । **एष** इति । एष सागरदत्तस्य सुत आर्यविश्वदत्तस्य नप्ता चारुदत्तः व्यापादयितुं वध्यस्थानं नीयते । एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादितेति ( संस्कृतम् ) । एतच्छ्रुत्वा चारुदत्तः स्वीयप्रशस्तकुलकीर्त्तनात् लज्जया आह—**मखशतेति** । यन्मम गोत्रं परिपूतं तथा पुरस्तात् पूर्वकाले निबिडैश्चैत्यैरुद्भटैर्ब्रह्मघोषैः सदसि उद्भासितं सभायामुच्चैःस्वरेण ब्राह्मणैः प्रशस्तमित्यर्थः । निधनदशायां वर्त्तमानस्य मम तद्गोत्रं पापैः असदृशमनुष्यैश्चाण्डालैः वध्यघोषणायामुद्घोष्यत इत्यर्थः । **इत्यनेन** इति । चारुदत्तस्य वधरूपो यो घातकानामभ्युदयस्तदनुकूल इत्यर्थः । तत्कुलघातकस्यैव घातकानाम् इष्टत्वात् गुरुकीर्त्तनम् । वध्यस्य पितृपितामहादिकीर्त्तनम् ।

( वि, ङ ) खेदरूपमङ्गमाह—**मनश्चेष्टेति** । **दलतीति** । कपालकुण्डलापहृतमालतीशोकात् माधवस्योक्तिरियम् । न विदीर्यते न तु द्विखण्डं भवतीत्यर्थः । विकलः कायो मोहं वहतीत्यन्वयः । न कृन्तति न छिनत्ति । **एवं चेष्टेति** ।

स्रस्तांशावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।

1 'गाढोत्कण्ठं' ( ज. ङ. पु. )

ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥

एवं चेष्टासमुत्पन्नोऽपि । ( ङ )

**ईप्सितार्थप्रतीघातः प्रतिषेध इतीष्यते ॥ ११८ ॥**

यथा मम प्रभावत्यां विदूषकं प्रति प्रद्युम्नः—सखे ! कथमिह त्वमेकाकी वर्त्तसे ? क्व नु पुनः प्रियसखीजनानुगम्यमाना प्रियतमा मे प्रभावती ? ( विदू० ) असुरवइणा आआरिअ कहिं वि णीदा ।

( प्रद्युम्नः ) (दीर्घं निःश्वस्य)—

हा पूर्णचन्द्रमुखि ! मत्तचकोरनेत्रे !
मामानताङ्गि ! परिहाय कुतो गतासि ?
गच्छ त्वमद्य ननु जीवित ! तूर्णमेव
दैवं कदर्थनपरं कृतकृत्यमस्तु ॥ (च)

**कार्यात्ययोपगमनं विरोधनमिति स्मृतम् ॥ ११९ ॥**

यथा वेण्यां–( युधिष्ठिरः )

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।
भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥ (छ)

---

बद्धं कर्णशिरीषरोधिवदने घर्माम्भसां जालकम्
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्द्धजाः ॥

इति घटोत्क्षेपणचेष्टया शकुन्तलायाः श्रमः ।

( वि, च. ) प्रतिषेधरूपमङ्गमाह—**ईप्सितेति** । **असुरवइणेति**—असुरपतिना आकृष्य कुत्रापि नीता इति संस्कृतम् । हा पूर्णचन्द्र इति पूर्वार्धे प्रियां सम्बोध्य शोचित्वापरार्द्धे जीवितं सम्बोध्य आह गच्छ त्वमद्येति । तत्र एव कदर्थनपरं दैवं कृतकृत्यमस्तु इत्यर्थः । अत्रेप्सितस्य प्रभावतीसमागमस्य प्रतिघातः ।

( वि, छ ) निरोधरूपमङ्गमाह—**कार्य्यात्ययेति** । उद्देश्यकार्य्यस्यात्ययोपगमनं भावनमित्यर्थः । **तीर्णे** इति । दुर्य्योधनेन समं गदायुद्धे भीमेनोक्तम् । मत्पराजये सर्वेषां भ्रातॄणां पराजय इति । इदं श्रुत्वा युधिष्ठिरस्य स्वजयरूपकार्य्यस्यात्ययो भावनमिदम् । अल्पावशेषे जये प्रियसाहसेन भीमेन सर्वे वयं जीवितसंशयं प्रापिता इत्यन्वयः। जयस्याल्पावशेषत्वं दर्शयति–**तीर्णे** इति । निर्वृते शान्ते। **कर्णाशीविषेति**। आशीदन्तस्तत्र विषं यस्य । कर्णरूपे तादृशे भोगिनि सर्पे इत्यर्थः ।

**प्रोचना तु विज्ञेया संहारार्थप्रदर्शिनी ॥ १२० ॥**

यथा वेण्याम्–( पाञ्चालकः ) अहं देवेन चक्रपाणिना सहितः । ( इत्युपक्रम्य ) कृतं सन्देहेन ।

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णात्यन्तचिरोज्झिते तु कबरीबन्धे करोतु क्षणम् ।
रामे शातकुठार [1]भासुरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ? ॥ (ज)

**कार्यसंग्रह आदानम् ॥ १२१ ॥**

यथा वेण्याम्—ननु भोः समन्तपञ्चकचारिणः !

नाहं रक्षो न भूतो रिपुरुधिरजलाक्लेदिताङ्गः[2] प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भो भो राजन्यवीराः समरशिखिशिखाभुक्तशेषाः ! कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥

अत्र समस्तरिपुवधकार्यस्य संगृहीतत्वादादानम् । (झ)

---

( **वि, ज** ) प्ररोचनारूपमङ्गमाह—**प्ररोचना** त्विति । **संहारार्थप्रदर्शिनी**ति । कार्योपसंहारप्रदर्शिनी वाक् इत्यर्थः । **पूर्यन्ताम्**इति । गदायुद्धे भीमजयजिज्ञासार्थं कृष्णेन प्रहितस्य पाञ्चालकस्य युधिष्ठिरं प्रति उक्तिरियम् । ते तव राज्याभिषेकाय पूर्यन्तामित्यन्वयः । अत्यन्तचिरोज्झितेऽपि कबरीबन्धे कृष्णा द्रौपदी क्षणमुत्सवं करोतु इत्यन्वयः । भीमस्य जयसंशये कथमेतत् स्यादित्याह । **राम** इति । शातकुठारेण भासुरकरे क्षत्ररूपद्रुमोच्छेदिनि रामे परशुरामे वृकोदरे च क्रोधान्धे आजौ परिपतति गच्छति सति कुतो जयसंशय इत्यर्थः ।

( **वि, झ** ) आदानरूपाङ्गलक्षणमाह—**कार्य्यसंग्रह** इति । उद्देश्यकार्य्यस्य संग्रहः प्राप्तिरित्यर्थः । **नाहं भूत** इति । देवयोनिप्राणिविशेषो भूतो नाहमित्यर्थः । अत एव पुंलिङ्गता । भूतोऽमी देवयोनय इति कोषात् । तर्हि कस्त्वमिति अत्राह—**रिपुरुधिरे**ति । क्रोधनः सन् रिपुरुधिरजलेन क्लेदिताङ्गः प्रीणिताङ्गः सन् प्रकामं यथेष्टं निस्तीर्णः महाप्रतिज्ञारूपे जलनिधित्वं वनत्वं च रूपितं बोध्यम् । भो भोः समररूपाग्निशिखया भुक्तशेषा राजन्यवीराः ! वो युष्माकमनेन त्रासेन कृतमलम् । अयं त्रासो व्यर्थः । मया यूयं न हन्तव्या इत्यर्थः । त्रासः कथं ज्ञात इत्यत्राह–**हते**ति । यद् यद् हतकरितुरगान्तर्हितैर्युष्माभिरास्यते स्थीयते । **अत्रे**ति । समस्तरिपुवधरूपस्य कार्य्यस्य संगृहीतत्वात् प्राप्तत्वादित्यर्थः ।

---

1 'भास्वर' ( इति क. पु. ) 2 'लाहूलादिताङ्ग:' ( क. पु. )

**तदाहुश्छादनं पुनः**
**कार्यार्थमपमानादेः सहनं खलु यद्भवेत् ॥ १२२ ॥**

यथा तत्रैव—( अर्जुनः ) आर्य !

अप्रियाणि करोत्वेष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥ (ञ)

अथ निर्वहणाङ्गानि—

**सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ।**
**कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् ।**
**भाषणं पूर्ववाक्यञ्च काव्यसंहार एव च ।**
**प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः ॥ १२३ ॥** (ट)

तत्र—

**बीजोपगमनं सन्धिः ॥ १२४ ॥** (ठ)

यथा वेण्यां, ( भीमः ) । भवति ! यज्ञवेदिसम्भवे ! स्मरति भवती यन्मयोक्तम् । चञ्चद्भुज "इत्यादि" । अनेन मुखे क्षिप्तबीजस्य पुनरुपगत[1]मिति सन्धिः । (ड)

**विबोधः कार्यमार्गणम् ॥ १२५ ॥**

यथा तत्रैव, ( भीमः ) "मुञ्चतु मामार्यः क्षणमेकम् । ( युधिष्ठिरः ) । किमपरमवशिष्टम् ? ( भीमः ) सुमहदवशिष्टम् । संयमयामि[2] तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् । ( युधिष्ठिरः ) । गच्छतु । भवाननुभवतु तपस्विनी वेणिसंहारमिति । अनेन

( **वि, ञ** ) अपमानादेरित्यादि पदाद् अरुक्तिपरिग्रहः । **अप्रियाणी**ति । एष दुर्य्योधनः ।

( **वि, ट** ) निर्वहणसन्धेश्चतुर्दशाङ्गान्याह—**सन्धिर्विबोध** इत्यादि ।

( **वि, ठ** ) तत्र सन्धिरूपाङ्गमाह—**बीजोपगमन**मिति । प्रतिज्ञातार्थरूपस्य बीजस्य सिद्धया तत्स्मरणमित्यर्थः ।

( **वि, ड** ) कौरवशतं हत्वा भवति यज्ञेत्यादिकं भीमस्योक्तिः । चञ्चद्भुजेत्यादिकं प्राग् व्याख्यातम् । **अनेने**ति । मुखे प्रथमतः क्षिप्तमुपन्यस्तं प्रतिज्ञया बोधितं बीजं प्रतिज्ञातार्थरूपं पुनरुपगतं ज्ञापितमित्यर्थः ।

( **वि, ढ** ) विबोधरूपमङ्गमाह—**विबोध** इति । कार्य्यमार्गणं कार्य्यस्यान्वेषणम् । **केशहस्ता**मिति । केशकलापं "पाशश्च पक्षश्च हस्तश्च कलापार्थाः । कचात् परे ।" इति कोषः ।

1 'उपगमनम्' ( क. ख. पु )  2 'समापयामि' ( क. ग. पु. )

केशसंयमनकार्यस्यान्वेषणाद् विबोधः। (ढ)

**उपन्यासस्तु कार्याणां ग्रथनं ॥ १२६ ॥**

यथा तत्रैव, ( भीमः ) "पाञ्चालि ! न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्याम् । तिष्ठ स्वयमेवाहं संहरामीति । अनेन कार्यस्योपक्षेपाद् ग्रथनम् । (ण)

**निर्णयः पुनः ।**

**अनुभूतार्थकथनम् ॥ १२७ ॥**

यथा तत्रैव, ( भीमः ) "देव ! अजातशत्रो ! अद्यापि दुर्योधनहतकः । मयापि तस्य दुरात्मनः—

भूमौ क्षिप्तं शरीरं निहितमिदमसृक् चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषिक्ता चतुरुदधिपयःसीमया सार्द्धमुर्व्या ।
भृत्या मित्राणि योधाः कुरुकुलमनुजा दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप ! तदधुना धार्त्तराष्ट्रस्य शेषम् ॥ (त)

**वदन्ति परिभाषणम् ।**

**[1]परिवादार्थकं वाक्यम् ॥ १२८ ॥**

यथा शाकुन्तले—( राजा ) आर्ये ! अथ सा तत्र भवती किमाख्येऽस्य राजर्षेः पत्नी ? (तापसी) को तस्स धम्मदारपरिच्चाइणो णामं गेह्निस्सदि । (थ)

**[2]लब्धानुगमनं कृतिः ॥ १२९ ॥**

( **वि, ण** ) उपन्यासरूपमङ्गमाह—**उपन्यास** इति । ग्रथनं करिष्यमाणकार्य्यकथनम् । विलुलिता विशकलीकृता । उपक्षेपात् करिष्यमाणतयोपन्यासात् ।

( **वि, त** ) निर्णयरूपमङ्गमाह—**निर्णय** इति । अजातशत्रो इति युधिष्ठिरस्यापरं नाम । **भूमौ क्षिप्तमि**ति । तस्य दुरात्मनो दुर्य्योधनस्य शरीरं मया भूमौ क्षिप्तं पातितम् । तस्येदमसृक् निजाङ्गे चन्दनाभं चन्दनवन्निहितम् । चतुरुदधिपयःसीमया उर्व्या सार्द्धम् । आर्य्ये ! त्वयि लक्ष्मीर्नियुक्ता । रणाग्नावेतद्दग्धम् । तदेव किमित्याह—**भृत्या** इत्यादि । भृत्यादयः कुरुकुलमनुजाः इत्यन्वयः । हे क्षितिप ! धार्त्तराष्ट्रस्य यन्नाम ब्रवीषि अधुना तदेव शेषमित्यर्थः ।

( **वि, थ** ) परिभाषणरूपमङ्गमाह—**वदन्ती**ति । परिवादेति परिवादेनार्थेन कृतं वाक्यं परिवादार्थकं वाक्यमित्यर्थः । आर्य्ये ! अथ सेत्यादिपृच्छा दुर्वाससः शापाधीनविस्मरणकृतशकुन्तलापरित्यागस्य पश्चात्तां स्मृत्वा तामनासाद्य विरहिणः स्वर्गादागच्छतस्तापसीमुखात् तत्प्रसङ्गं श्रुत्वा दुष्मन्तस्य । **को तस्से**ति । कस्तस्य धर्मदारपरित्यागिनो नाम ग्रहीष्यतीति ।

1 'परिवादकृतं' ( ग. पु. ) 2 'लब्धार्थशमनम्' ( क. पु. ) 'लब्धार्थगमनम्' ( ग. त. पु. )

अथ सात्त्वती—

सात्त्वती बहुला सत्त्वशौर्यत्यागदयार्जवैः ।
सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा ।
उत्थापकोऽथ संहात्यः संलापः परिवर्त्तकः ।
विशेषा इति चत्वारः सात्त्वत्याः परिकीर्त्तिताः ॥ १५० ॥ (ञ) *
उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते ॥ १५१ ॥ ( ट )

यथा वीरचरिते—

'आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यन्तु कुतोऽस्य सम्प्रति मम त्वद्दर्शने चक्षुषः ।
यन्माङ्गल्यसुखस्य नास्मि विष[यः]स्तत्किं बहु व्याहृतै-
रस्मिन् विस्मृ[त]जामदग्न्यविजये पाणौ धनुर्जृम्भताम् ॥ ( ठ )

---

स्वमरणं प्रार्थयन्ती लवङ्गिकायाः पादे पतिता मालती । स्तम्भान्तरितस्थितो माधवश्च लवङ्गिकावेशेन आगत्य लवङ्गिकाम् अपसार्य तत्स्थाने स्वपादं दत्वा स्थितः । ततो मालती उत्थाय लवङ्गिकाबुद्ध्या तमालिङ्ग्य पश्चाद् दृष्ट्वा परिचीयमाना व्यवसायात् निवर्त्तते इत्यर्थः ।

( वि, ञ ) सात्त्वतीं वृत्तिमाह—**अथे**ति । सत्त्वादिभिः समस्तव्यस्तात्पन्नैर्बहुला तद्वैशिष्ट्यात् बाहुल्यवती हर्षाद्यन्यतरयुक्ता वृत्तिश्च सात्त्वतीत्यर्थः । विशोका विगतशोका । वीरे रसे शृङ्गारस्यानुषङ्गिकत्वेन क्षुद्रत्वम् । अत्र क्षुद्रशृङ्गारत्वेन स्त्रीसंकुलत्वकामोपभोगराहित्येन वीररसत्वेन च कौशिकीतो विशेषः । अस्याः प्रभेदचतुष्टयमाह—**उत्थापक** इत्यादि ।

( वि, ट ) **उत्तेजने**ति—शत्रुं जेतुं मित्रस्य उत्तेजनम् ।

( वि, ठ ) **आनन्दाय चे**ति—परशुरामागमे रामं प्रति जनकस्य वाक्यमिदम् । धनुर्भङ्गेन प्रतिज्ञातार्थसिद्ध्या योग्यवरप्राप्त्या चानन्दः । वीर्य्यातिशयदर्शनाद् विस्मयः । रामं हन्तुं परशुरामागमनात् दुःखम् । अतोऽद्य त्वद्दर्शने सम्प्रति एतत् क्षणे चक्षुषः कुतो वैतृष्ण्यम् । उत्कण्ठाबाहुल्यात् क्षणान्तरेऽनिष्टानिवृत्तौ तु उत्कण्ठानिवृत्त्या वैतृष्ण्यं स्यादिति सम्प्रति पदभावार्थः । बहुव्याहृतैर्वा किं, यतो वैवाहिकमाङ्गल्यसुखस्य न विषयोऽस्मि । अतोऽस्मिन् विस्मृतस्य जामदग्न्यस्य विजयनिमित्तं

---

* "या सत्त्वजेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा सा सात्त्वती नाम भवेत्तु वृत्तिः ॥" (भरतमुनिः)

**मन्त्रार्थदैवशक्त्यादेः संहात्यः संघभेदनम् ॥ १५२ ॥**

मन्त्रशक्त्या यथा मुद्राराक्षसे राक्षससहायानां चाणक्येन स्वबुद्ध्या भेदनम्। अर्थशक्त्यापि तत्रैव। दैवशक्त्या यथा—रामायणे रावणाद् विभीषणस्य भेदः। (ड)

**संलापः स्याद् गभीरोक्तिर्नानाभावसमाश्रयः ॥ १५३ ॥**

यथा वीरचरिते—(रामः) "अयं स यः किल सपरिवारकार्त्तिकेयविजयावर्जितेन भगवता नीललोहितेन परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः"। (परशुरामः) "राम! दाशरथे! स एवायमार्यपादानां प्रियः परशुः" इत्यादि। (ढ)

**प्रारब्धादन्यकार्याणां करणं परिवर्त्तकः ॥ १५४ ॥**

यथा वेण्याम्-(भीमः) "सहदेव! गच्छ त्वं गुरुमनुवर्त्तस्व। अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामीति यावत्। अथवा आमन्त्रयितव्यैव मया पाञ्चाली" इति। (ण)

अथारभटी—

**मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः।**
**संयुक्ता वधबन्धाद्यैरुद्धतारभटी मता ॥ १५५ ॥ (त)**
**वस्तूत्थापनसम्फेटौ संक्षिप्तिरवपातनम्**
**इति भेदास्तु चत्वार आरभट्याः प्रकीर्त्तिताः।**

---

तव बाहो धनुर्ज्रम्भतामित्यर्थः। अत्र परशुरामे जेतुमुत्तेजनम्। अत्र विस्मयवशाद् रामशौर्येणानन्दादिना च वैशिष्ट्यं वीरो रसः।

(वि, ड) संहात्यमाह—**मन्त्रार्थे**ति। मन्त्रस्य मन्त्रणार्थस्य धनस्य दैवस्यादृष्टस्य वा शक्तेः शक्तिहेतोः संघस्य सैन्यसमूहस्य भेदनमित्यर्थः। राक्षसः शत्रुमन्त्री चाणक्यो राजमन्त्री; स्वबुद्ध्या स्वमन्त्रणया। अत्र चाणक्यस्य सत्त्वदानानेकसत्त्वं संघभेदनवशाद् वीरो रसः।

(वि, ढ) संलापमाह—**संलाप** इति। **कार्त्तिकेयविजयावर्जितेने**ति। तद् विजये नम्रीभूतेनेत्यर्थः। अत्र कौतुकेनैव विजयो न तु वास्तव इति तत्पितृप्रसादगम्यम्। तथापरप्रसादलब्धेन परशुना कोऽयं गर्व इति रामस्य गभीरात्मिका उक्तिः। परशुरामोक्तौ तत्प्रियवस्त्वपि मह्यं दत्तमिति स्वमहत्त्वख्यापनमेव गभीरता।

(वि, ण) परिवर्त्तकमाह—**प्रारब्धादि**ति। **सहदेवे**ति—अत्र प्रारब्धं कार्य्यं युद्धम्। ततोऽन्यत् पाञ्चाल्यामन्त्रणम्।

(वि, त) **अथारभटी**ति। **माये**ति। माया विद्याविशेषस्तया इन्द्रजालं परस्परविरुद्धनानावस्तुप्रदर्शनम्, संग्रामो युद्धम्, क्रोधेन उद्भ्रान्तचेष्टितम्—स्वपरज्ञानराहित्येन चेष्टा। एतैर्युक्ता इत्यर्थः। अस्याः प्रभेदचतुष्टयमाह—

**मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते ॥ १५६ ॥**

यथोदात्तराघवे—

"जीयन्ते जयिनो[1] निशीथतिमिरव्रातैर्वियद्व्यापिभि-
भास्वन्तः सकला रवेरपि कराः कस्मादकस्मादमी ।
एते चोग्रकबन्धकण्ठरुधिरैराध्मायमानोदरा
मुञ्चन्त्याननकन्दरानलमुचस्तीव्रान्रवान् फेरवाः ॥" इत्यादि । ( थ )

**सम्फेटस्तु समाघातः क्रुद्धसत्वरयोर्द्वयोः ॥ १५७ ॥**

यथा मालत्यां माधवाघोरघण्टयोः । ( द )

**[2]संक्षिप्तवस्तुरचना शिल्पैरितरथापि वा
संक्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेत्रन्तरग्रहः ॥ १५८ ॥** *

यथा उदयनचरिते किलिञ्जहस्तिप्रयोगः । द्वितीयं यथा—वालिनिवृत्त्या सुग्रीवः । यथा वा—परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादनम् । "पुण्या

( **वि, थ** ) वस्तूत्थापनलक्षणमाह—**माये**ति । जीयन्त इत्यादि । जयिनोऽपि वीरा वियद्व्यापिभिर्निशीथतिमिरैः समूहैर्जीयन्ते आच्छाद्यन्ते । रवेरपि अमी भास्वन्तः सकलाः कराः अकस्मादकाले कस्मादाच्छाद्यन्ते । उग्रकबन्धकण्ठरुधिरैराध्मायमानम् उत्फुल्लमानमुदरं येषां तादृशाः । आननरूपाभ्यः कन्दराभ्योऽनलमुच एते फेरवाः शृगालाश्च तीव्रान् रवान् मुञ्चन्तीत्यर्थः । अत्र परस्परविरुद्धालोकतिमिररविरश्म्यादि-प्रदर्शनरूपमिन्द्रजालरूपवस्तु माययोत्थापितम् । रौद्रो रसः ।

( **वि, द** ) सम्फेटलक्षणमाह—**सम्फेटस्त्वि**ति । समाघातः प्रहारोक्तिः । **क्रुद्धे**ति । क्रुद्धौ च तौ सत्वरौ चेति कर्मधारयः । **माधवाघोरे**ति । तत्र द्वयोः क्रुद्धता । सत्वरता परस्परप्रहारोक्तिश्च ।

( **वि, ध** ) संक्षिप्तिलक्षणमाह—**संक्षिप्ते**ति । नेतुर्नृत्यपात्रस्य एकस्य निवृत्तौ नेत्रन्तरस्य ग्रह एव संक्षिप्तवस्तुरचना । सा च शिल्पैरशिल्पैर्वेत्यर्थः । शिल्पं विलक्षणवस्तु निर्माणकौशलम् । **किलिञ्जहस्तिप्रयोग** इति । तत्र वास्तवहस्तिरूपपात्र-निवृत्तौ शिल्पेन किलिञ्जनामहस्तिरूपपात्रप्रदर्शनम् । अशिल्पमाह—**द्वितीयमि**ति ।

* मृद्वंशदलचर्मादिद्रव्ययोगेन वस्तूत्थापनम् संक्षिप्तिः । यथा—उदयनचरिते किलिञ्जहस्तिप्रयोगः। पूर्वनायकावस्थानिवृत्त्या अवस्थान्तरपरिग्रहमन्ये संक्षिप्तिकां मन्यन्ते। यथा—वालिनिवृत्त्या सुग्रीवः । ( दशरूपक )

1 'नोऽपि सान्द्रतिमिर' इति ( क. पु. )

2 'प्तिर्वस्तु' ( ट. ड. पु ) 'प्ता वस्तु' ( क. पु. )

ब्राह्मणजातिः" इति । (ध)

**प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसम्भवः ॥ १५६ ॥**

**अवपातमित्युक्तं**

यथा कृत्यरावणे षष्ठेऽङ्के । ("प्रविश्य खड्गहस्तः पुरुषः") इत्यतः प्रभृति निष्क्रमणपर्यन्तम् । (न)

**पूर्वमुक्तैव भारती ॥ १६० ॥ (प)**

अथ नाट्योक्तयः—

**अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।**
**सर्वश्राव्यं प्रकाशं स्यात् तद्भवेदपवारितम् ॥**
**रहस्यन्तु यदन्यस्य परावृत्त्य प्रकाश्यते ।**
**[1]त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ।**
**अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् । (फ)**
**किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ।**
**श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ॥ १६१ ॥**

यः कश्चिदर्थो यस्माद्गोपनीयस्तस्यान्तरत ऊर्ध्वं सर्वाङ्गुलिनामितानामिकं त्रिपताकलक्षणं करं कृत्वाऽन्येन सह यन्मन्त्र्यते तज्जनान्तिकम् । परावृत्त्यान्यस्य

---

**औद्धत्यनिवृत्त्ये**ति । अत्र धर्मनिवृत्त्या धर्मिणि निवृत्तिर्बोध्या । औद्धत्यकालीनश्च रौद्रो रसः । एव सुग्रीवार्कलिङ्गहस्तिनोः पूर्व रौद्रो रसो बोध्यः ।

**( वि, न )** अवपातलक्षणमाह—**प्रवेशे**ति । प्रवेशादिविद्रवान्तानां सम्भव उत्पादनमवपातनमित्यर्थः । विद्रवः पलायनम् । मिलितानामेषामुत्पादनम् । **प्रविश्ये**ति । तेन पुरुषेण सर्वमिदं कृतम् । क्रोधवशात् एतत् कारणात् रौद्रो रसः ।

**( वि, प )** भारतीवृत्तिस्तु पूर्वमुक्तैवेत्याह—**पूर्वमि**ति । भारती संस्कृतप्रायो वाग्व्यापारो नराश्रय इति । स्थापककृत्यप्रसङ्गेन प्रागुक्तेत्यर्थः । सा च सर्वसाधारण्येनेत्युक्तम् । रसे सर्वत्र भारती ।

**( वि, फ ) नाट्योक्तय** इति । नाट्ये परिभाषाविशेषा इत्यर्थः । **तद्भवेदि**त्यादेः परत्रान्वयः । त्रिपताकेत्यादिकं जनान्तिकलक्षणम् । त्रिपताकलक्षणमग्रे वक्ष्यति । अन्तरा कथां कथामध्ये । तादृशेन करेणान्यमपवार्य्याच्छाद्य जनस्यान्ते अन्तिके यत् अन्योन्यामन्त्रणं कथनं, तज्जनान्तिकमित्यर्थः ।

**( वि, ब ) विना पात्रमि**ति । रङ्गाप्रविष्टमुद्दिश्य इत्यर्थः । त्रिपताकेत्यादिकं व्याचष्टे—**यः कश्चिदि**ति । **तस्यान्तरत** इति । तद्भिन्ने जने इत्यर्थः । इयं जनान्ते इत्यस्य व्याख्या । **ऊर्ध्वं सर्वे**ति त्रिपताकव्याख्यानम् । अपवारितं व्याचष्टे—**परावृत्त्ये**ति ।

---

1 'त्रिपताका' ( घ. पु. )

रहस्यकथनमपवारितम् । शेषं स्पष्टम् । ( ब ) *

**दत्तां सिद्धाञ्च सेनाञ्च वेश्यानां नाम दर्शयेत् ।**
**दत्तप्रायाणि वणिजां चेटचेट्योस्तथा पुनः ।**
**वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ॥ १६२ ॥** ( भ )

वेश्यां यथा वसन्तसेनादिः । वणिग् विष्णुदत्तादिः । चेटः कलहंसादिः चेटी मन्दारिकादिः ।

**नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम् ॥ १६३ ॥** ( म )

यथा रामाभ्युदयादिः ।

**नायिकानायकाख्यानं संज्ञा प्रकरणादिषु ॥ १६४ ॥** ( य )

यथा मालतीमाधवादिः ।

**नाटिकासट्टकादीनां नायिकाभिर्विशेषणम् ॥ १६५ ॥** ( र )

यथा रत्नावलीकर्पूरमञ्जर्यादिः ।

**प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते ॥ १६६ ॥**

यथा शाकुन्तले । ( ऋषी ) गच्छाव इत्यर्थे साधयावस्तावत् । ( ल )

**राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ।**
**राजर्षिभिर्वयस्येति तथा विदूषकेण च ।** ( व )

---

( वि, भ ) पात्राणां नामान्याह—**दत्तामि**ति । वसन्तादिषु वर्णनीयस्य वस्तुनो यन्नाम भवेत् चेटचेट्योस्तथा नाम इत्यर्थः ।

( वि, म ) **गर्भितार्थ** इति । नाटके गर्भितः प्रतिपाद्यो योऽर्थस्तत्प्रकाशकं नाटकस्य नाम कार्य्यमित्यर्थः। सूचितार्थेति क्वचित् पाठः ।

( वि, य ) **नायिकानायके**ति । प्रकरणभाणादयो ये रूपकप्रभेदास्तेषु । संज्ञा नायकनायिकयोराख्यानं संज्ञानामैवेत्यर्थः । **नाटिकासट्टकादीनामि**ति ।

( वि, र ) नाटिकादीन्यष्टादशोपरूपकाणि यान्युक्तानि तेषां विशेषणं नाम नायिकाभिर्नायिकानाम्नैवेत्यर्थः ।

( वि, ल ) **प्रायेणे**ति—कलापमते कारितम् , पाणिनिमते णिच् । तदन्तः साधधातुः गमेः स्थाने प्रायेण प्रयुज्यते इत्यर्थः । **ऋषी** इति । शार्ङ्गरवशारद्वतयोर्वक्त्रोर्निर्देशः ।

( वि, व ) **राजर्षिभिरि**ति । विदूषकेण च वयस्येति राजर्षिर्वाच्य इत्यर्थः ।

---

* "प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितं च तथाङ्गुष्ठः स पताक इति स्मृतः ॥
पताके तु यदा वक्राऽनामिका त्वङ्गुलिर्भवेत्
त्रिपताकः स विज्ञेयः" ( नाट्यसूत्रे )

राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च। ( ऊ )
स्वेच्छया नामभिर्विप्रैर्विप्र आर्य्येति चेतरैः। ( श )
[2]वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः।
वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम्। ( ष )
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः।
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः। ( स
वयस्येत्युत्तमैर्हंहो मध्यैरार्य्येति चाग्रजः।
भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः। ( ह )
वदेद्राज्ञीश्च चेटीश्च भवतीति विदूषकः।
आयुष्मन्रथिनं[1] वृद्धसूतस्तातेति चेतरः। ( क )
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः। ( ऋ )
शिष्योनुजश्च वक्तव्योऽमात्य आर्य्येति चाधमैः। ( ख )
विप्रैरयममात्येति सचिवेति च भण्यते।
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः[2]। ( ग )

**( वि, श ) राजन्निति**। स राजा ऋषिभिः राजन्निति अपत्यप्रत्ययेन च वाच्य इत्यर्थः। यथानर्घराघवे ऐन्दुमतेयेति विश्वामित्रेण दशरथः। विप्रस्तु विप्रैः स्वेच्छया नामभिर्वाच्यः। इतरैस्तु आर्य्येति।

**( वि, ष ) वयस्येत्यथवे**ति। विदूषको राज्ञा वयस्येति वाच्यः, अथवा नाम्नैव इति। वाच्यौ नटीसूत्रधाराविति। आर्य्यनाम्ना इति। एकदेशे समस्तद्वयकीर्त्तनम्। तेन नट्या आर्य्यपुत्र इति। सूत्रधारेणार्य्येति वाच्यावित्यर्थः।

**( वि, स ) मारिषे**ति पारिपार्श्विकं वदेत्। हण्डे इति समास्तुल्यजनाः। अधमैर्हण्डेति वाच्या।

**( वि, ह ) समा उत्तमैस्तु वयस्ये**ति। मध्यमैस्तु हंहो इति वाच्या इत्यर्थः। अग्रजः सानुजैरार्य्येत्यर्थः। **भगवन्नि**ति। देवर्षयो लिङ्गिनः परिव्राजकाश्च सर्वैरेव भगवन्निति वाच्याः।

**( वि क )** रथिनं वृद्धसूत आयुष्मान्निति इतरस्तु तातेति वदेदित्यर्थः।

**( वि, ख ) वत्स पुत्रके**ति। सुतः शिष्योऽनुजश्च वत्सेत्यादिभिर्वक्तव्य इत्यर्थः

**( वि, ग ) प्रशान्तश्चे**ति—शान्तो जन इत्यर्थः।

**( लो, ऊ )** अपत्यप्रत्ययेन यथा—हे राघव! हे दाशरथे! इत्यादि।

**( लो, ऋ )** गोत्रेण यथा—हे कौशिक! हे आत्रेय! इत्यादि।

1 'नं सूतो वृद्धं तातेति' ( क. ख. पु. ) 2 'परैः' ( ब. भ. पु. )

[1]अगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ।
उपाध्यायेति चाचार्य्यो महाराजेति भूपतिः ।
स्वामीति युवराजस्तु कुमारो भर्त्तृदारकः ।
सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः । ( घ )
वाच्या प्रकृतिभी राज्ञः कुमारी भर्त्तृदारिका ।
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः । ( ङ, ऋ )
हलेति सदृशी प्रेष्या हञ्जे वेश्याज्जुका तथा ।
भट्टिन्यम्बेत्यनुगतैः पूज्या च जरती जनैः । ( च )
आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः । ( लृ )
शाक्यादयश्च सम्भाष्या भदन्तेत्यादिनामभिः । ( छ )
यस्य यत् कर्म शिल्पं वा विद्या वा जातिरेव वा ।
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम् ॥ १६[illegible] ॥

अथ भाषाविभागः—

पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम् ।
शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् । ( ज )

---

( वि, घ ) **भूपतिर्महाराजे**ति । युवराजस्तु स्वामीति सम्बोधने वाच्य इत्यर्थः । एवमुत्तरत्रापि । कुमारो युवराजेतरः ।

( वि, ङ ) **पतिर्यथे**ति । ज्येष्ठ उत्तमस्तथा चोत्तममध्यमाधमैः स्वास्त्रियः स्त्रीभिः पतिर्यथा तथा वाच्य इत्यर्थः । तथा चार्य्यपुत्रेति पत्युरुच्यमानत्वात् आर्य्येति पत्या स्त्रियो वाच्या इत्यर्थः ।

( वि, च ) वेश्या सम्बोधने अज्जुकेत्युच्यते इत्यर्थः । **भट्टिन्यम्बे**ति । अनुगतैर्जनैरर्थादनुगम्यमानस्त्रीभिर्भट्टिनीत्यम्बेति चोच्यते । इतरैर्जनैः पूज्या वृद्धा जरतीति वाच्येत्यर्थः ।

( वि, छ ) पाषण्डाश्च स्वसमयागतैरामन्त्रणैश्च वाच्या इत्यर्थः । शाक्यादयो बौद्धादयः ।

( वि, ज ) **अथ भाषे**ति । वक्तृविशेषस्य भाषाविशेष इत्यर्थः । **पुरुषाणा मिति** । नीचेतरेषां कृतात्मनां शुद्धानां पुरुषाणामित्यन्वयः । शौरसेन्यादयो बह्वयो भाषाः प्राकृतविशेषाः प्राकृतवृत्तौ अनुसन्धेयाः ।

---

( लो, ऋ ) **पतिर्यथे**ति । पतिर्येन स्वामिन्नित्युच्यते तेन तद्भार्य्या स्वामिनीति । येन भर्त्तेति तेन भर्त्तृणीति ।

( लो, लृ ) हे चार्वाक ! हे कौलिकेय ! इत्यादि ।

---

1 'स्वगृ' ( ट. ठ. पु. )

आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ।
अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् । ( झ )
चेटानां राजपुत्राणां श्रेष्ठिनां[1] चार्द्धमागधी ।
प्राच्या विदूषकादीनां धूर्त्तानां स्यादवन्तिका[2] । ( ञ )
योधनागरिकादीनां दाक्षिणात्याऽहिदीव्यताम् ।
शकाराणां[3] शकादीनां शावरीं[4] सम्प्रयोजयेत् ।
वाह्लीकभाषोदीच्यानां द्राविडी द्रविडादिषु ।
आभीरेषु तथाभीरी चाण्डाली पुक्कसादिषु । ( ट )
आभीरी शावरी चापि काष्ठपत्रोपजीविषु ।
तथैवाङ्गारकारादौ पैशाची स्यात् पिशाचवाक् ।
चेटीनामप्यनीचानामपि स्यात् शौरसेनिका ।
बालानां षण्डकानां च नीचग्रहविचारिणाम् ।
उन्मत्तानामातुराणां सैव स्यात् संस्कृतं क्वचित् । ( ड )
ऐश्वर्य्येण प्रमत्तस्य दारिद्र्योपहतस्य[5] च ।
भिक्षुवल्कधरादीनां प्राकृतं सम्प्रयोजयेत् ।
संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च ।
देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितम् । ( ढ )
यद्देश्यं नीचपात्रन्तु तद्देश्यं तस्य भाषितम् । ( ण )
कार्य्यतश्चोत्तमादीनां कार्य्यो भाषाविपर्य्ययः ।
योषित्सखीबालवेश्याकितवाप्सरसां तथा ।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा ॥ १६८ ॥

---

( वि, झ ) तादृशानामनीचानाम् । गाथा गीतयः । अत्रेति । गाथास्वित्यर्थः ।

( वि, ञ ) चेटानामिति । श्रेष्ठिनां राजपुत्रचेटानामित्यर्थः ।

( वि, ट ) अहिदीव्यतां सर्पखेलकानां तेषां चेत्यन्वयः । शकारो राजशालकः । शकानां पार्वतीयम्लेच्छविशेषाणाम् ।

( वि, ठ ) पुक्कसश्चण्डालविशेषः ।

( वि, ड ) षण्डका नपुंसकाः । नीचानां ग्रहविचारकाणां चेत्यन्वयः । सैव शौरसेनिकेव । क्वचिदेषां संस्कृतमपीत्यर्थः ।

( वि, ढ ) तथोदितं संस्कृतोक्तिः ।

( वि, ण ) यद्देश्यं यद्देशीयम् ।

---

1 'श्रेष्ठानां' ( क. पु. ) 2 'जा' ( क. पु. ) 3 'शवराणाम्' ( क. पु. )
4 'शाकारीं' ( ख. ज. पु. ) 5 '०द्रुतस्य' ( क. पु. )

एषामुदाहरणान्याकरेषु[1] बोद्धव्यानि । भाषालक्षणानि मम तातपादानां भाषार्णवे—

"षट्त्रिंशल्लक्षणान्यत्र नाट्यालङ्कृतयस्तथा ।
त्रयस्त्रिंशत् प्रयोज्यानि वीथ्यङ्गानि त्रयोदश ।
लास्याङ्गानि दश यथालाभं रसव्यपेक्षया ॥ १६९ ॥ (त)

यथालाभं प्रयोज्यानीति सम्बन्धः । अत्रेति नाटके । तत्र लक्षणानि–

(भूषणाक्षरसङ्घातौ शोभोदाहरणं तथा ।
हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः ।
निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च ।
दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ।
विशेषणनिरुक्ती च सिद्धिभ्रंशविपर्य्ययौ ।
दाक्षिण्यानुनयौ मालाऽर्थापत्तिर्गर्हणं तथा ।
पृच्छा प्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्त्तनम् ।
लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा ॥ १७० ॥

तत्र—

लक्षणानि गुणैः सालङ्कारैर्योगस्तु भूषणम् ॥ १७१ ॥ (थ)

यथा—

आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् ।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करम् ? ॥" (द, ए)

---

(वि, त) **षट्त्रिंशदि**ति । अत्र नाटकलक्षणानि सकलानि षट्त्रिंशद्धर्माणि प्रयोज्यानि इत्यर्थः । तथा च त्रयः त्रिंशत् नाट्यालङ्कृतयः । त्रयोदश वीथ्यङ्गानि, दश लास्याङ्गानि यथालाभं प्रयोज्यानि । तत्र षट्त्रिंशल्लक्षणानि उद्दिशति–**भूषणे**ति ।

(वि, थ) **लक्षणानी**ति । एतानि लक्षणसंज्ञकानि षट्त्रिंशत् इत्यर्थः ।

(वि, द) अत्र भूषणसंज्ञकस्य लक्षणस्य लक्षणमाह—**तत्र गुणैरि**ति । **आक्षिपन्ती**ति । अरविन्दानि कर्त्तृणि । आक्षिपन्ति अधिक्षिपन्ति स्पर्द्धन्ते वा । कोषः कुड्मल एव कोषो धनम् । दण्डो[6] नालमेव दण्डः शास्तिः । अर्थश्लेषमूलोऽर्थान्तरन्यासोऽलङ्कारः । माधुर्यं च गुणः ।

---

(लो, ए) **आक्षिपन्ती**ति—कोषः कुड्मलः द्रव्यौघश्च । दण्डो नालं दुष्टनिग्रहश्च ।

---

1 'नाटकेषु' (क. पु.)

**वर्णनाक्षरसङ्घातश्चित्रार्थैरक्षरैर्मितः ॥ १७२ ॥**

यथा शाकुन्तले (राजा) "कच्चित् सखीं वो नातिबाधते शरीरसन्तापः । (प्रियंवदा)–सम्पदं लद्धोसहो उअसमं गमिस्सदि" । (ध)

**सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते ।**
**श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते ॥ १७३ ॥** (न)

यथा—

सद्वंशसम्भवः शुद्धः कोटिदोऽपि गुणान्वितः ।
कामं धनुरिव क्रूरो वर्जनीयः सतां प्रभुः ॥ (प, ऐ)

**यत्र तुल्यार्थयुक्तेन वाक्येनातिप्रदर्शनात् ।**
**साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम् ॥ १७४ ॥** (फ)

यथा—अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम् ।
का दिनश्रीर्विनार्केण का निशा शशिना विना ॥ (ब)

(वि, ध) **अक्षरसङ्घातमि**ति । **वर्णने**ति । चित्रार्थैर्मितैरक्षरैर्वर्णनेत्यर्थः । **सम्पदमि**ति । साम्प्रतं लब्धौषध उपशमं गमिष्यतीति (संस्कृतम्)। अत्र त्वत्प्राप्तेरेवौषधप्राप्तिरिति भङ्ग्या कथ्यमानोऽर्थश्चित्रः । अक्षराणि चाल्पानि ।

(वि, न) शोभालक्षणमाह—**सिद्धैरि**ति । सिद्धैरुपमानभूतैरर्थैः सममेकवाक्येनैव अप्रसिद्ध उपमेयभूतोऽर्थो विधेयान्वयार्थं प्रकाशते । सा शोभा कीदृशी, श्लिष्टशब्दचिह्नचित्रार्थेत्यर्थः ।

(वि, प) **सद्वंशे**ति । धनुरिव क्रूरः प्रभुः कामं यथेष्टं सतां वर्जनीयः । आवर्जनहेतुसत्त्वेऽपि क्रौर्यात् वर्जनीय इत्यर्थः । द्वयोरेवावर्जनहेतून् श्लेषादाह—**सद्वंशे**ति । सद्वंशः सद्वेणुः सत्कुलं च । शुद्धः कीटाविद्धो निष्पापश्च । कोटिं कोटिसंख्यकं धनं ददाति तथा कोट्याद्यतिगुणा ज्या शौर्यादिश्च । अत्र सिद्धेन धनुषा समं प्रसिद्धः क्रूरः प्रभुः विधेयवर्जनान्वयार्थं प्रकाश्यते । श्लिष्टशब्देन च चित्रोऽर्थः ।

(वि, फ) उदाहरणलक्षणमाह—**यत्र तुल्यार्थे**ति । प्रकान्तार्थतुल्यावबोधकेन वाक्येन प्रकान्तार्थस्यातिशयित्वप्रदर्शनात् अभिमतोऽतिशयितत्वरूपोऽर्थः साध्यते इत्यर्थः ।

(वि, ब) **अनुयान्त्ये**ति । राममनुयान्तीं सीतां प्रति अनसूयाया उक्तिरियम्। जनातीतं जनेभ्यो निर्गतं वनगमनोन्मुखम् इत्यर्थः । **विनार्केण** इति । मेघाच्छन्नदिन-

(लो, ऐ) **सद्वंशे**ति । वंशोन्वयः वेणुश्च । शुद्धो निष्पापः कीटवेधादिरहितश्च । कोटिः संख्याविशेषः अटनी च । गुणः शौर्यादिः मौर्वी च । क्रूरो दारुणः कर्कशश्च ।

**हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात् ॥ १७५ ॥** ( भ )

यथा वेण्यां भीमं प्रति ( चेटी )—"एवं मए भणिदम् । भाणुमदि ! तुह्माणं अमुक्केसु केसहत्थेसु कधं अह्माणं देवीए केसाः संयमीअन्तित्ति ।" (म)

**संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद् यदनिश्चयः ॥ १७६ ॥**

यथा ययातिविजये—

इयं स्वर्गादिनाथस्य लक्ष्मीः किं यक्षकन्यका ।
किं चास्य विषयस्यैव देवता किमु पार्वती ॥ ( य )

**दृष्टान्तो यस्तु [1]पक्षार्थसाधनाय निदर्शनम् ॥ १७७ ॥**

यथा वेण्यां ( भीमः )—"आर्ये ! उचितमेवैतत् तस्याः, यतो दुर्योधन-कलत्रं हि सा"इत्यादि । (र)

**तुल्यतर्को [2]यदर्थेन तर्कः प्रकृतगामिना ॥ १७८ ॥**

यथा तत्रैव—

प्रायेणैव हि दृश्यन्ते कामं स्वप्नाः शुभाशुभाः ।

---

श्रियोऽर्काभावो बोध्यः । अत्र सीतातुल्यार्थे दिनश्रीनिशे । सीतायाश्च प्रशंसारूपा-तिशयोऽभिमतस्तदुक्तवाक्येन साधितः । अत्र वाक्यभेदात् उपमानोपमेययोः समं प्रकाशनाभावात् श्लेषाभावाच्च पूर्वस्माद् भेदः ।

**( वि, भ )** हेतुसंज्ञकलक्षणमाह—**हेतुरि**ति । समासः संक्षेपः । इष्टकृत् प्रति-पाद्यस्याभिमतकृद् । हेतुप्रदर्शनात् पृष्टार्थस्य हेतुदर्शनात् ।

**( वि, म ) एवं मए** इति । "एवं मया भणितम् । भानुमति ! युष्माकममुक्तेषु केशहस्तेषु कथं देव्याः केशाः संयम्यन्ते इति" ( संस्कृतम् ) । अत्र द्रौपद्याः केशा-संयमनहेतौ भानुमत्या पृष्टे सभ्रातृकदुर्योधनवधाभावे हेतौ प्रदर्शयितव्ये वैधव्य-चिह्नस्य भानुमत्याः केशमोचनस्य अभावो हेतुः संक्षेपेण प्रदर्शितः, स एव च भीमस्याभिमतकृत् ।

**( वि, य )** संशयाख्यं लक्षणमाह—**संशये**ति । अज्ञाततत्त्वस्य जनस्य वाक्ये भगवता यदनिश्चयः स इत्यर्थः । यदित्यनिश्चयक्रियाविशेषणमव्ययम् । **इयमि**ति । काञ्चिद् दिव्यकन्यकां दृष्ट्वा तत्त्वमजानतो वितर्कोऽयम् । स्वर्गाधिनाथस्य इन्द्रस्य लक्ष्मीः सम्पत् किम् ? किं यक्षकन्यकेत्युभयत्र किंपदार्थान्वयः । अस्य विषयस्य संसारस्य । अत्र श्रोतुरनिश्चयः ।

**( वि, र )** दृष्टान्ताख्यं लक्षणमाह—**दृष्टान्त** इति । पक्षार्थस्योपन्यस्तार्थस्य साधनाय निदर्शनं हेतुप्रदर्शनम् । **आर्ये** इत्यादि । अत्र द्रौपद्या उपन्यस्तस्य भानु-मत्या दौर्जन्यस्य दुर्योधनकलत्रत्वं हेतुः ।

**( वि, ल )** तुल्यतर्काख्यं लक्षणमाह—**तुल्यतर्क** इति । प्रकृतोऽत्र वक्ता

---

1 'पदार्थ' ( क. पु. ) 2 'यम-'

शतसंख्या पुनरियं सानुजं स्पृशतीव माम् ॥ (ल)

**सञ्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः ॥ १७९ ॥**

शाकुन्तले यथा—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥

अत्र पदपदार्थयोः सौकुमार्यं सदृशमेव । (व)

**यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्त्तनम् ।**
**परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ॥ १८० ॥**

यथा—क्षात्रधर्मोचितैर्धर्मैरलं शत्रुवधे [1]नृपाः ।
किन्तु वालिनि रामेण मुक्तो बाणः पराङ्मुखे ॥ (श)

**अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना ॥ १८१ ॥**

यथा शाकुन्तले—

इदं किलाव्याजमनोहरं वपु-
स्तपः क्षमं[2] साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥ (ष)

---

तद्गामिनार्थेन यत्तर्क आशङ्केत्यर्थः । अत्रापि यदित्यव्ययम् । **प्रायेणैव हीति** । नकुलेनाहिशतं हत्वा भानुमत्याः स्तने क्षत इति भानुमत्या दृष्टे स्वप्ने कथिते दुर्योधनस्येयमाशङ्का ।

**( वि, व )** पदोच्चयाख्यं लक्षणमाह—**सञ्चय** इति । पदानां सञ्चय इति । पदानां सञ्चयः समूहो योऽर्थानुरूपः स इत्यर्थः । अनुरूपं चार्थस्य कोमलत्वे पदानामपि तथात्वम् । अधर इत्यादि राज्ञः शकुन्तलावर्णनमिदम् । अर्थो यथा कोमलस्तथा शब्दोच्चयोऽपि कटुवर्णविरहात् कोमल इत्याह—**अत्र पदपदार्थयोरि**ति ।

**(वि, श)** निदर्शनाख्यं लक्षणमाह—**यत्रार्थानामि**ति सूत्रार्थः स्पष्टः । **क्षात्रे**ति । अत्राधर्मयुद्धेन शत्रुमारणार्थं प्रसिद्धस्य रामेणाऽन्यायेन वालिवधस्य निदर्शनम् ।

**( वि, ष )** अभिप्रायाख्यं लक्षणमाह—**अभिप्रायस्त्वि**ति । अभूतार्थस्य असम्भाविनोऽर्थस्य कल्पना आपादनम् । **इदं किले**ति । तपस्योचितवेशां शकुन्तलां दृष्ट्वा दुष्यन्तस्योक्तिरियम् । किल निश्चितमिदम् । अव्याजमनोहरम् अकृत्रिमरम्यं वपुः यः ऋषिः कण्वः तपःक्षमं साधयितुमिच्छति । ध्रुवमुत्प्रेक्षते । स ऋषिर्नीलोत्पलपत्रधारया शमीलतां छेत्तुं व्यवस्यतीत्यर्थः । अत्र लतारूपसादृश्यात् असम्भाविनो नीलोत्पलपत्रधारया शमीलताछेदनस्यापादनम् ।

---

1 बुधाः' ( ब. भ. पु. ) 2 'क्षमं' ( ख. पु. )

**प्राप्तिः केनचिदंशेन किञ्चिद्यत्रानुमीयते ॥ १८२ ॥**

यथा मम प्रभावत्याम्—

अनेन खलु सर्वतश्चरता चञ्चरीकेणावश्यं विदिता भविष्यति प्रियतमा मे प्रभावती । (स)

**विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थसाधनम् ॥ १८३ ॥**

यथा मम चन्द्रकलायाम्—

(राजा)—नूनमियमन्तःपिहितमदनविकारा वर्त्तते, यतः—

हसति परितोषरहितं निरीक्ष्यमाणापि नेक्षते किञ्चित् ।
सख्यामुदाहरन्त्यामसमञ्जसमुत्तरं दत्ते ॥ (ह)

**देशकालस्वरूपेण वर्णना दिष्टमुच्यते ॥ १८४ ॥**

यथा वेण्यां, (सहदेवः)—

यद् वैद्युतमिव ज्योतिरार्य्ये क्रुद्धेऽद्य सम्भृतम् ।
तत् प्रावृडिव कृष्णेयं नूनं संवर्द्धयिष्यति ॥ (क)

**उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः ॥ १८५ ॥**

यथा शाकुन्तले—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्त्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।

(वि, स) प्राप्त्याख्यं लक्षणमाह—**प्राप्तिरि**ति । **अनेने**ति—चञ्चरीको भ्रमरः । अत्र सर्वतश्चरणांशेन प्रभावतीदर्शनानुमानम् ।

(वि, ह) विचारलक्षणमाह—**विचार** इति । **हसती**ति—अन्येन निरीक्ष्यमाणापि किञ्चिन्नेक्षते । असमञ्जसं सख्या आकाङ्क्षानिवर्त्तकम् । सर्वमिदं मदनाकुलमनस्त्वात् । अत्र समस्तयुक्तिवाक्यैरप्रत्यक्षमदनविकारसाधनम् । पूर्वोक्तमनुमानं त्वंशेन इति भेदः ।

(वि, क) दिष्टाख्यं लक्षणमाह—**देशे**ति । **यद्वैद्युतमि**ति । आर्य्ये त्वयि भीमे ज्योतिः क्रोधजनितं स्वतेजः सम्भृतमाविष्कृतम् । वैद्युतं विद्युत्सम्बन्धि । **तत्प्रावृडिवे**ति । प्रावृषा वैद्युततेजसः सम्वर्द्धनात् । अत्र क्रोधोचितकाले तद्वर्णनम्

(वि, ख) उपदिष्टाख्यं लक्षणमाह—**उपदिष्टमि**ति । शास्त्रमत्र नीतिशास्त्रम् **शुश्रूषस्व** इति । पतिगृहे प्रेष्यमाणां शकुन्तलां प्रति कण्वस्योक्तिरियम् । विप्रकृता तिरस्कृतापि रोषणतया भर्त्तुः प्रतीपं मा स्म गमः । भूयिष्ठमतिशयं दक्षिणा यथोचितव्यवहारिणी । वामा उपदिष्टे तद् विपरीतकारिण्यः कुलस्याधयो मनसः व्यथाकारिण्यः । शुद्धसारोपात्रलक्षणा । कुलस्याधमा इति क्वचित् पाठः । इदं नीतिशास्त्रानुसारि वाक्यम् ।

भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ ( ख )

**गुणातिपातः कार्य्यं यद् विपरीतं गुणान् प्रति ॥ १८६ ॥**

यथा मम चन्द्रकलायां चन्द्रं प्रति

तह संहरिज्जइ तमो घेप्पइ सअलेहि ते पाओ ।
वससि सिरे पसुवइणो तहवि इत्थीय जीअणं हरसि ॥ ( ग, ओ )

**योऽसामान्यगुणोद्रेकः स गुणातिशयो मतः ॥१८७॥ ( घ )**

यथा तत्रैव ( राजा ) ( चन्द्रकलाया मुखं निर्दिश्य )—

असावन्तश्चञ्चद्विकचनवनीलाब्जयुगल-
स्तलस्फूर्जत्कम्बुर्विलसदलिसङ्घात उपरि ।
विना दोषासङ्गं सततपरिपूर्णाखिलकलः
कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ते ॥" ( ङ )

**अर्थान् सिद्धान् बहूनुक्त्वा विशेषोक्तिर्विशेषणम् ॥ १८८ ॥ ( च )**

---

**( वि, ग )** गुणातिपाताख्यं लक्षणमाह—**गुणातिपात** इति । गुणाः स्वनिष्ठगुणाः । तान् प्रति इति तेषामित्यर्थः । तथा च स्वनिष्ठगुणानां विरोधि यत् स्वकार्य्यं तदित्यर्थः । **तह संहरिज्जइ** इति ।

त्वया संह्रियते तमो गृह्यते सकलैस्तव पादः ।
वससि शिरसि पशुपतेस्तथापि स्त्रीणां जीवनं हरसि ॥ (इति संस्कृतम्)।

तमः तिमिरमेव तमोगुणः । पादो रश्मिरेव चरणः । अत्र एतादृशगुण-विरुद्धमुक्तकार्य्यम् ।

**( वि, घ )** गुणातिशयाख्यं लक्षणमाह—**योऽसामान्ये**ति । असामान्यस्य अन्यावृत्तेर्गुणस्य यो निर्दिश्यमाने वस्तुनि उद्रेक इत्यर्थः ।

**( वि, ङ ) असावि**ति । हे सुमुखि ! निर्दिश्यमानमुखरूपश्चन्द्रः कुतस्ते प्राप्तः । त्वया प्राप्त इत्यर्थः । सम्बन्धविवक्षया निष्ठासंयोगेऽपि षष्ठी । यद्वा ते तुभ्यं तव स्थाने वा कुतः प्राप्तः कुत आगत इत्यर्थः । कीदृशः । अन्तर्मध्ये चञ्चत् चञ्चलं विकचनवनीलोत्पलयुगलं यस्य तादृशः । नयनद्वयमत्र नीलाब्जम् । तथा तलेऽधोभागे स्फूर्जत् दीप्यमानः कम्बुः रेखात्रयं यस्य तादृशः । कण्ठलेखात्रयं कम्बुः । श्लेषाच्च स एव कम्बुः शंखः । तथा उपरि विलसन् अलिसङ्घातो यस्य तादृशः । अत्र केशा एव अलिसङ्घातः । तथा दोषारात्रेरासङ्ग एव दोषाणामासङ्गस्तं विना सततमेव परिपूर्णाखिलकलो विगलितकलङ्कश्च । अत्रैषामन्यचन्द्रावृत्तिगुणानां मुखात्मकचन्द्रे उद्रेकः ।

**( वि, च )** विशेषणाख्यलक्षणमाह—**अर्थानि**ति । सिद्धान् उपमानोपमेय-

---

**( लो, ओ )** अस्यार्थः—तमोऽन्धकारः अज्ञानं च । पादो रश्मिश्चरणश्च ।

यथा—

तृष्णापहारी विमलो द्विजावासो जनप्रियः ।
ह्रदः पद्माकरः किन्तु बुधस्त्वं स जलाशयः ॥ ( छ, औ )

**पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्यते ॥ १८९ ॥**

यथा वेण्यां—"निहताशेषकौरव्य" इत्यादि । ( ज )

**बहूनां कीर्त्तनं सिद्धिरभिप्रेतार्थसिद्धये ॥ १९० ॥**

यथा—

यद्वीर्यं कूर्मराजस्य यश्च शेषस्य विक्रमः ।
पृथिव्या रक्षणे राजन्नेकत्र त्वयि तन्स्थितम् ॥ ( झ )

**दृप्तादीनां भवेद्भ्रंशो वाच्यादन्यच्च यद्वचः ॥ १९१ ॥**

यथा वेण्यां कञ्चुकिनं प्रति दुर्योधनः—

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।

---

साधारणान् बहून् उत्कर्षहेतूनर्थान् धर्मान् इत्यर्थः । विशेषोक्तिः उपमेये उपमानव्यावर्त्तकधर्मोक्तिरित्यर्थः ।

( **वि, छ** ) **तृष्णापहारी**ति—अत्र त्वं चेत्यर्थवशात् लभ्यम् । तथा च ह्रदः सरः त्वं च तृष्णापहारी तृष्णा पिपासा धनाकाङ्क्षा च । विमलः स्वच्छजलः निष्पापश्च । द्विजानामावासोऽधिकरणम्; द्विजानां विप्राणामाश्रयश्च । जनानां प्रियः हितकारित्वात् । पद्मानां पद्मायाश्च आकरो निवासस्थानम् । इत्थमुभयसाधारणानुकूलधर्मान् उक्त्वा व्यावर्त्तकधर्ममाह—**किन्त्वि**ति । बुधः पण्डितः त्वं स तु ह्रदो जलाशयो जलयुक्तः ख्यात एव । जडाशयः निर्बुद्धिचित्तः डलयोरैकत्वं, जलाशयः शीतलः ख्यात इति वा ।

( **वि, ज** ) निरुक्त्याख्यं लक्षणमाह—**पूर्वसिद्धे**ति । स्वयं पूर्वकृतार्थकथनमित्यर्थः । **निहते**ति । प्रतिज्ञाहेतुसम्भवरूपस्य विमर्शसन्ध्यङ्गस्य अपीदमुदाहरणमुपाधिभेदात् अविरुद्धम् ।

( **वि, झ** ) सिद्ध्याख्यं लक्षणमाह—**बहूनामि**ति । अभिप्रेतार्थः स्तुतिः स्तुत्यर्थं बहुधर्मिकीर्त्तनमित्यर्थः । **यद्वीर्यमि**ति । अत्र कूर्मराजाद्यनेकधर्मिकीर्त्तनम् ।

( **वि, ञ** ) भ्रंशाख्यलक्षणमाह—**दृप्तादीनामि**ति । वाच्याद् वक्तुमिष्टादन्यद् यत् दृप्तानां वचो भवेदित्यर्थः । वाच्यादन्यतरद् वच इति अप्रामाणिकः पाठः । **सहभृत्यगणमि**ति । अत्र वक्ता दुर्योधनो दृप्तः । पाण्डुसुतं सुयोधन इति वक्तव्ये वैपरीत्येन अन्यदभिहितः ।

---

( **लो, औ** ) **तृष्णे**ति—द्विजाः ब्राह्मणाः पक्षिणश्च । पद्माकरो लक्ष्मीविधाता पद्मानामाकरश्च । जलाशयो जलस्याशयो जडाशयश्च ।

स्वबलेन निहन्ति संयुगे न चिरात् पाण्डुसुतः सुयोधनम् ॥ (ञ,अ)

**विचारस्यान्यथाभावः सन्देहात्तु विपर्य्ययः ॥ १९२ ॥**

यथा—मत्वा लोकमदातारं सन्तोषे यैः कृता मतिः ।
त्वयि राजनि ते राजन्न तथा व्यवसायिनः ॥ ( ट )

**दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्त्तनम् ॥ १९३ ॥**

वाचा यथा—

प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषणः ।
आर्य्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा ॥ (ठ)

एवं चेष्टयापि ।

**वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम् ॥ १९४ ॥**

यथा वेण्याम्, अश्वत्थामानं प्रति कृपः—"दिव्यास्त्रग्रामकोविदे भारद्वाजतुल्यपराक्रमे किं न सम्भाव्यते त्वयि ? " । ( ड )

**माला स्याद्यदभीष्टार्थं नैकार्थप्रतिपादनम् ॥ १९५ ॥**

यथा शाकुन्तले–( राजा )

किं शीकरैः क्लमविरोधिभिरार्द्रवातं
सञ्चारयामि नलिनीदलतालवृन्तम्[1] ।

---

( **वि, ट** ) विपर्य्ययाख्यलक्षणमाह–**विचारस्ये**ति । सन्देहानन्तरं यो विचारो निर्णयस्तस्यान्यथात्वमित्यर्थः । **मत्वा लोकमि**ति । अयाचनेनापि सन्तुष्टत्वे त्वयि अन्यथा व्यवसायिनो याचन्ते इत्यर्थः । अत्रार्थप्राप्त्यप्राप्तिसन्देहादनन्तरं याचनवैमुख्यनिर्णयस्य उपश्लोक्ये राजनि अन्यथाभावः ।

( **वि, ठ** ) दाक्षिण्याख्यं लक्षणमाह—**दाक्षिण्यमि**ति । परचिन्तानुवर्त्तनं परचित्तप्रीणनम् । **प्रसाधये**ति । विभीषणचित्तप्रीणनमिति लक्ष्मणस्य वाक्यम् । सिद्धिमन्तरा सिद्धेर्मध्ये । **एवं चेष्टयापी**ति ।

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद् विवृत्तवदना च विमोचयन्ती शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥

इति शकुन्तलायाश्चेष्टया दुष्मन्तस्य चित्तप्रीणनम् ।

(**वि,ड**) अनुनयाख्यं लक्षणमाह—**वाक्यैः स्निग्धैरि**ति । अर्थः स्वाभीष्टम् । **दिव्यास्त्रे**ति, अत्र युद्धप्रवर्त्तनमेव स्वाभीष्टम् ।

( **वि, ढ** ) मालाख्यं लक्षणमाह—**माला स्यादि**ति । नैकार्थस्य नानाविधार्थस्य प्रतिपादनमित्यर्थः । नञर्थस्यात्र नशब्दस्य नाक्षरविपर्ययः । **किं शीकरैरि**ति ।

---

(**लो, अ**) पाण्डुसुतं सुयोधन इति वक्तव्ये पाण्डुसुतः सुयोधनमिति वचनम् ।

---

1 'तालवृन्तैः' ( क. ख. पु. )

अङ्के निवेश्य चरणावुत पद्मताम्रौ

संवाहयामि करभोरु ! यथा सुखं ते ॥ ( ढ )

**अर्थापत्तिर्यदन्योऽर्थोऽर्थान्तरोक्तेः प्रतीयते ॥ १९६ ॥**

दत्त्वाभयं सोऽतिरथो वध्यमानं किरीटिना ।

सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा ॥ ( ण )

**दूषणोद्घोषणायां तु भर्त्सना गर्हणं तु तत् ॥ १९७ ॥**

यथा तत्रैव कर्णं प्रति ( अश्वत्थामा )—निर्वीर्यं गुरुशापभाषितवशात् किं मे तवेवायुधमित्यादि । (त)

**अभ्यर्थनापरैर्वाक्यैः पृच्छार्थान्वेषणं मतम् ॥ १९८ ॥**

यथा तत्रैव, ( सुन्दरकः ) । अज्ज ! अज्ज ! अवि णाम सारधिदुदिओ दिट्ठो तुह्मेहिं महाराओ दुज्जोधणो ण वेति ।" ( थ, )

**प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम् ॥ १९९ ॥**

यथा विक्रमोर्वश्याम्—(राजा)

सूर्य्याचन्द्रमसौ यस्य मातामहपितामहौ ।

---

शकुन्तलां प्रति दुष्मन्तस्य वाक्यमिदम् । तालवृन्तं व्यजनम् । शीकरराद्रवातमित्यन्वयः । संवाहयामि पीडयामि । अत्र शकुन्तलासम्भोगरूपस्वाभीष्टार्थं तालवृन्तचालनाद्यनेकप्रतिपादनम् ।

( वि, ण ) **दत्त्वाभयमि**ति । किरीटिनार्जुनेन सिन्धुराजम् । **नैवं चेदि**ति । राज्ये स्वपुत्राभिषेकेच्छा न चेदित्यर्थः । अत्र सिन्धुराजोपेक्षारूपान्यार्थोक्तिवशात् निर्दिष्टाया द्रोणस्य तादृशेच्छाया निश्चय इत्यर्थः ।

( वि, त ) गर्हणाख्यं लक्षणमाह—**दूषणे**ति । दूषणोद्घोषणायां सत्यां तयैव उद्घोषणया दूष्यमाणस्य भर्त्सनेत्यर्थः । **निर्वीर्यमि**ति । कर्णस्य गुरुः परशुरामः । तस्य शापरूपं भाषितं तद्वशात् निर्वीर्यमेव तवायुधं किं मे करिष्यतीत्यर्थः । एवकारश्चात्र दर्शितक्रमेण योज्यः । अत्र शस्त्रस्य निर्वीर्यत्वरूपदूषणोद्घोषणया दूष्यमाणस्य कर्णस्य भर्त्सनाप्रतीतिः ।

( वि, थ ) पृच्छाख्यं लक्षणमाह—**अभ्यर्थने**ति । अभ्यर्थनापरैर्वाक्यैरर्थस्यानुसन्धीयमानस्यार्थस्यान्वेषणं पृच्छेत्यर्थः । सुन्दरको दुर्य्योधनस्यानुचरः । **अज्ज** इति । आर्य, आर्य, अपि नाम सारथिद्वितीयो दृष्टो युष्माभिर्महाराजो दुर्य्योधनो न वेति । ( इति संस्कृतम् )

( वि, द ) प्रसिद्धाख्यं लक्षणमाह—**प्रसिद्धि**रिति । लोकसिद्धार्थैरुत्कृष्टैरर्थ्यमाणैरर्थस्य स्वाभीष्टार्थस्य साधनमित्यर्थः । **सूर्याचन्द्रमसौ** इति । द्वाभ्याम् उर्वश्या

स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥ (द)

**सारूप्यमनुभूतस्य[1] सारूप्यात् क्षोभवर्धनम्[2] ॥ २०० ॥**

यथा वेण्यां—दुर्योधनभ्रान्त्या भीमं प्रति (युधिष्ठिरः) "दुरात्मन्! दुर्योधनहतक" इत्यादि। (ध)

**संक्षेपो [3]यत्तु संक्षेपादात्मान्यार्थे प्रयुज्यते ॥ २०१ ॥**

यथा मम चन्द्रकलायां—(राजा) प्रिये!

अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा?।

(आत्मानं निर्दिश्य)

अयमीहितकुसुमानां सम्पादयिता तवास्ति दासजनः ॥ (न)

**गुणानां कीर्त्तनं यत्तु तदेव गुणकीर्त्तनम् ॥ २०२ ॥**

यथा तत्रैव—"नेत्रे खञ्जनगञ्जने" इत्यादि। (प)

**स लेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम् ॥ २०३ ॥**

यथा वेण्यां—(राजा)

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।

या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥ (फ)

**मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत् ॥ २०४ ॥**

---

भुवा चेत्यन्वयः। सोऽहं पृच्छामीति शेषः। अत्र लोकसिद्धार्थसूर्यादिकुलोद्भवत्वादिः तदुक्त्या स्वाभीष्टार्थस्य पृष्टार्थकथनरूपस्य साधनम्।

(वि, ध) सारूप्याख्यं लक्षणमाह—**सारूप्यमि**ति। अनुभूतविशेषभिन्नेऽनुभूतार्थसादृश्यात् आत्मनः क्षोभवर्द्धनमित्यर्थः। **दुरात्मन्** इत्यादि। अत्रानुभूतदुर्योधनसादृश्यात् भीमदर्शने क्षोभवृद्धिः।

(वि, न) संक्षेपाख्यं लक्षणमाह—**संक्षेपे**ति। अन्यजनस्यार्थे प्रयोजननिमित्तम् आत्मा प्रयुज्यते नियुज्यते इत्यर्थः। **अङ्गानि खेदयसी**ति—कुसुमापचयार्थमिति शेषः। अत्र प्रियायाः कुसुमापचयनिमित्तं राज्ञा आत्मा नियुक्तः।

(वि, प) गुणकीर्त्तनाख्यं लक्षणमाह—**गुणानामि**ति। नेत्रे खञ्जनगञ्जने इत्यादि प्रागुक्तम्।

(वि, फ) लेशाख्यं लक्षणमाह—**स लेश** इति। सादृश्यपुरःसरं सादृश्योक्तिपूर्वकम्। **हते जरती**ति। सा श्लाघा अभिमन्युवधात् इति शेषः।

(वि, ब) मनोरथाख्यं लक्षणमाह—**मनोरथस्त्वि**ति। स्वाभिप्रायस्थवृत्तान्त-

---

1 'अनुरूपस्य' (ग. पु.) 2 'वर्तनम्' (क. पु.)

3 'प्रति' (ट. ड. पु.)

यथा—रतिकेलिकलः किञ्चिदेषो मन्मथमन्थरः ।
पश्य सुभ्रु ! समाश्वस्तां[1] कादम्बश्चुम्बति प्रियाम् ॥ (ब)

[2]विशेषार्थोहः प्रस्तावेऽनुक्तसिद्धिरुदीर्य्यते ॥ २०५ ॥

यथा गृहवृक्षवाटिकायाम्—
दृश्येते तन्वि ! यावेतौ चारू चन्द्रमसं प्रति ।
प्राज्ञे कल्याणनामानावुभौ तिष्यपुनर्वसू ॥ ( भ )

स्यात्प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम् ॥ २०६ ॥

यथा शाकुन्तले—
उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु सम्पदः ॥ ( म )

अथ नाट्यालङ्काराः—

आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः ।
उत्प्रासनस्पृहाक्षोभपश्चात्तापोपपत्तयः ।
आशंसाध्यवसायौ[3] च विसर्पोल्लेशसंज्ञितौ ।

तुल्यस्य अन्यदीयवृत्तान्तस्य प्रदर्शनं भङ्गिः । **रतिकेली**ति, रति-केल्यर्थं किञ्चित् कलः मधुरास्फुटालपध्वनिः । मन्मथेन मन्थरः । अन्यत्र उड्डीयागच्छन । आश्वस्ता-मनुद्विग्नाम् । अत्र स्वाभिप्रायस्थाया रतेस्तुल्यायाः कादम्बरतेः प्रदर्शनभङ्गया उक्तिः ।

( **वि, भ** ) अनुक्तसिद्ध्याख्यं लक्षणमाह—**विशेषे**ति । प्रस्तावे प्रकरणे सति विशेषार्थस्य ऊहः प्रणिधानेन गम्यत्वम् । प्रकरणाभावे तु तादृशोहाऽसम्भव एवेति भावः । **दृश्येत** इति । हे तन्वि ! हे प्राज्ञे ! चन्द्रमसं प्रति चन्द्रमसि यावेतौ चारू दृश्येते तावुभौ कल्याणनामानौ तिष्यपुनर्वसू इत्यर्थः । अत्र तद्द्वयविशिष्टचन्द्र-तुल्यता प्राकरणिकनेत्रद्वयाविशिष्टे मुखे ऊह्यते ।

( **वि, म** ) प्रियवचःसंज्ञकं लक्षणमाह—**स्यादि**ति । पूज्यं जनं प्रमाणयितु-मिति प्रमाणत्वेन उत्कृष्टत्वेन ज्ञापयितुं हर्षेण भाषणं प्रियोक्तिः प्रियवच इत्यर्थः । **उदेती**ति । **तव प्रसादस्ये**ति । प्रसादजन्यानां सम्पदां शीघ्रोत्पत्त्या पुरस्त्वारोपः । अत्र मुनेः प्रकृष्टत्वप्रतिपादनार्थमिदं हर्षभाषणम् ।

( **वि, य** ) नाट्यालङ्कृतयस्त्रयस्त्रिंशदिति यदुक्तं ता वक्तुमाह—**अथे**ति । ता अलङ्कृतीरुद्दिशति—**आशी**रित्यादि ।

1 'समालम्भात्' ( क. पु. ) 2 'विशेषार्थोहविस्तरो' ( क. पु.) 'विशेषार्थो-हप्रस्तावे' ( ङ. पु. ) 'विशेषार्थोतिप्रस्तावो' ( ब. पु. ) 3 '–ध्यवसायौ'(क.पु.)

**उत्तेजनं परीवादो नीतिरर्थविशेषणम् ।**
**प्रोत्साहनं च साहाय्यमभिमानोऽनुवर्त्तनम् ।**
**उत्कीर्त्तनं यथा याच्ञा परिहारो निवेदनम् ।**
**प्रवर्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।**
**इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ॥ २०७ ॥ (य)**
**आशीरिष्टजनाशंसा ॥ २०८ ॥**

यथा शाकुन्तले—

ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ( र )

**आक्रन्दः प्रलपितं शुचा ॥ २०९ ॥**

यथा वेण्यां (कञ्चुकी) हा देवि कुन्ति ! राजभवनपताके ! इत्यादि । (ल)

**कपटं मायया यत्र रूपमन्यद् विभाव्यते ॥ २१० ॥**

यथा कुलपत्यङ्के—

मृगरूपं परित्यज्य विधाय कपटं वपुः ।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ॥ ( व )

**अक्षमा सा परिभवः स्वल्पोऽपि न विषह्यते ॥ २११ ॥**

यथा शाकुन्तले–( राजा ) भोः सत्यवादिन् ! अभ्युपगतं तावदस्माभिः । किं पुनरिमामभिसन्धाय लभ्यते ? ( शार्ङ्गरवः ) विनिपातः इत्यादि । ( श )

**गर्वोऽवलेपजं वाक्यं ॥ २१२ ॥**

यथा तत्रैव, राजा–ममापि नाम सत्त्वैरभिभूयन्ते गृहाः ? । (ष)

---

**( वि, र )** आशीराख्यानमलङ्कृतिमाह—**आशीरिष्टजने**ति । इष्टजने आशीर्वादः इत्यर्थः । शर्मिष्ठा पुरुं पुत्रं यथा प्राप तथा त्वमप्येवं पुत्रं प्राप्नुहीत्यन्वयः ।

**( वि, ल )** आक्रन्दाख्यामलङ्कृतिमाह—**आक्रन्द** इति । स्पष्टम् ।

**( वि, व )** कपटाख्यामलङ्कृतिमाह—**कपटमि**ति । विभाव्यते दर्श्यते । **मृगरूपमि**ति । तेन मायामृगरूपेण मारीचराक्षसो मृगरूपं मृगधर्म स्वरविशेषं परित्यज्य । अर्थाद्रमणीयस्वरविशेषमुच्चार्य्य इत्यर्थः ।

**( वि, श )** अक्षमाख्यामलङ्कृतिमाह—**अक्षमे**ति । स्वल्पोऽपि परिभवो यत्र विषह्यते इत्यर्थः । **भो भो** इत्यादि । शकुन्तलापरिणयमस्मरन्तं दुष्यन्तं प्रति तवेयं जायेति शार्ङ्गरवेण कण्वशिष्येण उक्ते भो भो इति राज्ञ उक्तिः । इमां जायाम् । अत्र भो भोः सत्यवादिन्नित्याक्षेपोक्त्या कृतस्य परिभवस्य विनिपात इत्युक्त्या शार्ङ्गरवेण न विषेहे ।

**( वि, ष )** गर्वाख्यामलङ्कृतिमाह—**गर्व** इति । अवलेपोऽहङ्कारः ।

**कार्य्यस्यारम्भ उद्यमः ॥ २१३ ॥**

यथा कुम्भे–(रावणः) पश्यामि शोकविवशोऽन्तकमेव तावत् । ( स )

**ग्रहणं गुणवत् कार्य्यहेतोराश्रय उच्यते ॥ २१४ ॥**

यथा विभीषणनिर्भर्त्सनाङ्के—(विभीषणः)–राममेवाश्रयिष्यामीति । ( ह )

**उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनि ॥ २१५ ॥**

यथा शाकुन्तले—( शार्ङ्गरवः ) राजन्! अथ पुनः पूर्ववृत्तान्तमन्यसङ्गाद् विस्मृतो भवान्, तत् कथमधर्मभीरोर्दारपरित्याग इत्यादि । ( क )

**आकाङ्क्षा रमणीयत्वाद् वस्तुनो या स्पृहा तु सा ॥२१६॥**

यथा तत्रैव–(राजा)

चारुणा स्फुरितेनायमपरिक्षतकोमलः ।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥ ( ख )

**अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु ॥ २१७ ॥**

यथा—त्वया तपस्विचाण्डाल ! प्रच्छन्नवधवर्त्तिनः ।
न केवलं हतो वाली स्वात्मा च परलोकतः ॥

**मोहावधीरितार्थस्य पश्चात्तापः स एव तु ॥ २१८ ॥**

यथानुतापाङ्के–( रामः )

किं देव्या न विचुम्बितोस्मि बहुशो मिथ्याभिशप्तस्तदा। इति । (घ)

---

**( वि, स )** उद्यमाख्यामलङ्कृतिमाह—**कार्य्यस्ये**ति । कुम्भे कुम्भनाम्नि नाटके पश्यामीति इन्द्रजित्शोकार्त्तस्य रावणस्य स्वयं युद्धारम्भे आत्मनोऽन्तकत्वकथनमिदम् ।

**( वि, ह )** आश्रयाख्यामलङ्कृतिमाह—**ग्रहणमि**ति । **राममेवे**ति । अत्रात्मनो लङ्काधिपत्यस्य गुणवत्कार्य्यस्य हेतो रामाश्रयणस्य ग्रहणम् ।

**( वि, क )** उत्प्रासनाख्यामलङ्कृतिमाह—**उत्प्रासनमि**ति । साधुमानिनि, आत्मनि साधुत्वमानिनि । राजन्नित्यादिरुपहासः । कृतविस्मरणात् राज्ञोऽसाधुत्वम् ।

**( वि, ख )** स्पृहाख्यामलङ्कृतिमाह—**आकाङ्क्षा** इति । **चारुणे**ति—शकुन्तलायाः स्फुरदधरदर्शनात् तत्पानेच्छो राज्ञ उक्तिरियम् । अपरिक्षतकोमलोऽयमधरश्चारुणा स्फुरितेन मम पानानुज्ञां ददातीव इत्यर्थः ।

**( वि, ग )** क्षोभाख्यामलङ्कृतिमाह—**अधिक्षेपे**ति । अधिक्षेपः तिरस्कारः तदर्थकवचोजनको यः क्षोभः क्रोधश्चलचित्तता स क्षोभाख्योऽलङ्कार इत्यर्थः । त्वयेत्यादिकं रामं प्रति रावणस्य वाक्यम् ।

**(वि, घ)** पश्चात्तापाख्यामलङ्कृतिमाह–**मोहावधीरितार्थस्ये**ति । गोत्रस्खलितादितो रामे मिथ्याभिशापं दत्त्वा मानिन्यां सीतायां तामनुनीय कार्य्यान्तराद्बहिर्गतस्य रामस्य तदा तत्कर्त्तृकचुम्बनकरणानुतापोऽयम् ।

**उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ॥ २१९ ॥**

यथा वध्यशिलायाम्—

म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदिच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥ (ङ)

**आशंसनं स्यादाशंसा ॥ २२० ॥**

यथा श्मशाने, (माधवः) तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखमिति । (च)

**प्रतिज्ञा व्यवसायकः ॥ २२१ ॥**

यथा मम प्रभावत्यां—( वज्रनाभः )—

अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।
लीलयोन्मूलयाम्येव भुवनद्वयमद्य वः ॥ ( छ )

**विसर्पो यत्समारब्धं कर्मानिष्टफलप्रदम् ॥ २२२ ॥**

यथा वेण्याम्—एकस्य तावत् पाकोऽयमित्यादि ।

**कार्य्यदर्शनमुल्लेखः । २२३ ॥**

---

**( वि, ङ )** उपपत्त्याख्यामलङ्कृतिमाह—**उपपत्तिरि**ति । अर्थस्याभिमतार्थस्य सिद्धये तद्धेतोरुपन्यास इत्यर्थः । वध्यशिला नाटकविशेषः । म्रियत इति वध्यशिलायां हन्तुमानीतं स्वमरणेन मरिष्यमाणां स्वप्रियामनुशोचन्तं कञ्चित् प्रति महादयालोरुक्तिरियम् । पूर्वोद्धोक्तरूपां प्रियां जीवन्तीं यदीच्छसि तदा ममासुभिरात्मानं रक्ष । त्वत्परिवर्त्तमहं म्रिये । अत्र वध्यत्राणं वक्तुरभिप्रेतं तत्सिद्धये वध्यप्रियाजीवनेच्छारूपहेतोरुपन्यासः ।

**( वि, च )** आशंसाख्यामलङ्कृतिमाह—**आशंसनमि**ति । आशंसनम् अर्थसिद्धये प्रार्थनम् । आशीर्नामालङ्कृतिस्तु परार्थस्य सिद्धये आशीर्वादः । **तत्पश्येयमि**ति । तस्या मालत्या मुखम् ।

**( वि, छ )** व्यवसायाख्यामलङ्कृतिमाह—**प्रतिज्ञे**ति व्यवसायक इति स्वार्थे कः । **अस्य वक्ष** इति । वो युष्माकं श्रीकृष्णादीनां सम्बन्धिनोऽस्य प्रद्युम्नस्य वक्ष इत्यर्थः । भुवनद्वयं स्वर्गमर्त्त्यरूपम् ।

**( वि, ज )** विसर्परूपामलङ्कृतिमाह—**विसर्प** इति । **समारब्धमि**ति । अतीतारम्भप्रदर्शनम् । अनिष्टफलदं कथितमिति शेषः । तच्च समारब्धम् । **एकस्ये**ति । केशेषु गृहीत्वा धृष्टद्युम्नेन हतस्य द्रोणस्य शिरसि छिन्ने क्रुद्धस्य अश्वत्थाम्न उक्तिरियम् । एकस्य दुःशासनेन द्रौपद्याःकेशग्रहणस्यायं विपाकः अखिलक्षत्रियक्षयकृत्संगरः । द्वितीये मत्पितुः केशग्रहः । अत्र केशग्रहारम्भणमनिष्टफलयुक्तम् ।

**( वि, झ )** उल्लेखाख्यामलङ्कृतिमाह—**कार्य्यदर्शनमि**ति । संबोध्यस्य

यथा शाकुन्तले—राजानं प्रति (तापसौ) समिदाहरणाय प्रस्थितावावाम्। इह चास्मद्गुरोः कण्वस्य साधिदैवत इव शकुन्तलयानुमालिनीतीरमाश्रमो दृश्यते, न चेदन्यकार्य्यातिपातः प्रविश्य गृह्यतामतिथिसत्कार इति।

**उत्तेजनमितीष्यते**

**स्वकार्य्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक्॥ २२४॥**

यथा— इन्द्रजिच्चण्डवीर्य्योऽसि नाम्नैव बलवानसि।

धिक् धिक् प्रच्छन्नरूपेण युध्यसेऽस्मद्भयाकुलः॥ (ञ)

**भर्त्सना तु परीवादः॥ २२५॥**

यथा सुन्दराङ्के, (दुर्य्योधनः) "धिक् धिक् सूत! किं कृतवानसि। वत्सस्य मे प्रकृतिदुर्ललितस्य पापः पापं विधास्यति" इत्यादि। (ट)

**नीतिः शास्त्रेण वर्त्तनम्॥ ३२५॥**

यथा शाकुन्तले—(दुष्मन्तः) विनीतवेशप्रवेश्यानि तपोवनानीति (ठ)

**उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा।**

**उपालम्भस्वरूपेण तत्स्यादर्थविशेषणम्॥ २२७॥**

यथा शाकुन्तले—राजानं प्रति (शार्ङ्गरवः) "आः कथमिदं नाम। किमिदमुपन्यस्तमिति। ननु भवानेव नितरां लोकवृत्तान्तनिष्णातः"।

सतीमपि ज्ञातिकुलैकसंश्रयां

जनोऽन्यथा भर्त्तृमतीं विशङ्कते।

---

कार्य्यप्रदर्शनमित्यर्थः। **तापसावि**ति राज्ञो मृगहननं निवार्य्य समिदाहरणाय इत्यूचतुरित्यर्थः। अत्र राज्ञः शकुन्तलाविशिष्टाश्रमप्रवेशरूपकार्य्यप्रदर्शनम्।

**(वि, ञ)** उत्तेजनाख्यामलङ्कृतिमाह—**उत्तेजनमि**ति। कठोरा परुषा। इन्द्रजित् इत्यादिकम् इन्द्रजितं संबोध्य लक्ष्मणस्य परुषवाक्यमिदम्। प्रच्छन्नरूपेण मेघान्तरितवपुषा। अत्र दर्शनरूपस्वकार्य्यसिद्धये इन्द्रजित्प्रेरणाय इयं वाक्।

**(वि, ट)** परीवादाख्यामलङ्कृतिमाह—**भर्त्सने**ति। सुन्दरो वेणीसंहारस्यैवाङ्कः। वत्सस्य कर्णपुत्रस्य वृषसेनस्य पापः पाण्डवः पापं वधम्। अत्र रथमादाय पलायितस्य सारथेर्भर्त्सना।

**(वि, ठ)** नीत्याख्यामलङ्कृतिमाह—**नीतिरि**ति। स्पष्टमिदम्

**(वि, ड)** अर्थविशेषाख्यामलङ्कृतिमाह—**उक्तस्यार्थस्ये**ति। परोक्तस्यार्थस्य उपालम्भविधया यत् अनेकधा उत्कीर्त्तनमित्यर्थः। उत्कीर्त्तनमनुवादः। **आः कथमिद**मिति। शकुन्तलां स्वीकर्त्तुं बहुशः शार्ङ्गरवेणोक्ते राज्ञोक्तं किमिदमुपन्यस्तमिति। उपहासविधया शार्ङ्गरवेणानेकधा तदनुवादः क्रियते। **किमिदमिती**ति। अत्र वीप्सा बोध्या तदेव अनेकधात्वात्। **सतीमपी**ति। ज्ञातिः पितृपक्षः। अन्यथा भासतीं। स्वबन्धुभिः पितृपक्षीयैः।

अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥ ( ड )

**प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ॥ २२८ ॥**

यथा बालरामायणे—

कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि ।
तज्जगत्त्रितयं त्रातुं तात ताडय ताडकाम् ॥ ( ढ )

**साहाय्यं सङ्कटे यत्स्यात् सानुकूल्यं परस्य च ॥ २२९ ॥**

यथा वेण्यां कृपं प्रति ( अश्वत्थामा ) त्वमपि तावद्राज्ञः पार्श्ववर्त्ती भव। (कृपः) वाञ्छाम्यहमद्य प्रतिकर्त्तुमित्यादि । ( ण )

**अभिमानः स एव स्यात् ॥ २३० ॥** (आ)

यथा तत्रैव (दुर्य्योधनः) "मातः किमप्यसदृशं कृपणं वचस्ते" इत्यादि(त)

**प्रश्रयादनुवर्त्तनम् ।**
**अनुवृत्तिः॥ २३१ ॥**

यथा शाकुन्तले–राजा ( शकुन्तलां प्रति। ) अयि तपो वर्द्धते । अनसूया । दाणिं अदिधिविसेसलाहेणेत्यादि । ( थ )

**भूतकार्याख्यानमुत्कीर्त्तनं मतम् ॥ २३२ ॥**

---

**( वि, ढ )** प्रोत्साहनाख्यामलङ्कृतिमाह—**प्रोत्साहनमि**ति। योजनं नियोजनं प्रवर्त्तनमित्यर्थः । **कालरात्री**ति । रामं प्रति विश्वामित्रस्य वाक्यमिदम् । कालरात्रिवत कराला भीषणा इयं ताडका । विचिकित्ससि त्यजसि ।

**( वि, ण )** साहाय्याख्यामलङ्कृतिमाह—**साहाय्यमि**ति स्पष्टम् ।

**( वि, त )** अभिमानाख्यामलङ्कृतिमाह–**अभिमान** इति । वाक्यात् योऽभिमानः प्रतीयते स एवाभिमानाख्यालङ्कार एव । **मातरि**ति । पाण्डवेभ्यो राज्यं दातुं गान्धार्या उक्ते दुर्योधनस्याभिमानमूलेयमुक्तिः ।

**( वि, थ )** अनुवृत्त्याख्यामलङ्कृतिमाह—**प्रश्रयादि**ति । प्रश्रयो विनयः । अनुवर्त्तनं प्रीणनम् । **अयी**ति । अत्र राज्ञोऽनसूयायाः परस्परं प्रीणनम् ।

**( वि, द )** उत्कीर्त्तनाख्यामलङ्कृतिमाह—**भूते**ति । भूतकार्यं पूर्ववृत्तम् । न च पूर्वसिद्धार्थकथनात्मकं यत् निरुक्तिरूपं नाट्यलक्षणमुक्तं तद्भेद इति वाच्यम् । तत्र स्वकृतिरूपस्य पूर्वसिद्धार्थस्य निहताशेषकौरव्य इत्यादिना कथनमत्र तु स्वपरसाधारणकृतपूर्ववृत्तस्य इति तद्भेदः । अत्र आसीदिति पुष्पकेणागमने रणस्थलं

---

**( लो, आ )** स एव यो भाषितः स एवाभिमान एव ।

यथा बालरामायणे—

अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे

गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः। इत्यादि (द)

**याच्ञा तु क्वापि याच्ञा या स्वयं दूतमुखेन वा ॥ २३३ ॥**

यथा—अद्यापि देहि वैदेहीं दयालुस्त्वयि राघवः।

शिरोभिः कन्दुकक्रीडां किं कारयसि वानरान् ॥ (ध)

**परिहार इति प्रोक्तः कृतानुचितमार्जनम् ॥ २३४ ॥**

यथा—प्राणप्रयाणदुःखार्त्त उक्तवानस्म्यनक्षरम्।

तत् क्षमस्व विभो! किञ्च सुग्रीवस्ते समर्पितः ॥ (न)

**अवधीरितकर्त्तव्यकथनं तु निवेदनम् ॥ २३५ ॥**

यथा राघवाभ्युदये-(लक्ष्मणः) आर्य ! समुद्राभ्यर्थनया गन्तुमुद्यतोऽसि; तत्किमेतत् ? (प)

**प्रवर्त्तनं तु कार्य्यस्य यत्स्यात् साधुप्रवर्त्तनम् ॥ २३६ ॥**

यथा वेण्यां-(राजा) कञ्चुकिन्! देवस्य देवकीनन्दनस्य बहुमानाद् वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्त्तन्तां तत्रोपचिताः समारम्भाः।

**आख्यानं पूर्ववृत्तोक्तिर् ॥ २३७ ॥**

---

सीतां दर्शयतो रामस्य वाक्यमिदम्। भवद्देवरे लक्ष्मणे वक्षसि रावणेन शक्त्या गाढं ताडिते सति द्रोणाद्रिः गन्धमादनाद्रिः अत्र हनुमता आहृतः। देवरत्वकथनम् अनुरागोत्पादनाय। दिव्यैः लक्ष्मणशरैः इन्द्रजित् लोकान्तरं प्रापितः। हे मृगाक्षि ! राक्षसपतेः रावणस्य कण्ठाटवी केनाप्यत्र कृत्ता अर्थात् मया।

**(वि, ध)** याच्ञारूपामलङ्कृतिमाह—**याच्ञे**ति। दूतमुखेन वा इत्युक्तः दूतमुखेन याचनोचितवस्तुयाच्ञा लभ्यते। तेन तत् पश्येयमनङ्गमङ्गलगृहमित्यादौ उदाहरणके आशंसनाख्यालङ्कारेणैव भेदः। अद्यापीत्यादिकं रावणेऽङ्गदस्य वाक्यम्। **शिरोभिरि**ति। रामच्छिन्नत्वच्छिरोभिरित्यर्थः।

**(वि, न)** परिहाररूपामलङ्कृतिमाह–**परिहार इती**ति। **प्राणप्रयाणमि**ति। रामं प्रति म्रियमाणस्य वालिन उक्तिरियम्।

**(वि, प)** निवेदनाख्यामलङ्कृतिमाह—**अवधीरिते**ति। अवधीरितम् अवधारणा। तत्र किमेतदित्यर्थः। अवधारणैवात्र कर्त्तव्या इत्यर्थः।

**(वि, फ)** प्रवर्त्तनाख्यामलङ्कृतिमाह—**प्रवर्त्तनं तु** इति। कार्यस्य सम्बन्धि यत् साधुनो मङ्गलस्य प्रवर्त्तनं तत् इत्यर्थः। आख्यानरूपामलङ्कृतिमाह—पूर्ववृत्तोक्तिरत्र कोधमूलकत्वेन विशेषणीया। तेन भूतकार्य्याख्यानरूपात् उत्कीर्त्तनालङ्कारात् भेदः

यथा तत्रैव—देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः, इत्यादि (फ)

युक्तिरर्थावधारणम् ॥ २३८ ॥

यथा तत्रैव—

यदि समरमपास्य नास्ति मृत्यो-
भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम् ॥ ( ब )

प्रहर्षः प्रमदाधिक्यं ॥ २३९ ॥

यथा शाकुन्तले—( राजा ) तत्किमिदानीमात्मानं पूर्णमनोरथं नाभिनन्दामि ? ( भ )

शिक्षा स्यादुपदेशनम् ॥ २४० ॥

यथा तत्रैव—"सहि ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणं" । ( म )

एषां च लक्षणं नाट्यालङ्काराणां सामान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण । ( य,इ )

एषु च केषाञ्चित् गुणालङ्कारभावसन्ध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतः

---

**देशः सोऽयमि**त्यादि । अश्वत्थाम्नः क्रोधात् पूर्ववृत्तोक्तिः ।

**( वि, ब )** युक्तिरूपामलङ्कृतिमाह—**युक्तिरि**ति । हेतुप्रदर्शनेन परेषां कार्यार्थनिश्चायनमित्यर्थः । **यदि समरमि**ति । द्रोणस्य मरणेन पलायमानान् वीरान् प्रति अश्वत्थाम्न उक्तिरियम् । अत्रोक्तहेतुप्रदर्शनेन युद्धकर्त्तव्यतानिश्चायनम् ।

**( वि, भ )** प्रहर्षाख्यामलङ्कृतिमाह—**प्रहर्ष** इति स्पष्टम् ।

**( वि, म )** उपदेशनरूपामलङ्कृतिमाह— **शिक्षे**ति । **सही**ति । सखि ! न युक्तमाश्रमवासिनो जनस्याऽकृतसत्कारमतिथिविशेषमुत्त्वा स्वच्छन्दतो गमनम् ।

**( वि, य ) एषां चे**ति । लक्षणानि उक्तानि षट्त्रिंशत् , नाट्यालङ्कारा उक्तास्त्रयत्रिंशत् । **एकरूपत्वेऽपी**ति । लक्षणत्वालङ्कारत्वयोर्विनिगमकाभावाल्लक्षणानामप्यलङ्कारत्वम् अलङ्काराणामपि लक्षणत्वम् इत्येवम् एकरूपत्वसम्भवेऽपीत्यर्थः। **भेदेने**ति । एतानि लक्षणानि, एता अलङ्कृतय इत्येवं भेदेन इत्यर्थः । गड्डलिकाप्रवाहोऽनादिसिद्धो निर्मलो व्यवहारः ।

**( वि, र ) एषु चे**ति । केषाञ्चित् वक्ष्यमाणोपमाव्यतिरेकालङ्कारादिरूपत्वेन तेषु काव्याङ्गेषु केषाञ्चिच्च गुणभावतत्सम्बन्धिव्यञ्जकत्वेन तेषु काव्याङ्गेषु अन्तर्भाव-

---

**( लो, इ ) गड्डरिकाप्रवाहेणे**ति—यथा गड्डरिका एका अपरां तां चेतरान् गच्छति, तासां गतानुगतमात्रेण भेदः तथा लक्षणनाट्यालङ्कारयोरपीति भावः ।

कर्त्तव्यत्वात्तद्विशेषोक्तिः। ( र ) एतानि च—

पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम्।
षट्त्रिंशल्लक्षणोपेतमलङ्कारोपशोभितम्।
महारसं (ई) महाभोगमुदात्तरचनान्वितम्।
महापुरुषसञ्चारं साध्वाचारं जनप्रियम्।
सुश्लिष्टसन्धियोगं च सुप्रयोगं सुखाश्रयम्।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम्॥

इति मुनिनोक्तत्वात् नाटकेऽवश्यं कर्त्तव्यान्येव वीथ्यङ्गानि वक्ष्यन्ते। (ल)

लास्याङ्गान्याह—

**गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका।**
**प्रच्छेदकस्त्रिगूढं च सैन्धवाख्यं द्विगूढकम्।**
**उत्तमोत्तमकं चान्यदुक्तप्रत्युक्तमेव च।**
**लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः॥ २४१॥ (व)**

तत्र—

**तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः।**
**शुष्कं ( उ ) गानं गेयपदम्॥ २४२॥**

यथा गौरीगृहे वीणां वादयन्ती मलयवती—

उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि !

---

गम्भवेऽपि इत्यर्थः। **प्रयत्नतः कर्त्तव्यत्वा**दिति—कर्त्तव्यता च तत्तत्प्रसङ्गौचित्यानुसारेण यथायोग्यमेव न तु सर्वत्रैव सर्वेषामित्यवधेयम्।

**( वि, ल )** सुकविना तु एतत् सकलविशिष्टमपि नाटकं कर्त्तव्यमिति मुनिनोक्तत्वात् तेन सर्वमिदं कर्त्तव्यमित्याह—**पञ्चसन्धि चतुर्वृत्ती**त्यादि **कुर्यात्तु नाटक**मित्यन्तम्। पञ्चसन्धयो मुखसन्ध्याद्याः प्रागुक्ताः पञ्च। चतुःषष्ट्यङ्गानि च सन्धीनां प्रागुक्तानि। षट्त्रिंशत् लक्षणानि च नाट्यानां प्रागुक्तानि। अलङ्कारास्त्रयस्त्रिंशत् सम्प्रत्युक्ताः। 'त्रयस्त्रिंशत् प्रयोज्यानि वीथ्यङ्गानि त्रयोदश' इत्युक्तत्वात् त्रयस्त्रिंशदलङ्कारोक्त्यनन्तरं वीथ्यङ्गानां वक्तव्यत्वे प्राप्ते वीथिरूपकनाटकविशेषस्य विशिष्य दर्शितत्वात् दर्शयिष्यमाणतदवसरे वीथ्यङ्गानि वक्ष्यन्ते इत्याह—**वीथ्यङ्गानी**ति।

**( वि, व )** दश लास्याङ्गानि वक्तुमाह—**लास्याङ्गानी**ति।

**( वि, श )** तत्र गेयपदरूपं लास्याङ्गमाह—**तन्त्रीभाण्डे**ति। तन्त्रीभाण्डम्

---

**( लो, ई ) महारसमि**ति—रसभावनिरन्तरम्।

**( लो, उ )** शुष्कम् अनुकरणीयम्।

अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन ॥ (श)

**स्थितपाठ्यं तदुच्यते ।**

**मदनोत्तापिता यत्र पठति प्राकृतं स्थिता ॥ २४३ ॥**

अभिनवगुप्तपादास्त्वाहुः—"उपलक्षणं चैतत् । क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यमिति ।"

**निखिलातोद्यरहितं शोकचिन्तान्विताऽबला ।**
**सुप्रसारितगात्रं यदासीनासीनमेव च ॥ २४४ ॥ (ष)**
**आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च ।**
**स्त्रीपुंसयोर्विपर्य्यासचेष्टितं पुष्पगण्डिका ॥ २४५ ॥ (स, ऊ)**
**अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना ।**
**वीणापुरस्सरं गानं स्त्रियाः प्रच्छेदको मतः ॥ २४६ ॥ (ह)**
**स्त्रीवेशधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम् ॥ २४७ ॥ (क)**

यथा मालत्यां ( मकरन्दः )—एषोऽस्मि मालती संवृत्तः ।

**कश्चन भ्रष्टसङ्केतः सुव्यक्तकरणान्वितः ।**
**प्राकृतं वचनं वक्ति यत्र तत्सैन्धवं विदुः ॥ २४८ ॥**

करणं वीणादिक्रिया ।

**चतुरस्रपदं (ऋ) गीतं मुखप्रतिमुखान्वितम् ।**
**द्विगूढं रसभावाढ्यम् ॥ २४९ ॥**

**उत्तमोत्तमकं पुनः ।**

---

तन्त्र्याश्रयां वीणां पुरस्कृत्य प्रधानीकृत्य शुष्कं गानं नृत्यहीनगानम् । **उत्फुल्ले**ति—ममाभिवाञ्छितमित्यन्वयः ।

**( वि, ष )** आसीनमङ्गमाह—**निखिलातोद्ये**ति । मृदङ्गादिवाद्यरहितम् । शोकाकुला वस्त्राच्छादितगात्री यत्तिष्ठति तदासीनमित्यर्थः ।

**( वि, स )** पुष्पगण्डिकाख्यमङ्गमाह—**आतोद्ये**ति । छन्दांसि गद्यपद्यरागाणाम् विपर्यासश्चेष्टाव्यत्यासः ।

**( वि, ह )** प्रच्छेदाख्यमङ्गमाह—**अन्यासक्त**मिति । उक्तमन्युना पतिमवज्ञाय वीणापुरस्सरं गानमित्यर्थः ।

**( वि, क )** त्रिगूढाख्यमङ्गमाह—**स्त्रीवेशे**ति । श्लक्ष्णं मनोहरम् । **मकरन्द** इति । तेन मालतीप्रतारणाय लवङ्गिकावेशस्य नन्दनप्रतारणाय मालतीवेशधारणात् ।

**( वि, ख )** द्विगूढकमङ्गमाह—**चतुरस्रपद**मिति । पादचतुष्टयान्वितं गीत-

---

**( लो, ऊ )** विपर्यासचेष्टितं स्त्रियाः पुरुषस्य चेष्टितं, पुरुषस्य स्त्रीचेष्टितम् ।

**( लो, ऋ )** चतुरस्रपदं भरतादि प्रसिद्धम् ।

कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम् ॥ २५० ॥ (ख)
हावहेलान्वितं चित्रश्लोकबन्धमनोहरम् ।
उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत् ।
विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ॥ २५१ ॥ ( ग )

स्पष्टान्युदाहरणानि–

एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ।
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥ २५२ ॥ ( घ, ऋ )

एतदेव नाटकम् । यथा बालरामायणम् । अथ प्रकरणम्—

भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।
सापायधर्मकामार्थपरो धीरप्रशान्तकः ॥ २५३ ॥ ( ऌ )

विप्रनायकं यथा मृच्छकटिकम् । अमात्यनायकं मालतीमाधवम् । वणिङ्–

---

मित्यर्थः । तच्च गीतं मुखप्रतिमुखगन्ध्योर्गेयमित्यर्थः । उत्तमोत्तमकमङ्गमाह—**उत्तमोत्तमकं पुनरि**ति । **कोपे**ति । लास्यं कदाचित्कोपजत्वात् अधिक्षेपयुक्तम् । कदाचित् प्रसादजत्वात् रसोत्तरमित्यर्थः । **हावहे**लेति । हेलाभिन्नोऽत्र हावो गोवृषन्यायात् हेलाबाहुल्यार्थं तत् ।

**( वि, ग )** उक्तप्रत्युक्तमङ्गमाह—**उक्तिप्रत्युक्ती**ति । उपालम्भ उपहासः । स चालीकार्थमुपन्यस्येत्याह–**अलीकवदि**ति ।

**( वि, घ )** महानाटकाख्यं नाटकप्रभेदमाह—**एतदेवे**ति । नाटकमेवेत्यर्थः । **सर्वैः पताकास्थानकैरि**ति ।

सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ॥

इत्यादिभिरुक्तैश्चतुर्भिः पताकास्थानकैरित्यर्थः ।

**( वि, ङ )** नाटकप्रकरणभाणादयो ये रूपकोपरूपकप्रभेदा उत्कीर्त्तिता "विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" । इत्युक्तत्वादित्थं साङ्गोपाङ्गनाटकलक्षणमुक्त्वा प्रकरणाख्यं द्वितीयरूपकमाह—**अथ प्रकरणमि**ति । वृत्तं तन्नाट्यवर्णनीयप्रसङ्गः । तच्च कविनैव कल्पितत्वेन पुराणेषु अदृष्टत्वाल्लौकिकम् । **सापाये**ति । शृङ्गारित्वेन कदाचिद्धर्मस्य नायिकाया मानात् कदाचित्कामस्य कामार्थव्यवसायात् अर्थस्य चापायवानित्यर्थः । **धीरप्रशान्त** इति । "सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्त" इति । तल्लक्षणं प्रागुक्तम् । पुष्पभूषितं प्रकरणविशेषः ।

---

**( लो, ऋ )** एवं नाटकलक्षणं गोवलीवर्दन्यायेन भिन्नं महानाटकलक्षणम् ।

**( लो, ऌ )** अथ उद्देश्यक्रमेण प्रकरणादीन्निरूपयति—**भवेदि**ति । लौकिकं न तु दिव्यं मिश्रं वा ।

नायकं पुष्पभूषितम् । ( ङ )

नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ।
कितवद्यूतकारादिविटचेटकसङ्कुलः ॥ २५४ ॥ ( च )

कुलस्त्री पुष्पभूषिते । वेश्या तु रङ्गदत्ते । द्वेऽपि मृच्छकटिके । अस्य नाटक-प्रकृतित्वात् शेषं नाटकवत् । अथ भाणः—

भाणः स्याद्धूर्त्तचरितो नानावस्थान्तरात्मकः ।
एकाङ्क एक एवात्र निपुणः पण्डितो विटः ।
रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण वा ।
सम्बोधनोक्तिप्रत्युक्ती कुर्य्यादाकाशभाषितैः ।
सूचयेद् वीरशृङ्गारौ शौर्य्यसौभाग्यवर्णनैः ।
तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ॥ २५५ ॥ ( छ )

अत्र आकाशभाषितरूपं परवचनमपि स्वयमेवानुवदन्नुत्तरप्रत्युत्तरे कुर्य्यात् । शृङ्गारवीररसौ च सौभाग्यशौर्य्यवर्णनया सूचयेत् । प्रायेण भारती क्वापि कौशिक्यपि वृत्तिर्भवति । लास्याङ्गानि गेयपदादीनि । उदाहरणं—लीला-मधुकरः । ( ज )

ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।
हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः । ( ए )
एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः ।
कौशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ।
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः ।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः ॥ २५६ ॥

---

( वि, च ) **तेन भेदास्त्रयस्तस्ये**ति । तस्य प्रकरणस्य कुलजा वेश्या तदुभयनायिकाभेदात् भेदत्रयम् । तत्रोभयनायकत्वे तृतीयभेदपात्राण्याह—**कितवे**ति ।

( वि, छ ) भाणाख्यं रूपकमाह—**अथे**ति । **नानावस्थे**ति । नाटकस्यान्तरात्मा नायकः स नानावस्थो यत्र तादृशः । पण्डित एव धूर्त्तो बोध्यः । स्वेन इतरेण वाऽनुभूतार्थमित्यन्वयः । **सूचयेदि**ति । शौर्य्येण वीरम्, सौभाग्येन शृङ्गारम् । सूचयेदित्यर्थः । उत्पाद्यं कविनैव ।

( वि, ज ) व्याचष्टे—**अत्रे**ति । लीलामधुकरो भाणाख्यरूपकविशेषः ।

---

( लो, ए ) प्रकरणाद् भेदो गर्भविमर्शाभावेन ।

यथा सौगन्धिकाहरणम् ।  अथ समवकारः—

वृत्तं समवकारे तु ख्यातं देवासुराश्रयम् ।
सन्धयो निर्विमर्शास्तु त्रयोऽङ्कास्तत्र चादिमे ।
सन्धी द्वावन्त्ययोस्तद्वदेक एव भवेत्पुनः ।
नायका द्वादशोदात्ताः प्रख्याता देवदानवाः ।
फलं पृथक् पृथक् तेषां वीरमुख्योऽखिलो रसः ।
वृत्तयो मन्दकौशिक्यो नात्र बिन्दुप्रवेशकौ ।
वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश ।
गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च । ( ऐ )
त्रिश्टङ्गारस्त्रिकपटः कार्य्यश्चायं त्रिविद्रवः ।
वस्तु द्वादशनाडीभिर्निष्पाद्यं प्रथमाङ्कगम् ।
द्वितीयेऽङ्के च तिसृभिर्द्वाभ्यामङ्के तृतीयके ॥ २५७ ॥ (झ)

नाडिका घटिकाद्वयमुच्यते । बिन्दुप्रवेशकौ च नाटकोक्तावपि नेह विधातव्यौ । ( ञ )

तत्र—

धर्मार्थकामैस्त्रिविधः श्टङ्गारः कपटः पुनः ।
स्वाभाविकः कृत्रिमश्च दैवजो विद्रवः पुनः ।
अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः ॥ २५८ ॥ ( ट )

अत्र शास्त्राविरोधेन कृतो धर्मश्टङ्गारः। अर्थलाभार्थकल्पितः अर्थश्टङ्गारः ।

---

( वि, झ ) व्यायोगाख्यं रूपकमाह—**अथे**ति । सौगन्धिकाहरणं व्यायोगाख्यरूपकविशेषः । समवकाराख्यं रूपकमाह—**अथे**ति । आदिमेऽङ्के अन्त्ययोरङ्कयोरेकः सन्धिरित्यर्थः । मन्दकौशिक्यः कौशिक्या एवान्तरविशेषाः । त्रिश्टङ्गारादिकं स्वयमेव व्याख्यास्यति—**वस्तु** इति । प्रथमाङ्कगं प्रथमाङ्कबोधनीयं वस्तु । घटिकाद्वयात्मकनाडीद्वादशकैरष्टचत्वारिंशद्दण्डैर्निष्पाद्यं कार्य्यमित्यर्थः ।

( वि, ञ ) व्याचष्टे—**नाडिका चे**ति घटिका दण्डद्वयम् ।

( वि, ट ) तत्र श्टङ्गारादिकं कारिकया आह—**धर्मार्थे**ति । त्रिकपटत्वं व्याख्यातुं कपटत्रैविध्यमाह—**कपटः पुन**रिति । त्रिविद्रवत्वं व्याख्यातुमाह—**विद्रवः पुनः** इति । कौतुकेन प्रतारणादिविशेषो विद्रवः । स चाचेतनैः काष्ठपुत्तलिकादिभिश्चेतनैः प्रहसनकरैश्चेतनाचेतनैश्चेतनत्वेऽपि प्रकृष्टचेतनारहितैः पश्वादिभिः तद्वत्त्यति । गजादिभिरिति तत्र धर्मश्टङ्गारादिकमिच्छया व्युत्क्रमेण दर्शयति ।

( वि, ठ ) तत्र नायिकानायकयोः अर्थलाभार्थः श्टङ्गारो वेश्यानां; धर्माविरोधी

---

( लो, ऐ ) गायत्र्यादीनां छन्दसां लक्षणान्याकरेषु बोद्धव्यानि

प्रहसनश्रृङ्गारः कामश्रृङ्गारः । तत्र कामश्रृङ्गारः प्रथमाङ्क एव । अन्ययोस्तु न नियम इत्याहुः । चेतनाचेतना गजादयः समवकीर्य्यन्ते बहवोऽर्था अस्मिन्निति समवकारः । यथा समुद्रमन्थनम् । ( ठ, ओ )

अथ डिमः—

मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
उपरागैश्च भूयिष्ठो डिमः ख्याततिवृत्तकः । ( ड )
अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः ।
चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ।
नायका देवगन्धर्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ।
वृत्तयः कौशिकीहीना निर्विमर्शाश्च सन्धयः ।
दीप्ताः स्यु षड्रसाः शान्तहास्यश्रृङ्गारवर्जिताः ॥ २५६ ॥

अत्रोदाहरणम् "त्रिपुरदाह" इति महर्षिः । अथेहामृगः—

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्त्तितः ।
मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा ।
नरदिव्यावनियमौ नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्त्यो गूढभावादयुक्तकृत् । ( ढ )
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
श्रृङ्गाराभासमप्यस्य किञ्चित्किञ्चित्प्रदर्शयेत् ।
पताकानायका दिव्या मर्त्या वापि दशोद्धताः ।

---

श्रृङ्गारः स्वदारेषु पुंसः । समवकारपदव्युत्पत्तिमाह–**समवकीर्य्यन्त** इति ।

**( वि, ड )** डिमसंज्ञकं रूपकमाह–**अथे**ति । **माये**ति । मायात्मकत्वात् अदृश्यता । इन्द्रजालमलीकनानावस्तुप्रदर्शनम् । सङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितमितस्ततो विक्षेपः । उपरागः उपद्रवः ।

**( वि, ढ )** ईहामृगाख्यं रूपकमाह–**अथेहे**ति । मिश्रवृत्तः ख्याताख्यातवृत्तान्तः निर्वहणोपसंहृतिरूपसिद्धिरपि तत्रेत्यर्थः । **नरदिव्यावि**ति । नरौ वा दिव्यौ वा नरदिव्यौ वा नायकप्रतिनायकावित्यर्थः । तयोराद्यो धीरः । अन्त्य उद्धतः । स च मूढभावात् अयुक्तकारी ।

**( वि, ण )** दिव्यस्त्रियमनिच्छन्तीमिच्छतः श्रृङ्गाराभासमपीत्यन्वयः । पताका-

---

**( लो, ओ )** प्रहसनो हास्ययुक्तः प्रथमोद्दिष्टोऽपि धर्मश्रृङ्गारः पश्चाद् विधेयत्वेन पश्चाद् व्याख्यातः । अनियमादिति क्वचिद्दिव्यः क्वचिन्नरो वा नायकः अर्थप्रकृतयः आरम्भयत्नाद्याः ।

**युद्धमानीय संरम्भं परं व्याजान्निवर्त्तते ।**
**महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो । ( ण )**
**एकाङ्को दिव्य एवात्र नेतेत्याहुः परे पुनः ।**
**दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे ॥ २६० ॥**

मिश्रं ख्याताख्यातम् । अन्यः प्रतिनायकः । पताकानायकास्तु नायकप्रतिनायकयोर्मिलित्वा ता दश । नायको मृगवदलभ्यां नायिकामत्र ईहते वाञ्छतीतीहामृगः । यथा कुसुमशेखरविजयादि । (त)

अथाङ्कः—

**उत्सृष्टिकाङ्क एकोऽङ्को नेतारः प्राकृता नराः ।**
**रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ।**
**प्रख्यातमितिवृत्तञ्च कविर्बुद्ध्या प्रपञ्चयेत् ।**
**भाणवत् सन्धिवृत्त्यङ्गान्यस्मिन् जयपराजयौ ।**
**युद्धं च वाचा कर्त्तव्यं निर्वेदवचनं बहु ॥ २६१ ॥**

इमञ्च केचित् " नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थम् उत्सृष्टिकाङ्कनामानम् ।" आहुः । अन्ये तु "उत्क्रान्ता विलोमरूपा सृष्टिर्यत्र" इति उत्सृष्टिकाङ्कः । यथा-शर्मिष्ठाययातिः । (थ)

---

नायकव्यापिप्रासङ्गिकवृत्तप्रवर्त्तका नायिका "व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते" इत्युक्तत्वात् । ते तु दिव्यमर्त्त्या द्वादश इत्यर्थः । तथा च नायकप्रतिनायकौ द्वौ, पताकानायका दश इति द्वादश । **युद्धमि**ति युद्धरूपं संरम्भं विक्रमं परबलमानीय प्रापय्य व्याजात् निवर्त्तयेत् इत्यर्थः । तत्र हेतुमाह—**महात्मान** इति । तेषां वधानर्हत्वादित्यर्थः । इत्थं नायकप्रतिनायकयोर्दिव्यमर्त्त्यादित्वात् नियम उक्तः ।

**( वि, त )** अन्ये तु दिव्यैकनायकनियममाहुः । अन्ये तु षड्नायकमाहुरित्याह—**एकाङ्को दिव्य** इत्यादि च । पताकानायक इत्यादिकं व्याचष्टे—**पताकास्था** इति नायकप्रतिनायकयोः सम्बन्धिनः पताकास्था नायका मिलिताः सङ्गता दश इत्यर्थः ईहामृगव्युत्पत्तिमाह—**नायको मृगवदि**ति ।

**( वि, थ )** उत्सृष्टिकाङ्काख्यं रूपकमाह—**अथे**ति । बहुस्त्रीणां परिदेवितं शोकः **स्थायिभावः** इत्यर्थः । उत्सृष्टिकाङ्कपदार्थं व्याचष्टे—**इमं चे**ति । नाटकाद्यन्तःपातीति नाटकान्तरे द्वित्र्याद्यङ्काः । अस्य च एकाङ्कत्वेन अङ्कान्तरोत्सङ्गात् अमुम् उत्सृष्टिकाङ्कनामानं केचिदाहुरित्यर्थः । अन्ये तु वक्ष्यमाणवीथ्यामपि एकाङ्कसत्त्वात् तस्या अपि उत्सृष्टिकाङ्कत्वापत्तेः । तत्पदार्थमन्यथाहुस्तदाह—**अन्ये त्वि**ति । विलोमेति प्राकृतनायकत्वेन विलोमता ।

अथ वीथी—

वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते ।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ।
सूचयेद् भूरिशृङ्गारं किञ्चिदन्यान् रसानपि
मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ॥ २६२ ॥ (द)

कश्चिदित्युत्तमो मध्यमोऽधमो वा । शृङ्गारबहुलत्वाच्चास्याः कौशिकीवृत्तिबहुलत्वम् । (ध)

अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः ।
उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलम् ।
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि च तानि तु ॥ २६३ ॥

तत्रोद्घात्यकावलगिते प्रस्तावनाप्रस्तावे सोदाहरणं लक्षिते । (न)

मिथो वाक्यमसद्भूतः प्रपञ्चो हास्यकृन्मतः ॥ २६४ ॥ (प,औ)

यथा विक्रमोर्वश्याम्—वडभीस्थविदूषकचेट्योरन्योन्यवचनम् ।

त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ॥ २६५ ॥ (फ)

यथा तत्रैव राजा—

सर्वक्षितिभृतां नाथ ! दृष्टा सर्वाङ्गसुन्दरी ।

---

(वि, द) वीथ्याख्यं रूपकमाह—**अथेति** । कश्चिदेक इत्यत्र नायक इति शेषः। अर्थप्रकृतय इति बीजं बिन्दुः पताका च प्रकरी कार्य्यमेव इति याः पञ्च प्रकृतयः प्रागुक्तास्ता अखिला अपि अत्रेत्यर्थः ।

(वि, ध) व्याचष्टे—**कश्चिदिति** । उत्तमाद्यन्यतरो नायक इत्यर्थः । कौशिक्या वृत्तेरत्र अनुक्तत्वेऽपि भूरिशृङ्गारवत्त्वात् तल्लाभ इत्याह—**शृङ्गारबहुलत्वादिति** ।

(वि,न) **प्रस्तावनाप्रस्तावे** इति। "पदानि त्वगतार्थानि तदर्थगतये नराः। योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥" इत्युद्घातकलक्षणस्य "यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते । प्रयोगे सति तद्ज्ञेयं नाम्नाऽवलगितं बुधैः ॥" इति अवलगितलक्षणस्य च प्रस्तावनाप्रस्तावे उक्तत्वात् ।

(वि, प) प्रपञ्चाख्यमङ्गमाह—**मिथ** इति—असद्भूतम् अलीकार्थम् अत एव हास्यकृत् ।

(वि, फ) त्रिगताख्यमङ्गमाह—**त्रिगतमिति** । श्रुतिसाम्यतः श्रूयमाणशब्दद्वयसाम्यात् तयोर्वस्तुत एकार्थत्वेऽपि अनेकार्थयोरेकाभिन्नार्थयोर्योजनं प्रत्यायनमित्यर्थः.

(वि, ब) **सर्वक्षितीति**—इदं हिमालयस्य सम्बोधनम् । मया विरहिता सर्वा-

---

(लो, औ) मिथः असद्भूतं वाक्यमिति सम्बन्धः ।

रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥

नेपथ्ये तत्रैव प्रतिशब्दः । राजा—कथं दृष्टेत्याह । अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम् । नटादित्रितयविषयमेवेदमिति कश्चित् । ( ब, अ )

**प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य च्छलना च्छलम् ॥ २६६ ॥**

यथा वेण्यां—भीमार्जुनौ—

कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः(आ)सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥ (भ)

**अन्ये त्वाहुश्छलं किञ्चित् कार्यमुद्दिश्य कस्यचित् ॥ २६७ ॥**
**उदीर्यते यद्वचनं वञ्चनाहास्यरोषकृत् ।**
**वाक्केलिहास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत् ॥ २६८ ॥ (म)**

द्वित्रीत्युपलक्षणं यथा—

भिक्षो ! मांसनिवेषणं प्रकुरुषे, किं तेन मद्यं विना
मद्यं चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह ।

---

सुन्दरी रामा उर्वशी रम्येऽस्मिन् वनान्ते त्वया दृष्टा इति प्रश्नः । कथं दृष्टा इत्याह—त्वया विरहिता मया दृष्टेति प्रतिशब्दार्थस्य योजनाद्दर्शनोत्तरणशब्दयोरेकार्थत्वेऽपि दर्शितरीत्या प्रश्नोत्तरभावेन योजनादनेकार्थता, तद् व्याचष्टे—**अत्र प्रश्ने**ति । नटनटीसूत्रधारत्रयप्रयोज्यत्वेनाऽस्य त्रिगतत्वं केचित् व्याचक्षते, तदाह—**नटादी**ति ।

( **वि, भ** ) छलाख्यमङ्गमाह—**प्रियाभैरि**ति । विलोभ्य प्रतार्य छलनादुपहसनात् । **कर्त्ते**ति—पलायितुं दुर्योधनमन्विष्यतो भीमार्जुनयोर्वाक्यमिदम् । द्यूतच्छलादिकर्तृत्वविशिष्टो यस्तं द्रष्टुमाग[illegible] न तु रुषा इत्यन्वयः । शरणं गृहम् । दुःशासनादेरनुजशतस्य [illegible] इत्यत्र **योन्ये**ति [illegible]स्य कर्णस्य । अत्र द्रष्टुमेव न रुषेति प्रियाभेन वाक्येन प्रतार्य उप[illegible]

( **वि, म** ) **अन्ये** इति । कस्यचित् किञ्चित् कार्यमुद्दिश्य इत्यन्वयः । वाक्केलिरूपम् अङ्गमाह—**वाक्केली**ति ।

( **वि, य** ) **भिक्षो** इति । परिहासाय मांसं भक्षन्तं भिक्षुं प्रति भिक्षो इत्यादिर्गृहिणः प्रश्नः । किं तेन इति भिक्षोः प्रत्युत्तरम् । मद्यं चापि इत्यादिकं

---

( **लो, अ** ) क्षितिभृतां पर्वतानां राज्ञाञ्च । मया विरहिता त्वया दृष्टा; पक्षे त्वया विरहिता मया दृष्टा । अत्र राज्ञां प्रथमार्थाभिप्रायेण प्रश्नरूपार्थं वाक्यमिदमुक्त्वा पर्वते प्रतिध्वनिमाकर्ण्य द्वितीयार्थः पर्वतस्योत्तरत्वेनावगतो विरहोन्मादात् ।

( **लो, आ** ) शरणं गृहम् ।

वेश्याप्यर्थरुचिः कुतस्तव धनं द्यूतेन चौर्येण वा
चौर्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य कान्या गतिः ॥ (य)

केचित् प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निर्वृत्तिर्वाक्केलिरित्याहुः, अन्ये च अनेकस्य प्रश्नस्यैकमुत्तरम्। (र)

**अन्योन्यवाक्याधिक्योक्तिः स्पर्द्धयाधिबलं मतम् ॥ २६६ ॥**

यथा मम प्रभावत्यां वज्रनाभः—

अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया
लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः ।

प्रद्युम्नः! अरे रे असुरापसद! अलममुना बहुप्रलापेन; मम खलु—

अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः ।
आस्तां समस्तदितिजक्षतजोक्षितेयं
क्षोणिः क्षणेन पिशिताशनलोभनीया ॥ (ल)

**गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः ॥ २७० ॥**

यथा वेण्यां, राजा—

अध्यासितुं तव चिराज्जघनस्थलस्य
पर्याप्तमेव करभोरु! ममोरुयुग्मम् ।

अनन्तरं प्रविश्य 'कञ्चुकी' देव! भग्नं भग्नमित्यादि "। अत्र रथकेतन-

---

गृहिणः। प्रियमहो वेश्याङ्गनाभिरित्यादिकं भिक्षोः । अत्राधिकस्याप्यकार्यस्य सत्त्वं अल्पकार्यप्रश्नात् अहो इत्युक्तम्। वेश्यापीत्यादि धनमित्यन्तं गृहिणः । द्यूतेनेत्यादिकं भिक्षोः । चौर्येत्यादिकं गृहिणः । नष्टस्येत्यादिकं भिक्षोः प्रत्युक्तिः ।

**( वि, र )** **केचिदिति**—आकाङ्क्षोत्थापकप्रक्रान्तवाक्यस्य तदानिवृत्तौ तन्निवर्तकवाक्याद्युक्तिः ।

**( वि, ल )** अधिबलाख्यमङ्गमाह—**अन्**यानि त्वग ... । अस्य वक्ष इत्यादिकं प्राग् व्याख्यातम्। **अद्य प्रचण्डेति** । अद्य मम प्रचण्डे भुजदण्डे समर्पितो य उरुः कोदण्डस्ततो निर्गलितानां काण्डानां बाणानां समूहस्य ( सहस्रस्य वा पाठभेदात् ) पातैरियं क्षोणी क्षणेन समस्तदैत्यक्षतजैः उक्षिता सती पिशिताशनानां लोभनीया आस्तामित्यन्वयः ।

**( वि, व )** गण्डाख्यमङ्गमाह—**गण्डमिति** । सत्वरेणोक्तत्वात् सत्वरं भिन्नार्थं वचो यत् प्रस्तुतस्य प्रक्रान्तस्य वर्णनं तत् सम्बन्धितया प्रतीयते इत्यर्थः । राजा दुर्योधनः। करभोरु इति भानुमत्याः सम्बोधनम्। जघनस्थलस्याध्यासितुम् अध्यासनाय इत्यर्थः। भावे तुम् योगात् षष्ठी। पर्याप्तं योग्यम्। अत्र प्रक्रान्तस्य ऊरोभङ्गप्रतीतिरित्याह—**अत्रेति** ।

भङ्गार्थं वचनमूरुभङ्गार्थे सम्बन्धे सम्बद्धम्। ( व )

**व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत्॥ २७१॥**

यथा छलितरामे-सीता-जाद कल्लं क्खु अओज्झा एण गन्तव्वं तहिं सो राआ विणएण पणइदव्वो। लवः। अथ किमावाभ्यां राजोपजीविभ्यां भवितव्यम्? सीता। जाद सो क्खु तुह्माणं पिदा। लवः। किमावयो रघुपतिः पिता। सीता। (सातङ्कम्) मा अण्णधा संकधं। ण क्खु तुह्माणं सअलाए ज्जेव पुहवीएत्ति।" ( श )

**प्रहेलिकैव हास्येन युक्ता भवति नालिका॥ २७२॥**

संवरणकार्युत्तरं प्रहेलिका। यथा रत्नावल्यां सुसङ्गता। सहि! जस्स किदे तुमं आअदा सो इध जेव चिट्ठदि। सागरिका। कस्स किदे अहं आअदा? सुसं। णं चित्तफलअस्स। अत्र त्वं राज्ञः कृते आगतेत्यर्थः संवृत्तः। (ष)

**असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरम्।**
**अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः॥ २७३॥ ( स )**

तत्राद्यं यथा मम प्रभावत्यां-प्रद्युम्नः-(सहकारवल्लीमवलोक्य सानन्दम्।) अहो कथमिहैव।

**अलिकुलमञ्जुलकेशी परिमलबहुला रसावहा तन्वी।**

---

**( वि, श )** अवस्यन्दिताख्यमङ्गमाह—**व्याख्यानमि**ति। स्वरसोक्तस्य वक्तृभावेन उक्तस्य श्रोतुरस्वरसात् यदन्यथा व्याख्यानं तदवस्यन्दितमित्यर्थः। जादेत्यादि लवकुशौ प्रति सीताया उक्तिः। जात! कल्यं खलु युवाभ्यामयोध्यायां गन्तव्यम्। तत्र स राजा विनयेन प्रणमितव्यः (इति संस्कृतम्)। **जादे**ति। जातः स खलु युवयोः पिता ( इति संस्कृतम् )। **सातङ्कमि**ति। वाल्मीकिनिषेधात् आतङ्कः। मा अण्णधा इति, मा अन्यथा शङ्केथाम्। न खलु युवयोः किं तु सकलाया एव पृथिव्या इति (इति संस्कृतम्) पृथिव्या इत्यत्र पृथिवीस्थलोकस्य इत्यर्थः। अत्र पितेति जनकपरतया सीतया स्वरसोक्तस्य लब्धावस्यन्दनात् तया एव पालकतया व्याख्यानं कृतम्।

**( वि, ष )** नालिकाख्यमङ्गमाह—**प्रहेलिके**ति। संवरणकारीति व्याख्यानरूपाङ्गेऽपि संवरणरूपस्य सत्त्वेऽप्यत्र हास्ययुक्तत्वं विशेषः। **सहि जस्से**ति—सखि यस्य कृते त्वमागता सोऽत्रैव तिष्ठतीति संस्कृतम्। **कस्से**ति। कस्य कृते अहमागता ( इति संस्कृतम् ) **णं चित्ते**ति। ननु चित्रफलकस्य ( इति संस्कृतम् )

**( वि, स )** त्रिविधमसत्प्रलापाख्यमङ्गमाह-**असदि**ति। असम्बद्धमलीकारोप्यमाणार्थकं वाक्यमुत्तरञ्च तादृशमित्यर्थः। तृतीयमसत्प्रलापाख्यमङ्गमाह—**अगृह्णतोऽपी**ति। हितं वचोऽगृह्णतोऽपि मूर्खस्येत्यन्वयः।

**( वि, ह ) अलिकुले**ति—चूतलतिकायां प्रभावतीभ्रमादियमुक्तिः। इहेयं

किसलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे ॥

एवमसम्बद्धोत्तरेऽपि । तृतीयं यथा वेण्यां–दुर्य्योधनं प्रति गान्धारीवाक्यम् (ह)

**व्याहारो यत् परस्यार्थे हास्यलोभकारं वचः ॥ २७४ ॥**

यथा मालविकाग्निमित्रे–(लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति।) विदूषकः। मा दाव उपदेशमुद्धा गमिस्ससि (इत्युपक्रमेण) गणदासः। (विदूषकं प्रति) आर्य्य! उच्यतां यस्त्वया क्रमभेदो लक्षितः। विदूषकः। पढमं बह्मणपूआ भोदि, सा इमाए लंघिदा। (मालविका स्मयते) इत्यादिना नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हासलोभकारिणा वचसा व्याहारः। (क)

**दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् ॥ २७५ ॥**

क्रमेण यथा—

प्रियजीवितता क्रौर्य्यं निःस्नेहत्वं कृतघ्नता ।

---

चूतलतिकेति। कैव प्रभावती कीदृशी? अलिकुलम् एव मञ्जुलाः केशा यस्यास्तादृशी, किसलयमेव पेशलपाणिर्यस्यास्तादृशी। कोकिलपदमत्र तद्भाषापरम्। तथा च तद्भाषारूपविभाषावतीत्यर्थः। न तु कोकिलवद्भाषणशीला इत्यर्थः। तदाभेद-भाषणात् अभेदारोपानुपपत्तेः। अत्र च आहार्यारोपाभावात् न रूपकं किन्तु वास्तवभ्रमात् भ्रान्तिमदलङ्कार एव। **एवमसम्बद्धोत्तरेष्वपी**ति। तत्र यथा मम–

द्विजः शाखायुक्तस्त्वयि कृतकथः कोकिल इति
त्वयाख्येयं मन्दे मयि विरहिपाते कियदघम्।
इति प्रश्ने वायोर्मुकुलपुलका चूतलतिका
ध्रुवं धृत्वा मौलिं न खलु कियदित्युत्तरयति ॥

अत्र हि वातधूतमौलिकायां चूतलतिकायां मन्दवायोः कति पापप्रश्ने मौलि-धूननेन पापभावोत्तरारोपः। वायोः प्रश्नप्रकारः पूर्वार्द्धार्थः। पूर्वप्राप्तपापव्यवस्थके जने एव तादृशप्रश्नौचित्यादित्याह—द्विज इति। शाखायुक्तविटपस्थितो द्विजः पक्षी। कोकिल एव द्रुपदामन्त्रस्य ऋषिः कोकिलनाम वेदशाखायुक्तो द्विजः स त्वयि कृतकथ इत्यतस्त्वया मन्दे वेदरहिते इदमप्याख्येयम्। विरहिवधे कियत् पापमिति प्रश्नः। मन्दवायोः कामोद्दीपकत्वेन विरहिहन्तृत्वात् अयं प्रश्नः। व्यवस्थाकथने हर्षोत्पुलकः। तृतीयं यथा वेण्यां दुर्योधनं प्रति गान्धार्या हितवाक्यम्। अथवा प्रदीयतां दाशरथये मैथिलीति रावणं प्रति विभीषणस्य वाक्यमिदमपि बोध्यम्।

(वि, क) व्याहाररूपकमङ्गमाह—**व्याहार** इति। लास्यावसाने नृत्यसमाप्तौ। **मा दाव** इति। मा तावदुपदेशमुग्धा गमिष्यसीति (संस्कृतम्)। उपदेशः शास्त्रोप-देशः। तद्विसंमुग्धा तर्करुद्धकारिणी भूत्वा इति शेषः। **पढमामि**ति। प्रथमं ब्राह्मणपूजा भवति सा अनया लङ्घिता। (इति सं०)। अत्र परस्य राज्ञो लाभार्थं हास्यकरं विदूषकस्य वाक्यमाह—

भूयस्त्वद्दर्शनादेव ममैते गुणतां गताः ॥
तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया ।
सुखैकायतनं जातं दुःखायैव ममाधुना ॥

इति चाङ्गानि नाटकादिषु सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि । विस्पष्टतया नाटकादिषु विनिविष्टान्यपीहोदाहृतानि । वीथीव नानारसानां चात्र मालारूपतया स्थितत्वाद्वीथीयम् । यथा मालविका ।

अथ प्रहसनम्—

भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम् ।
भवेत्प्रहसनं वृत्तं निन्द्यानां कविकल्पितम् ।
अत्र नारभटी नापि विष्कम्भकप्रवेशकौ ।
अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा ॥ २७६ ॥

तत्र—

तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः ।
एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते ॥ २७७ ॥

यथा कन्दर्पकेलिः ।

आश्रित्य कञ्चन जनं सङ्कीर्णमिति तद्विदुः ॥ २७८ ॥

यथा धूर्त्तचरितम् ।

वृत्तं बहूनां धृष्टानां सङ्कीर्णं केचिदूचिरे ।
तत्पुनर्भवति द्व्यङ्कमथवैकाङ्कनिर्मितम् ॥ २७९ ॥

यथा लटकमेलकादि । मुनिस्त्वाह—

"वेश्याचेटनपुंसकविटधूर्त्ता बन्धकी च यत्र स्युः ।
अविकृतवेशपरिच्छदचेष्टितकरणन्तु सङ्कीर्णम् ॥" इति ।

विकृतन्तु विदुर्यत्र षण्डकञ्चुकितापसाः ।
भुजङ्गचारणभटप्रभृतेर्वेशवाग्युता ॥ २८० ॥

इदं तु सङ्कीर्णेनैव गतार्थमिति मुनिना पृथग् नोक्तम् ।

अथोपरूपकाणि । तत्र—

नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ।
स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताऽथवा ।
नवानुरागा कन्यात्र नायिका नृपवंशजा ।
सम्प्रवर्त्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः ।
देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ।

पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।
वृत्तिः स्यात् कौशिकी स्वल्पविमर्शाः सन्धयः पुनः ॥ २८१ ॥

द्वयोर्नायिकानायकयोः । यथा रत्नावलीविद्धशालभञ्जिकादि ।

अत्र त्रोटकम्—

सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् ।
त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम् ॥ २८२ ॥

प्रत्यङ्कसविदूषकत्वादेवात्र शृङ्गारोऽङ्गी । सप्ताङ्कं यथा स्तम्भितरम्भम् । पञ्चाङ्कं यथा-विक्रमोर्वशी । अथ गोष्ठी—

प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलङ्कृता ।
नोदात्तवचना गोष्ठी कौशिकीवृत्तिशालिनी ।
हीना गर्भविमर्शाभ्यां पञ्चषड्योषिदन्विता ।
कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता ॥ २८३ ॥

यथा रैवतमदनिका । अथ सट्टकम्—

सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम् ।
न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ।
अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम् ॥ २८४ ॥

यथा कर्पूरमञ्जरी । अथ नाट्यरासकम्—

नाट्यरासकमेकाङ्कं बहुताललयस्थिति ।
उदात्तनायकं तद्वत् पीठमर्दोपनायकम् ।
हास्योऽङ्ग्यत्र सशृङ्गारो नारी वासकसज्जिका ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ।
केचित् प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम् ॥ २८५ ॥ (इ)

तत्र सन्धिद्वयवती यथा—नर्मवती । सन्धिचतुष्टयवती यथा—विलासवती ।

अथ प्रस्थानम् ।

प्रस्थाने नायको दासो हीनः स्यादुपनायकः ।
दासी च नायिका वृत्तिः कौशिकी भारती तथा ।
सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः ।
अङ्कौ द्वौ लयतालादिर्विलासो बहुलस्तथा ॥ २८६ ॥

यथा शृङ्गारतिलकम् । अथोल्लाप्यम्—

उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम् ।

---

(लो, इ) तालः चञ्चुपुटादिः । पीठमर्दोऽत्रैवोक्तप्रकारः । गीतं भरतादिप्रसिद्धम् ।

शिल्पकाङ्गैर्युतं हास्यशृङ्गारकरुणै रसैः ।
उल्लाप्यं बहुसङ्ग्राममस्रगीतिमनोहरम् ।
चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन ॥ २८७ ॥

शिल्पकाङ्गानि वक्ष्यमाणानि । यथा देवीमहादेवम् । अथ काव्यम् ।

काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम् ।
खण्डमात्रा ( ई ) द्विपदिकाभग्नतालैरलङ्कृतम् ॥ २८८ ॥
वर्णमात्राच्छड्डुलिकायुतं शृङ्गारभाषितम् ।
नेता स्त्री चाप्युदात्तात्र सन्धी आद्यौ तथान्तिमः ॥ २८९ ॥

यथा—यादवोदयः । अथ प्रेङ्खणम्—

गर्भविमर्शरहितं प्रेङ्खणं हीननायकम् ।
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् ।
नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम् । ( उ )
नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना ॥ २९० ॥

यथा वालिवधः । अथ रासकम्—

रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम् ।
भाषाविभाषाभूयिष्ठं ( ऊ ) भारतीकौशिकीयुतम् ।
असूत्रधारमेकाङ्कं सवीथ्यङ्ककलान्वितम् ।
श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम् ।
उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम् ।
इह प्रतिमुखं सन्धिमपि केचित् प्रचक्षते ॥ २९१ ॥

यथा मेनकाहितम् । अथ संलापकम्—

संलापकेऽङ्काश्चत्वारास्त्रयो वा नायकः पुनः ।

---

( लो, ई ) खण्डमात्रादय आकरेषु बोद्धव्याः । आदौ मुखप्रतिमुखे । अन्तिमो निर्वहणम् ।

( लो, उ ) नियुद्धं बाहुयुद्धम् । सम्फेटो रोषभाषणम् ।

( लो, ऊ ) भाषेति—भाषाविभागे यथा—भाषार्णवे—

"भाषा मध्यमपात्राणां नाटकादौ विशेषतः ।
महाराष्ट्री सौरसेनीत्युक्ता भाषा द्विधा बुधैः ।
हीनैर्भाष्या विभाषा स्यात् सा च सप्तविधा स्मृता ।
प्राच्यावन्ती मागधी च शाकारी च तथापरा ।
चाण्डाली शाबरी चैव तथा भीरीति भेदतः ॥"

पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः ।
भवेयुः पुरसंरोधच्छलसंग्रामविद्रवाः ।
न तत्र वृत्तिर्भवति भारती न च कौशिकी ॥ २९२ ॥

यथा मायाकापालिकम् । अथ श्रीगदितम्—

प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम् ।
प्रसिद्धनायिकं गर्भविमर्शाभ्यां विवर्जितम् ।
भारतीवृत्तिबहुलं प्रीतिशब्देन संयुतम् ।
मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् ॥ २९३ ॥

यथा क्रीडारसातलम्—

श्रीरासीना श्रीगदिते गायेत्किञ्चित्पठेदपि ।
एकाङ्को भारतीप्राय इति केचित्प्रचक्षते ॥ २९४ ॥ (ख)

ऊह्यमुदाहरणम्

अथ शिल्पकम्—

चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा ।
अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः ।
वर्णनात्र श्मशानादेर्हीनः स्यादुपनायकः ।
सप्तविंशतिरङ्गानि भवन्त्येतस्य तानि तु ।
आशंसा-तर्क-संदेह-तापोद्वेगप्रसक्तयः ।
प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः ।
विलासालस्यबाष्पाणि प्रहर्षाश्वासमूढताः ।
साधनानुगमोच्छ्वासविस्मयप्राप्तयस्तथा ।
लाभविस्मृतिसम्फेटा वैशारद्यं प्रबोधनम् ।
चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते ॥ २९५ ॥ (ग)

सम्फेटग्रथनयोः पूर्वमुक्तत्वादेव लक्ष्म सिद्धम् । यथा कनकावतीमाधवः ।

अथ विलासिका—

शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता ।
विदूषकविटाभ्याञ्च पीठमर्देन भूषिता ।
हीना गर्भविमर्शाभ्यां सन्धिभ्यां हीननायका ।

---

( वि, ख ) श्रीगदिताख्यमुपरूपकमाह—**अथेति** । प्रीतिशब्देन प्रीतिजनकशब्देन । **श्रीरासीने**ति । श्रीः लक्ष्मीः । आसीना प्रविष्टा ।

( वि, ग ) शिल्पकाख्यमुपरूपकमाह—**अथेति** । **हीन** इति । निकृष्टजनोऽत्र सहायः । अस्याशंसाद्यङ्गान्युद्दिश्य तल्लक्षणोदाहरणे स्पष्टत्वादुपेक्षिते ।

( वि, घ ) विलासिकाख्यमुपरूपकमाह—**अथेति** ।

स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका ॥ २९६ ॥

केचित्त्वत्र विलासिकास्थाने "लासिका" इति पठन्ति । तस्यास्तु, "दुर्मल्लिकायामन्तर्भावः" इत्यन्ये ॥ (घ)

अथ दुर्मल्लिका—

दुर्मल्ली चतुरङ्का स्यात् कौशिकी भारती तथा ।
अगर्भा नागरनरा न्यूननायकभूषिता ॥
त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीडामयो भवेत् ।
पञ्चनालिर्द्वितीयोङ्को विदूषकविलासवान् ॥
षण्णालिकस्तृतीयस्तु पीठमर्दविलासवान् ।
चतुर्थो दशनालिः स्यादङ्कः क्रीडितनायकः ॥ २९७ ॥ (ङ)

यथा—बिन्दुमती ।

अथ प्रकरणिका—

नाटिकैव प्रकरणी सार्थवाहादिनायका ।
समानवंशजा नेतुर्भवेद् यत्र च नायिका ॥ २९८ ॥ (च)

मृग्यमुदाहरणम् ।

अथ हल्लीशः—

हल्लीश एक एवाङ्कः सप्ताष्टौ दश वा स्त्रियः ।
वागुदात्तैकपुरुषः कौशिकीवृत्तिसङ्कुलः ॥
मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः ॥२९९॥ (छ)

यथा केलिरैवतकम् ।

अथ भाणिका—

भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता ।
कौशिकीभारतीवृत्तियुक्तैकाङ्कविनिर्मिता ॥
उदात्तनायिका मन्दपुरुषाऽत्राङ्गसप्तकम् ।
उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा ।

---

(वि, ङ) दुर्मल्लिकाख्यमुपरूपकमाह—**अथेति** । अगर्भा गर्भसन्धिरहिता । नागरनराः नागरपात्राणि । नायको निकृष्टः । त्रिनालिः नालिकात्रयसाध्यः । एवमुत्तरत्र । विटक्रीडा, धूर्तक्रीडा ।

(वि, च) प्रकरणिकाख्यमुपरूपकमाह—**अथेति** । **नाटिकैवेति** । नाटिकालक्षणाक्रान्तैवेत्यर्थः । सार्थवाहाः पथिकाः । आदिशब्दात् प्रवासिनश्च ।

(वि, छ) हल्लीशाख्यमुपरूपकमाह—**अथेति** । **मुखेति**—मुखनिर्वहणसन्धिद्वयवती ।

(वि, ज) भाणिकाख्यमुपरूपकमाह—**अथेति** । मन्दो निकृष्टः । अस्य

**समर्पणं निवृत्तिश्च संहार इति सप्तमः ॥**
**उपन्यासः प्रसङ्गेन भवेत्कार्यस्य कीर्त्तनम् ।**
**निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति स स्मृतः ॥**
**भ्रान्तिनाशो विबोधः स्यान्मिथ्याख्यानन्तु साध्वसम् ।**
**सोपालम्भवचः कोपपीडयेह समर्पणम् ॥**
**निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते ।**
**संहार इति च प्राहुर्यत्कार्यस्य समापनम् ॥ ३०० ॥**

स्पष्टान्युदाहरणानि । यथा कामदत्ता । एतेषां सर्वेषां नाटकप्रकृतिकत्वेपि यथौचित्यं यथालाभं नाटकोक्तविशेषपरिग्रहः । यच्च नाटकोक्तस्यापि पुनरुपादानं तत्र तत्सद्भावस्य नियमः । (ज)

अथ श्रव्यकाव्यानि—

**श्रव्यं श्रोतव्यमात्रं तत्पद्यगद्यमयं द्विधा ॥ ३०१ ॥ ( झ )**

तत्र पद्यमयान्याह—

**छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकम् ।**
**द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते । ( ञ )**
**कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ॥ ३०२ ॥**

तत्र मुक्तकं यथा मम—

सान्द्रानन्दमनन्तमव्ययमजं यत् योगिनोपि क्षणं
साक्षात्कर्तुमुपासते प्रतिमुहुर्ध्यानैकतानाः परम् ।
धन्यास्ता मथुरापुरीयुवतयस्तद्ब्रह्म याः कौतुका-
दालिङ्गन्ति समालपन्ति शतधा कर्षन्ति चुम्बन्ति च ॥ ( ट )

---

कार्याण्याह—**उपन्यास** इत्यादि । तेषां लक्षणान्याह—**उपन्यास** इति । निर्वेदवाक्यस्य व्युत्पत्तिर्विन्यासः, सा च विन्याससंज्ञिका । कोपपीडयोपालम्भवचः समर्पणाख्यं कार्यमित्यर्थः । निदर्शनस्य दृष्टान्तस्योपन्यास इत्यर्थः । कार्यस्य समापनम्—मुख्यकार्यावान्तरकार्यस्येत्यर्थः । एषां कार्याणां सर्वनाटकेष्वेवौचित्यात्सर्वनाटकानामेवैतत्कार्यत्वमाह—**एषामि**ति । नाटकोक्तविशेषे परिग्रह इति विग्रहः । तथा च भाणिकोक्तकार्यस्य नाटकान्तरेपि दातव्यमुक्तम् । **यच्चे**ति । नाटके हि षट्त्रिंशल्लक्षणालङ्कारादयश्चोक्ताः । तदुक्तवस्तुनो यच्च पुनरुपादानं नाटकान्तर इति बोध्यम् । **तत्सद्भावस्ये**ति—तत्सद्भावस्य तत्रावश्यकतारूपनियम इत्यर्थः ।

( वि, झ ) **श्रव्यकाव्यानी**ति । तत्प्रभेदद्वयमाह—**पद्यगद्यामि**ति ।

( वि, ञ ) द्वाभ्यामित्यादिचतुर्षु परस्परैकवाक्यतापन्नत्वे सतीति बोध्यम् ।

( वि, ट ) **सान्द्रानन्दमि**ति—यत्परं प्रकृष्टं ब्रह्म क्षणमपि साक्षात्कर्तुं

युग्मकं यथा मम—

किं करोषि करोपान्ते कान्ते ! गण्डस्थलीमिमाम् ।
प्रणयप्रवणे कान्तेऽनैकान्ते नोचिताः क्रुधः ॥

इति यावत् कुरङ्गाक्षीं वक्तुमीहामहे वयम् ।
तावदाविरभूच्चूते मधुरो मधुपध्वनिः ॥ (ठ)

एवमन्यत्रापि । (ड)

**सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।**
**सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः ॥**
**एकवंशभवा भूपाः कुलजा बहवोऽपि वा ।**
**शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ॥**
**अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः ।**
**इतिहासोद्भवं वृत्तमन्यद् वा सज्जनाश्रयम् ॥ (ढ)**
**चत्वारस्तस्य वर्गाः स्युस्तेष्वेकञ्च फलं भवेत् ।**
**आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा ॥**
**क्वचिन्निन्दा खलादीनां सतां च गुणकीर्तनम् ।**
**एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ॥**
**नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।**
**नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ॥**
**सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।**
**सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ॥**

---

ध्यानैकताना ध्यानमात्राविष्टा योगिनः प्रतिमुहुरुपासते तद्ब्रह्म या मथुरापुरयुवतयः कौतुकादालिङ्गन्तीत्यादि ता धन्याः ।

**( वि, ठ )** मानिन्या मानभङ्गप्रकारं सख्यौ कथयन्नाह—**किं करोषी**त्यादि । हे कान्ते ! करोपान्ते इमां गण्डस्थलीं किमर्थं करोषि ? ततः प्रणयप्रवण इत्यादि स्पष्टम् । कुरङ्गाक्षीमिति वक्तुं वयं यावदीहामहे तावन्मधुरो मधुपध्वनिः चूते आविरभूत् । अत्र प्रथमश्लोकार्थो द्वितीयश्लोक उक्तिकर्मत्वेन उक्त इति एकवाक्यता ।

**( वि, ड ) एवमि**ति—सन्दानितकादावपि एवं बोध्यमित्यर्थः ।

**( वि, ढ )** महाकाव्यलक्षणमाह—**सर्गबन्ध** इत्यादि । परिच्छेदरूपः सर्गो बध्यतेऽस्मिन्निति सर्गबन्धः । सुरो देवः । सर्वे नाटकसन्धयो मुखप्रतिमुखादयः पञ्च । सज्जनाश्रयम्—वर्णनीयोत्तमजनस्य वृत्तं वेत्यर्थः ।

**( वि, ण ) चत्वार** इति—धर्मार्थकाममोक्षा ये चत्वारो वर्गास्तेष्वेकमपि तत्फलमित्यर्थः । **एकवृत्तमयै**रिति—एकच्छन्दोव्याप्तैरित्यर्थः । अवसाने सर्गान्ते ।

प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ॥
रणप्रयाणोपयममन्त्रपुत्रोदयादयः ।
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।
नामास्य, सर्गोपादेयकथया सर्गनाम तु ॥ ३०३ ॥ (ण)

सन्ध्यङ्गानि यथालाभमत्र विधेयानि । "अवसानेऽन्यवृत्तकैः" इति बहुवचनमविवक्षितम् । साङ्गोपाङ्गा इति जलकेलिमधुपानादयः । यथा—रघुवंश-शिशुपालवध-नैषधादयः । यथा वा मम राघवविलासादिः ।(त)

अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसंज्ञकाः ॥ ३०४ ॥

अस्मिन् महाकाव्ये । यथा महाभारतम् । ( थ )

प्राकृतैर्निर्मिते तस्मिन् सर्गा आश्वाससंज्ञकाः ।
छन्दसा स्कन्धकेनैतत् क्वचिद्गलितकैरपि ॥ ३०५ ॥

यथा–सेतुबन्धः । यथा वा मम कुवलयाश्वचरितम् । ( द )

अपभ्रंशनिबन्धेऽस्मिन् सर्गाः कडवकाभिधाः ।
तथापभ्रंशयोग्यानि छन्दांसि विविधान्यपि ॥ ३०६ ॥

यथा—कर्णपराक्रमः । (ध)

---

**साङ्गोपाङ्ग** इति—अमी सन्ध्यासूर्येन्द्वादयः पुत्रजन्मान्ता इह काव्ये यथायोगं यथासम्भवं साङ्गोपाङ्गा वर्णनीया इत्यर्थः । तत्र सन्ध्याङ्गम्–चक्रवाकविरहः, वासराङ्गम्–जलकेल्यादिः, रजन्यङ्गम्–मधुपानादि, उपाङ्गम्-तत्रैव परिहासादयः, मुनिः–नारदादिः, प्रयाणम्-यात्रा, उपयमः विवाहः, मन्त्रः-मन्त्रणा, पुत्रोदयः-पुत्रजन्म । इतरस्य प्रतिनायकस्य, तन्नाम्नास्य नामेत्यर्थः । **सर्गोपादेये**ति—सर्गे उपादेया वर्णिता या कथा तया सर्गनामेत्यर्थः ।

**( वि, त ) बहुवचनमविवक्षिता**मिति—अवसान एकस्यापि अन्यवृत्तिकस्य दृष्टत्वात् । **यथा रघुवंश**मिति । तत्र वृत्तस्य नाम्ना रघुवंशेति । एकवंशजा बहु-भूपाः । प्रतिनायकस्य नाम्ना शिशुपालवध इति । नैषधादौ तु नायकस्य नाम्ना । नायकस्तु सद्वंशजः क्षत्रियः ।

**( वि, थ ) अस्मिन्नार्ष** इति—ऋषिप्रणीतेऽस्मिन् महाकाव्य इत्यर्थः । **आख्यानसंज्ञका** इति । शिष्यं प्रति गुरूणामाख्यानशास्त्रकथने याः संज्ञा अध्याय-रूपास्तादृशसंज्ञका इत्यर्थः ।

**( वि, द )** स्कन्धकगलितके छन्दोविशेषौ ।

**( वि, ध )** कडवकाभिधाः—कडवकनामानः ।

**भाषाविशेषानियमात् काव्यं सर्गसमुज्झितम् ।**
**एकार्थप्रवणैः पद्यैः सन्धिसामग्र्यवर्जितम् ॥ ३०७ ॥**

यथा भिक्षाटनमार्याविलासश्च । ( न )

**खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च ॥ ३०८ ॥**

यथा मेघदूतादिः ।

**कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ।**
**व्रज्याक्रमेण रचितः स एवातिमनोरमः ॥ ३०९ ॥ ( प )**

सजातीयानामेकत्र संनिवेशो व्रज्या । यथा मुक्तावल्यादिः ।

अथ गद्यकाव्यानि । ( फ ) तत्र गद्यम् ।

**वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।**
**भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्विधम् ॥**
**आद्यं समासरहितं वृत्तभागयुतं परम् ।**
**अन्यद्दीर्घसमासाढ्यं तूर्यञ्चाल्पसमासकम् ॥ ३१० ॥ (ब)**

मुक्तकं यथा—"गुरुर्वचसि पृथुरुरसि" इत्यादि । वृत्तगन्धि यथा मम—समरकण्डुलनिबिडभुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनीटङ्कारोज्जागरितवैरिनगर !" इत्यादि । अत्र, " कुण्डलीकृतकोदण्ड " इत्यनुष्टुब्वृत्तस्य पादः, "समरकण्डुल" इति च प्रथमाक्षरत्रयरहित एतस्यैव पादः ।

उत्कलिकाप्रायं यथा ममैव—अणिसविसअणिसिदसरविसरविदलितपरिहगदपरबल !" इत्यादि । चूर्णकं यथा मम—"गुणरत्नसागर ! जगदेकनागर !

---

( वि, न ) **भाषाविशेषे**ति—तादृशवाक्ये संस्कृतप्राकृतभाषयोरनियमः ।

( वि, प ) अन्योन्यानपेक्षकः—अन्योन्यनिरपेक्षकः ।

(वि, फ) व्रज्यापदार्थमाह—**सजातीयानामि**ति । वर्णनीयैक्येन साजात्यम् ।

( वि, ब ) **वृत्तगन्धोज्झितमि**ति । गद्यसामान्यलक्षणम् ।

तच्चातुर्विध्यमाह—**मुक्तकमि**ति । आद्यं मुक्तकम् । परं वृत्तगन्धिः । वृत्तम्—अक्षरसंख्यातं छन्दस्तदेकदेशयुक्तमित्यर्थः । तुर्यं चतुर्थं चूर्णकम् ।

(वि,भ)**समरकण्डुले**ति—समरोत्साहेन कण्डुले निबिडे दृढे भुजदण्डे कुण्डलीकृतकोदण्डस्य शिञ्जिन्याः गुणस्य टङ्कारेण उज्जागरितं वैरिनगरं येन । हे तादृशेत्यर्थः । अत्र वृत्तभागयुक्तत्वं दर्शयति—**अत्रे**ति । **प्रथमाक्षरत्रयरहित** इति—एतस्यैव अनुष्टुभ एव पादोऽपरपादः । समरेत्यक्षरत्यागे, 'कण्डूलनिबिडभुजः' इत्येवंरूपः । **अणिसे**ति—अनिशविषमनिशितशरविसरविदलितपरिघगदपरबल इति संस्कृतम् । अनिशं विषमानां निशितानां शराणां विसरेण—पातेन विदलिताः परिघाः मुद्गराः गदाश्च यत्र तादृशं परबलं यस्मात्, हे तादृशेत्यर्थः । **गुणरत्नसागरे**त्यादि—अत्र रेफान्तं नाम-

कामिनीमदन ! जनरञ्जन !" इत्यादि । (भ)

**कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।**
**क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ।**
**आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ॥ ३११ ॥** (म)

यथा कादम्बर्यादिः—

**आख्यायिका कथावत् सा कवेर्वंशादिकीर्तनम् ।**
**अस्यामन्यकवीनाञ्च तथा वृत्तं क्वचित् क्वचित् ।**
**कथांशानां व्यवच्छेद आश्वास इति बध्यते ।**
**आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ।**
**अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ॥ ३१२ ॥** (य)

यथा हर्षचरितादिः—

"अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्" इति दण्ड्याचार्यवचनात्, केचित् "आख्यायिका नायकेनैव निबद्धव्या" इत्याहुः, तदयुक्तम् । आख्यानादयश्च कथाख्यायिकयोरेवान्तर्भावान्न पृथगुक्ताः । यदुक्तं दण्डिनैव—"अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः" इति । एषामुदाहरणं पञ्चतन्त्रादि । (र)

अथ गद्यपद्यमयानि—

**गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ॥ ३१३ ॥** (ल)

यथा देशराजचरितम्—

**गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते ॥ ३१४ ॥**

---

द्वयं नान्तञ्च सम्बोधनद्वयमल्पसमासकम् ।

**(वि, म)** कथारूपकाव्यधर्मानाह—**कथायामि**ति । आर्यामात्राकृतं छन्दः । वक्त्रापवक्त्रके–छन्दोविशेषौ । तस्य धर्मान्तरानाह—**आदावि**ति ।

**(वि, य)** आख्यायिकात्मककाव्यधर्मानाह—**आख्यायिके**ति । **कथावत्से**ति–सा कथोक्तधर्मतुल्यधर्मवतीत्यर्थः । कथातो विशेषमाह–**कवेरि**ति । **अस्यामि**ति–अस्यामाख्यायिकायामन्यकवीनाञ्च वंशादिकीर्तनमित्यर्थः । तथा वृत्तमक्षरसंख्यातं छन्दः क्वचित् क्वचिदित्यर्थः । **आश्वास** इति–आश्वासनामाऽत्र परिच्छेद इत्यर्थः । **आर्ये**ति–आर्यादिच्छन्दसां मध्ये येन केनचिच्छन्दसा आश्वासस्य मुखे–आदौ अन्यापदेशेन-अन्यच्छलेन भाव्यर्थस्य वक्ष्यमाणार्थस्य सूचनमित्यर्थः ।

**(वि, र)** "आख्यायिका नायकेनैव निबद्धव्या" इति यत् केनचिदुक्तं तद् "अपि तु"–इत्यादिदण्ड्याचार्यवचनादयुक्तमित्यर्थः । आख्यानादिरूपाणां काव्यान्तराणां पृथग्युक्तिबीजमाह—**आख्यानादय** इति । **यदुक्तं दण्डिनैवे**ति—यतो दण्डिनैवोक्तम्, अत्रैवान्तः—इत्यादीत्यर्थः ।

**(वि, ल)** चम्पूसंज्ञकं काव्यान्तरमाह—**गद्यपद्यमयामि**ति ।

यथा विरुदमणिमाला—(व)

**करम्भकन्तु भाषाभिर्विविधाभिर्विनिर्मितम् ॥ ३१५ ॥**

यथा—मम षोडशभाषामयी प्रशस्तिरत्नावली ।

एवमन्येपि भेदा उद्देशमात्रसिद्धत्वादुक्तभेदानतिक्रमाच्च न पृथग् लक्षिताः(श)

इति साहित्यदर्पणे दृश्यश्रव्यकाव्यनिरूपणो नाम

षष्ठः परिच्छेदः ।



---

( वि, व ) विरुदमणिमाला प्रबन्धविशेषः ।

(वि, श) **एवमन्येपि भेदा** इति । न पृथग् लक्षिता इत्यन्वयः । पृथगलक्षणे हेतुमाह—**उद्देशमात्रसिद्धत्वाद्**िति । तत्तत्कीर्त्तनमात्रेणैव सिद्धाः न तु कृत-लक्षणाः । तेषामुक्तप्रभेदलक्षणाक्रान्तत्वमेवेत्याह—**उक्तभेदाने**ति ।

इति श्रीमहेश्वरन्यायालङ्कारविरचितायां साहित्यदर्पणटीकायां

षष्ठपरिच्छेदविवरणम्



# सप्तमः परिच्छेदः

इह हि प्रथमतः काव्ये दोषगुणालङ्काररीतीनामवस्थितिक्रमो दर्शितः। सम्प्रति के ते इत्यपेक्षायामुद्देशक्रमप्राप्तानां दोषाणां स्वरूपमाह—( क, अ ) *

**रसापकर्षका दोषाः ॥ १ ॥ +**

अस्यार्थः प्रागेव स्फुटीकृतः। तद् विशेषानाह—( ख, आ )

**ते पुनः पञ्चधा मताः।**

**पदे[1] तदंशे वाक्येऽर्थे सम्भवन्ति रसेऽपि यत्[2] ॥२॥(इ) ×**

---

(**वि, क**) इह हि प्रथमतः प्रथमपरिच्छेदे दोषानामवस्थितिक्रमोऽवस्थिति-प्रकारो दर्शित इत्यर्थः। ते दोषाः। 'दोषास्तस्यापकर्षका' इत्युक्त्या अपकर्षकत्वेन दोषाणां प्रकारो दर्शितः। 'उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः' इत्युक्त्या च गुणा-दीनामुत्कर्षकत्वेनावस्थितिप्रकारो दर्शित इति। अत्र च रीत्यलङ्काराणामिति पाठस्तु उद्देशव्युत्क्रमेण लेखकप्रमादपरम्परयैवेति लक्ष्यते। तत एव उद्देशक्रमप्राप्तानामित्युक्तम्।

(**वि, ख**) **प्रागेव स्फुटीकृत** इति। श्रुतिदुष्टत्वादीनां शब्दद्वारा, अपुष्टार्थ-त्वादीनाम् अर्थद्वारा, व्यभिचारिभावादिशब्दवाच्यत्वादीनां च साक्षात् रसापकर्षकत्वमि-त्यर्थः। प्रागेव स्फुटीकृत इत्यर्थः। तद्विशेषान् दोषविशेषान्। ते पुनरिति ते दोषाः।

(**लो, अ**) काव्यस्वरूपं निरूप्य दोषान् निरूपयितुकामः तत्प्रस्तावं दर्शयति। **इह हि** इति। स्वरूपं स्वमसाधारणं रूपम् इतरव्यावर्त्तको धर्म्मः।

(**लो, आ**) **रसे**ति—रसापकर्षका आस्वादविघ्नहेतवः। **प्रागेवे**ति—प्राक् प्रथमपरिच्छेदे।

(**लो, इ**) **ते पुनरि**ति—ते दोषाः पदतदंशादिपञ्चके स्थिता यस्मात् वाक्यार्थ-भूतस्यास्वादस्यापकर्षकारणानि तस्मात् पञ्च प्रकाराः।

---

* नाममात्रेण वस्तुसङ्कीर्त्तनमुद्देशः। तेनैव क्रमेण प्राप्तानां स्वरूपं लक्षणम्।

+ रस्यते आस्वाद्यते इति व्युत्पत्त्या भावादिरपि गृह्यते। उद्देश्यप्रतीतिविघात-लक्षणोऽपकर्षः।

× दोषस्त्रिविधः—शब्ददोषोऽर्थदोषो रसदोषश्चेति। शब्दस्त्रिविधः पदं पदांशः वाक्यं च। एवं च तदाश्रितः शब्ददोषोऽपि त्रिविधः। अतो दोषाः पञ्चप्रकाराः।

तदंशे—पदांशे।

स चायं दोषो द्विविधो नित्योऽनित्यश्चेति। सर्वदैव हेयो नित्यः। यथा च्युत-संस्कारतादयः। तदन्योऽनित्यः—यथा शृङ्गारादौ हेयमपि श्रुतिकटु रौद्रादौ उपादेयमेव।

1 'पदांशे' इति क्वचित्पाठः। 2 'यत्' इत्यनन्तरं 'स्पष्टम्' ( इति क. पु. )

तत्र—

**दुःश्रवत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः ।**
**ग्राम्योऽप्रतीतसन्दिग्धनेयार्थनिहतार्थताः ।**
**अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता ।**
**अविमृष्टविधेयांशभावश्च पदवाक्ययोः ।**
**दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदे परम्[1] ।**
**निरर्थकासमर्थत्वे च्युतसंस्कारता तथा ॥ ३ ॥ ( ग, ई )**

**परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वम् । यथा—(घ)**

**"कार्त्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा । ( ङ, उ ) †**
**अश्लीलत्वं व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात् त्रिधा ॥" (च)**

---

( **वि, ग** ) **दुःश्रव** इत्यादि । अप्रयुक्तता इत्यत्र द्वन्द्वोत्तरस्य भावप्रत्ययस्य प्रत्येकमभिसम्बन्धात् दुःश्रवत्वादय एव दोषाः । एतदाद्यविमृष्टविधेयांशभावान्ताः त्रयोदश दोषाः पदवाक्ययोः पदे वाक्येऽपि सम्भवन्ति इत्यर्थः। एषां मध्ये केचिद्दोषाः पदांशेऽपीत्यर्थः । **पदे परम्** इति । निरर्थकत्वमसमर्थत्वं च्युतसंस्कारता चेति दोषत्रयं परं केवलं पदे नतु वाक्ये इत्यर्थः । तद् बीजं तत्तद्दोषप्रस्तावे वक्ष्यामः ।

(**वि, घ**) तत्र दुःश्रवत्वलक्षणमाह—**परुषे**ति । एतच्च वीरबीभत्सरौद्रान् रसान् विहाय इति बोध्यम्, तेषु तस्यानुगुणत्वादेव । तथा प्रादेशिकत्वे एवायं दोषः । समग्र-पदव्यापकत्वे तु प्रतिकूलवर्णत्वदोष एव इत्यपि बोद्धव्यम् ।

( **वि, ङ** ) **कार्त्तार्थ्यमि**ति । स्पष्टम् । रेफयुक्तवर्णे श्रुतिदुःखदायि ।

( **वि, च** ) **व्रीडाजुगुप्सामङ्गलत्वादि**ति । एतत्त्रयहेतुत्वादित्यर्थः । हेतुत्वं ज्ञापकत्वं कारकत्वं च । तत्र व्रीडाजुगुप्सयोः कारकत्वं मङ्गलस्य च ज्ञापकत्वं बोध्यम् ।

---

( **वि, ई** ) तत्र के दोषाः किंनिष्ठा इत्यत आह—**दुःश्रवे**ति । तल्प्रत्ययस्य दुःश्रवादिषु प्रत्येकं सम्बन्धः । सन्दिग्धं सन्देहः । अथ भवेत् क्लिष्टम् अविमृष्टविधे-यांशं विरुद्धमतिकृत्समासपदमेव । सर्वे दोषाः पदवाक्ययोः । एषु दुःश्रवादिषु मध्ये ।

( **लो, उ** ) परुषवर्णे परुषाक्षरम् । कार्त्तार्थ्यं कृतार्थतां—कृतार्थस्य भावम् ।

---

† अत्र प्रकृतरसव्यञ्जकवर्णाभावात् रसोद्बोधो न जायते । प्रतिकूलवर्णे तु प्रकृतर-सप्रतिबन्धकैः वर्णैः प्रतिबध्यते । अतः प्रतिकूलवर्णत्वं तु सर्वत्र रसे दुष्टम् । दुःश्रवत्वं तु न तथा इति अनयोर्भेदः । अत्र प्रयुक्तः कार्त्तार्थ्यशब्दः शृङ्गाररसव्यञ्जकवर्णाभावात् श्रोतुर्विरक्तिमापादयति ।

1 'परे' ( इति क. पु. )

क्रमेणोदाहरणम्—

"दृप्तारिविजये राजन् ! साधनं सुमहत्तव।" ( छ )

"प्रससार शनैर्वायुर्विनाशे तन्वि ! ते तदा ॥" ( ज, ऊ )

अत्र साधनवायुविनाशशब्दा अश्लीलाः । *

" शूरा अमरतां यान्ति पशुभूता रणाध्वरे "

अत्र "पशु" पदं कातर्य्यमभिव्यनक्तीत्यनुचितार्थत्वम् । + ( झ, ऋ )

---

( वि, छ ) दृप्तारीति—साधनं सेना स चार्थः प्राकरणिकत्वात् अनेकार्थस्य साधनशब्दस्य वाच्यः । पुंव्यञ्जनरूपस्त्वर्थो व्यङ्ग्यः श्रोतॄणां व्रीडाजनकः; नतु व्रीडाव्यञ्जकः तदप्रतीतेः ।

( वि, ज ) प्रससारेति—विरहोत्तरं नायिकां प्राप्य नायकस्योक्तिरियम् । हे तन्वि ! तव विनाशे अदर्शने सति तदा मम दुःखोत्पादनाय वायुः शनैः मन्दं प्रससार इत्यर्थः । अत्र अनेकार्थस्य विनाशशब्दस्य व्यङ्ग्यो मरणरूपोऽर्थोऽमङ्गलव्यञ्जकः । वायुशब्दस्तु अपानवायुव्यञ्जनया घृणारूपजुगुप्साजनकः । दुःखकाले शनैः प्रसृतवायोरपानवायुत्वप्रतीतेः । अनुचितार्थत्वमिति—उपश्लोक्यस्य निन्दाव्यञ्जकत्वं तत्त्वम् ।

(वि,झ) शूरा इति। पशुभूताः पशुवत् छेद्यरूपाः । अत्रेति । अध्वरच्छेद्यपशोः कातरत्वेनात्र शूरेष्वपि तत्प्रतीतेः ।

---

( लो, ऊ ) दृप्तेति—अत्र साधनशब्दो हस्त्यश्वादिसाधनार्थे प्रयुक्तः पुंध्वजस्य, वायुशब्दः पवनमात्रार्थे अपानपवनविशेषस्य, विनाशशब्दश्च अदर्शनार्थे मरणस्य च स्मारणात् क्रमेण व्रीडादिव्यञ्जकाः ।

( लो, ऋ ) पशुपदं तथाविधसमये प्रयुक्तम् ।

---

* अत्र सैन्यार्थकं साधनपदमुपस्थरूपार्थान्तरोपस्थापकतया व्रीडादायि । वायुशब्दोऽपानवायुस्मारकतया जुगुप्सादायी ।

विनाशशब्दस्य विवक्षित एवार्थोऽमङ्गलः । तादृशार्थोपस्थित्या श्रोतुर्वैमुख्यं दूषकताबीजम् । शिवलिङ्गभगिनीब्रह्माण्डादिशब्देषु तु समुन्नीतगुप्तलक्षितेषु असभ्यार्थानुपस्थितेर्नायं दोषः । अविगीतानादिप्रयोगयोगित्वे सति भगवदादिसम्बन्धित्वं समुन्नीतत्वम् । शिवलिङ्गशब्दस्य जगदन्तर्यामिभगवति प्रसिद्धेर्व्रीडाद्यप्रतीतिरेव । रूढ्यर्थस्य झटित्युपस्थित्या तद्भावनया योगार्थस्य तिरोधानं गुप्तत्वं—यथा भगिनीत्यत्र । ग्राम्यस्मृतिजनकैकदेशवत्त्वं लक्षितत्वम् । ब्रह्माण्डादिपदं समुदायरूढ्या झटिति सभ्यमेवार्थमुपस्थापयति । न तु अवयवेनाऽसभ्यार्थमिति न दोषः ।

+ अनुचितः विवक्षितार्थस्य तिरस्कारव्यञ्जकः अर्थो यस्य सः । अत्र शौर्ये प्रतिपाद्ये पशुपदं कातरतामभिव्यनक्ति पशुपदार्थे कातरताया दर्शनात् ।

अप्रयुक्तं तथा प्रसिद्धावपि कविभिरनादृतत्वम् ।

यथा—" भाति पद्मः सरोवरे ।" । अत्र पद्मशब्दः पुंलिङ्गः । (ञ) * .
ग्राम्यत्वं यथा—"कटिस्ते हरते मनः ।" । अत्र कटिशब्दो ग्राम्यः ( ट ) :

अप्रतीतत्वमेक[1]दर्शनमात्रप्रसिद्धत्वम् । यथा—" योगेन दलिताशयः ।" योगशास्त्र एव वासनार्थे आशयशब्दः । ( ठ, ॠ )

"आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ।"

अत्र वन्द्यामिति किं वन्दीभूतायामुत वन्दनीयायामिति सन्देहः । (ड, ऌ)

---

( वि, ञ ) तथा प्रसिद्धावपि इति । अनुशासने तल्लिङ्गकत्वेन उक्तावपीत्यर्थः । कविभिरिति बहुवचनात् प्राचीनानेककविभिरित्यर्थः । तेन इदानीन्तनानेककविभिः प्राचीनैककविना वाऽस्याऽऽदरेऽपि दोष एव । एवञ्च "पद्मान् हि मे प्रावृषि खञ्जरीटान्" इति नैषधकृता प्राचीनैककविना आदरेऽपि दोष एव । काव्यव्यातिरिक्ते भाषामात्रे तदादरे तु अदोष एव, इत्यतः नानुशासनप्रामाण्यम् ।

( वि, ट ) ग्राम्यो यथेति—ग्राम्यः शब्द इत्यर्थः । तस्य तथात्वं च विदग्धाऽप्रयोज्यत्वात् । काव्यकविसाधारणविदग्धानादरादप्रयुक्तत्वादस्य भेदः ।

( वि, ठ ) एकदर्शने, एकशास्त्रमात्रे ।

( वि, ड ) सन्दिग्धमिति । किमिदं वा पदमिति पदस्यैवं सन्दिग्धत्वम् । कर्णे कृत्वा इति श्रुत्वा इत्यर्थः । वन्दीभूतायाम् इति, बलात् वन्दीकृतशत्रुनार्यामित्यर्थः । अत्र वन्दीवन्द्याशब्दयोः सन्देहः ।

( लो, ॠ ) आशय इति । योगशास्त्र एव न तु लोके अर्थशास्त्रे वा । तथा हि पातञ्जलसूत्रं, "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति । क्लेशा अविद्याकर्माणि, दुष्कृतसुकृतादि तत्फलं विपाकः । तदनुगुणा वासना आशयाः । ते च मनसि वर्त्तमानाः पुरुषे अपदिश्यन्ते इति । किञ्चैवं वक्तृबोद्धव्ययोः शास्त्रानभिज्ञत्वबोधादिं विना दोष इति । ततश्च अप्रयुक्तत्वाद् भिद्यते ।

( लो, ऌ ) वन्द्यामिति—अस्य सप्तम्यन्तत्वेन द्वितीयान्तत्वेन च सम्भवात् प्रकरणाभावेन विनिगमनाभावात् सन्देहः ।

---

* पुंलिङ्गो पद्मशब्दोऽमरकोषे "वा पुंसि पद्मं नलिनम्" इति पठितोऽपि कविभिर्न क्वापि प्रयुक्त इत्यप्रयुक्तत्वम् ।

× अश्लीले तु व्रीडादिव्यञ्जकत्वम् । अत्र तु न तथा । परं विदग्धैः अप्रयोज्यत्वमेवानयोर्भेदः नागरैकमात्रवेद्यत्वाभावाल्लौकिकार्थोपस्थापकत्वाद् ग्राम्यत्वं दोषः यद्वा ग्राम्यत्वं स्वार्थापकर्षव्यञ्जकत्वम् । तेनाङ्गसौन्दर्यादेरुद्दीपनस्यालाभाद् रसप्रतीतिविलम्बः ।

1 'एकदेश–' इति ( ग. च. पु. )

**नेयार्थत्वं रूढिप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनम्।** * **यथा—**

**"कमले चरणाघातं मुखं सुमुखि ! तेऽकरोत् ।"**

**अत्र चरणाघातेन निर्जितत्वं लक्ष्यम्।(ढ) निहतार्थत्वम् उभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः। यथा—"यमुनाशम्बरमम्बरं व्यतानीत् ।" शम्बरशब्दो दैत्ये प्रसिद्धः, अत्र तु जले निहतार्थः। (ण)** ¶

**"गीतेषु कर्णमादत्ते।" अत्राङ्पूर्वो दाञ्धातुर्दानार्थे अवाचकः। (त,ए)** §

---

**( वि, ढ ) नेयार्थत्वमि**ति । अशक्तिकृतं कवेरसामर्थ्यमात्रेण कृतं न तु रूढिप्रयोजनयोः अन्यतरेण कृतमित्यर्थः । **कमले** इति । मुखं कर्तृ । चरणाघातं कर्म। **अत्र चरणाघातेन** इति। चरणाघातपदेन इत्यर्थः । वाक्येऽपि लक्षणास्वीकारात् निर्जितत्वं लक्ष्यते । तथा च कमले निर्जितत्वम् अकरोदित्यर्थः । नन्वत्र निर्जितत्वातिशयः कथं न प्रयोजनम् । दर्शितं हि स्थाने स्थाने लक्ष्यार्थातिशयः प्रयोजनमिति चेत् , न । कविप्रयोगार्हलक्षणाया मुख्यार्थबाधावगम इव विवक्षितमुख्यार्थयोगावगमोऽपि हेतुः । न तु विवक्षितप्रमेयत्वाद्येकधर्मवत्त्वरूपयोगावगमोऽपि अव्यावर्त्तकत्वात् । प्रकृते निर्जितत्वे लक्ष्यार्थे मुखनिष्ठशोभाजन्यत्वमेव विवक्षितो योगश्चरणाघाते मुख्यार्थे चालीके तच्छोभाभावात् तज्जन्यत्वनिर्जितत्वं न प्रतीयत एव । ततश्च तदप्रतीत्या अस्या लक्षणायाः कविप्रयोगानर्हत्वज्ञानेन अश्रद्धेयत्वात् लक्ष्यार्थातिशयः प्रयोजनं न प्रतीयते एव इति भावः ।

**( वि, ण ) निहते**ति । यमुनायाः शम्बरं जलम् अम्बरम् आकाशं व्यतानीत् व्याप्तमित्यर्थः "अम्बु शम्बर"मिति कोषः ।

**अत्रे**ति—नच नपुंसकलिङ्गरूपव्यक्तिविशेषात् जलस्यैव उपस्थितिरिति वाच्यम्, तुल्यप्रसिद्धिकस्थले एव तस्य नियन्त्रितत्वात् । अत्र तु प्रसिद्धिवशात् लिङ्गाननुसन्धानेऽपि पदमात्रेणैव प्रथमतः तदुपस्थित्यवलम्बनात् लिङ्गस्यान्वयस्य च बोधात्तु पश्चादेव जलप्रतीतेः ।

**( वि, त ) अवाचके**ति । शक्तिभ्रमप्रयुक्तत्वमवाचकत्वम् । आदत्ते ददाति । **अत्रे**ति न च धातोर्नानार्थत्वेन दाने ग्रहणेऽपि शक्तिरस्त्येव, आङुपसर्गेण तु

* नेयः न्यायपरिहारेण कवेः स्वेच्छया कल्पनीयः अर्थः यस्य सः । रूढितः प्रयोजनाद् वा लक्षणा समुपास्यते । रूढिप्रयोजनाभ्यां विना निषिद्धा या लक्षणा तया यत्र अर्थबोधः स नेयार्थः । अत्र चरणाघातकरणं निर्जितत्वे लक्षणाया प्रयुक्तम् । निर्जितत्वेऽस्य पदस्य रूढेः प्रयोजनस्य वा अभावेन लक्ष्यार्थस्याऽप्रतीतेः नेयार्थत्वम् ।

¶ निहतः प्रसिद्धार्थेन अप्रसिद्धः विवक्षितः अर्थः यस्य तस्य भावः ।

§ अत्र ददानेर्दाने शक्तिरूपसामर्थ्यसत्त्वेऽपि "आ" इत्युपसर्गेण, ग्रहणे एव, शक्तेर्नियमितत्वात् । आङ् पूर्वो दाधातुर्दानार्थेऽवाचकः न तु असमर्थः ।

यथा वा—"दिनं मे त्वयि संप्राप्ते ध्वान्तच्छन्नापि यामिनी।"
अत्र दिनमिति प्रकाशमयार्थेऽवाचकम्। ( थ, ऐ ) +
क्लिष्टत्वमर्थप्रतीतेर्व्यवहितत्वम्। यथा—

"क्षीरोदजावसतिजन्मभुवः प्रसन्नाः।" (द)

अत्र क्षीरोदजा लक्ष्मीस्तस्या वसतिः पद्मं तस्य जन्मभुवो जलानि। (ओ)
"भूतयेऽस्तु भवानीशः।" अत्र भवानीश-शब्दो भवान्याः पत्यन्तर-प्रतीतिका-

---

दानबोधप्रतिबन्ध एवेत्यतः शक्यार्थे कथं शक्तिभ्रम इति वाच्यम्। उपसर्गस्य प्रतिबन्धकत्वकल्पने कारणीभूताभावप्रतियोगित्वप्रवेशेन गौरवात्, तदपेक्षया आङुपसर्गरहितस्यैव दाञः दाने शक्तिरित्यस्यैव युक्तत्वात्। डुदाञ् दाने इति सामान्यतः शक्तिदर्शनात्तु शक्तिभ्रमः।

नेयार्थे तु भ्रमबीजाभावात् न भ्रम इति विशेषः। अतो नेयार्थत्वलक्षणे शक्तिभ्रमाभावे सति इति विशेषणादानादसाङ्कर्यम्। अवाचके च शक्तिभ्रमात् विवक्षितार्थे तात्पर्यसत्त्वात् तात्पर्यरूपाया लक्षणाया विवक्षितार्थत्वबोधकत्वमस्त्येव इति। अतो वाक्यार्थबोधकत्वेन निरर्थकासमर्थत्वच्युतसंस्काराणामिव नास्य वाक्यार्थदोषताऽपास्या। एतद्युतपदसमूहे वाक्यार्थबोधजननात् लक्षणया स्ववाक्यार्थबोधजनकद्वारा वाक्यार्थबोधजननात्। परन्तु इयं लक्षणा न नेयार्था, नापि कविप्रयोगार्हेति बोध्यम्। निरर्थकादिदोषत्रयस्य तु वाक्यदोषत्वं न सम्भवतीति तदपास्यम्।

**( वि, थ )** यथा वा—"दिनं मे त्वयि संप्राप्ते ध्वान्तच्छन्नापि यामिनी।" मे मम दिनं प्रकाशमयमित्यर्थः। ध्वान्तच्छन्नापीति अपिकारेण ध्वान्तच्छन्नत्वविपरीतबोधनात् प्रकाशमयत्वस्यैव तद्विपरीतबोधात् न तु दिनत्वस्य। मेघाच्छन्नदिनस्य तद्विपरीतत्वाभावात्। अत्रापि दिनस्य प्रायशः प्रकाशमयत्वदर्शनात् तथात्वेनैव शक्तिभ्रमः।

**( वि, द )** **क्लिष्टत्वमि**ति—व्यवधानं च द्विधा, क्वचिदन्वितान्वयवशेन विशेषाप्रतीतौ कालिकव्यवधानम्। क्वचित्तु अनासत्तिरूपं व्यवधानम्। तत्राद्यं पदगतमुदाहरति—"क्षीरोदजावसतिजन्मभुवः"। अस्य व्याख्या वृत्तावेव। अनासत्तिरूपं व्यवधानं तु वाक्यदोषे उदाहरिष्यति।

---

**( लो, ए )** दानार्थे अवाचकः, ग्रहणार्थत्वात्। "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते" इति न्यायात्।

**( लो, ऐ )** **दिनमि**ति। सूर्यस्यास्तमयनपर्यन्तं, तद्गत्यवच्छिन्नः कालविशेष एव दिनशब्दवाच्यः। न तदविनाभूतं प्रकाशमयत्वमपीति भावः।

**( लो, ओ )** क्षीरोदजेत्यादि पादोऽपि पदं, समस्तत्वात्।

---

+ रूढ्या दिनपदं दिनत्वेन शक्तं, न पुनः प्रकाशमयत्वेन इति अवाचकम्।

रित्वात् [1]विरुद्धमतिकृद् । ( ध, औ ) *

अविमृष्टविधेयांशत्वं यथा—

"स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ।"

अत्र वृथात्वं विधेयं, तच्च समासे गुणीभावात् अनुवाद्यत्वप्रतीतिकृत् ।

( न, अ ) ×

( वि, ध ) विरुद्धमतीति । अन्यान्वयवशेन उपश्लोक्यस्य निन्दाव्यञ्जकत्वं तत्त्वम् । अनुचितार्थस्य तु अन्यान्वयं विनेति भेदः । अत्रेति—भवस्य पत्नीत्यर्थे साधितस्य भवानीशब्दस्य अर्थेन पतिशब्दार्थस्य अन्वयवशात् चैत्रस्य भार्यायाः पतिरित्यत्र इव उपपतिप्रतीत्या निन्दा ।

( वि, न ) अविमृष्टेति—समभिव्याहारविशेषवशाद् विधेयस्य विधेयत्वप्रतीत्यजनकत्वं तत्त्वम् । स च समभिव्याहारप्रतीतिसाक्षिको न तु गत एव । तथा हि प्राङ्निर्दिष्टविधेयकं बहुव्रीहिं विना समासान्तरे विधेयस्य पाते, असमासे तु उद्देश्यात् पूर्वविधेयस्य पाते तथात्वम् । तत्र कर्मधारयसमासगतविधेयस्याविमर्शमुदाहरति—स्वर्गेति । रामसैन्यवेष्टितलङ्कस्य रावणस्य विषादोक्तिरियम् । विलुण्ठनेनेत्यर्थः । अत्र भुजानामुच्छूनत्वं सिद्धमेव । तस्येदानीं वृथात्वमित्यतः उच्छूनत्वे

---

( लो, औ ) भवानीशब्दो भवस्य पत्नीत्यर्थे नदादौ आनप्रत्ययान्तः ।

(लो,अ) अत्र वृथात्वमिति । समासे तत्पुरुषसमासे गुणीभावात् । अयमाशयः- तत्पुरुषसमासे उत्तरपदस्यैव प्राधान्यात् वृथेति पूर्वपदस्य विधेयस्य प्राधान्येनानिर्देशादविमृष्टविधेयांशो दोषः । अविमर्शो हि प्राधान्येनानिर्देशः । इह वक्तुर्दशमुखस्यायमाशयः—पुरा मम भुजानां यद् उच्छूनत्वं स्थितं तदिदानीं वृथाभूतमिति । एवं विधेयत्वेन विवक्षितस्य वृथात्वस्य समासे गुणीभावादनुवाद्यत्वप्रत्ययः । तेन च भुजानामुच्छूनत्वस्य वृथात्वाभावाद् भुजानामपकर्ष एव प्रतीयते न भुजविक्षेपणोत्कर्षः । एवमुपरितनोदाहरणेष्वपि बोद्धव्यम् ।

* विरुद्धस्य मतिं, विरुद्धां मतिं वा करोतीति । अतः प्रकृतस्य न्यक्कारकप्रतीतिजनकत्वम् । अत्र भवस्य पत्नीत्यर्थे सिद्धं भवानीपदम् । भवानीश इत्यत्र भवपत्नीपतिरित्यर्थोपस्थितौ देवदत्तस्य पत्न्याः पतिरिव भवेतरपत्यन्तरं व्यञ्जयति । अन्यथा भव इत्येतावतैव प्रकृतार्थोपस्थितौ आनप्रत्ययेशशब्दयोः वैयर्थ्यपातात् । न च भवानीपदं रूढ्या पार्वतीं प्रतिपादयत् अदोषमावहति इति वाच्यम्; अवयवशक्यार्थोपस्थित्या भवपत्नीप्रत्ययात्; रूढेर्लब्धात्मिकत्वाभावान्न योगापहारित्वमिति भावः ।

× अविमृष्टः प्राधान्येनाऽनिर्दिष्टः विधेयांशो यत्र तत् अविमृष्टविधेयांशम् । उद्देश्यं प्राप्तत्वेनावगतम् । प्राप्तस्य धर्म्मान्तरप्राप्तये कथनमुद्देशः । विधेयं, साध्यं,

1 'द्धमवगमयति' इति ( च. छ. पु. )

उद्देश्ये वृथात्वं विधेयम् । तच्चात्र कर्मधारयसमासगतत्वेनाविमृष्टमित्यर्थः । बहुव्रीहि-समासे प्राङ्निर्दिष्टं विधेयं तु विधेयतयैव प्रतीयते । यथा "वपुर्विरूपाक्ष" मित्यत्र अक्ष्णि वैरूप्यस्य, "निर्मृष्टरागोऽधर" इत्यत्र रागे निर्मृष्टत्वस्य चित्रगुरित्यत्र गवि चित्रत्वस्य च विधेयस्य विधेयतयैव सार्वलौकिकी प्रतीतिः । न तु कर्मधारये विधेय-पाते तदविमर्श इति सत्यम् । किन्तु यदि विधेयमुद्देश्यान्वयि भवति । यथा—अग्रे उदाहरिष्यमाणे, "षष्ठबाण इव पञ्चशरस्य" इत्यत्र बाणे उद्देश्येऽन्वयि षष्ठत्वं विधेयमविमृष्टम् । यत्र तूद्देश्यतावच्छेदके विधेयमन्वेति तत्र विधेयतयैव प्रतीतेः आनुभाविकत्वान्न दोषः । यथा "एष्वयमत्यन्तपण्डित" इत्यत्र अत्यन्तस्य विधेयस्य उद्देश्यतावच्छेदके पाण्डित्ये एवान्वयो विधेयतयैव प्रतीतिः । एवं "नितान्तसुन्दरी-कान्ता" इत्यत्रापि सौन्दर्येऽन्वितस्य नितान्तत्वस्य एव—

"अनिर्दयोपभोगस्य रूपस्य मृदुनः कथं ।
कठिनं खलु ते चेतः शिरीषस्येव बन्धनम् ॥"

इत्यत्र उपभोग उद्देश्यतावच्छेदकेऽन्वितस्यानिर्दयत्वस्य विधेयतयैव प्रतीति-रानुभाविकी । तथा च प्रकृतेऽपि उच्छूनत्वेन उद्देश्यतावच्छेदकेनान्वितस्य वृथा-त्वस्य कथमविमृष्टत्वम्, उच्छूनभुजे वृथात्वस्य तु किंपदेनैव उक्तत्वात् । यत्तु काव्य-प्रकाशकृता अस्यैव श्लोकस्य प्रथमचरणे "न्यक्कारो ह्ययमेव मे यदरयः' इत्यत्र वाक्य-गतं विधेयाविमर्शमुदाहरति । अत्र चरणे उच्छूनत्वमात्रं चानुवाद्यं नतु वृथात्व-विशेषितम्" इत्युक्तम्, तेन विधेयाविमर्शदोषो विधेये दर्शितः ।

वाक्ये दोषप्रदर्शनप्रस्तावे समासगतदोषप्रदर्शनानुपयोगात्समासगतस्य तदु-दाहरणस्य "मूर्द्धामुद्वृत्तकृत्ता" इत्यादेरेव दर्शितत्वात् । किन्तु प्रसङ्गात् अभवन्म-[illegible]ष एव दार्शितः । तथा हि स्वर्गविलुण्ठने उच्छूनत्वमेव जन्यते नतु [illegible]यात्वं वृथात्वविशेषितमुच्छूनत्वं वा । उच्छूनत्ववृथात्वस्य रामेण लङ्कावेष्टनाद् [illegible]एव जातत्वात् । अतो विलुण्ठनस्य जनकतासम्बन्धेन वृथोच्छूनत्वेऽनन्वयादभवन्मत-योगदोष एव दर्शितः न चाभवन्मतदोषस्य वाक्यमात्रगामित्वमेव तेनोक्तं कथं, "समासै-कपदे तत्सम्भव"मिति वाच्यम् । समासस्य पदत्ववाक्यत्वोभयसत्त्वादसमस्तपदगा-मित्वाभावस्य तदभिप्रेतत्वात् । तथा चात्र अविमृष्टत्वं नास्त्येव इत्यतोऽन्यदुदाहरति ।

---

अप्राप्तत्वेनावगतम् । अप्राप्तस्य प्राप्तये कथनं विधानम् । तथा च—

यच्छब्दयोगः प्राथम्यं सिद्धत्वं चाप्यनूद्यता ।
तच्छब्दयोग औत्तर्य्यं साध्यत्वं च विधेयता ॥

यः क्रियावान् स पण्डित इत्यत्र क्रियावन्तमुद्दिश्य पण्डितत्वं विधीयते । यद्यपि यत्तच्छब्दौ सर्वत्र न प्रयुज्येते तथापि गम्येते तौ । यत्र तु विधेयस्य गुणीभावः तत्रायं दोषः । अनुवाद्यम्—उद्देश्यस्य पर्य्यायान्तरम् ।

यथा वा—"रक्षांस्यपि पुरःस्थातुमलं रामानुजस्य मे।" अत्र रामस्येति वाच्यम्। ( प, आ )

यथा वा—"आसमुद्रक्षितीशानाम्।" अत्र आसमुद्रमिति वाच्यम्।

यथा वा—" यत्र ते पतति सुभ्रु! कटाक्षः षष्ठबाण इव पञ्चशरस्य।" अत्र षष्ठ इवेत्युत्प्रेक्ष्यम्। ( फ, इ ) ❀

यथा वा—"अमुक्ता भवता नाथ! मुहूर्त्तमपि सा पुरा।" अत्र अमुक्तेत्यत्र नञः प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितम्। ( ब )

यदाहुः—"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।

---

( वि, प ) यथा वा—**रक्षांस्यपि** इति। अत्र शिरश्चालनकाक्वा पुरःस्थातुं नालमेवेत्यर्थः। अत्र रामसम्बन्धादेवायमहङ्कार इत्यतो रामसम्बन्धबोधिकायाः षष्ठ्याः तत्पुरुषे लोपात् रामसम्बन्धस्य विधेयस्याविमर्शः। षष्ठीसत्त्वे तु अदोष इत्याह—**अत्रे**ति।

( वि, फ ) **यथा वे**ति—अत्र समुद्रपर्य्यन्तत्वस्य विधेयस्य समासेऽविमर्शः। कर्म्मधारये उद्देश्यान्वितविधेयस्याविमर्शमुदाहरति—**यथा वा यत्र ते** इति। उत्प्रेक्ष्यम् उत्प्रेक्षया विधेयम्।

( वि, ब ) नञ्समासेऽप्युदाहरति—**अमुक्ते**ति। **प्रसज्यप्रतिषेधत्वमि**ति—प्रतियोगिनमसमासेन प्रसज्य प्रसक्तीकृत्य प्रतिषेधत्वमत्यन्ताभावत्वमित्यर्थः। तथा च मोचनाभावस्य एवात्र विधेयत्वात् असमासेनैव तथात्वं बोधयितुमुचितमित्याह—**विधेयत्वमेवोचितमि**ति। समासे तु तद्भिन्नत्वस्य एव प्रतीत्या पर्य्युदासत्वमेव तत्र तु विधेयस्य प्रतिषेधो न प्रतीयते इत्यतस्तस्याविमर्श इति भावः।

( वि, भ ) असमासे एव नञर्थस्य विधेयत्वरूपं प्राधान्यं, प्रतियोगिन[illegible]धान्यं तादृशस्थले नञः प्रसज्यप्रतिषेधत्वम् इत्यत्र सम्वादमाह- **अप्राधान्य[illegible]**

---

(लो,आ) विषयव्याप्तये उदाहरणान्तराणि दर्शयति—**रक्षांसी**ति। इदं लक्ष्मणवचनम्। **रामस्ये**ति। न खलु तस्य केवलस्य मुख्यता किन्तु रामसम्बन्धिन इत्यर्थः।

( लो, इ ) **षष्ठ** इति—अत्र उत्प्रेक्षाविषयत्वेन विवक्षितस्य षष्ठपदस्य तत्पुरुषसमासे पूर्वनिक्षेपो न युक्त इत्यर्थः। विधेयत्वमेवोचितं ननु तत्पुरुषसमासेन गुणीवृत्त्याऽनुवाद्यत्वप्रत्यायनमिति भावः।

( लो,ई ) कोऽसौ प्रसज्यप्रतिषेध इत्यत आह—**अप्राधान्यमि**ति। जुगोपात्मानमत्रस्त इत्यादौ इव विधेः प्राधान्यं यत्र नास्ति। नवजलधर इत्यादिसमनन्तरो-

---

❀ मदनस्य पञ्चशरत्वात् षष्ठस्यैव शरस्यासम्भवः; तेन तदीयशरस्य षष्ठत्वम् एव उत्प्रेक्षणीयम्। तच्च षष्ठत्वं कर्म्मधारयसमासे परपदार्थप्राधान्याद् गुणीभूतमिति विधेयत्वाप्रतीतिः।

प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ " ( ई )

यथा—"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः ।" उक्तोदाहरणे तु तत्पुरुष-समासे गुणीभावेन नञः पर्य्युदासतया निषेधस्य विधेयतयानवगमः । (भ)

यदाहुः—"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।

पर्य्युदासः स विज्ञेयो यत्रोत्तरपदे न नञ् ॥" ( म )

तेन—जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः ।

---

विधेः भावस्य प्रतियोगिन इत्यर्थः । प्रतिषेधे नञर्थेऽसमासवशात् प्रधानता, विधेयता प्रतीयते इति शेषः । तथात्वं कीदृशप्रयोगमित्यत्राह—**क्रिययेति**—न पचतीत्यादौ आख्यातक्रियया सह समासाभावात्; क्रिययेत्यनेन असमास एव लक्ष्यते । तथा च असमासे यत्र नञ् इत्यर्थः । अत एवात्र मुक्तक्रियया नञः साहित्येऽपि असमासा-भावात् न प्रसज्यप्रतिषेधता । एवं नवजलधर इत्यत्रापि नञः क्रियासाहित्याभावेऽप्यसमासात् प्रसज्यप्रतिषेधता । अमुक्तेत्यत्र तु समासात् न तथात्वमित्याह—**उक्तोदाहरणे त्विति** । समासवशात् तथात्वानवगमेन पर्य्युदासत्वमेव ।

**( वि, म )** इत्यत्र सम्वादमाह—**यदाहुरिति** । प्रधानत्वमुत्तरपदप्रधानतत्पुरुषवशाद् विशेष्यत्वम् । विधेयप्रतियोगिभूताभावस्य प्रतिषेधे नञोऽप्रधानता समास-वशात् अप्रतीयमानविधेयतारूपाऽप्रधानता इत्यर्थः । तादृशस्थलं दर्शयति—**यत्रोत्तरपदे** इति । पदं चात्र स्थानपरम् । प्रतियोगिपदोत्तरस्थाने यत्र नञ इत्यर्थे यत्रोत्तर-पदे, अर्थात् असमासेन पर्य्युदासो ज्ञेय इत्यर्थः । न पचतीत्यत्र उत्तरत्र नञ्सत्त्वात्तु न पर्य्युदास इत्यर्थः । इदमत्रावधेयम्—प्रतियोगिपदोत्तरनञ्सत्त्वे समासासम्भवात् यत्रोत्तरेत्यादिना समासाभाव एव उपलक्ष्यते । तथा च योऽसमासस्थः तथा नञ् न भवति किन्तु समासस्थ एव पर्य्युदास इत्यर्थः । अन्यथा न पचतीत्यत्र, न दृप्त-निशाचर इत्यत्र पूर्वपतितस्यापि नञः पर्य्युदासत्वात् यत्रोत्तरेत्यादेः प्रलापत्वापत्तेः । यद्यप्यसमासस्थस्यापि घटो नेत्यत्र पर्य्युदासत्वं तथापि समासे पर्य्युदासत्वनियमः स्फुट एव । नामान्वयिनः पर्य्युदासत्वम् असमासस्थस्य क्रियान्वयिनः प्रसज्यप्रति-षेधत्वमिति तु नियतं बोध्यम् । समासे कृदन्तक्रियान्वयिनोऽपि पर्य्युदासत्वात् असम-स्तेति क्रियाविशेषणं समासे पर्य्युदासत्वमेव । तत्र च विवेकेन तदुत्तरं साकाङ्क्षतैव ।

**( वि, य )** इत्यस्य उदाहरणं दर्शयति—**जुगोपेति**—एवं च नञः पर्य्युदासत्वे

---

उक्तोदाहरणवत् यत्र प्रतिषेधस्य प्राधान्यं क्रियया कण्ठोक्तया अध्याहार्य्यया वा अस्ति-भवत्यादिरूपया पर्य्युदासतापातात्पर्य्युदासयोगक्षेमापत्तेः ।

**( लो, उ ) प्रधानत्वमिति**—प्रधानत्वं जुगोपात्मानमित्यादाविव अप्रधानता अत्रैवोदाहरणे । अत्र, अत्रस्ततादौ इत्यर्थः । नोत्तरपदे किन्तु पूर्वपदे । अमुक्तेत्य-त्रापि अनन्तरं नञः समासान्तरप्रवेशोऽपीति शेषः ।

अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥

अत्रात्रस्ततादनूद्यात्मगोपनादि एव विधेयमिति नञः पर्य्युदासतया गुणभावो युक्तः । ( उ, य )

ननु "अश्राद्धभोजी ब्राह्मणः" "असूर्य्यम्पश्या राजदाराः" इत्यादिवत् अमुक्तेत्यत्रापि प्रसज्यप्रतिषेधो भविष्यतीति चेन्न । अत्रापि यदि भोजनादिरूपक्रियांशेन नञः सम्बन्धः स्यात्तदैव तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यम् । न च तथा विशेष्यतया प्रधानेन तद्भोज्यार्थेन कर्त्तृंशेनैव नञः सम्बन्धात् । ( ऊ )

यदाहुः—"श्राद्धभोजनशीलो हि यतः कर्त्ता प्रतीयते ।
न तद्भोजनमात्रं तु कर्तरि[1] णिनेर्विधानात् ॥" ( र, ऋ )

---

तदर्थस्य समासे विधेयत्वाप्रतीतेः इत्याह । युक्त इत्यत्र विधेयस्य नञर्थस्य अविमर्श एवेति साधितम् ।

( वि, र ) अश्राद्धभोजी, असूर्य्यम्पश्या इत्यत्र समासेऽपि प्रसज्यप्रतिषेधरूपयोः श्राद्धभोजनाभावसूर्य्यदर्शनाभावयोः प्रतीतिदर्शनात् तद् दृष्टान्तेन अमुक्तेत्यत्रापि मोचनाभावरूपस्य प्रतिषेधस्य विधेयस्य विधेयत्वापत्तिमाशङ्कते—**नन्विति** । समाधत्ते, **चेन्नेति** ।

क्रियान्वयिन एव प्रसज्यप्रतिषेधत्वनियमः । अश्राद्धेत्यनयोरपि यदि भोजनदर्शनक्रिययोर्नञर्थस्याऽन्वयः स्यात् तदैव तथात्वापादनं सम्भवति । तयोरन्वय एव तत्र नेत्याह—**न च तथेति** । तर्हि कुत्रान्वयः इत्यत्राह—**विशेष्यतयेति** । कर्त्तरि विहिताभ्यां कृत्प्रत्ययाभ्यामुपस्थापितेन भोजिरूपकर्त्रंशेन च सहैव नञो नञर्थस्य सम्बन्धात् इत्यर्थः । कुत इत्यत्राह—**कर्त्तरि णिनेरिति** । भोज्यार्थेन इत्यस्य उपलक्षणतया दर्शनकर्त्रंशेनेत्यपि बोध्यम् । कृत्प्रत्ययेन कर्त्रुपस्थानात् श्राद्धभोजी इत्यत्र भोजनकर्त्तैव प्रतीयते इत्यत्र सम्वादमाह—**यदाहुः—श्राद्धभोजनेति** । अत्र

**(लो, ऊ)** भोजनदर्शनरूपक्रियांशे । **कर्त्रंशेनेति** । भुजिदृशोः कर्त्रर्थविहितणिनिप्रत्ययान्तत्वागतेन । यदि क्रियांशे नञः सम्बन्धः स्यात् तदैव प्रसज्यप्रतिषेधः स्यात् "क्रियया सह यत्र नञ्" इति वचनात् । इह तु श्राद्धभोजनशीलादयमन्य इति कर्त्रंशेनैव सम्बन्धात् नञः पर्य्युदासत्वमेवेति । तदभोज्यर्थेनेत्युपलक्षणं तददर्श्यर्थेनेत्यपि बोद्धव्यम् ।

**( लो, ऋ )** अत्रार्थे आचार्य्यसम्मतिमाह—**यदाहुरिति** । अत्राश्राद्धभोजीत्यत्र तद्भोजनमात्रम् । अश्राद्धभोजनमात्रम् । सम्बन्ध इत्यनन्तरम् अभिमत इति शेषः । इह तु भाष्यकारादिमतमाश्रित्य क्रियान्वयांशापेक्षया प्रसज्यप्रतिषेधार्थस्वीकारेऽपि अमुक्तेत्यादौ क्रियामात्रप्राधान्यात् समासो नोपपद्यत एव ।

---

1 'कर्तरीनेर्विधानतः' इति ( क. ख. पु. )

**अमुक्तेत्यत्र तु क्रिययैव सह सम्बन्ध इति दोष एव । * (ल)**
**एते च क्लिष्टत्वादयः समासगता एव पददोषाः । ( व )**
**वाक्ये दुःश्रवत्वं यथा—( श, ऋ )**

---

कृत्प्रत्ययादेवं दर्शनकर्त्तारो राजदारा अपि प्रतीयन्ते इत्यपि बोध्यम् । तथा च तयोरपि श्राद्धभोजिभिन्नसूर्य्यदर्शकभिन्नत्वम् इत्येवं पर्य्युदास एव प्रतीयते इत्यर्थः । तथा च समासस्थतनञ्–दृष्टान्तेनाप्यमुक्ता इत्यत्र समासस्थनञः पर्य्युदासत्वमेव सिध्यतीति मनसिकृत्य अमुक्तेत्यत्र भोजीत्यतः किञ्चिन्मात्रं वलक्षण्यं दर्शयति ।

**(वि,ल)अमुक्तेत्यत्र त्वि**ति । अभोजीत्यत्र समासस्थकर्त्रन्वयः । अमुक्तेत्यत्र तु समासस्थक्रियायामेवान्वय इत्येतन्मात्रं विशेषः । उभयत्रापि पर्य्युदासत्वमेवेति भावः। न पचति न निद्राति इत्यन्वये कर्त्तुरुपस्थानेऽपि निद्रापाककृत्योरेवान्वयात् । अथ नियमाभावेऽपि तात्पर्य्यवशात् तत्र कर्त्तर्य्येव नञर्थान्वय इति चेन्न । तादृशतात्पर्य्यस्य एव तत्राभावात्। श्राद्धाभोजनशीलान्वये तु श्राद्धभोजनशीलभिन्न इति प्रतीतौ न कदाचित् भोजनकृत् अपि प्रतीयते इत्यतो ग्रन्थकृतानवधानादेव इत्थं समाधानं कृतम्। वयं तु तात्पर्य्यवशात् श्राद्धपदं श्राद्धमात्रपरं, तत्रैव च नञर्थान्वयः, तथा च श्राद्धमात्रभोजीत्यर्थलाभे मात्रार्थवशात् श्राद्धभोजनशीललाभ इति ब्रमः ।

**(वि, व) एते चे**ति । क्लिष्टत्वविरुद्धमतिकृत्त्वाविमृष्टविधेयांशभावास्त्रय इत्यर्थः। समासगता एवेति नतु असमासेऽपि पददोषा इत्यर्थः । अन्वितान्वयाधीन-क्लिष्टत्वस्य समासं विना पदगतत्वासम्भवात् । अनासत्त्यधीनक्लिष्टत्वे तु समासस्य एवासम्भवात् पदगतत्वं नास्ति । विरुद्धमतिकृतः पदार्थान्तरान्वयेनैव दुष्टत्वात् अविमृष्टविधेयांशस्य चानुवाद्यविधेयार्थकपदद्वयघटितत्वात् वा समासं विना पदत्वासम्भवात् ।

**( वि, श )** एषां त्रयोदशानां पदगतत्वं दर्शयित्वा वाक्यगतं तु दर्शयितुमारभते । **वाक्ये दुःश्रवत्वं यथे**ति । एवम् एकवाक्ये पदद्वयावलम्बित्वे न वाक्यदोषत्वम्।

---

**( वि, ऋ )** क्लिष्टत्वादय इत्यादिशब्दाद् विरुद्धमतिकृत्त्वमविमृष्टविधेयांशत्वं च। अतः श्रुतिकटुत्वादीनां क्वचित् पदांशनिष्ठत्वेऽपि बहुव्यापित्वेन वाक्यगतत्वं बोद्धव्यम् ।

---

* अमुक्तेत्यत्र तु नञः क्रिययैव सम्बन्धः । अन्यथा—मुहूर्त्तमपीत्यस्यान्वयो न स्यात् । अत्र अमुक्तेत्यस्यानुवाद्यत्वे अमुक्ता सती किमकरोदिति विधेयाकाङ्क्षत्वाद् दोष एव । अतोऽत्र समासे विधेयस्य गुणीभावादनवगमाद् दोष एव । विधेयान्तरसद्भावे तु न तथा दोषो भवेदित्यर्थः ।

"स्मरार्त्त्यन्धः कदा लप्स्ये कार्त्तार्थ्यं विरहे तव ।" ( ष ) ×

"कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते ।" ( लृ )

अत्र जुगुप्साव्यञ्जनेनाश्लीलता । ( स )

"उद्यत्कमललौहित्यैर्वक्राभिर्भूषिता तनुः ।"

अत्र कमललौहित्यं पद्मरागः । वक्राभिः वामाभिरिति नेयार्थता । ( ह ) *

"धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥"

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धः क्लिष्टः।(क)

( वि, ष ) **स्मरार्त्त्ये**ति—स्मरार्त्त्याऽन्धोऽहमित्यर्थः । अत्र आर्त्त्येति कार्त्तार्थ्यमिति पदद्वयगामित्वाद् वाक्यदोषता ।

( वि, स ) जुगुप्साश्लीलमाह—**कृतप्रवृत्ति**रिति । अन्यार्थे अन्यकविनिबद्धार्थे कृतयत्नः । अत्र प्रवृत्तिशब्दस्य पुरीषव्यञ्जनया, वान्तशब्दस्य च उद्गीर्णवाचकतया जुगुप्सा । व्यञ्जनेन इत्यत्र जननेन इत्यर्थः ।

( वि, ह ) संक्षेपायाऽन्यान् दोषानुपेक्ष्य वाक्ये नेयार्थदोषमाह—**उद्यदि**ति । उद्यद्भिर्दीप्यमानैः कमललौहित्यैः पद्मरागमणिभिः करणभूतैः, वक्राभिः वामाभिः स्त्रीभिः कर्त्त्रीभिस्तनुर्भूषिता इत्यर्थः । **अत्रे**ति । कमललौहित्ये तनुभूषणस्य बाधितत्वात्तत्तुल्यपर्य्यायार्थकं पद्मरागपदमत्र लक्ष्यते । लक्षितेन पदेन च पद्मरागमणिरुच्यते इत्यर्थः न च प्रत्ययानां कृत्यर्थान्वितस्वार्थबोधकत्वात् कथमत्र तृतीयया पद्मरागे करणता बोध्यते इति वाच्यम्, ईदृशस्थले प्रकृत्यार्थेऽपि तत् स्वीकारात् । वक्राभिरित्यत्र च वामापदे लक्षणा । तेन च स्त्रीरूपार्थ उपस्थाप्यते । वस्तुतस्तु वामावक्रापदयोः पर्य्यायैक्यदर्शनस्य शक्तिभ्रमबीजस्य सत्त्वात् अत्र अवाचकत्वमेव युक्तम् ।

( वि, क ) क्लिष्टत्वमाह—**धम्मिल्लस्य** इति । "धम्मिल्लः संयताः कचाः" निकामम् अतिशयं रज्यतीति अन्वयः । बन्धव्युत्पत्तिः बन्धविन्यासः । शेषं वृत्तावेव व्याख्यातम् ।

---

( लो, लृ ) प्रवृत्तिः, प्रसरणं, पुरीषोत्सर्गश्च । वान्तं कथितं, भक्षितोद्गीर्णं च ।

+ स्मरादार्त्तिः ( पीडा ) तया अन्धः ।

* अत्र वक्राशब्देन एकपर्य्यायतासम्बन्धेन वामाशब्दो लक्ष्यते । तद्वत्कमलशब्देन पद्मशब्दः लौहित्यशब्देन रागशब्द एकपर्य्यायतासम्बन्धेन लक्ष्यते । परमत्र रूढिप्रयोजनाभावान्नेयार्थता । केचिदिमां लक्षितलक्षणामाहुः—तेषामयमभिप्रायः—वक्रादिशब्दैर्लक्षितो यो वामादिशब्दस्तस्य वाच्यवाचकतासम्बन्धेन नार्य्यादर्थोऽपि लक्ष्यते । न च लक्षितेन वामाशब्देन नार्य्यर्थोऽभिधीयतां किं लक्षणयेति वाच्यम्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधनतारूपव्युत्पत्तिभङ्गप्रसङ्गात् ।

"न्यक्कारो ह्ययमेव मे यदरयः" इत्यादि ।

अत्र चायमेव न्यक्कारः इति न्यक्कारस्य विधेयत्वं विवक्षितम् । तच्च शब्दरचनावैपरीत्येन गुणीभूतम् । रचना च पदद्वयस्य विपरीतेति वाक्यदोषः । (ख, ए) *

आनन्दयति ते नेत्रे योऽसौ सुभ्रु ! समागतः ।

इत्यादिषु " यत्तदोर्नित्यसम्बन्धः " इति न्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये तच्छब्दसमानार्थतया प्रतिपद्यमाना इदमेतददःशब्दाः

---

(वि, ख) अविमृष्टविधेयांशभावमाह—**न्यक्कार** इति । **शब्दरचने**ति । विधेयवाचकपदस्य उद्देश्यवाचकपदात् पूर्वनिर्देशेन इत्यर्थः । अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् इति नियमादिति भावः । अत एव वह्निमान् पर्वत इति न प्रयुज्यते । ननु विधेयैपदस्य पूर्वनिपातेन दोषे पददोषत्वमेव उचितमित्यत आह—**रचना चे**ति

(वि, ग) विधेयार्थकस्यादःशब्दस्य उद्देश्यार्थकात् यच्छब्दात् परनिपातेऽपि सान्निध्यवशात् विधेयत्वाप्रतीत्या एतद्दोषमुदाहरति–**आनन्दयती**ति । अत्र यस्ते नेत्रे आनन्दयति असौ समागत इति बोधे यच्छब्दार्थोऽनुवाद्योऽदःशब्दार्थो विधेयः,

---

(लो,ए) **न्यक्कार** इति–अयमाशयः, तत्र धर्म्मिणमुद्दिश्य साध्यधर्म्मो विधीयते इत्यनुसारेण प्रथममनूद्य विधेयो न्यक्कारः पश्चान्निर्दिष्टुमुचितः । अन्वयवैपरीत्येनाविमृष्टविधेयांशो दोषः । अत एव शब्दोऽनित्य इति वक्तव्येऽनित्यः शब्द इति वचनेन च प्राप्तं निग्रहस्थानमाहुः । तथा हि कथमत्र वाक्यदोष इत्यत आह—**रचने**ति । पदद्वयस्य विपरीततायामेवेति पदं निर्दिश्य पश्चान्न्यक्कार इति पदस्य च पश्चान्निर्देश्यस्य प्रथमनिर्देशात् । किञ्च दोषस्यास्य बहुव्यापित्वेन वाक्यदोषत्वम् । श्रुथोच्छूनैरित्यत्रापि अवस्थानसत्त्वे पूर्वमत्र पददोषत्वमुदाहृतं तत्र न्यक्कार इत्याद्यनपेक्षा ग्रन्थगौरवभयात् ।

(लो, ऐ) **आनन्दयती**ति । य आनन्दयति असौ समागत इति सम्बन्धः । नित्यसम्बन्धः एकं विना अपरस्य साकाङ्क्षत्वात् । यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये प्रतिपद्यमाना इदमेतददःशब्दाः इत्यनेन तेषां सर्वत्र तच्छब्दाभिधानमिति शेषः ।

---

* अत्र प्राप्तमेवारिसद्भावमनुवाद्य अप्राप्तं न्यक्कारत्वं विधीयते । अतोऽनुवाद्यस्यैव पूर्वनिपातो युक्तः । "यच्छब्दयोगः प्राथम्य"मित्युद्देश्यस्य लक्षणात् । अस्यार्थः यच्छब्दे यस्य योगः यस्य च प्रथमनिर्देशस्तदुद्देश्यम् । यथा—यो धूमवान् स वह्निमान्, पर्वतो वह्निमान् धूमात् ।

अतोऽयमेवेति प्रथममनूद्य विधेयो न्यक्कारः पश्चान्निर्देष्टुमुचितः । तद्वैपरीत्येनात्र दोषः । "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् । न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रवितिष्ठति ॥" इति वृद्धवचनात् ।

विधेया एव भवितुं युक्ताः। (ऐ) अत्र तु यच्छब्दानिकटस्थतया अनुवाद्यत्वप्रतीतिकृत्। तच्छब्दस्यापि हि यच्छब्दनिकटस्थितस्य प्रसिद्धपरामर्शित्वमात्रम्(ओ)। यथा—"यः स ते नयनानन्द-करः सुभ्रु ! स आगतः।" (ग) +

यच्छब्दव्यवधानेन स्थितास्तु निराकाङ्क्षत्वमवगमयन्ति—(औ)

यथा—"आनन्दयति ते नेत्रे योऽधुनाऽसौ समागतः।"

---

तस्याविमर्शं ग्राहयितुम् अदःशब्दस्य विधेयतौचित्यं दर्शयति—**यत्तदोरि**ति। **उपक्रान्तस्ये**ति। प्रथमोद्दिष्टस्येत्यर्थः। तस्य आकाङ्क्षायाः पूरकत्वादेव तदस्तत्र नित्यसम्बन्धः। आकाङ्क्षापूरणरूपबीजसत्त्वात्। इदमदसोरपि तत्र नित्यसम्बन्ध इत्याह—**तच्छब्दसमाने**ति। तथा च तच्छब्द इव इदमेतददःशब्दा अपि आकाङ्क्षापूरकत्वेन विधेयार्थकतयैव विधेया भवितुं युक्ता इत्यर्थः। ततश्चादस् शब्दार्थोऽत्र विधेयोऽप्यविमृष्ट इत्याह—**अत्र** इति। अनुवाद्यत्वस्य प्रतीतेरेवाऽविमर्शः। न केवलमेवंभूतोऽदःशब्द एव ईदृशः। अपि तच्छब्दोऽपि इत्याह—**तच्छब्दस्यापि**। हिशब्द एवार्थे। प्रसिद्धपरामर्शकत्वमात्रमेवेत्यर्थः। यः स ते इति यः प्रसिद्ध इत्यर्थः।

**(वि, घ) निराकाङ्क्षत्वमि**ति। निराकाङ्क्षत्वगमकस्यैव च विधेयत्वाप्रतीतिविषयत्वमित्यतस्ततो नाविमर्श इति भावः। **आनन्दयती**ति अत्र अधुनापदेन व्यवधानान्नाविमर्शः।

---

तथाहि—"असावन्तश्चञ्चत्पिकवचननीलाब्जयुगल-
स्थलस्फूर्जत्कम्बुविलसदलिसम्पात उपरि।
विना दोषासङ्गं सततपरिपूर्णाखिलकलः
कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ! ते॥"

अत्र हि अदस् शब्दस्तच्छब्दार्थमाह। एवमिदमेतदावपि।

**(लो, ओ) अत्र त्विति**। योऽसावित्यत्रानुवाद्यत्वप्रतीतिकृददःशब्दः प्रसिद्धिपरामर्शित्वादित्यर्थः।

**(लो, औ) निराकाङ्क्षत्वमवगमयति** इति। तथा सति तेषां विधेयत्वं स्फुटमवगम्यत इति भावः।

---

* असौ इति तत्परामर्शको विधेयः, परमत्र न तथा प्रतीयते कुत्र कथम् इति चेत् यत्पदसाहितानां तदादिशब्दानां यत्पदार्थस्यैव विशेषणतया प्रतीतिर्नतु विधेयतया। अतो विधेयार्थस्य तच्छब्दस्योपादानं विना साकाङ्क्षत्वमेव स्थितम्। तदेवोदाहरणेन स्फुटीकरोति—**यथे**ति।

+ अन्यथा असौ इत्यनेन तच्छब्दलाभे तच्छब्ददानस्य आनर्थक्यं स्यात्।

एवमिदमादिशब्दोपादानेऽपि । ( घ ) यत्र च यत्तदोरेकस्यार्थत्वं सम्भवति तत्रैकस्योपादानेऽपि निराकाङ्क्षत्वप्रतीतिरिति न क्षतिः । *

तथा हि यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने सामर्थ्यात् पूर्ववाक्ये तच्छब्दस्यार्थत्वम् ।

यथा—"आत्मा जानाति यत्पापम् ।" एवम् (अ)

"यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधींश्च ॥ इत्यादावपि । (ङ)

तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्यार्थत्वम् । क्रमेण यथा—

"स हत्वा वालिनं वीरं तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥"

"स वः शशिकलामौलिस्तादात्म्यायोपकल्प्यताम् ।"

"तामिन्दुसुन्दरमुखीं परिचिन्तयामि ।" ( च, आ )

---

( वि, ङ ) द्वयोरुपादाने एव एष विचारः । एकस्यैवोपादाने तु नायं विचार इत्याह—**यत्र च यत्तदो**रिति । आर्थत्वं पदानुपादानेऽपि तस्यार्थवशाल्लभ्यत्वमित्यर्थः । **न क्षति**रिति । विधेयत्वाप्रतीतिरूपा क्षतिः नास्ति इत्यर्थः ।

**आत्मे**ति । यत्पापमर्थात् स्वनिष्ठं तदात्मा जानाति इत्यर्थः—**एवं यं सर्वे**ति । अत्र सोऽस्तीति बोधः । न चात्र कथमुत्तरस्थत्वम् इति वाच्यम्, कुलकत्वेन तत्पूर्ववाक्यार्थतत्पदेन सहाऽस्यान्वयात् तद्वाक्योत्तरवाक्यस्थत्वात् ।

( वि, च ) यत्तदोर्नित्यसाकाङ्क्षत्वेन तच्छब्दमात्रोपादाने यच्छब्दस्यार्थत्वं प्रसङ्गाद्दर्शयति—**तच्छब्दस्य** इति । **स हत्वे**ति—स प्रक्रान्तो रामस्तत्पदे तत्स्थाने । धातोरिति बोधनम् । धातोः कार्यं यथा आदेशेन क्रियते तथा वालिकार्यम् अपि सुग्रीवेण कर्त्तव्यमित्यर्थः । **स वः शशिकले**ति । स प्रसिद्धः । **तामिन्द्वि**ति । तामनुभूताम् ।

---

( लो, अ ) उपादाने साक्षादुक्तौ सामर्थ्यात् तच्छब्दस्यार्थतयाक्षेपक्षमत्वात् । **आत्मे**ति । तदात्मा जानातीत्यर्थः ।

---

* ननु यत्तदोर्नित्यसम्बन्ध इति को नियमः । व्यभिचारदर्शनात् इति चेत् न । तत्र विषयविभागं दर्शयति । यत्तदोः परस्परापेक्षित्वं नियतमेव तत्र यत्तदोर्द्वयोरुपादाने शाब्दः । एकस्य द्वयोर्वाऽनुपादाने त्वार्थः । अनुपात्तस्यापि सामर्थ्यादाक्षेपादर्थलाभः । एवमुभयत्र न दोषः ।

यत्र च यच्छब्दनिकटस्थितानामपीदमादिशब्दानां भिन्नलिङ्गविभक्तित्वं तत्रापि निराकाङ्क्षत्वमेव। क्रमेण यथा–

"विभाति मृगशावाक्षी येदं भुवनभूषणम्।
इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः॥" (छ)

क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमो यथा–(इ)

"न मे शमयिता कोऽपि भारस्येत्युर्वि! मा शुचः।
नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः॥"

अत्र योऽस्ति स ते भारस्य शमयितेति बुध्यते। (ज)

" यद् यद् विरहदुःखं मे तत् कोऽवापहरिष्यति।")

---

**(वि, छ) विभाती**ति, या भुवनभूषणमित्यर्थः। यत्र य आधारस्तदधिकरणमित्यत्र इव इदं पदे विधेयस्य भूषणस्य लिङ्गम्। विभक्तिभेदे उदाहरति—**इन्दुरि**ति। यः इन्दुर्विभाति तेन पथिकयोषितो दग्धा इत्यर्थः। एवमपिकारान्वितस्यापि तदादेर्निराकाङ्क्षत्वमेव। यथा "शीतांशुरपि यः सोऽपि दग्धवान् पथिकाङ्गनाः।" इति।

**(वि, ज) अनुपात्तयोर्द्वयोरि**ति। क्षत्रियभारादूनामुर्वीं प्रति वाक्यमिदम्। हे उर्वि! मे भारस्य शमयिता कोऽपि न, एवं मा शुचः। यतो नन्दस्येत्यादि। **अत्रे**ति। इदं च द्वयोरनुपादानोदाहरणतया न युक्तमुदाहृतम्। व्याख्यातं च तच्छब्दार्थावगमं विनापि यथोक्तबालकसत्त्वस्य यत इति उत्तरवाक्यगततया कारणहेतुत्वावगमाद् उत्तरवाक्यगतयच्छब्दस्य तच्छब्दानपेक्षणात्। किन्तु—

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥

इति यो भवभूतेरहङ्कारश्लोकः काव्यप्रकाशकृता यत्तदोर्द्वयोरनुपादानोदाहरणं दर्शितं तदेवोदाहरणं बोध्यम्। तत्र उत्पत्स्यमानस्य धर्मिणो विशिष्यानिश्चितत्वात् यत्तद्भ्यां सामान्यत एव य उत्पत्स्यते तं प्रति यत्न इत्युक्तौचित्यात्।

**(वि, झ)** यच्छब्दस्योत्तरवाक्यगतत्वे एव तच्छब्दस्य निराकाङ्क्षत्वं दर्शितम्। पूर्ववाक्यगतत्वे उत्तरवाक्यगतं तच्छब्दं विना साकाङ्क्षमित्यनुभवसिद्धम्। तथापि वीप्सितयच्छब्दस्थले एकयत्पदाकाङ्क्षैव एकतत्पदेन निवर्त्तताम् अन्यद् यत्पदं

---

**(लो, आ) स हत्वे**ति। स इत्यनेन यः प्रकृतो रामचन्द्रः स इति। तत्र स इत्यनेन यः सकललोकप्रसिद्धः सर्वज्ञत्वादिगुणविशिष्टः तादात्म्यायात्मन एकीभावापत्तये। तां या तद्गुणविशिष्टतया अनुभूतेत्यादिषु यद आर्थत्वम्।

**(लो, इ)** द्वयोः उपात्तवस्तुविषयत्वेनोपकल्पितयोर्यत्तदोः।

इत्यत्रैको यच्छब्दः साकाङ्क्ष इति न वाच्यम्। तथा हि यद् यदित्यनेन येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्तु विवक्षितम्। तथाभूतस्य तस्य तच्छब्देन परामर्शः। ( ऋ )

एवमन्येषामपि वाक्यगतत्वेनोदाहरणं बोध्यम्। ( ई ) पदांशे श्रुतिकटु-र्यथा—

"तद्गच्छ सिद्ध्यै कुरु देवकार्य्यम्।" ( ञ ) †

"धातुमत्तां गिरिर्धत्ते।" अत्र मत्ताशब्दः क्षीबार्थे निहतः[1]।

"वर्ण्यते किं महासेनो विजेयो यस्य तारकः।"

---

तु साकाङ्क्षमेव स्यात्। तथा च—यद् यद् विरहदुःखं मे तदित्यत्र एकं यत्पदं साकाङ्क्षं स्यात् इत्याशङ्क्य समाधत्ते—**इति न वाच्यमि**ति। **तथा हि** इति। येन केनचित् इत्य-स्यायमभिप्रायो वीप्सया तावत् समस्ता व्यक्तय उपस्थाप्यन्ते। ता व्यक्तय एव तत्पदेन च परामर्शे यदि वक्तुस्तात्पर्य्यं तदा एकतत्पदेनैव समस्तव्यक्तिपरामर्शात् यत्पदद्वयाकाङ्क्षापूरणात् न तत्पदे वीप्सा। यथा दर्शितोदाहरणे। तदाह—**येन केनचिदि**ति। तथा-भूतं दुःखत्वसामान्यावच्छिन्नम्। यदि वीप्सितयत्पदद्वयेन तद्व्यक्तित्वेन एव उपस्थापयितुं वक्तुस्तात्पर्य्यं तदा भवत्येव तत्पदेऽपि वीप्सा। यथा "यं यं व्यतीयाय पतिं वरा सा विवर्णभावं स स भूमिपालः।" इत्यत्र "यां यां प्रियः प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव।" "यो यः पाञ्चालगोत्रे......तस्य तस्यान्तकोऽहम्॥" इत्यत्र च।

**( वि, ञ )** तद्गच्छ सिद्ध्यै कुरु देवकार्य्यमित्यत्र सिद्ध्यै इति श्रुतिकटुः।

---

**( लो, ई )** अन्येषाम् अनुचितार्थत्वादीनाम्। तत्र अप्रयुक्तस्य वाक्यगतत्वे यथा—"स पातु वो दुश्च्यवनो भावुकानां परम्पराम्।" अत्र दुश्च्यवन इन्द्रः। ग्राम्यत्वस्य यथा—"ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः।" निहतार्थस्य यथा—सायकसहायवाहोरित्यादि। एवमन्यदपि। अत्र पददोषानन्तरं पदांशदोषा-णाम् उद्देश्यक्रमप्राप्तत्वे येषां वाक्यदोषाणां पददोषसजातीयत्वेन प्रथमं कथनं, "न्यक्कारो ह्ययमेव" इत्यादेश्च पददोषजातीयत्वेऽपि अविमृष्टविधेयांशस्य विशेषत्वे-नैतत् प्रस्ताव एवोदाहरणम्। एवं धम्मिल्लस्येत्यादेरपि क्लिष्टविशेषत्वेन क्लिष्टप्रस्तावः। निरर्थकत्वादीनाञ्च पदमात्रनिष्ठत्वेन पश्चान्निर्देशः सूत्रस्य सुगमप्रतिपत्तये।

† प्रकृतिप्रत्यययोर्मिलनेन यत्र दोषप्रतिभानं तत्र पददोषत्वम्। एकतरस्मिन् दोष-भाने पदांशदोषत्वम्। अतोऽयं विभागः—एकत्र पदे बहुवर्णकटुत्वे पददोषत्वम्, अल्पवर्णकटुत्वे पदांशदोषत्वम्, एकत्र वाक्ये बहुपदकटुत्वे वाक्यदोषत्वमिति।

1 'निहित.' ( इति ठ. पु )

**अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः। ( ट, उ ) +**

**"पाणिः पल्लवपेलवः।" पेलवशब्दस्य आद्याक्षरेऽश्लीले। ( ऊ )**

**"संग्रामे निहताः शूरा वचोबाणत्वमागताः।" अत्र वचःशब्दस्य गीःशब्दवाचकत्वे नेयार्थत्वम्। ( ठ )**

**तथा तत्रैव बाणस्थाने शरेति पाठे। अत्र पदद्वयमपि न परिवृत्तिसहम्। जलध्यादौ तूत्तरपदं वाडवानलादौ पूर्वपदम् ( ड, ऋ )**

---

**(वि, ट) क्तप्रत्ययार्थे अवाचक** इति। न चात्र च्युतसंस्कारता इति वाच्यम्। अनिर्दिष्टकालकाः प्रत्ययाः त्रिष्वपि कालेषु भवन्तीत्यनुशासनात् त्रैकालिकक्रियास्वेव तस्य साधुत्वात्। परन्तु कालस्तस्य न वाच्यः। किन्तु लक्षणीय एव सा लक्षणा न नेयार्था। अनिर्दिष्टेत्याद्यनुशासनेन कालत्रयवाचकत्वभ्रमप्रयुक्तत्वेनावाचकत्वमेव।

**(वि,ठ) संग्रामे** इति—वचोबाणत्वं गीर्वाणत्वम्। **गीःशब्दवाचकत्व** इति। गीःशब्दबोधकत्वे इत्यर्थः। न गीर्वचःशब्दयोर्द्वयोरपि वाच्यवाचकत्वेन वाक्य-बाणत्वरूपयोगार्थेन देवार्थे कथं शब्दलक्षणेति वाच्यम्। बाणशब्दपूर्ववर्त्तिनो गीःशब्दस्य परिवृत्त्यक्षमत्वात् वचोबाणशब्देन देवाबोधनात्। यौगिकशक्तिसत्त्वेऽपि आनुपूर्वीविशेषस्य बोधप्रतिबन्धकत्वात्। शक्तिसत्त्वादेव नच देवे लक्षणा किन्तु गीःशब्दबोधस्य आनुभविकत्वात्, गीःशब्दे एव लक्षणेत्यर्थः। न चैवं गीःशब्दो बाणत्वमेव प्रत्येतुमुचितम्, न वाक्यबाणत्वमिति वाच्यम्। लक्षितगीःशब्देनैक-वाक्यबोधनात् तथा प्रतीतिरिति प्रपञ्चितमिदमस्मत्कृतकाव्यप्रकाशटीकायां वक्त्र-वैदूर्यचरणैरिति नेयार्थोदाहरणे।

**( वि, ड ) शरेति पाठ** इति—तथा च गीःशर इति न भवति। तथा पाठेऽपि नेयार्थता इत्यर्थः। **जलध्यादौ तु** इति। उत्तरपदं न परिवृत्तिसहमित्यर्थः। एवमुत्तरत्रापि। तथा च जलाशय इति समुद्रत्वेन रूपेणाऽबोधकम्। योगार्थेनैव बोधकम्। जलनिधिरित्यत्र तु उपसर्गमात्रमबोधकम्। पदं तु तदेव। पूर्वपदं तु

---

**( लो, उ )** विजेय इत्यनेन विजेतुं शक्य एव प्रतिपाद्यते नतु विजितत्वम्।

**( लो, ऊ )** पेलवशब्दे ह्याद्यक्षरे उत्कलभाषायां पुंव्यञ्जकस्मारके।

**( लो, ऋ ) वचःशब्दस्येति**—अत्र वचोबाणशब्देन गीर्वाणो विवक्षितः उत्तरपदमेव परिवृत्तिं न सहत इत्यर्थः।

जलस्थाने सलिलादिपदप्रयोगे न काचित्क्षतिः। यथा—सलिलनिधिः पयोनिधिरित्यादि।

---

+ कृत्यप्रत्ययानां कालसामान्ये विधानात् क्तप्रत्यये अतीतरूपकालविशेषे अवाचकत्वम्।

एवमन्येऽपि यथासम्भवं पदांशदोषा ज्ञेयाः । निरर्थकत्वादीनां त्रयाणां च पदमात्रगतत्वेनैव लक्ष्ये सम्भवः । ( ऋ )

[1]यथा—"मुञ्च मानं हि मानिनि ।" अत्र हिशब्दो वृत्तिपूरणमात्रप्रयोजनः ।

"कुञ्जं हन्ति कृशोदरी ।" अत्र हन्तीति गमनार्थपठितमपि न तत्र समर्थम् । ( ढ )

"गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः ।"

" आङो यमहनः ( पा १ । ३ । २८ ) स्वाङ्गकर्म्मकाच्च" इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्म्मकस्यैवात्मनेपदं नियमितम् । इह तु तल्लङ्घितमिति व्याकरणलक्षणहीनत्वाच्च्युतसंस्कारत्वम् । ( ण, ॡ )

नन्वत्र " आजघ्न " इति पदस्य स्वतो न दुष्टता अपि तु पदान्तरापेक्षयैवेत्यस्य वाक्यदोषता । मैवम् । ( त )

तथा हि गुणदोषालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेस्तदन्वयव्यतिरे-

---

परिवृत्तिसहम् । तेन वारिधिरित्यादयो भवन्ति । **बडवे**ति तेनाश्वानल इति न भवति वडवाग्निरिति तु भवति ।

**(वि, ढ) न तत्र सामर्थ्यमि**ति । शक्तिसत्त्वेऽपि जङ्घापद्धतिरित्यादौ प्रत्ययविशेषोपपदविशेषसहकारेणैव गतिस्मारणसमर्थं न स्वत इत्यर्थः । पुनः पुनः गम्यते, पद्भ्यां गम्यते, इति हि जङ्घापद्धतिपदयोर्व्युत्पत्तिः ।

**( वि, ण )** च्युतसंस्कारत्वमाह—**गाण्डीवी**ति । गाण्डीवी अर्जुनः । कनकशिलानिभं किरातमूर्त्तेस्त्रिलोचनस्य वक्षो भुजाभ्याम् आजघ्ने इत्यर्थः । अत्र संस्कृतच्युतिर्वृत्तौ एव दर्शिता ।

**( वि, त )** तत्राऽस्य वाक्यदोषत्वमाशङ्कते—**नन्वि**ति । **न स्वत** इति । स्वाङ्गकर्मकत्वेऽदृष्टत्वात् । **पदान्तरे**ति—पराङ्गकर्मवाचकपदान्तरमित्यर्थः । संस्कृतच्युतेः पदमात्रदोषत्वम् ।

**( वि, थ )** न वाक्यदोषत्वमिति साधयितुमाह—**गुणदोषे**ति । श्लेषप्रसादादयो

---

**( लो, ऋ ) निरर्थकत्वादीनामि**ति । पदमात्रगतत्वेनैव वाक्यगतत्वेनापि लक्ष्येऽसम्भवः । तथाविधदोषावहं हि को नाम मूढः पुनःपुनरभिदध्यात् ।

**( लो, ॡ )** गाण्डीवी-अर्जुनः । तल्लङ्घितापराङ्गकर्मकस्य तस्यात्मनेपदप्रयोगादित्यर्थः ।

**( लो, ए )** आजघ्न इत्यत्र न सकलस्य पदस्य परिवृत्त्यसहनम् । किन्तु प्रत्ययमात्रस्य । तथा हि आजघान इत्युक्ते हनप्रकृतिसद्भावेऽपि दोषस्याभाव इत्याशङ्क्य

---

1 इतः प्राक्, 'क्रमेण' इति ( ग. पु. ) 'क्रमतः' इति ( ज. पु. )

**कानुविधायित्वं हेतुः। इह तु दोषस्य "आजघ्न" इति पदमात्रस्यैवान्वयव्यतिरेकानुविधायित्वम्। पदान्तराणां परिवर्त्तनेऽपि तस्य तादवस्थ्यादेवेति पददोष एव। यथेहात्मनेपदस्य परिवृत्तावपि न पददोषः, तथा हन्प्रकृतेरपि इति न पदांशदोषः। ( ए )**

**एवं " पद्म " इत्यत्राप्रयुक्तस्य पदपरत्वं बोध्यम्। एवं प्राकृतादिव्याकरणलक्षणहानावपि च्युतसंस्कारत्वमूह्यम्। ( थ, ऐ )**

---

दशगुणाः परोक्तास्तेषामेव शब्दार्थगतत्वात्। स्वमते तु माधुर्यौजःप्रसादाख्यास्त्रय एव गुणाः। ते तु रसवृत्तय एव। आजघ्ने इति पदस्य दोषश्च पदमात्रगामीति दर्शयति—**इह त्विति**। तस्यान्वयव्यतिरेकानुविधायित्वं तु तदर्थकस्य आजघान इत्यस्य प्रजहारेत्यस्य च दानेन दोषाभावात्। **पदान्तराणां त्विति**-विषमविलोचनादिपदानामित्यर्थः। **तस्य तादवस्थ्यादिति**। आजघ्ने इति पदस्य दुष्टतातादवस्थ्यादित्यर्थः। एवं हन्धातूत्तरात्मनेपदस्य दोषताप्रयोजकान्वयाद्यनुविधानं दर्शयित्वा तस्य पदैकदोषताप्रसक्तिवारणाय आत्मनेपदपूर्ववर्त्तिहन्धातोरपि तथात्वमाह—**यथेहे**त्यादि **न पददोष** इति। प्रकृतिप्रत्ययमेलनेन दोषत्वात् पददोष एव। न पदांशदोष इत्यर्थः। उक्तन्यायादप्रयुक्तत्वस्यापि पदमात्रगतत्वं दर्शयति। एवं पद्म इत्यत्रापि इति। "भाति पद्मः सरोवर" इत्यत्रोक्तः पुंलिङ्गः पद्मशब्दोऽप्रयुक्त इत्यर्थः। इदमुपलक्षणम्। आदत्ते इति अवाचकपदस्य श्रुतिकटुपदादेरपि एवं न्यायात् पददोषतेत्यर्थः। इदमत्रावधेयम्। तथाहि—यदि उक्तन्यायात् अप्रयुक्तत्वाद्यनेकदोषाणामपि पदमात्रदोषत्वमुक्तं तत्कथं स्मरार्त्त्यन्धः इत्यादिषु तेषां वाक्यगतत्वमुदाहृतम्। कथं वा निरर्थकत्वच्युतसंस्कृतत्वासमर्थत्वानामेव वाक्यदोषतो बहिर्भावः कृतः। अप्रयुक्तत्वावाचकत्वादीनामपि तद्वद् बहिर्भावौचित्यात्। अथ तेषामेकवाक्यस्थानेकपदावलम्बित्वाद् वाक्यदोषता उदाहृता इति चेत् तदा पदमात्रदोषताप्रयोजकतया दर्शित-

---

आह—**यथाहे**ति। अयमर्थः-यथेह प्रकृत्यंशमवस्थाप्य प्रत्ययांशपरित्यागे दोषाभावः। तथा प्रत्ययांशमवस्थाप्य प्रकृत्यंशपरित्यागेऽपीत्युभयान्वयव्यतिरेकानुविधायित्वात् पददोषताभ्युपगमः।

**( लो, ऐ ) प्राकृतादी**ति—संस्कारोऽत्र सूत्रव्याकरणमात्रलक्षणः। संस्क्रियतेऽनेन इति व्युत्पत्तियोगात्। दोषाः केचित् इत्यादिकारिकावाक्यस्य काकाक्षि-(गोलक) न्यायेन निरर्थक इत्यादिवाक्ये सम्बन्धः। तेन निरर्थकत्वं यथा— "पयसां प्रवाह इव सौरसैन्धवः" अत्र सुरसिन्धोरित्येतावतापि गतार्थत्वे अण्प्रत्ययो निरर्थकः। एवं वनकरिणामित्येतावतैव गतार्थत्वे वन्यकरिणामित्यत्र यप्रत्ययः। तथा—"तदीयमातङ्गघटाविघट्टितै"रित्यत्रेयप्रत्ययः। एवं "बिसकिसलयच्छेदपाथेयवन्त" इत्यत्र वतुप्प्रत्ययः। तेन पदपरमित्यत्र परमित्यनेन वाक्यमात्रव्य-

**इह शब्दानां सर्वथा प्रयोगाभावेऽसमर्थत्वं विरलप्रयोगे निहतार्थत्वम् । निहतार्थत्वमनेकार्थशब्दविषयम् । ( द, ओ )**

**[1]अप्रतीतत्वे त्वेकार्थस्यापि शब्दस्य सार्वत्रिकप्रयोगविरहः । अप्रयुक्तत्वमेकार्थशब्दविषयम् । असमर्थत्वमनेकार्थशब्दविषयम् ( ध )**

**असमर्थत्वे हन्त्यादयोऽपि गमनार्थे पठिताः । अवाचकत्वे दिनादयः**

---

न्यायकथनस्य प्रमत्तगीततैव । किञ्च निरर्थकत्वादित्रयस्यापि एकवाक्यस्थानेकपदावलम्बित्वं न सम्भवति । यथा "शोभनपथा गच्छते । स पुनातु हि हरिश्च वः । हन्तीत्यर्थान्तरे—हन्ति गङ्गां सम्प्रति धार्मिकः । इति तस्मादेतद्दोषत्रयविशिष्टपदघटितपदसमूहस्य शब्दबोधाजनकत्वाद् वाक्यत्वासम्भव एव । एतत्त्रयस्य वाक्यदोषतो बहिर्भावेऽवाचकत्वदोषव्याख्याप्रसङ्गेन अस्माभिर्दर्शितो हेतुर्बोध्यः ।

**( वि, द )** इदानीं दर्शितस्वस्वलक्षणानुसारेणैव उक्तदोषाणां परस्परभेदसम्भवेऽपि भेदान्तरमाह—**इह शब्दानामि**ति । शब्दानामसमर्थादिशब्दानां परस्परभेद इत्यन्वयः । शब्दानामित्यत्र दुष्टशब्दानामित्यर्थः । सर्वथा प्रयोगाभाव इति जङ्घापद्धतिरित्येतन्निष्ठसहकारिविशेषणं विनेति शेषः । **विरले**ति—प्रसिद्धाप्रसिद्धानेकार्थविषयम् । निहतार्थत्वं विरलप्रयोगे इत्यर्थः ।

**( वि, ध )** असमर्थत्वाप्रयुक्तयोर्भेदमाह—**अप्रयुक्तत्वमि**ति । **अनेकार्थशब्दे**नि, शब्दोऽत्र धातुः ।

**( वि, न )** असमर्थत्वावाचकत्वयोर्भेदमाह—**असमर्थे**ति । अस्यानेकार्थत्वं ग्राहयति—**हन्त्यादय** इति ।

---

वच्छेदः । ननु "कुञ्जं हन्ति कृशोदरी" इत्यत्र हन् प्रकृतेरेव परिवृत्त्यसहत्वादसमर्थस्य पदांशनिष्ठत्वमेव कथं पदनिष्ठत्वमिति चेत् । अत्रोच्यते असमर्थत्वस्य पृथक् पदनिष्ठत्वस्य प्रायेणादर्शनात् प्रकृतिप्रत्ययौ हि स्वार्थबोधकौ । इत्यनादृत्य समुदितं पदं वाचकमिति मतमालम्ब्य हन्तीत्यत्र पदनिष्ठत्वमेवोक्तम् । अत एव काव्यप्रकाशकृतापि—

अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।
वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥

इति सूत्रं पदांशदोषोदाहरणप्रस्तावेऽसमर्थत्वेऽप्युक्तम् । दिनशोणितादिपदेषु परिवृत्तिसहत्वेऽपि मुख्यतरधर्मिरूपप्रतिपादकप्रतिपादिकानां तथाविधत्वाभावाद् अवाचकत्वादीनां पदगतत्वमुक्तम् । अत एवालङ्कारे "सुनयने! नयने विधेही"त्यस्याऽपौनरुक्त्येऽपि लाटानुप्रास उक्तः ।

**( लो, ओ )** सर्वथा प्रयोगाभावः अत एव वाक्यदोषमध्येऽगणनम् । एवंविधस्खलनस्य कादाचित्कस्यापि दुर्लभत्वात् विरलप्रयोगे निहतार्थत्वम् । अत एवाहुः-अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टाविति ।

---

1 'अप्रतीतत्वन्तु ( ग. पु. )

प्रकाशमयाद्यर्थे न तथेति परस्परभेदः । ( न, औ )

एवं पददोषसजातीया वाक्यदोषा उक्ताः, सम्प्रति तद्विजातीया उच्यन्ते। (प,अ)

**वर्णानां प्रतिकूलत्वं लुप्ताहतविसर्गते ।**
**अधिकन्यूनकथित-पदता-हतवृत्तताः ।**
**पतत्प्रकर्षता सन्धौ विश्लेषाश्लीलकष्टताः ।**
**अर्द्धान्तरैकपदता समाप्तपुनरात्तता ।**
**अभवन्मतसम्बन्धाक्रमामतपरार्थताः ।**
**वाच्यस्यानभिधानञ्च भग्नप्रक्रमता तथा ।**
**त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः ।**
**सङ्कीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः ॥ ४ ॥** ( फ )

वर्णानां रसानुगुण्य-विपरीतत्वं प्रतिकूलत्वम् । यथा मम—

**ओवट्टइ, उल्लट्टइ, परिवट्टइ, सअणे कहिम्पि ।**

---

( **वि, प** ) इदानीमुक्तषोडशदोषभिन्नान् त्रयोविंशतिवाक्यदोषान् वक्तुमाह—**एवं पदे**ति। पदे यो दोषः वाक्येऽपि तादृशदोषस्य सत्त्वात्—तत्सजातीयता; तदवृत्तेस्तद्विजातीयता ।

( **वि, फ** ) **लुप्ताहते**ति—लुप्तविसर्गता आहतविसर्गता चेति दोषद्वयम् । अधिकपदता न्यूनपदता कथितपदता चेति दोषत्रयम् । विश्लेषताऽश्लीलता कष्टता च सन्धौ दोषत्रयम् । अभवन्मत-सम्बन्धता अक्रमता अमतपरार्थता चेति दोषत्रयम् । पदसमासयोरस्थाने न्यास इति दोषद्वयम् ।

( **वि ब** ) **ओवट्ट** इति—अवलुठति उल्लुठति, लुठति, शयने कदापि । मुञ्चति नो परिहसति हृदये एनं पश्यति, लज्जया खिद्यति । विरहिण्याः क्रियावर्णनमिदम् । अवलुठति अवाङ्मुखीभवति, उल्लुठति उत्ताना भवति। लुठति पार्श्वे बहुशः

---

( **लो, औ** ) सार्वत्रिकप्रयोगविरहः, किञ्च निहतार्थत्वेऽर्थदत्तमपि लौकिकम् । अप्रतीतहेतुस्त्वेकोऽर्थः शास्त्रीय एव । द्वितीयस्तु सम्भवन्नपि लौकिकः । तथानुचितार्थमपि लौकिकम् अपश्वादिपदानामारोपितत्वात् तदभेदः ।

( **लो, अ** ) सम्प्रति वक्ष्यमाणानां वाक्यदोषाणां समनन्तरेभ्यो भेददर्शिकां कारिकामाह—**एवमि**ति । पददोषाणां सजातीयाः श्रुतिकट्वादय उभयत्र वर्त्तमानत्वाद् वाक्यमात्रगाः । न पुनः श्रुतिकट्वादिवत् पदतदंशवाक्यगाः ।

( **लो, आ** ) रसानुगुण्यं गुणप्रस्तावे वक्ष्यमाणम् । **ओवट्टइ** इति—संस्कृतच्छाया—"अपवर्त्तत उद्वर्त्तते परिवर्त्तते शयने कस्मिन्नपि । रमते नो विलुलितहृदये श्रश्यति लज्जया त्रुट्यति धृतौ सा॥" इति । एषां तु इत्यादिनास्यवाक्यगतश्रुतिकट्वादेर्विजातीयत्वं सूचितम् । विकटवर्णादीनां पदपदांशनिष्ठत्वेऽपि दुष्टत्वम् । किन्तु तथा

रुअइ णो विउलिअ हिअएण, भणइ, लज्जाइ तुट्टइ दिहीए सा ※ ॥

अत्र टकाराः शृङ्गाररसपरिपन्थिनः केवलं शक्तिप्रदर्शनाय निबद्धाः । एषाञ्चैकद्वित्रिचतुःप्रयोगेण[1] न तादृग्रसभङ्ग इति न दोषः । (ब, आ) ×

" गता निशा इमा बाले ।" अत्र लुप्तविसर्गाः[2] । आहता ओत्वं प्राप्ता विसर्गा यत्र । " धीरो वरो नरो याति ।" इति । ( भ, इ ) +

" पल्लवाकृतिरक्तोष्ठी " अत्र आकृतिपदमधिकम् । एवं " सदाशिवं नौमि पिनाकपाणिम् ।" [3]इति विशेषणमधिकम् ।

कुर्य्यां हरस्यापि पिनाकपाणेः । अत्र तु पिनाकपाणिपदं विशेषप्रतिपत्त्यर्थ-मुपात्तत्वाद्युक्तमेव ।[4]

अथ वा "वाचमुवाच कौत्सः ।" अत्र वाचमित्यधिकम् । उवाच, इत्यनेनैव

---

परावर्त्तयति । शयने शय्यायाम् । हृदये एनं मुञ्चति परिहसति । लज्जया पश्यति च दिशि दिशि खिद्यति च इत्यर्थः । **न दोष** इति । न प्रतिकूलवर्णत्वदोष इत्यर्थः । दुःश्र-वत्वदोषस्तु तदा भवत्येव ।

**( वि, भ )** लुप्तविसर्गत्वमाह—गता निशा इमा बाले । **गता निशा** इति । अत्र घोषवति स्वरे च विसर्गत्रयलोपः । बन्धशैथिल्यकारित्वमत्र दोषताबीजम् । एकद्विलोपे तु तदभावान्न दोषः । **आहते**ति—अस्य तु बहुशः पात एव दोषः ।

**(वि, म) पल्लवे**ति—पल्लवरक्तेत्युक्त्यैव विवक्षितसिद्धेः । **विशेषणमधिक**-मिति । अपुष्टार्थदोषसंकीर्णमिदम् । **विशेषप्रतिपत्त्यर्थ**मिति—धनुर्धरणादप्यसौ न मां वारयितुं शक्त इत्यर्थो विशेषः ।

---

सति तेषां पदपदांशदोषत्वम् । अत एव तथाविधानां बहुवारप्रयोगे पददोषमजातीयो वाक्यदोषः । टकारादीनां तु एकपदनिष्ठत्वे नायं दोषः । वर्णवाक्यव्यापित्वे एवेत्यत्र पददोषसजातीयो वाक्यदोषः ।

**( लो, इ )** एवं लुप्ताहतप्रयोगयोरपि सकृदेव प्रयोगे न दोषः ।

---

※ पाठान्तरम्—ओल्लट्टइ उल्लटइ, लुठइ, कहिम्पि मोट्टाइ । णो परिहसइ हिअएणं फिट्टइ लज्जाइँ खुट्टइ ॥

× प्रतिकूलवर्णस्य दूषकताबीजं शृङ्गारादौ विकटादिवर्णाः श्रूयमाणा मनसो दीप्त्यादिजनका इति शृङ्गारादौ प्रतिकूलमनोवृत्तिजनकत्वेन रसस्यापरिपोषकत्वम् ।

+ काव्यस्य बन्धशैथिल्यमत्र दूषकताबीजम् । " बन्धपारुष्येऽप्येवम्" ।

यथा—स्मरः खलः खलः कान्तः । तदुक्तमग्निपुराणे—

---

1 'प्रयोगे' (ख० पु०) 2 'विसर्गा लुप्ताः' इति ( ख. पु. ) 3 इतीत्यतः प्राक्, 'अत्र पिनाकपाणिम्' इत्यधिकः पाठः (ज. पु.) 4 'इत्यत्र तु पिनाकपाणि-पदं विशेषप्रतिपत्त्यर्थमुपात्तमिति युक्तमेव' इति ( घ. प. पु. )

गतार्थत्वात् । ( म ) †

**क्वचिद् विशेषणदानार्थं तत्प्रयोगो युज्यते। यथा—"उवाच मधुरां वाचम्।"इति केचित्त्वाहुः—यत्र विशेषणस्यापि क्रियाविशेषणत्वं सम्भवति, तत्रापि तत्प्रयोगो न घटते । यथा—"उवाच मधुरं धीमान्।"इति । ( य, ई ) ×**

**"यदि मय्यर्पिता दृष्टिः किं ममेन्द्रतया तदा ।"**

**अत्र प्रथमं त्वया इति पदं न्यूनम् । ( र, उ ) +**

---

**( वि, य ) क्वचित्तु** इति—क्वचित् स्थल इत्यर्थः । तत्प्रयोगो वाचमित्यस्य प्रयोगः । एतच्च काव्यप्रकाशकृता दूषितम् ।

तदाह—**केचित्त्विति**—अत्रापि न युज्यत इति प्रकाशाभिप्रायमबुद्ध्वा लिखितं वाक्प्रयोगस्तु उपपत्त्यन्तरासत्त्वाद् युज्यत एव । किन्तु विशेषणदानार्थं तत्प्रयोग इत्युक्तिरेव विशेषणस्य क्रियाविशेषणसम्भवोक्त्या दूषिता न तु वाचमित्यस्य प्रयोगः । "ऊचे वचस्तापसकुञ्जरेण" "नृपमूचे वचनं वृकोदरः ।" "संप्रस्थितो वाचमुवाच कौत्सः" । " जगाद वाक्यं गिरिराजपुत्री " । इत्यादिबहुप्रयोगदर्शनात्तत्प्रयोगस्य तत्सम्मतत्वादेव । तदुपपत्तिस्तु यथा—वचेर्द्विधा व्युत्पत्तिः कण्ठताल्वाद्यभिघातः तज्जन्यं वचनं चार्थः । तत्र वचनार्थकतया प्रयोगे वाचमिति न प्रयुज्यते । कण्ठताल्वाद्यभिघातार्थकतया प्रयोगे तु तत्कर्मभूतस्य वाचमित्यस्य युज्यत एव प्रयोग इति । यच्च वाचमित्यधिकमित्युक्तं तदपि युक्तम् । वच् धातोर्वचनार्थकत्वे वाचमित्यस्य पुनरुक्तत्वादेव । पुनरुक्तभाव एव अधिकपदत्वदोषप्रसक्तेः । यथा—पल्लवाकृतिरक्तेत्यत्र ।

**(वि, र)** न्यूनपदत्वमाह—**यदि मयी**ति—मम इन्द्रतया इन्द्रत्वेन तदा किमित्यर्थः ।

---

**( लो, ई )** अधिकं सदाशिवमित्यतो विशेषप्रतिपत्त्यभावात् । उपात्तस्यापि पिनाकीति पदेन विशेषप्रतिपत्तेरिवेत्यर्थः ।

**( लो, उ ) त्वये**ति । नूनं प्रस्तुतकाव्यप्रतिपादकस्य चासंमुखीनस्य महात्मन एवेति दृष्टिपातेन वक्तुरभिष्टपूरणमिति । तस्यानिर्देशेन यस्य कस्यचिदपि दृष्टिपातसूचनेन तत्प्रत्यायनमन्थरमिति भावः ।

---

"अनुस्वारविसर्गौ तु पारुष्याय निरन्तरमिति" ।

† वामनस्येदं मतम् । यथा—अपुष्टार्थस्यापि तत्रोपादानमुचितम् । यत्र तद्विशिष्यते, अन्यथा कुतस्तद्विशेषणान्वयः स्यात् । यथा—"जगाद विशदां वाचं मधुराक्षरशालिनीम् ।" इत्यादौ । अत्र हि वाचमित्यनुपादाने मधुरत्वादितद्विशेषणयोगः क्व प्रत्येतव्यः ।

× काव्यप्रकाशकारस्येदं मतम् ।

+ कर्तृपदमन्तरेण क्रियापदस्यानन्वयात्त्वयेति कर्तृपदमपेक्षितं दूषकता च वाक्यार्थबोधावलम्बात् ।

रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्।" लीलाशब्दः पुनरुक्तः। एवम्- जक्षुर्बिसं धृतविकाशिबिसप्रसूनाः।" अत्र बिसशब्दस्य "धृतपरिस्फुट- तत्प्रसूना इति सर्वनाम्नैव परामर्शो युक्तः। (ल) *

हतवृत्तं—लक्षणानुसरणेऽप्यश्रव्यं, रसाननुगुणमप्राप्तगुरुभावान्तलघु च। क्रमेण यथा—" हन्त सततमेतस्या हृदयं भिन्ते मनोभवः कुपितः।" 'अयि मयि मानिनि! मा कुरु मानम्।" इदं वृत्तं हास्यरसस्यैवानुकूलम्। (व, ऊ)

"विकसितसहकारभारहारिपरिमल एष समागतो वसन्तः।"

यत्पादान्ते लघोरपि गुरुभाव उक्तस्तत्सर्वत्र द्वितीयचतुर्थपादविषयम्। प्रथमतृतीयपादविषयं तु वसन्ततिलकादेरेव। अत्र प्रमुदितसौरभ आगतो

(वि, ल) कथितपदत्वमाह—**रतिलीले**ति। लीलाशब्द इति सलीलमित्यत्र लीलाशब्द इत्यर्थः। **पुनरुक्त** इति। पुनःकथित इत्यर्थः। नतु पुनरुक्तदोषः। शब्दार्थ- योरन्वयभेदेन पुनरुक्त्यभावात् तस्यार्थदोषत्वात्। न्यूनपदोत्तरं कथितपदस्यैव क्रमप्राप्त- त्वाच्च। **चक्षुरि**ति। बिसप्रसूनं पद्मम्। धृतविकाशितत्काः सैन्याः सेनासमवेतजनाः।बिसं मृणालं जक्षुः बुभुजिरे। अत्र बिसशब्दस्येति कथितपदत्वमिति शेषः। पाठान्तरेण कथितपदत्वोद्धारौचित्यं दर्शयति—**धृतपरिस्फुटे**ति।

(वि, व) हतपदार्थत्रैविध्येन त्रिविधं हतवृत्तमाह—**हतवृत्तमि**ति। अप्रा- प्तगुरुभावः, अन्तलघुः पादान्तलघुर्यस्य तादृशवाक्यमित्यर्थः। अत्र पदमध्ययतिव- शादश्रव्यवृत्तमाह—**हन्त सततमेतस्या** इति। अत्र सततमेतस्या इत्यत्र प- दमध्ये यतिरश्रव्या। पढमं वारदमत्तेति गाहाच्छन्दोलक्षणानुसरणमस्त्येव। रसा- ननुगुणवृत्तमाह—**अयि मयि मानिनि** इति। **इदं वृत्तमि**ति दोधकं नाम वृत्तं छन्द इत्यर्थः।

(वि, श) अप्राप्तगुरुभावान्तलघु आह—**विकसिते**ति-एष वसन्तः समा- गतः। कीदृशः विकसितसहकारभारस्य हारी मनोहारी परिमलो यत्र तादृशः। अत्र हारीति पादान्तलघोर्गुरुभावाप्राप्तिः। पादान्तलघोर्गुरुभावप्राप्तेः विषयं दर्शयति—

(लो, ऊ) **हन्ते**ति-हन्त सततमेतस्या इति। एतत् द्वितीयाम्यांलक्षणानुगमेऽपि श्रुतिवैरस्यजा। **इदमि**ति। अयमाशयः-सामान्यतो हासस्य शृङ्गाररसप्रातिकूल्याभावे- ऽपि तथाविधमानस्थले स्मरशरविषार्दितस्य नायकस्योक्तौ प्रतिकूलतेति

* प्रयोजनाभावे पुनस्तत्पदोपादानं भुक्तोपभोगन्यायेन न चमत्करोतीति कवेर- शक्तिप्रकाशकत्वादस्य दोषत्वम्। न च पौनरुक्त्यं पदान्तरेण न तदर्थाभिधाने दोषा- भावात्। यद्यप्यस्य पददोषत्वमपि सम्भवति तथाप्येकपदस्य द्विरुपादानादेव वाक्यदो- षत्वम् इत्याहुः।

वसन्त इति पाठो युक्तः । ( श ) +

यथा वा—अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा

सम्भारः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।

श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थलाद्

दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥" ( ष )

अत्र वस्त्राणि चेति बन्धस्य श्लथत्वश्रुतिः । (ऋ) † "वस्त्राण्यपि" इति पाठे तु बन्धदार्ढ्यमिति न दोषः । "इदमप्राप्तगुरुभावान्तलघु" इति काव्यप्रकाशकारः । वस्तुतस्तु लक्षणानुसरणेऽप्यश्रव्यमित्यन्ये । ( स,ऋ )

प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः । (लृ)

---

**यत्पादान्त** इति, **वसन्ततिलकादावेवे**ति । नह्यत्र पुष्पिताग्रा छन्दसीत्यर्थः । पाठं परिष्करोति—**अत्रे**ति—प्रमुदितं प्रमोदविषयः ।

( **वि, ष** ) शार्दूलविक्रीडितेति दर्शयति—**अन्यास्ता** इति । रत्नरोहणभुवः प्रसिद्धा एव, गुणरत्नरोहणभुवस्त्वन्या विलक्षणा एव । एवं धन्या मृदन्यैव, एवं सम्भारा अपि खल्वन्ये । एवं यैरर्थात् यद्गुणरत्नमृद्विशेषसहितैः सम्भारैरेष युवा विधिना सृष्टः । यत्र यूनि दृष्टे सति मूढमनसां द्विषां करतलादस्त्राणि मूढमनसां स्त्रीणां नितम्बस्थलाद् वस्त्राणि च पतन्ति इत्यर्थः । श्रीमदित्यादि द्वयोर्विशेषणम् । द्विषां मोहो भयेन । स्त्रीणां मोहः कामेन ।

( **वि,स** ) अत्र चतुर्थपादान्तलघोर्बन्धशैथिल्यकारित्वेन गुरुकार्य्यबन्धदार्ढ्यकारित्वाभावादश्रव्यवृत्तदोष इत्याह—**अत्रे**ति । **बन्धदार्ढ्यमिति न दोष** इति । तथात्वकरणान्न दोष इत्यर्थः । काव्यप्रकाशकारमते द्वयमप्यप्राप्तगुरुभावान्तलघुभूतापहतवृत्तदोष एवेत्याह—**इदमपी**ति । अन्यमते तु, अश्रव्यवृत्तरूपहतवृत्तमेवेदमित्याह—**वस्तुतस्तु** इति । अत्र स्वमतानुसारिण एवान्ये इत्यनेनोक्ताः ।

( **वि, ह** ) पतत्प्रकर्षमाह—**प्रोज्ज्वलदि**ति—नरकेसरी वः पातु । कीदृशः ।

---

( **लो, ऋ** ) रोहणो माणिक्याद्रिः । अथवा गुणरत्नस्य रोहणमुत्पत्तिर्यासु ता भुवः । सम्भार उपकरणम् । मृत्समवायिकारणरूपः पार्थिवो भागः । अत्र चकारस्य अतीव्रप्रयत्नोच्चार्य्यतया बन्धशैथिल्यम् ।

( **लो,ॠ** ) लक्षणानुसरणेऽप्यत्र द्वितीयचतुर्थपादान्तलघोरप्राप्तगुरुभावादित्यर्थः।

( **लो, लृ** ) ग्रीवागतोद्दामकेसरकलापः ।

---

\+ अत्र सर्वत्र बन्धशैथिल्यमेव दूषकताबीजम् ।

† अत्र चकारस्य अतीव्रप्रयत्नोच्चार्य्यतया बन्धशैथिल्यम् । णयपि पाठे त्वन्यवर्णस्य लघोरपि संयुक्तोत्तरवर्त्तितया उच्चारणविलम्बेन गुरुकार्य्यकारित्वामित्यर्थः ।

श्वासक्षिप्तकुलक्ष्माभृत् पातु वो नरकेसरी ॥"

अत्र क्रमेणानुप्रासप्रकर्षस्य पातः। (ह) *

"दलिते उत्पले एते अक्षिणी अमलाङ्गि ! ते।" एवंविधसन्धिविश्लेषस्यासकृत्प्रयोग एव दोषः। (ए) +

अनुशासनमुल्लङ्घ्य वृत्तभङ्गभयमात्रेण सन्धिविश्लेषस्य तु सकृदपि यथा— "वासवाशामुखे भाति इन्दुश्चन्दनबिन्दुवत्।" (ऐ) "चलण्डामरचेष्टितः।" इति। अत्र सन्धौ जुगुप्साव्यञ्जकमश्लीलम्। × "उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः।" (क, ओ) अत्र सन्धौ कष्टत्वम्।

"इन्दुर्विभाति कर्पूरगौरैर्धवलयन् करैः।
जगन्मा कुरु तन्वङ्गि मानं पादानते प्रिये ॥"

अत्र जगदिति प्रथमार्द्धे पठितुमुचितम्। §

---

प्रोज्ज्वलतः ज्वलनस्य ज्वालावत् विकटा सुन्दरी उरुसटानां छटा कान्तिर्यस्य तादृशः। श्वासेनाक्षिप्ताः पातिताः कुलक्ष्माभृतः कुलाचला येन तादृशः। पातो न्यूनता।

**(वि, क)** विश्लेषसन्धिमाह—**दलिते**ति। दलिते वृन्तादाकृष्टे एवंविधे व्याकरणनिषिद्धसन्धौ। वासवाशा ऐन्द्री दिक्। अश्लीलसन्धिमाह—**चलण्डामरचेष्टिते**ति। अत्र सन्धौ लण्डाशब्दोत्पत्त्याऽपभ्रंशलण्डाशब्दार्थस्य दीर्घपुरीषव्यञ्जनया जुगुप्सा। कष्टसन्धिमाह—**उर्व्यसावि**ति। अत्र मरोर्देशस्य अन्ते असौ उर्वी महती तरूणां मौलिः श्रेणीः। चारुरवस्थितिर्यस्यास्तादृशीत्यर्थः। अत्र सन्ध्युत्पन्ना वर्णाः कटवः।

---

**(लो, ए)** असकृत्प्रयोग एव सकृत्प्रयोगे तथाविधारुचिदायित्वाभावात्।

**(लो, ऐ)** भातीन्दुरित्यनयोर्वृत्तोपगतत्वेन सन्धिर्न कृतः, तच्च महाकविसमयविरुद्धम्। आद्यन्तरगतयोरेवेत्यर्थः।

**(लो, ओ)** मर्वन्ते—मरोरन्ते असौ उर्वी इति सम्बन्धः।

---

* दूषकताऽस्य कवेरशक्त्युन्नायकतया।

पतत्प्रकर्षं तद्वाक्यं बन्धादावुत्तरोत्तरम्।
पूर्वानुसारतः कोऽपि निकर्षो यत्र जायते ॥

+ "ईदूदेद्द्विवचनं प्रगृह्यमिति प्रक्रम्य प्लुतप्रगृह्या अचीति सन्धिनिषेधः।" पाणिनिपादानामनुशासनम्।

एवंविधपदेन विसर्गलोपादिपरिग्रहः। अत्र दूषकताबीजं कवेरशक्तिद्योतनाद् वैरस्यजननम्।

× डामरमुद्भटं चेष्टितं चेष्टा यस्य सः। अथवा डामरं डमरुवाद्यं, तद्वच्चेष्टितं यस्य। काशीदेशभाषायां लण्डाशब्देन शिश्नस्याभिधानात्।

§ अत्र जगदिति कर्मपदमर्द्धान्तरितम्। अत्र पूर्वार्द्धान्वयोपपादकमेकं पदमर्द्धान्तरे

"नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः।
पतन्ति शशिनः पादा भासयन्तः क्षमातलम्॥"

अत्र चतुर्थपादो वाक्यसमाप्तावपि पुनरात्तः। (ख)
अभवन्मतसम्बन्धो यथा—

"या जयश्रीर्मनोजस्य यया जगदलङ्कृतम्।
यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा॥"

अत्र यच्छब्दनिर्दिष्टानां वाक्यानां परस्परनिरपेक्षत्वादेकान्तःपातिना एणा-

---

(वि, ख) समाप्तपुनरात्ततामाह—**नाशयन्त** इति। **अत्रे**ति। तृतीयपादे विशेषस्य क्रियान्वयेन वाक्यार्थसमाप्तावपि अनाकाङ्क्षितविशेषणान्वयार्थं विशेषस्यावृत्तिरूपोऽत्र दोषः। अत्र हि ध्वान्तनाशनेनैव क्षमातलभासनप्राप्तौ तद्विशेषणम् अनाकाङ्क्षितम्। यत्र तु विशेषणे आकाङ्क्षा तिष्ठति तत्र नायं दोषः। तथा—'अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।' इत्यत्र प्रमाणाधिकत्वविशेषणं विना प्रकृतश्वासेन स्तनवेपथुजननात् श्वासस्य प्रमाणाधिकत्व आकाङ्क्षा। एवं "उअ णिच्चल" इत्यादावप्युपमानालङ्काररूपप्रकर्षप्राप्त्यर्थमाकाङ्क्षा। एवमेवान्यत्रापि विचार्यम्।

(वि, ग) **अभवन्नि**ति। असम्भवन् असम्भवी कवेरभिमतसम्बन्धो यत्रेत्यर्थः। असम्भवश्च शाब्दव्युत्पत्तिराहित्यात्। तच्चोदाहरणे दर्शयिष्यते। **या जयश्रीरि**ति—अत्र या एणाक्षी। यया एणाक्ष्या इत्येवमेणाक्षीविशेष्यकोऽन्वयः कवेरभिप्रेतः स च न सम्भवति। द्वितीयान्तपदार्थस्य, या, ययेति प्रथमान्ततृतीयान्तयत्पदार्थयोः अभेदेन विशेष्यभावाव्युत्पत्तेरिति प्रतिपादयितुमाह—**अत्रे**ति। ननु या ययेत्यनयोर्न एणाक्ष्यामन्वयः। किन्तु या ययेत्यनयोरेव परस्परमन्वय इत्यत्राह—**यच्छब्दनिर्दिष्टानामि**ति। निरपेक्षत्वादन्वयित्वान्निराकाङ्क्षत्वेन तथात्वं बोध्यम्। तथा च एणाक्ष्यामेव साकाङ्क्षत्वात् तद्विशेष्यक एव। या ययेत्यनयोरर्थान्वयः कवेरभिमतः स च न सम्भवतीत्याह—**एकान्तःपातिने**ति। **यां विने**ति। एकं यत्पदं तदन्तःपातिना तदर्थान्वयिना एणाक्षीशब्देन एणाक्षीशब्दार्थेन इत्यर्थः। अन्येषां या ययेति यच्छब्दार्थानां द्वयोरप्यत्र बहुत्वारोपाद् बहुवचनम्। न चात्र एणाक्षीमितिपदस्य विभक्तिव्यत्ययेन या ययेत्यनयोरन्वय इति वाच्यम्, अव्यत्ययेन प्रथममन्वितस्यैव व्यत्ययव्युत्पत्तेः। अत्र तु पश्चादेव याम् इत्यस्याऽव्यत्ययेनान्वयः।

---

(लो, औ) समाप्तपुनरात्तत्वे उदाहरति। अभवन्, मतम्, इष्टम् अर्थात् कवेः योगः सम्बन्धो यत्र। परस्परनिरपेक्षत्वादनुवाद्यत्वेन तच्छब्दनिर्दिष्टविधेयवाक्यस्य गुणभूतत्वेन तुल्यतयाऽसमवायात्। यदाहुः—"गुणानां च परार्थत्वात् असम्बन्धः, समत्वात् स्यादिति" तदेकान्तःपातिनां तेषां वाक्यानामेकवाक्यान्तःपातिनाम्।

---

प्रविष्टमिति विलम्बितानुसन्धानं दोषः। यदि क्रियापदमेवार्द्धान्तरितं तदा न दोषः क्रियालाभे एव सर्वपदान्वयात्।

क्षीशब्देन अन्येषां सम्बन्धः कवेरभिमतो नोपपद्यत एव। ( ग, औ ) ×

यां विनामी वृथा प्राणा एणाक्षी सा कुतोऽद्य मे।

इति तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वे तु सर्वैरपि यच्छब्दनिर्दिष्टवाक्यैः सम्बन्धो घटते। (घ, अ) यथा वा—

"ईक्षसे यत् कटाक्षेण तदा धन्वी मनोभवः।"

अत्र यदित्यस्य तदेत्यनेन सम्बन्धो न घटते। "ईक्षसे चेत्" इति तु युक्तः पाठः। ( ङ ) *

यथा वा—"ज्योत्स्नाचयः पयःपूरस्तारकाः कैरवाणि च।
राजति व्योमकासारराजहंसः सुधाकरः॥"

---

( **वि, घ** ) यदि तु तच्छब्दार्थस्य विशेष्यतया एणाक्षीशब्दः प्रयुज्यते तदाऽदोष इत्याह—**यां विना मे वृथा** इति। सा एणाक्षीति तच्छब्दविशेष्यतयैव प्रयोगः। **सर्वैरपी**ति। न च तथापि भिन्नविभक्तिकयत्तत्पदार्थयोः कथमभेदान्वय इति वाच्यम्। तत्पदार्थान्वितविशेष्यस्य यत्पदार्थेऽन्वये समानविभक्तिकत्वनियमाभावात्। यथा यत्र धूमः स देशो वह्निमान् इत्यत्र तत्पदार्थान्वितस्य प्रथमान्तपदार्थस्य देशस्य सप्तम्यन्तयत्पदार्थेऽन्वयः।

( **वि, ङ** ) अत्र प्रथममपि व्यत्ययमङ्गीकुर्वतः प्रत्युदाहरणान्तरमाह—**ईक्षसे यदि**ति। यतो हेतोरित्यर्थः। **अत्रे**ति—यदितिपदेन कटाक्षेक्षणस्योपस्थानम्। तदेत्यनेन तु कालस्योपस्थानम् इत्येकार्थानुपस्थानात्तयोर्नाभेदान्वयः इत्यर्थः। **ईक्षसे चेदि**ति। तथा च यदि कटाक्षेण ईक्षसे तदा तेन कटाक्षेण मनोभवः धन्वी इत्यर्थः।

( **वि, च** ) इत्थमभेदान्वयसम्भवं दर्शयित्वा भेदान्वयासम्भवमाह—**ज्योत्स्नाचय** इति। कासारः सरः। व्योमरूपेऽस्मिन् ज्योत्स्नाचयादिरूपपयःपूरा-

---

( **लो, अ** ) यथा तद्घटते तदाह। **यां विने**त्यादिः। तच्छब्दनिर्दिष्टं विधेयं वाक्यम्। सम्बन्ध एणाक्षीशब्दस्य इत्यर्थः।

---

× अत्र त्रीण्युद्देश्यवाक्यानि एणाक्षीमिति। विशेष्यपदमेकत्र स्थितम्। अन्यस्मिन् वाक्यद्वये तु यच्छब्दनिर्दिष्टस्य विशेष्यस्य न प्रतीतिः। न चानुवृत्तिः कार्या यच्छब्दानां विभिन्नविभक्तिकत्वात्। विशेष्यपदे विधेयवाक्यस्थिते तु सर्वेषामुद्देश्यवाक्यानां तत्र समन्वयो भवत्येव। यथा—दर्शयिष्यमाणोदाहरणे।

* अत्र यदिति पदं तदित्यपेक्षते—तत्तु न कालविशिष्टम्। एवं तदेति पदं यदीतिकालविशिष्टमुपेक्षते नतु यदिति निर्विशेषम्। अतो द्वयोरपि साकाङ्क्षतयाऽभिमतार्थविरहः। कल्पितपाठे चेच्छब्दो यद्यर्थः। द्वयोर्यत्तच्छब्दयोः कालविशिष्टत्वे निराकाङ्क्षैव प्रतीतिः।

**अत्र कासारशब्दस्य समासे गुणीभावात्तदर्थस्य न सर्वैः संयोगः। (च, आ)**

**विधेयाविमर्शे यदेवाविमृष्टं तदेव दुष्टम्। इह तु प्रधानस्य कासारपदार्थस्य प्राधान्येनाप्रतीतेः सर्वोऽपि पयःपूरादिपदार्थस्तदङ्गतया न प्रतीयते इति सर्ववाक्यार्थतिरोभावः इत्युभयोर्भेदः। (छ, इ)**

**"अनेन छिन्दता मातुः कण्ठं परशुना तव।**
**बद्धस्पर्द्धः कृपाणोऽयं लज्जते मम भार्गव!॥"**

**"अत्र भार्गवनिन्दायां प्रयुक्तस्य मातृकण्ठच्छेदनकर्तृत्वस्य[1] परशुना सह सम्बन्धो न युक्त" इति प्राच्याः। परशुनिन्दामुखेन भार्गवनिन्दाऽधिकमेव**

दय इत्यर्थः। **अत्रे**ति—कासारे राजहंस इत्येवंसमासे तत्पुरुषे उत्तरपदार्थस्य विशेष्यत्वात् कासारशब्दार्थस्य विशेषणीभाव एव गुणीभावः। तादृशगुणीभूतस्य च विशेष्यान्तरेऽपि गुणीभावोऽव्युत्पन्नो निराकाङ्क्षत्वात्, तथा च तस्य पयःपूरादौ विशेषणीभावेन अन्वयासम्भव इत्यर्थः। तादृशविशेषणस्य अन्यत्र विशेष्याभावेनान्वये तु निराकाङ्क्षत्वम्। अत एव चैत्रस्य दासभार्या इत्यत्र भार्यायां विशेषणस्य दासस्य चैत्रविशेष्याभावेनाऽन्वये साकाङ्क्षतैव।

**(वि, छ)** अभवन्मतयोगविधेयाविमर्शयोर्भेदमाह—**विधेयाविमर्श** इति। विधेयाविमर्शेऽन्वयबोधो जायत एव। किन्तु विधेयस्य विधेयत्वाप्रतीत्या यदेव विधेयमविमृष्टं तदेव दुष्टमित्यर्थः। न चैवं तस्य वाक्यदोषत्वभावापत्तिरिति वाच्यम्। उद्देश्यसम्बन्धितया विधेयत्वाप्रतीत्या उद्देश्यघटितवाक्यस्यान्वयव्यतिरेकाद् वाक्यदोषत्वाद् दुष्टं तु विधेयपदमेवेत्यर्थः। प्रकृते तु निराकाङ्क्षत्वेनाऽन्वयासम्भवादन्वयप्रतियोगिसमस्तमेव दुष्टमित्याह—**इह त्वि**ति।

**प्रधानस्ये**ति—पयःपूरादिसमस्तान्वयित्वेन प्रधानस्येत्यर्थः। **प्राधान्येने**ति समस्तान्वयित्वेनेत्यर्थः। **तदङ्गतये**ति तदन्वयित्वेनेत्यर्थः। **तिरोभाव इती**ति। बोधानुपपत्तिरित्यर्थः।

**(वि, ज)** वाच्यार्थे विवक्षितस्य व्यङ्ग्यार्थयोगस्याऽसम्भवेऽपि क्वचिदयं दोष इति काव्यप्रकाशकृन्मतं दूषयितुमाह—**अनेने**ति। तव मातुः कण्ठं छिन्दता इत्यन्वयः। मम कृपाण इत्यन्वयः। प्राच्याः काव्यप्रकाशकृदादयो दूषयन्ति। **परशिव**ति। भार्गवस्याधिकनिन्दा कर्त्री अधिकं वैदग्ध्यं द्योतयति इत्यन्वयः।

**(लो, आ)** सर्वैः पयःपूरादिपदार्थैः।

**(लो, इ)** यदेवोच्छूनत्वादेर्व्यर्थत्वं तदेव दुष्टम्। न तु सर्ववाक्यानां तिरोभावः। एवं कल्पोपपदाः द्रुमाः। कल्पोपपदत्वं द्रुमस्य नतु द्रुमार्थस्य। इत्येवमादिषु अभवन्मतयोगो बोद्धव्यः।

1 'च्छेदनस्य' (घ. पु.)।

वैदग्ध्यं द्योतयतीति आधुनिकाः । * ( ज ) अक्रमता यथा— +

"समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् ।
शरदि हंसरवाः परुषीकृतस्वरमयूरमयू रमणीयताम् ॥"

अत्र परामृश्यमानवाक्यानन्तरमेव इतिशब्दप्रयोगो युक्तो ननु प्रणिगदन्त इत्यनन्तरम् । एवम्–( झ, ई ) ×

"द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥"

---

( वि, झ ) **अक्रमते**ति–अव्यवधानेन तदुत्तरपातनियमेनैव तत्परामर्शकस्य शब्दस्य तत्परामर्शार्थमन्योत्तरपातस्तत्त्वम्। **समय एवे**ति । परुषीकृताः दुःश्रवीकृताः स्वरा येषां तादृशा मयूरा यत्र क्रियायां तादृशं यथा स्यात्तथा शरदि हंसरवा रमणीयताम् अयुः प्राप्तवन्तः । कीदृशाः ? शरीरिणां बलाबलं समय एव करोतीति विनिगदन्तः कथयन्त इति । मयूररवापेक्षया हंसरवाणामपकृष्टत्वेऽपि शरदि हंसरवाणां परुषीकरणात् समयेन स्वराणां बलाबलकरणात् शरीरिणामपि बलाबललाभ इति भावः । **अत्रे**ति—परामृश्यवाक्यं बलाबलमित्युक्तम् । अत्र च शरीरिणामपि बलाबलम् इति अन्वये क्लिष्टतापि बोध्या ।

( वि, ञ ) **द्वयं गतं सम्प्रति शोचनीयताम्**इति–तपस्यन्तीं पार्वतीं प्रति जटिलवेशस्य शिवस्य स्वनिन्दावाक्यमिदम् । चन्द्रकला एव प्राक् शोचनीया आसीत्

---

( **लो ई** ) ननु प्रणिगदन्त इत्यनन्तरम् । एवं सति प्रणिगदन्त इति पदस्यापि अनुवाद्यवाक्यप्रवेशशङ्केत्यर्थः ।

---

* अत्र रावणस्य भार्गवेण सह युद्धमनभिलषितमिति तदुपेक्षा वाक्यार्थः । तेन भार्गवनिन्दायामेव कवेस्तात्पर्यम् । छिन्दतेति परशुविशेषणत्वेन परशुनैव तदर्थाभिसम्बन्धात्तत्रैव परशौ निन्दा प्रतीयते । तथा सति नाभिमतार्थप्रतीतिरिति दोषः । छिन्दति इति पाठे तु न दोषः । आधुनिकानां मतं तु विवेचनीयम्—अस्त्रस्य निन्द्यत्वेऽपि अस्त्रिणोऽनिन्द्यत्वात्, निन्दितशस्त्रं विना शस्त्रान्तरेणापि भार्गवेण सह युद्धसम्भवात्परशुनिन्दामुखेन भार्गवनिन्देति वक्तुमशक्यम् । तथा हि परशुरामस्य परिहार्यत्वमेव रावणसमीहितं, तच्च साक्षान्निन्दया यथा सुकरं, न तथा परम्परया ।

+ नास्ति क्रमः प्रयोगनियमो यत्र तस्य भावः । चादयो हि समुच्चीयमानानन्तरमेव श्रूयमाणाः समुच्चयं द्योतयन्ति । एवमित्थमादयोऽपि यस्मात् शब्दात्परं श्रूयन्ते तस्यैव परामर्शमवगमयन्ति । ईदृशः क्रमो यत्र नास्ति तत्र दोषः ।

× अत्र परामृश्यमानं वाक्यं "समय एव शरीरिणां बलाबलं करोति इति प्रणिगदन्त इव" इति वक्तुं युक्तम् इति शब्दस्य अव्यवहितपूर्वपरामर्शकत्वात् ।

अत्र त्वमित्यनन्तरमेव चकारो युक्तः † ( ञ ) अमतपरार्थता यथा—

"राममन्मथशरेण ताडिता"—

अत्र शृङ्गाररसस्य व्यञ्जको द्वितीयोऽर्थः प्रकृतरसविरोधित्वादनिष्टः।(ट, ड) ‡ वाच्यस्यानभिधानं यथा—

व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि ! कुप्यसि ?

अत्र व्यतिक्रमलवमपीत्यपिरवश्यं वक्तव्यो नोक्तः । ( ठ ) ||

---

संप्रति तु तवापि तथात्वाद् द्वयमिति । निन्दाप्रतिपादनार्थं कपालवत्त्वकथनं कलायाः प्रार्थना च तत्समागमादनुमेया ।

( वि, ट )अमतेति—परार्थोऽप्रकृतार्थो रूप्यमाणस्वरूपोऽमतः प्रकृतरसविरोधरसव्यञ्जकत्वेनानुचितः यत्र तादृशं वाक्यमित्यर्थः । **राममन्मथेति**—सा निशाचरी राक्षसी ताडका एव निशाचरी अभिसारिका रामस्य एव मन्मथस्य कन्दर्पस्यैव दुःसहेन शरेण हृदये ताडिता सती दुर्गन्धवद् रुधिरेणैव गन्धद्रव्ययुक्तरक्तचन्दनेव उक्षिता जीवितेशस्य यमस्यैव जीवितेशस्य प्राणेशस्य उपनायकस्य वसतिं गता इत्यर्थः । **अत्रेति**—द्वितीयोऽर्थो रूप्यमाणः मन्मथाभिसारिकादिरूपः अनिष्टः अनुचितः प्रकृतबीभत्सविरोधिशृङ्गारव्यञ्जकत्वात् ।

( वि, ठ ) **वाच्यस्यानभिधानमिति**—वाच्यम् अवश्यं वक्तव्यं तस्योच्चारणेनाऽध्याहारेण च अनभिधानमित्यर्थः । न्यूनपदे तु अध्याहारेणाभिधानमिति भेदो वक्ष्यते । **व्यतिक्रमलवमिति**–प्रीतिहेतुक्रियाव्यतिक्रमस्याल्पभावमपीत्यर्थः । **अत्रेति**–

---

( लो, उ ) जीवितेशो यमः प्राणेशश्च प्रकृतो रसः बीभत्सः ।

---

† कलेत्यनन्तरं श्रुतेन चकारेण इतरप्रथमान्तः समुच्चीयते, परं तत्प्रतिपत्तिर्झटिति न जायते इतरस्य षष्ठ्यन्तस्य ( लोकस्य ) तत्र सत्त्वात् । प्रथमान्तस्य श्रुतत्वाच्चकारं तत्राकृष्य प्रथमान्तेन संयोज्य विवक्षितार्थप्रतीतिः कृच्छ्रेण भवति । उक्तञ्च महिमभट्टेन—

"अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः ।

सम्बन्धं ते हि स्वां शक्तिमुपदध्युरनन्तरे ॥" इति ।

पदसन्निवेशरूपरचनायाः प्रस्तुतार्थस्याऽप्रत्यायकत्वेऽक्रमत्वं, प्रत्यायकत्वेऽप्यनौचित्येऽस्थानपदता । अर्थक्रमस्यानौचित्येषु दुष्क्रमत्वम् । उपक्रमोक्तक्रमस्योपसंहारे भङ्गे प्रक्रमभङ्ग इत्येतेषां भेदः ।

‡ अत्र द्वितीयोऽर्थः शृङ्गाररसव्यञ्जकः । स च प्रकृत-बीभत्सविरोधीति केचित् । वस्तुतस्तु जुगुप्सास्पदीभूतायां राक्षस्यामभिसारिकासाधर्म्येण प्रतिपाद्यमानं रत्यास्पदत्वमतीव विरुद्धमिति भावः । अन्यथा रसदोषस्यैव विषयः स्यात् ।

|| किंशब्दः प्रश्ने विरोधे आक्षेपे च वर्त्तते । यथा—कोऽयमार्ग्ये । तवेति ! का तव कान्ता

न्यूनपदत्वे वाचकपदस्यैव न्यूनता विवक्षिता। अपेस्तु न तथात्वमित्यनयोर्भेदः ( ड )

एवमन्यत्रापि। यथा वा—

"चरणानतकान्तायाश्चण्डि ! कोपस्तथापि ते।"

अत्र "चरणानतकान्तासि" इति वाच्यम्। ( ढ, ऊ ) *

---

स्थूलास्थूलव्यतिक्रमसामान्यादर्शनार्थं व्यतिक्रमस्य लवं कथमपीति वाच्यमित्यर्थः। अत्र तु व्यतिक्रमलवमपीति अपिकाराध्याहारेणापि न विवक्षितमिद्धिः। व्यतिक्रमस्येत्येव समासेन षष्ठीसत्त्व एव व्यतिक्रमसम्बन्धिस्थूलभागप्रतीतिसम्भवान्नतु व्यतिक्रमलवमपीति। समासे तदा व्यतिक्रमलवं पदार्थान्तरमपीत्येवमेव बोधोदयादतोऽत्रोच्चारणेनाध्याहारेणावश्यं वाच्यस्यानभिधानम्।

( वि, ड ) न्यूनपदत्वादस्य भेदमाह—न्यूनेति—वाचकपदस्यैव नत्वध्याहारस्यापि न्यूनपदत्वमित्यर्थः। तत्र अध्याहारसम्भवादिति भावः। अत्र तु न तथा अध्याहारसम्भव इत्यर्थः।

( वि, ढ ) चरणानतेति—हे चण्डि ! कोपने ! चरणे आनतः कान्तः यस्यास्तस्यास्तव तथापि कोप इत्यर्थः। अत्र काकुवशात्कथं कोप इत्यर्थः। अत्रेति—तथापीत्यनेन यद्यपि इति आकाङ्क्षते। यद्यपीति निराकाङ्क्षम् एव सम्बद्धं भवति तथापीति तत्र द्वितीयवाक्यगतत्वे एव उपपद्यते इत्यर्थः। अत्रापि अध्याहारासम्भवः।

---

( लो, ऊ ) न्यूनपदत्वे न्यूनपदसद्भावमात्रेण दोषाभावः। इह तु ङसन्तं पदं विहायाऽसीति पदनिवेशनेन इत्यनयोर्भेदः।

---

कस्य पुत्रः। न ते कान्ता न ते पुत्र इत्यर्थः। क्वचिदज्ञातविशेषेऽपि यथा—कश्चित् कान्ताविरहगुरुणेति। अत्र अतत्त्वाक्षेपवचनः किंशब्दः। तथा च व्यतिक्रमस्य लवमपि कं वीक्ष्य कुप्यसि किमुत भूमानामिति विवक्षितोऽर्थः। कं व्यतिक्रमलवं वीक्ष्येत्युक्ते यादृग्जातीयस्य प्रतिषेधो विधेरपि तादृग्जातीयस्येति न्यायाद् व्यतिक्रमभूमाऽस्तीति प्रतीयते। उक्तेऽप्यपिशब्दे समासनिर्देशे तादवस्थ्यं दोषस्य। तथा हि समासे एकार्थीभावाद् व्यतिक्रमलव एक एव पदार्थः सम्पद्यते नरसिंहादिवत्। ततः परं श्रूयमाणोऽपि शब्दस्तादितरमेव पदार्थमाक्षिपति। यथा राजपुरुषोऽप्यत्र नास्तीत्युक्ते अन्यदीयपुरुष एव समुच्चीयते नच राजसम्बन्धी हस्त्यादिः। व्यतिक्रमस्य लवमपि इति असमासनिर्देशे तु लवशब्दात् परं श्रूयमाणोऽपि शब्दः भूयांसमाक्षिपति। तच्च श्रुतेन सम्बन्धिना व्यतिक्रमेणैव सम्बध्यते। यथा राज्ञः पुरुषोऽप्यत्र न विद्यते इत्युक्ते समुच्चितो हस्त्यादिः राज्ञैव सम्बध्यते।

* तथापीति एकवाक्ये न संगच्छते। तथापीति तच्छब्दार्थः पूर्ववाक्योक्तं किमप्यपेक्षते। यद्यप्येवमिति वाक्यद्वयेन तस्यार्थसङ्गतिः। अतोऽत्र कान्ताऽसीति पृथग्वाक्यसम्पादयित्री प्रथमा विभक्तिरवश्यं वाच्या, तदभावाद् दोषः।

**भग्नप्रक्रमता यथा—**

**"एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यभाषत ।"**

**अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितम् । तेन "रावणः प्रत्यवोचत" इति पाठो युक्तः । एवं च सति न कथितपदत्वदोषः । तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वात् । इह हि वचनप्रतिवचनयोरुद्देश्यप्रतिनिर्देश्यत्वम् ।**

**( ग, ऋ ) ***

---

**( वि, ग )** **भग्नप्रक्रमते**ति—प्रथमोपक्रान्तरूपेणाकाङ्क्षितं यादृशं रूपं तादृशरूपेणानुक्तिः तत्त्वम् । **एवमुक्त** इति–स्पष्टम् । अत्र वच्धातुना उद्देश्ये प्रतिवचनेऽपि वच्धातुनाऽपि आकाङ्क्षा इति दर्शयति—**प्रत्यवोचते**ति । तथा च कथितपदत्वदोषप्रसक्तिं निरस्यति **एवमि**ति—**तस्योद्देश्ये**ति–उद्देश्ये प्रतिनिर्देश्यता अनेकविधाः (१) तत्र विधेयतया निर्देश्यस्य धर्मस्यैव पुनर्विधेयतया आकाङ्क्षितस्य प्रतिनिर्देशः । यथात्रैव श्लोके रावणे विधेयतया निर्दिष्टस्य वचनस्य प्रतिवचनत्वेन विधेयतया प्रतिनिर्देशः । यथा वा—

उदेति सविता ताम्रस्ताम्र एवास्तमेति च । सम्पत्तौ च विपत्तौ महतामेकरूपता ॥

इत्यत्र एकरूपताकथनाद् उद्यत्सवितरि विधेयतया निर्दिष्टस्य ताम्रत्वस्य अस्तमवितर्य्यपि विधयतया प्रतिनिर्देशः । (२) एकोद्देशेन विधेयस्य विधेयान्तरे उद्देश्यतया प्रतिनिर्देश इत्यपरा । यथा–'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते' इत्यत्र जितेन्द्रियत्वेन विधेयस्य विनयकारणत्वस्य शरीरप्रविष्टतया विधेयस्य विनयस्य गुणप्रकर्षविधौ उद्देश्यतया प्रतिनिर्देशः । (३) एकविधौ उद्दिष्टस्य विधेयान्तरेऽप्युद्देश्यतया प्रतिनिर्देश इत्यपरा । यथा–ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।

**( लो, ऋ )** तेनैव वक्तुमुचितं नतु भाषिधातुना । तस्य कथितपदत्वस्य उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वात् ।

अयमाशयः—यदेवोद्दिष्टं तदेव प्रतिनिर्देष्टुमिष्टम् । तत्पूर्वोद्दिष्टशब्दत्वेन सर्वनाम्ना वा प्रतिनिर्देष्टव्यम् । एतदेवोदाहरणदर्शनेन द्रढयति ।

---

नायं विधेयाविमर्शः, तथापीत्यत्र कदापीत्युक्तं विधेयतां विनाऽपि निर्दोषताप्रतिपत्तेः । तथापीत्युच्यमानं वाक्यभेदं विना न लगति वाक्यं च न केवलं षष्ठ्या सम्भवति । वाक्यभेदाकरणमेवात्र दोषः ।

वाच्यस्यानभिधानं च द्विधा—(१) अवाचकस्य द्योतकादेरनभिधानाद् । (२) अन्यथावाच्यस्य चान्यथाभिधानाद् । द्वितीयस्येदमुदाहरणम् ।

* भग्नः प्रक्रमः प्रकरणं यत्र तस्य भावः उपक्रमोपसंहारवैरूप्यमित्यर्थः । अत्र वच्धातुनोपक्रम्य धात्वन्तरेण प्रतिनिर्देशे प्रतीतिमान्थर्य्यं दोषः । उद्देश्योऽनुवाद्यार्थः प्रतिनिर्दिश्यते विधीयते यत्र ।

यथा—"उदेति सविता ताम्रस्ताम्र एवास्तमेति च।"

इत्यत्र यदि[1] पदान्तरेण स एवार्थः प्रतिपाद्यते तदान्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति। (त, लृ) × यथा वा—

"ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥"

अत्र "अस्मै" इति इदमा प्रक्रान्तस्य तेनैव तत्समानार्थाभ्यामेतददःशब्दाभ्यां वा परामर्शो युक्तो न तच्छब्देन। (थ) यथा वा—

"उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम्।"

---

सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः। इत्यत्र सिद्धार्थनिवेदनविधौ उद्दिष्टस्य तत्रैव विधेये उद्देश्यतया पुनः प्रतिनिर्देश इत्यपरा। एतदुदाहरणं च—यशोऽधिगन्तुम् इत्यादिकं दर्शयिष्यते। तच्च तत्रैव दर्शयिष्यामि।

(वि, त) इत्थमेवमुक्त इत्यत्र प्रक्रमभङ्गमुदाहृत्य प्रक्रमाभङ्गमुदाहरति। यथा—**उदेती**ति। अन्योऽर्थ इवेति नामविशिष्टस्यैव नामिनो बोध इति मते ताम्ररक्तशब्दद्वयरूपविशेषणभेदाद् भेदावभास इत्यर्थः। प्रतीतिम् अभेदप्रतीतिम्।

(वि, थ) एकविधौ उद्दिष्टस्य विधेयान्तरेऽप्युद्देश्यतया प्रतिनिर्देशे प्रक्रमभङ्गमुदाहरति—**ते हिमालयमि**ति। ते सप्तर्षयः सिद्धमर्थं पार्वतीपरिणयघटनारूपम्। तद्विसृष्टाः शूलिना विसृष्टाः। **तत्समानार्थाभ्यामि**ति। नच तत्समानार्थकपदभेदाद् भेदावभास इति वाच्यम्। सर्वनाम्ना प्रथमोक्तनामविशिष्टस्यैव परामर्शात् नत्वविशिष्टस्य। न चैवं तत्पदेनापि सर्वनाम्ना तथैव परामर्शाददोष इति वाच्यम्। तत्तु अत्र अस्मै इति इदम् शब्देन बुद्धिस्थपुरोवर्त्तितया महादेवः परामृष्टः। तच्छब्देन विप्रकृष्टपरामर्शितया तस्य परामर्शः कर्तुं न शक्यते इति भावः।

(वि, द) धर्मिभेदभासकत्वेन भेदावभासादेकोद्देशेन विधेयस्य विधेयान्तरोद्देश्यरूपेण प्रतिनिर्देशेऽपि तद्दोषमुदाहरति—**उदन्वादि**ति। भूः उदन्वच्छिन्ना

---

(लो, लृ) **उदेती**ति—प्रतीतिं स्थगयति। तथा च सति रसानुभवविघ्न इति भावः।

---

× **उदेती**ति। उदये उद्दिष्टं यत्ताम्रत्वं तदेवास्तमये प्रतिविधीयते। अत्र हि तेनैव शब्देनोपादाने यादृशं ताम्रत्वमुद्दिष्टं तादृशमेवास्तमये प्रतिविधीयते। शब्दान्तरेणोपादाने आश्रयभेदादिना तेषां वैलक्षण्यदर्शनान्न तादृशप्रतीतिरिति केचित्। येषां मते शब्दस्वरूपमपि विशेषणतया पदार्थप्रतीतौ भासते तेषां विशेषणभेदादेव प्रतीतिभेदः स्फुट एव। **स्थगयती**ति—पदान्तरप्रतिपाद्यमानत्वप्रतिसन्धाने अर्थान्तरशङ्का इत्यर्थः। अतः भिन्नपदयोः समानाकारप्रतीतिजनकत्वेऽपि अर्थान्तरशङ्कया प्रतीतिस्थगनमत्र दोषः।

1 यद्यनन्तरम्, 'रक्त एवेति' (इत्यधिकः ख. पु.)

अत्र—"मिता भूः पत्यापां स च पतिरपाम्" इति युक्तः पाठः। ( द )
एवम्—"यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्त्तितुं वा।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः॥"

अत्र सुखमीहितुम् इत्युचितम्। (ध) *

अत्राद्ययोः प्रकृतिविषयः प्रक्रमभेदः। तृतीये पर्य्यायविषयः। चतुर्थे प्रत्ययविषयः। ( ज ) एवमन्यत्। प्रसिद्धित्यागो यथा—"घोरो वारिमुचां रवः।"
अत्र मेघानां गर्जितमेव प्रसिद्धम्—यदाहुः—

"मञ्जीरादिषु रणितप्रायं पक्षिषु तु कूजितप्रभृति।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम्॥" इत्यादि। (प) †

अस्थानस्थपदता यथा—

---

स चापां पतिः योजनशतं व्याप्य तिष्ठतीति शेषः। अत्र भुवमुद्दिश्य उदन्वच्छिन्नत्वे विधेये उदन्वानपि विधेयः। तस्य योजनशतव्याप्तिविधौ उद्देश्यतया अपांपतिशब्देन प्रतिनिर्देशः कृत इति दोषः। पाठान्तरेण दोषं परिहरति—**मिता भूरि**ति। अपां पत्या मिता परिच्छिन्ना इत्यर्थः।

**( वि, ध )** एकविधेये उद्दिष्टस्य तत्रैव विधेये उद्देश्यतया प्रतिनिर्देशस्य प्रत्ययार्थस्य क्रमभङ्गमुदाहरति—**यशोऽधिगन्तुमि**ति। योद्धुम् उद्वेजयन्तीं द्रौपदीं प्रति युधिष्ठिरस्योक्तिरियम्। यशोऽधिगमनस्य सुखलाभस्य मनुष्यगणनायाम् आधिक्यरूपस्य मनुष्यसंख्यातिवर्त्तनस्य वेच्छया निरुत्सुकानामुत्कण्ठारहितानामथ च तदनुकूलचेष्टारूपाभियोगभाजामङ्कं सिद्धिः समुत्सुकेव उत्कण्ठितेव उपैतीत्यर्थः। अत्र निरुत्सुकविधावुद्दिष्टाया इच्छायास्तत्रैव निरुत्सुकत्वविधौ उद्देश्यतया प्रतिनिर्देशः। तत्क्रमश्च तुमुन्प्रत्ययभेदेनोद्देशकथनात् भग्न इत्यर्थः।

**( वि, न ) अत्राद्ययोरि**ति। एवमुक्तो मन्त्रिमुख्यैरित्यत्र "ते हिमालयमामन्त्र्य" इत्यत्र चेत्यर्थः। तृतीये उदन्वच्छिन्ना इत्यत्र चतुर्थे यशोऽधिगन्तुमित्यत्र।

**( वि, प ) प्रसिद्धी**ति। सम्बन्धिविशेषे प्रसिद्धार्थकस्य शब्दस्य तादृशसम्बन्धिनि अप्रयोगस्तत्त्वम्। **घोर** इति—सम्बन्धिविशेषे एव शब्दविशेषाणां प्रयोग इत्यत्र काव्यप्रकाशकृदुक्तिसम्वादमाह—**मञ्जीरादिष्वि**ति। मञ्जीरादिषु सम्बन्धिषु इत्यर्थः। एवमुत्तरत्रापि।

**( वि, फ ) अस्थानस्थे**ति—यादृशस्थानसत्त्व एव यत्पदस्य बोधकता

---

* अत्र यशोऽधिगन्तुमिति तुमुन्प्रत्ययेन प्रक्रम्य सुखलिप्सयेति सन्प्रत्ययस्योपादानात् प्रक्रमभङ्गः स चात्र प्रत्ययभेदादेव।

† प्रसिद्धित्यागः—प्रसिद्धिमुल्लङ्घ्य प्रयोगः। अत्र रवशब्देन मण्डूकादिप्रभव एव प्रतीयते नतु मेघानां गर्जनम्। तत्र रुद्रटोक्तं प्रसिद्धिमनुवदति—**यदाहुरि**ति।

"तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम्।
अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः॥"

अत्र तदीयपदात्पूर्वं गङ्गामित्यस्य पाठो युक्तः। (फ, ए) एवम्—
हितान्न यः संश्रृणुते स किं प्रभुः।"

अत्र संश्रृणुत इत्यतः पूर्वं नञः स्थितिरुचिता। अत्र च पदमात्रस्यास्थाने निवेशेऽपि सर्वमेव वाक्यं विवक्षितार्थप्रत्यायने मन्थरमिति वाक्यदोषता। एवमन्यत्रापि। इह केऽप्याहुः—"पदशब्देन वाचक एव प्रयोगो निगद्यते; नच नञो वाचकता, निर्विवादात् स्वातन्त्र्येणार्थबोधनविरहात्" इति। यथा—"द्वयं गतम्" इत्यादौ त्वमित्यनन्तरं चकारानुपादानादक्रमता तथात्रापीति। (ब)❀

---

नद्भिन्नस्थानस्थत्वं तत्त्वम्। त्वमस्य लोकस्य च इत्यत्र तु उत्तरपठितनियतपदस्य तथात्वमत्र तु तन्नियमरहितपदस्येति भेदः। **तीर्थे तदीये** इति—अस्य राज्ञो गजैः सेतुबन्धात् प्रतीपगां गङ्गाम् उत्तरतो तदीये गाङ्गीये तीर्थे उत्तरदिशि नभोलङ्घन-लोलपक्षा हंसा अयत्नबालव्यजनीबभूवुरित्यर्थः। सेतुबन्धेन जलवृद्ध्या प्रावृट्-कालबुद्ध्या उत्तरदिशि मानसरोवरगमनार्थं हंसा उड्डीना इति भावः। **अत्रे**ति। गङ्गायाः। प्रथमज्ञाने तत्पदेन तत्परामर्शसम्भवात्।

(वि, व) **हितान्न य** इति—हितात् जनात्। हितमिति क्वचित्पाठः। **अत्रे**ति—क्रियान्वयिनो नञः क्रियासन्निहितपाठस्यैवौचित्यात्। अत्र वाक्यदोषता-मुपपादयति। **अत्र चे**ति—मन्थरम् असमर्थम्। हितान्न य इति अक्रमदोषो-दाहरणमिति केषाञ्चिन्मतं दर्शयति—**इह केऽपी**ति। **पदशब्देने**ति। अपदस्थ-पदेत्यत्र द्वितीयपदशब्देन इत्यर्थः। वाचकमेवेति पदान्तरे योगं विना प्रयोगाभावेन पञ्चपदं त्रिपदमिति यथा न प्रयोगः तथा नञोऽपि प्रतियोगिपदयोगं विनाऽप्रयोगात् न तत्र वाचकता, नियतपदत्वं निर्विवादमित्यर्थः। घटादिपदस्य तु स्वतः प्रयोगात् तत्र पदत्वं निर्विवादमित्यर्थः। शक्तिमद्वर्णमात्रस्यैव नैयायिकैः पदव्यवहारात् प्रायश इत्युक्तम्। **यथा द्वयमित्यादावि**ति। तत्तदत्राक्रमत्वदोष एवेत्यर्थः। तथा च अस्थानस्थपदत्वोदाहरणं तीर्थे तदीये इत्येवेत्यर्थः।

---

(लो, ए) तदीय इत्यस्य पूर्वं गङ्गामित्यस्य पाठो युक्तः। तच्छब्दपरामृष्टय-नन्तरमेव वक्तुमुचितत्वात्।

---

❀ अक्रमतादोषे तु नास्ति प्रयोगनियमः केवलं रचनाविशेषेण तस्य दोषत्वात्। अस्थानस्थपदे तु प्रयोगनियमोऽस्तीति ततो भेदः। अव्यवधानेनैव यत्राभिमतप्रतीतिसा-मर्थ्यं तदेतस्य विषयः। अन्यः पुनरितरस्य इति केचित्।

अस्थानस्थसमासता यथा—

"अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं[1] शशी ॥" *

अत्र कोपिन उक्तौ समासो न कृतः, कवेरुक्तौ[2] कृतः । (भ,ऐ)+

वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्कीर्णत्वं यथा—

(वि, भ) **अस्थानस्थे**ति—यद्रसीयव्यञ्जको यः समासस्तद्रसव्यञ्जकस्थानमुपेक्ष्य स्थानान्तरे तत्समासपातस्तत्त्वम् । **अद्यापी**ति—सन्ध्याकाले पर्य्युषितकुमुदकुड्मलान्निःसरतां श्रेणीभूतालीनां वर्णनमिदम् । अद्यापीत्याद्युक्तक्रोधादालोहितः प्रोद्यन् असौ शशी फुल्लतः कैरवकुड्मलादिव खड्गपिधानरूपात्कोषात् निःसरताम् अलीनां श्रेणीभूतं कृपाणं दूरतरं प्रसारितः करो रश्मिरेव तादृशो हस्तो येन तादृशः सन् तत्क्षणात् कर्षतीवेत्यन्वयः । "कोषोऽस्त्री कुड्मले पात्रे दिव्यखड्गपिधानके" इति कोषः। खड्गाकर्षणेऽपि हस्तस्य दूरे प्रसारणात् । क्रोधबीजमाह—**अद्यापी**ति । सीमन्तिनीनां मानस्तावत् स्तनरूपेणैव दुर्गमाश्रित्याऽन्यदा तिष्ठतु, अद्यापि ममोदयेऽपीति तन्मां धिगिति क्रोधः । अत्रेति कोपिनश्चन्द्रस्य समासो दीर्घसमासः ।

(लो, ऐ) कोषः कुड्मलम् खड्गपिधानं च ।

* असौ दृश्यमानः शशी फुल्लत् विकसत् यत् कैरवं तस्य कोषः कुड्मलमेव कोषः खड्गपिधानं तस्मान्निःसरन्ती या अलिश्रेणी भ्रमरपंक्तिः सैव कृपाणं तां तत्क्षणात् कर्षति निष्कासयति । तत्र हेतुमुत्प्रेक्षते—**अद्यापी**ति । अद्यापि मत्सान्निध्येऽपि एष मानः ( स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये ) सीमन्तिनीनां कान्तानां हृदि स्थातुं वाञ्छति धिक् निन्द्यमिदमिति क्रोधादिव आलोहितः आरक्तः कोपेन रक्तिमोदयात् । कीदृशे हृदि ? स्तनावेव शैलौ तद्रूपेण दुर्गेण विषम अनाक्रमणीये । यद्वा स्तनलक्षणशैलदुर्गाभ्यां विषमे अगम्ये। शशी कीदृशः—प्रोद्यन्त एव दूरतरं प्रसारिताः कराः किरणा एव हस्ता येन तथाभूतः । खड्गाकर्षणेऽपि करस्य तथात्वात्; केचित्तु प्रोद्यंश्चासौ दूरतरप्रसारितकरश्चेति कर्म्मधारयमाहुः ।

अत्र शशिनो नायकत्वं, मानस्य प्रतिनायकत्वं विवक्षितम् । तथा च यथा कान्तो जारवधार्थं खड्गमाकर्षति तथा शशी मानवधार्थं खड्गमाकर्षतीति भावः ।

+ पूर्वार्द्धे कोपिनः कविनिबद्धवक्तुः शशिनः उक्तिः, तत्र दीर्घसमासो युक्तः परन्तु न कृतः । उत्तरार्द्धे दीर्घसमासः कृतः स च न युक्तः, उत्तरार्द्धे कवेरुक्तौ समासस्यानौचित्यात् ।

1 'कृपाणीम्' ( घ. ज. पु. ) २ '–क्तौ तु' ( ङ. पु. )

"चन्द्रं मुञ्च कुरङ्गाक्षि ! पश्य मानं नभोऽङ्गणे ।"

अत्र नभोऽङ्गणे चन्द्रं पश्य मानं मुञ्चेति युक्तम्। "क्लिष्टत्वम् एकवाक्यविषयम्" इत्यस्माद् भिन्नम् । वाक्यान्तरे वाक्यान्तरानुप्रवेशो गर्भितता । यथा–

"रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना ।
वदामि सखि ! ते तत्त्वं कदाचिन्नोचिताः क्रुधः ॥" (म)

अर्थदोषानाह—

**अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः ।
अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः ।
सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते ।
साकाङ्क्षतासहचरभिन्नतास्थानमुक्तता[1] ।
अविशेषे विशेषश्चानियमे नियमस्तथा ।
तयोर्विपर्ययो विध्यनुवादायुक्तते तथा ।
[2]निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्त्तिताः ॥ ५ ॥** ( य, ओ )

तद्विपर्ययो विशेषेऽविशेषो नियमेऽनियमः । अत्रापुष्टत्वं मुख्यानुपकारित्वम् * यथा–"विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये ! ।

---

( वि, म ) संकीर्णमाह—**वाक्यान्तरे**ति । **मुञ्च मानमि**ति । वृत्तावेव अस्यान्वयः स्पष्टः । अस्य क्लिष्टत्वे भेदमाह—**क्लिष्टत्वमेवे**ति । गर्भितत्वमाह—**वाक्यान्तरे**ति । **रमणे** इति—अत्र रमणे चरणप्रान्तपतिते सत्यधुना क्रोधो नोचित इति वाक्यस्य मध्ये वदामि सखि ते तत्त्वमिति वाक्यमनुप्रविष्टम् ।

( वि, य ) इदानीं त्रयोविंशतिमर्थदोषानाह—**अर्थदोषानि**ति । **ख्याते**ति । ख्यातविरुद्धता विद्याविरुद्धतेति दोषद्वयम् । **तयो विपर्ययावि**ति । अविशेषे विशेषोक्तिविपर्ययो विशेषेऽविशेषोक्तिः । अनियमे नियमोक्तेर्विपर्ययश्च नियमेऽनियमोक्तिरित्यर्थः। विध्ययुक्तताऽनुवादायुक्तता चेति दोषद्वयम् ।

( वि, र ) **मुख्ये**ति—मुख्यो विधेयरूपः । अन्यत् स्पष्टम् । अधिकपदादस्य

( लो, ओ ) अर्थदोषानुद्देश्यक्रमप्राप्तान् । ताप्रत्ययस्यापुष्टादिप्रत्येकमन्वयः ।

( लो, औ ) मुख्यं प्रकृतप्रतिपाद्यम् । समकालमेवं वे प्रतिभागः, अत एव

---

* यस्यार्थाभावेऽपि न विवक्षितार्थविलम्बः सोऽर्थोऽपुष्टः । स च द्विधा—अन्यलभ्यत्वादनुपयोगाच्च । व्यर्थमाहुर्गतार्थं यत् यच्च स्यान्निष्प्रयोजनमिति भोजराजः। तत्र द्वितीयप्रकारस्योदाहरणमाह ।

1 'युक्तता' ( ख. ग. पु. ) 2 'नियुक्त' ( ख. ग. पु. )

अत्र विततशब्दो मानत्यागं प्रति न किञ्चिदुपकुरुते। अधिकपदत्वे पदार्थान्वयप्रतीतेः समकालमेव बाधप्रतिभासः, इह तु पश्चादिति विशेषः। ( र,औ )
दुष्क्रमता यथा—"देहि मे वाजिनं राजन्! गजेन्द्रं वा मदालसम्।"

अत्र गजेन्द्रस्य प्रथमयाचनमुचितम्। (ल) *

"स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय!"।
अत्रार्थो ग्राम्यः। (व) +

कस्यचित् प्रागुत्कर्षमपकर्षं वाभिधाय पश्चात्तदन्य[1]प्रतिपादनं व्याहतत्वम्। यथा—

> "हरन्ति हृदयं यूनां न नवेन्दुकलादयः।
> वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका॥"

---

भेदमाह—**अधिके**ति। पल्लवाकृतिरक्तोष्ठीत्यत्र ह्याकृतिशब्दस्य निष्प्रयोजनत्वरूपो बाधोऽन्वयबोधसमकालमेव प्रतिभासत इत्यर्थः।

**(वि, ल)** दुष्क्रमतामाह—**देही**ति। **अत्रे**ति—अधिकमूल्यवस्तुप्रार्थने सति तत्रासम्मतिसम्भावनयैव न्यूनमूल्यप्रार्थनौचित्यात्।

**( वि, ल ) स्वपिही**ति—नायकं प्रति नायिकाया उक्तिरियम्। हे प्रिय! एषा अहं स्वपिमि। त्वमपि समीपे स्वपिहीत्यर्थः। ग्राम्य इति वैदग्धीराहित्येनोक्त इत्यर्थः।

**(वि, श)** व्याहतत्वलक्षणमाह—**कस्यचिदि**ति—तदन्यथात्वमुत्कर्षान्यथात्वमपकर्षः। अपकर्षान्यथात्वमुपकर्षस्तत्प्रतिपादनमित्यर्थः। तत्र प्रागपकर्षे उदाहरति **हरन्ती**ति—इयं लोकलोचनचन्द्रिकासुरूपा तन्वी यैर्युवभिर्वीक्ष्यते तेषां यूनां हृदयं नवेन्दुकलादयो न हरन्तीत्यर्थः। अत्र आदिपदाच्चन्द्रिकाऽपि निन्दिता, तन्व्यां

---

वाक्यदोषता। इह अर्थप्रत्ययानन्तरम्, अत एव अस्यार्थदोषत्वम्। विवरं छिद्रं स्त्रीवराङ्गं वा अश्लीलम्। पुंध्वजस्मारकत्वात्।

---

* दृष्टोऽनुचितः क्रमो यत्र तस्य भावः। दुष्क्रमत्वं लोके शास्त्रे च सिद्धस्य क्रमस्य वैपरीत्यम्। प्रधानस्यासम्भवे हि गौणं निर्दिश्यते। बहुमूल्ययाचनानन्तरं तद्दानाभावशङ्कयाऽल्पमूल्यस्य याचनं लोकव्यवहारसिद्धम्। नहि तुरङ्गदानेऽशक्तस्य विमुखस्य वा मातङ्गदानप्रसङ्गः। न चायं शब्ददोषः, मुख्यानुपकल्पयोरर्थधर्म्मत्वात्।

+ ग्राम्यत्वम्—अर्थस्य वक्तुरविदग्धताप्रतिपादकत्वम्। तदुक्तम्—

> स ग्राम्योऽर्थो रिरंसादिः पामरैर्यत्र कथ्यते।
> वैदग्ध्यवक्रिमलवं हित्वैव वनितादिषु॥

1 न्यत्व—( ख. पु. )

अत्र येषामिन्दुकला नानन्दहेतुस्तेषामेवानन्दाय तन्व्याश्चन्द्रिकात्वारोपः ।

( श ) +

"हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाशु जायते पातो न तथा पुनरुन्नतिः ॥"

अत्रार्थोऽश्लीलः ( ष ) †

"वर्षत्येतदहःपतिर्न तु घनो, धामस्थमच्छं पयः,
सत्यं सा सवितुः सुता सुरसरित्पूरो यया[1] प्लावितः ।

---

तदारोपादुत्कर्षः प्रतिपादितस्तदाह—अत्रेति । प्रागुत्कर्षे तु यथा—'तव कर्णेन्दुना तन्वि ! नभसीन्दुस्तिरस्कृतः ।' इति ।

( वि, ष ) **हन्तुमेवे**ति । अप्रणिधानेन युद्धप्रवृत्तपुरुषवर्णनमिदम् । स्तब्धस्य भद्राभद्राविवेचिनः विवरं परस्य च्छिद्रं तत्र इच्छामात्रं नतु प्रवृत्तौ तदपेक्षा स्तब्धत्वात् । अत्र पुंसो लिङ्गस्य प्रतीतिः ।

( वि, स ) क्लिष्टत्वाद्यभावेऽपि कष्टगम्यार्थत्वं तत्त्वम् । **वर्षती**ति—कस्याश्चित् कामिन्याः कान्तदूतीः प्रति अन्यापदेशेन सोत्कण्ठवचनमिदम्—अहःपतिः सूर्यो धामस्थं स्वीयरश्मिस्थम् एतद् दृश्यमानं पयो वर्षति नतु घनो वर्षति घनस्य सूर्यहस्तस्थानीयत्वात् । तथा यया सुरसरितो गङ्गायाः पूरः प्रवाहः प्लावितः सा अर्थात् यमुना

---

( लो, अ ) **वर्षती**ति यमुना व्यासेनेति । वृष्टियमुनयोः सूर्यप्रभवत्वं न खलु केनानाप्तेनोक्तं, किन्तु व्यासेन श्रुत्या वेदाचारचर्य्यया चेति । श्रद्धा संप्रत्ययः । कस्याश्चित् कामिन्याः कान्तदूतीच्छलापदेशेन सोल्लुण्ठनवचनमिदम् । अत्र प्रकृष्टतरः प्रकृतोयमर्थः-स नागरः सत्यवागिति प्रामाणिकमेवेदम् । तस्य दूतीनां भवतीनां वाचि सत्यप्रत्ययो युज्यते । किन्त्वहमेव मुग्धा मिथ्याप्रत्ययमेव करोमीति । मृगीणां मरुमरीचिकासु जलप्रत्ययो यथा, ममापि भवतीषु संप्रत्ययस्तथैव ।

---

+ व्याहतत्वं—परस्परविरुद्धत्वम् । अत्र पूर्वार्द्धे चन्द्रकलादयः यान् प्रति असारतया प्रतिपादिताः तैरेव उत्तरार्द्धे नायिकायां चान्द्रिकात्वम् उत्कर्षायारोप्यते इति व्याघातः ।

† विवेचनारहितस्य योद्धुर्वर्णनमिदम् । हन्तुं हिंसां, योनौ ताडनविशेषं च कर्तुमेव प्रवृत्तस्य स्तब्धस्य अनम्रस्य, उन्नतस्य च विवरैषिणः परच्छिद्रान्वेषिणः, स्त्रीवराङ्गान्वेषिणः अस्य दुष्टस्य लिङ्गस्य च यथा आशु पातः अपचयः वीर्य्यत्यागात् शैथिल्यं च जायते तथा उन्नतिरुपचयो दृढता ( उद्गमः ) च पुनः न जायते ।

पदान्तरप्रतिपादितोऽप्ययमर्थोऽश्लील एवेति पदवाक्याश्लीलतोऽस्य भेदः । तत्र साधनादिपदानाम् एव अश्लीलता, सेनादिपदैस्तदर्थप्रतिपादनेऽश्लीलत्वाभावात् ।

1 'यथा' ( ढ. पु )

व्यासस्योक्तिषु विश्वसित्यपि न कः, श्रद्धा न कस्य श्रुतौ,
न प्रत्येति तथापि मुग्धहरिणी भास्वन्मरीचिष्वपः ॥" ( स, श्र )

अत्र यस्मात् सूर्य्याद् वृष्टेर्यमुनायाश्च प्रभवस्तस्मात्तयोर्जलमपि सूर्य्यप्रभवम्। ततश्च सूर्य्यमरीचीनां जलप्रत्ययहेतुत्वमुचितम्। तथापि मृगी भ्रान्तत्वात् तत्र जलप्रत्ययं न [1]करोत्ययमप्रस्तुतोऽप्यर्थो दुर्बोधः, दूरे चास्मात् प्रस्तुतार्थबोध इति कष्टार्थत्वम्। ( ह )

"सदा चरति खे भानुः सदा वहति मारुतः ।
सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः ॥ " ( क )

सवितुः सूर्य्यस्य सत्यं सुता । कथमेतन्निश्चितम् इत्यत्राह—**व्यासस्ये**ति—वृष्टियमुनयोः सूर्य्यप्रभवत्वं न खलु केनचिदनाप्तेनोक्तं, किन्तु व्यासेन श्रुत्या वेदापरपर्य्यायनाम्ना चेति । अपि जिज्ञासायाम् । "आदित्याज्जायते वृष्टिस्ततश्चान्नं ततः प्रजाः" इति । एवंरूपासु कालिन्द्याः सूर्य्यकन्यात्वबोधिकासु च व्यासोक्तिषु को जनो न विश्वसिति कस्य जनस्य वा एवमर्थिकायां श्रुतौ वेदे न श्रद्धा ? अपि तु सर्व एव विश्वसिति सर्वस्य च श्रद्धा; तथा च हरिण्या अपि तत्र विश्वासश्रद्धौचित्यमेव । तथापि मुग्धा मूढा हरिणी भास्वन्मरीचिषु अधिकरणेषु जलं न प्रत्येति। धामस्थमच्छं पय इत्यनेन पयसः सूर्य्यमरीचिवृत्तितया व्यासश्रुतिभ्यां बोधितत्वेन तथा प्रत्ययौचित्यात् ।

**(वि, ह)** अत्र विवक्षितार्थस्य कष्टबोधत्वं दर्शयति—**अत्रे**ति । प्रभवो जनकम्, तयोर्जलमपीति वृष्टेर्यमुनायाश्च इत्यर्थः । सूर्य्यजन्यवृष्टिजलेनैव नदीपूरणात् यमुनायाश्च वृष्टिजनकप्रत्ययहेतुत्वमुचितमित्यर्थः। जलस्य तद्धामस्थत्वेनोक्तत्वात्। **भ्रान्तत्वात् तत्रे**ति । तत्र मरीचिष्वधिकरणेषु यमुनाजलस्य सूर्य्यप्रभवत्वप्रदर्शनात् पिपासया यमुनायामेव प्रवर्त्तते तत्र न जलप्रत्ययः । मरीचिषु तत्तुल्याम्बुभ्रमान्न प्रत्येति इत्येतत्प्रदर्शनार्थमयमप्रस्तुतोऽर्थ इति । अत्र हि अप्रस्तुतप्रशंसानामालङ्कारः । अप्राकरणिककथनात् प्राकरणिकप्रत्यायनरूपः । प्राकरणिकश्चात्र न्यायसिद्धेऽप्यर्थे भ्रान्तानां जनानां प्रत्ययाभाव इत्येवंरूपः । अप्राकरणिकस्तु मृग्या जलप्रत्ययरूपः ।

**( वि, क )** अनवीकृतमाह **सदे**ति—धीरोऽविकत्थनः। नञः प्रश्लेषः। कथितपदादस्य भेदमाह—**अत्रे**ति । पर्यायान्तरेण समानार्थकेन विच्छित्त्यनन्तरं प्रकारकृतो भङ्गीभेदः। **तथापी**ति—प्रकारकृतभङ्गीभेदाभावादनवीकृतत्वमेवेत्यर्थः यथा—"सदा चरति खे भानुर्नित्यं वहति मारुतः । धत्ते क्ष्मां सर्वदा शेषोऽजस्रं धीरोऽविकत्थनः ॥" अत्र सदानित्यसर्वदाजस्रपदानां समानार्थता समानप्रकारता च । **भानुः सदे**ति—षष्ठांशवृत्ते राज्ञोऽपि षष्ठांशग्रहणं प्रजापालनरूपो धर्म एषः सदैवेत्यर्थः । अत्र सदासततशब्दयोः समानप्रकारकत्वसमानार्थकत्वेऽपि रात्रिन्दिवमित्यत्रार्थस्यैव साम्यं रात्रित्वदिवात्व प्रकारभेदः ।

1 'रोतीत्ययम' ( च. ज. पु )

अत्र सदेत्यनवीकृतत्वम् । अत्रास्य पदस्य पर्य्यायान्तरेणोपादानेऽपि यदि नान्यद् विच्छित्यनन्तरं तदास्य दोषस्य सद्भाव इति कथितपदत्वाद् भेदः । (आ) * नवीकृतत्वं यथा—

"भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति ।
विभर्त्ति शेषः सततं धरित्रीं षष्ठांशवृत्तेरपि धर्म एषः ॥" +

"गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद् यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमपि सुतशोकान्न तु भयाद्
विमोक्ष्ये शस्त्र ! त्वामहमपि यतः स्वस्ति भवते ॥"

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वम् । ❀ (ख, इ)

---

(वि, ख) निर्हेतुमाह—**गृहीतामि**ति—हेत्वाकाङ्क्षासत्त्वेऽपि हेत्वनुक्तिस्तत्त्वम् । कर्णक्रोधात् त्यज्यमानमस्त्रं सम्बोध्य अश्वत्थाम्न उक्तिरियम् । हे शस्त्र ! त्वं येन मम पित्रा ब्राह्मणजातेर्नोचितमनुचितमपि परिभवभयाद् द्रुपदनृपतितः परिभवभयाद् गृहीतमासीः, तथा यस्य मम पितुः प्रभावात् तव खलु न विषयो न कश्चिद् अभूदिन्द्रोऽपि त्वद्विषय आसीदित्यर्थः । तेन मम पित्रा सुतस्य हतत्वेन श्रुतस्य मम शोकात् न तु भयात् परित्यक्तमसि अहमपि यतस्त्वां विमोक्ष्ये, अतः स्वस्ति भवते इत्यर्थः । **अत्रे**ति—द्वितीयमश्वत्थाम्नः शस्त्रमोचनम् । तत्र चाहमपि इत्यपिकार एव हेत्वाकाङ्क्षोत्थापकः ।

---

(लो, आ) अस्येत्यनन्तरं सदेति शेषः । पर्यायान्तरेण सर्वदेत्यादिना ।
(लो, इ) शस्त्रमोचन इत्यत्र अश्वत्थाम्न इति शेषः ।

---

* अनवीकृतः—भङ्गयन्तरेण प्रकारान्तरेण यन्नवत्वं तन्न प्रापितः । यत्र एकभङ्गिनिर्दिष्टोऽनेकार्थः सोऽनवीकृतार्थः । अत्रोदाहरणे सर्वेष्वर्थेषु "सदा" इत्येका भङ्गिः भङ्गयन्तराभावान्न नवीकृतमित्यर्थः । अत्र पिष्टपेषणन्यायेन एकप्रकारकार्थश्रवणेन सहृदयोद्वेजकत्वं दूषकताबीजमिति नित्योऽयं दोषः ।

विच्छित्तिः कान्तिपोषकमनोव्यापारविशेषः । यत्तदादिशब्दानामसकृत् प्रयोगेऽपि कथितपदत्वं न शङ्कनीयं, तदर्थानां शब्दान्तरेण निर्देष्टुमशक्यत्वात् । यथा—"ते देशास्ते जनपदा" इत्यादौ "स किं सखे"त्यादौ च शब्दान्तरेण विवक्षितोऽर्थः प्रतिपादयितुं न शक्यते । तस्मादत्र न कथितपदत्वं परं विच्छित्तिभेदाभाव एव दोषः । अत एव प्रकारकार्थाभिधानेऽनवीकृतं—भिन्नप्रकारेणार्थाभिधाने तु नवीकृतमिति अर्थदोषताऽस्य ।

+ सकृत् सततं रात्रिन्दिवम् इति भङ्गिभेदेन प्रकारभेदेनोक्तः । अत्र वाच्यार्थबोधकाले भिन्नभिन्नप्रकारेण बोधान्नवीकृतत्वम् ।

❀ अत्र यथा द्रोणाचार्यकर्त्तृकशस्त्रमोचने "सुतशोकात्" इति हेतुरुक्तस्तथाऽश्व-

"कुमारस्ते नराधीश ! श्रियं समधिगच्छतु ।"

अत्र त्वं म्रियस्वेति विरुद्धार्थप्रकाशनात् प्रकाशितविरुद्धत्वम् । ¶ (ग)

"अचला अबला वा स्युः सेव्या ब्रत मनीषिणः ।"

अत्र प्रकरणाभावाच्छान्तशृङ्गारिणोः को वक्तेति निश्चयाभावात् सन्दिग्धत्वम् । + (घ)

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥"

अत्र द्वितीयार्द्धव्यतिरेकेण द्वितीयपादस्यैवार्थ इति पुनरुक्तता । (ङ) ×

(वि, ग) प्रकाशितविरुद्धार्थमाह—**कुमारस्ते** इति । कुमारः पुत्रः । **अत्रे**ति पितृमरणानन्तरमेव पुत्रस्य श्रीलाभः प्रायश इति भावः ।

(वि, घ) सन्दिग्धमर्थमाह—**अचला** इति । **अत्रे**ति—उक्तिनिश्चयाभावाद् अचला एव अबला एव वा सेव्या इति निश्चयाभावात् सन्देह इत्यर्थः ।

(वि, ङ) पुनरुक्तमर्थमाह—**सहसे**ति—अविवेकोऽविमृश्यकारिता स तु आपदां पदम् आपज्जनक इत्यर्थः । अनेककारणस्य कार्यव्यापकत्वादविमृश्यकारिताया आपद्व्यापकत्वं दर्शितम् । ईदृशान्वयव्याप्त्या लभ्यां व्यतिरेकव्याप्तिमाह—**वृणुते हि** इति । विमृश्यकारिता अविमृश्यकारितारूपस्य व्यापकस्य व्यतिरेकस्तस्यापद्रूपव्याप्याभावरूपाणां सम्पदां व्याप्यतामाह—**गुणलुब्धा** इति । यत्र विमृश्यकारिता तत्र सम्पद इत्यर्थः । **अत्रे**ति—द्वितीयार्द्धव्यतिरेकेण द्वितीयार्द्धलब्धव्यतिरेकव्याप्त्या द्वितीयस्यैव द्वितीयपादलब्धान्वयव्याप्तेरेवेत्यर्थः । अन्वयव्याप्तेरेव पर्यवसितोऽर्थो व्यतिरेकव्याप्तिः । सोऽर्थः द्वितीयार्द्धोक्तव्यतिरेकव्याप्त्या उक्त इत्यतः पुनरुक्त इत्यर्थः ।

---

त्थामकर्तृकशस्त्रमोचने "पितृशोकात्" इति हेतुर्वक्तव्यः, स च नोक्त इति निर्हेतुत्वम् ।

¶ विरुद्धमतिकृद् दोषे शब्दस्योभयार्थता, अत्र न तथेति भेदः । तत्र शब्दशक्तिमूला विरुद्धा प्रतीतिः । अत्र अर्थसामर्थ्यनिबन्धनेति भेदः ।

+ तात्पर्यज्ञानाधीना हि शाब्दी प्रमा । तात्पर्यं च । प्रकरणादिभिरवसीयते । अत्र प्रकरणाद्यभावेन शमरसे शृङ्गाररसे वा वक्तुस्तात्पर्यमिति निश्चयाभावात् सन्दिग्धत्वं वाक्यार्थस्य ।

× पुनरुक्तं द्विधा—एकार्थशब्दगतमर्थगतं च । आद्यं कथितपदत्वेन संगृहीतं वाक्यदोषे । अन्त्यं शब्दपरिवृत्तिसहत्वादर्थदोषः । तच्च पदार्थवाक्यार्थगतत्वेन द्विविधम् । तत्रान्त्यमुदाहरति—**सहसे**ति । पुनरुक्तस्तावच्छब्देन अवगतत्वे सति पुनस्तद्वाचकेन पर्यायान्तरेण एव प्रतिपादितः । अर्थेन प्रतिपन्नस्य प्रतिपादनेऽपुष्टत्वमुक्तम् । तस्यैव पदस्योपादान तु कथितपदत्वम् । अत्रोदाहरणे तु "अविवेकः

प्रसिद्धिविरुद्धता यथा—

"ततश्चचार समरे शीतशूलधरो हरिः ।"

अत्र हरेः शूलं लोकेऽप्रसिद्धम् । यथा वा—

"पादाघातादशोकस्ते सञ्जाताङ्कुरकण्टकः ।"

अत्र पादाघातादशोकेषु पुष्पमेव जायत इति प्रसिद्धं न त्वङ्कुर इति कविसमयख्यातिविरुद्धता । *

" अधरे करजक्षतं मृगाक्ष्याः" ।

अत्र शृङ्गारशास्त्रविरुद्धत्वाद् विद्याविरुद्धता । एवमन्यशास्त्रविरुद्धत्वमपि ।(च)

"ऐशस्य धनुषो भङ्गं क्षत्रस्य च समुन्नतिम् ।
स्त्रीरत्नं च कथं नाम मृष्यते रावणोऽधुना ॥"

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षता । ( छ ) ×

---

( वि, च ) प्रसिद्धिविरुद्धमाह—**प्रसिद्धी**ति । कविप्रसिद्धिविरुद्धत्वं तत्त्वम् । कीर्त्तिधावल्यवर्णनादावन्यलोकप्रसिद्धिविरोधस्तु न दोषः । **तत** इति । **शीते**ति— शीत शिलाघर्षणेन तनूकृतम् । हरिः कृष्णः । **अत्रे**ति—लोके कविलोके । **पादाघाता-दि**ति । ते पाताघातादिति अन्वयः । **अत्रे**ति—**नत्वङ्कुर** इति । न च कुसुमं कृतदोहदं त्वया इति कालिदासकाव्ये दोहदस्यापि वर्णनात् कथमङ्कुरो न प्रसिद्ध इति वाच्यम् ? "कवीनां सत्यर्थेऽपि अप्रसिद्धिरसत्येऽपि प्रसिद्धिः" इति अङ्कुरस्य केनापि कविना अवर्णनाद् दोष इत्यर्थः । अप्रयुक्तत्वं तु पदस्य नार्थस्य, इति अतोऽत्र न तत् प्रसक्तिः । विद्याविरुद्धमाह—**अधरे** इति । विद्याशास्त्रम् । **एवमन्ये**ति— 'स्नाति रात्रौ बुधः सदा' इति धर्मशास्त्रस्य, 'शूरो नीतिं विना जयी'ति नीतिशास्त्रस्य, 'ज्वरवान् स्नातुमर्हति' इति वैद्यशास्त्रस्य विरुद्धम् ।

( वि, छ ) साकाङ्क्षतामाह—**ऐशस्ये**ति । उपात्तपदार्थान्वयभ्रमविषयत्वे सति अनुपात्तपदार्थसाकाङ्क्षत्वं तत्त्वम् । न्यूनपदत्वे तु न तादृशो भ्रम इति भेदः । **ऐशस्ये**ति । कथं मृष्यते कथं सहते कथं न द्वेष्टि इत्यर्थः । इयमुक्तिश्च द्वेष्यवस्तुन्येव

---

परमापदां पदम्" इत्युक्ते "विवेकी सम्पदां परं पदम्" इति व्यतिरेकव्याप्त्यावगम्यते । तथापि "वृणुते" इत्यादिना तस्यैवार्थस्य पुनः प्रत्यायनात् पुनरुक्ततेत्यर्थः ।

* यत्रार्थे न प्रसिद्धिस्तत्र प्रसिद्धिविरुद्धः । स द्विविधः लोकप्रसिद्धिविरुद्धः कविप्रसिद्धिविरुद्धश्च । क्रमेण तदुदाहरति ।

× उपेक्षितुमित्यनुपादाने स्त्रीरत्नस्योपेक्षणीयत्वं लभ्यते, नच तद्विवक्षितं, स्त्री-रत्नस्य अद्वेष्यत्वात्, प्रत्युत प्रार्थनीयत्वात् । तथाच आसत्त्यभावात् अन्वयाभावे साकाङ्क्षत्वम् । अध्याहृतेनार्थेन यत्रान्वयोपपत्तिस्तत्र न्यूनपदत्वमिति ततोऽस्य भेदः । निर्हेतुतायां हेतोराकाङ्क्षितत्वमात्रम्, अत्र तु न हेतोराकाङ्क्षितत्वमिति ततोऽस्य भेदः ।

सज्जनो [1]दुर्गतौ मग्नः कामिनी गलितस्तनी ।
"खलः पूज्यः समज्यायां तापाय मम चेतसः ॥" ( ज ) ×

अत्र सज्जनः कामिनी च शोभनौ तत्सहचरः खलोऽशोभन इति सहचरभिन्नत्वम् ।

"आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।

---

घटते स्त्रीरत्नं तु न द्वेषयोग्यमित्यतः स्त्रीरत्नोपेक्षा एव द्वेषयोग्या इत्यत उपेक्षितुमित्याकाङ्क्षति इत्याह—अत्रेति । अत्र कर्मपदोत्तरचकारस्य कर्मान्तरेण सहैकक्रियान्वयित्वं प्रत्याय्यते इत्यतः स्त्रीरत्नस्यापि मृष्यतिक्रियान्वयित्वभ्रमः । अत्र च रावण इत्येव पाठो युक्तो न भार्गव इति तस्य जितेन्द्रियस्य स्त्रीरत्नोपेक्षायां द्वेषाभावेन मृष्यते तदाकाङ्क्षत्वाभावात् ।

( वि, ज ) सहचरभिन्नत्वमाह—**सज्जन** इति । समज्यायां समाजे । उत्कृष्टनिकृष्टयोरेकक्रियान्वयित्वेन कथनं तत्त्वम् ।

( वि, झ ) अस्थानमुक्ततामाह—अस्थाने समापनायोग्यस्थाने मुक्तता समाप्तता तत्त्वम् । **आज्ञेति**—सीतापरिणयप्रार्थनाय रावणेन प्रेषितं तत्पुरोहितं शौष्कलं प्रति जनकपुरोहितस्य शतानन्दस्य रावणप्रशंसापूर्वकोपेक्षावाक्यमिदम् । अहो आश्चर्यमीदृग वरो न लभ्यते । यतस्तस्य आज्ञा शक्रशिखामणेः प्रणयिनी, मणिरिव तदाज्ञापि शिखायां शक्रेण धार्य्यत इत्यर्थः । तथा शास्त्राण्येव नवं नवीनं चक्षुः शास्त्रदृष्ट्यैव कर्मकरणात् । तथा भूतानां प्राणिनां पत्यौ पिनाकिनि महेशे भक्तिः । तथा लङ्केति दिव्यापुरी पदं निवासस्थानम् । तथा द्रुहिणस्य ब्रह्मणोऽन्वये कुले उत्पत्तिः । एतानि सर्वाण्येव उत्कर्षहेतवः सन्ति एव चेत् यदि एष रावणो न स्यात् दुर्वृत्तत्वेन ख्यातनामा लोकानामपकारकत्वेन आर्त्तरवकारकश्च यदि न स्यात्तदा ईदृग्वरो न लभ्यते इत्यर्थः ।

---

( लो, ई ) **आज्ञा शक्रेति**—द्रुहिणो ब्रह्मा । ईदृगुक्तप्रकारगुणविशिष्टो वरो जामाता श्रेष्ठो वा । रावणः जगदाक्रन्दकारी । अयमर्थः—अस्मिन् दशमुखे सर्वे गुणाः सन्ति । जगदाक्रन्दकारित्वं दोषः । अतश्च रावणपदस्यार्थान्तरसंक्रमणाद् वाच्यत्वेनैव दोषास्पदत्वम् । एतावतैव वाक्यं समापयितुमुचितम् । यत् पुनरुक्तं क्व नु पुनरित्यादि तेन पूर्वस्थानेऽर्थप्रतिपादनं न त्यक्तमित्यपदमुक्ततेयं दोषः । ननु क्व पुनरित्यादिसमर्थकवाक्यत्वेन पुनरुक्तमिति वाच्यम् ? रावणस्यार्थस्य अयुक्ततापादनार्थमेव वक्तुम् इत्यस्य

× सहचरेषु समभिव्याहृतेषु सहचरेभ्यः समभिव्याहृतेभ्यो वा भिन्नः विजातीयः विजातीयत्वं च उत्कृष्टत्वापकृष्टत्वाभ्याम् । सतामसतां वा साहचर्य्येण तदितराभिधानं दोषः । अत्र उत्कृष्टमारुरुक्षोश्चित्तस्य तत्परिहारेण निकृष्टारोहणं विलम्बः ।

1 'दुर्गतो' ( ख. पुस्तके )

उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
• स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ? ॥"
अत्र न रावण इत्येतावतैव समाप्यम्। ( ऋ, ई ) *
"हीरकाणां निधेरस्य सिन्धोः किं वर्णयामहे ।
अत्र रत्नानां निधेरित्यविशेष एव वाच्यः । (ञ) §
"आवर्त्त एव नाभिस्ते नेत्रे नीलसरोरुहे ।

---

तस्मादयं त्याज्य एव इति भावः। पुनराह—**क्व पुनरि**ति। सर्वत्र जने सर्वे धर्म्माः क्व नु गुणाः ? कश्चिद्धर्मो दोषोऽपीत्यर्थः। तथा च सर्वेषां दोषमिश्रिता एव गुणा इत्यर्थः। ननु क्व नु सर्वे गुणा इत्यर्थः । सर्वगुणासत्त्वस्यानुक्तत्वात्तत्समर्थनानौचित्यात् सर्वगुणसत्त्व-मुक्त्वा किञ्चिद्दोषसत्त्वस्यैवोक्तत्वात्। **अत्रे**ति। न रावण इत्यन्तस्यैव रावणत्यागार्हत्वात्। क्व नु पुनरित्यादेः तत्परिग्रहार्हत्वादेव ।

**(वि, ञ)** अविशेषे विशेषोक्तिमाह—**हीरकाणामि**ति—**अत्रे**ति । उत्कर्षापर्य्याप्त्या ह्यवर्णनीयत्वं वक्तुमुचितम्। रत्नान्तरासत्त्वे तु हीरकमात्रार्थोत्कर्षापर्य्याप्तिबोध इति भावः।

**( वि, ट )** अनियमे नियमोक्तिमाह—**आवर्त एवे**ति। वलयः स्त्रीवलयः । अत्र नाभ्यादिषु आवर्त्तादयो रूप्यत्वेन विधेयास्तत्र नाभिरेवावर्त्त इति करणे आवर्त्तरूप-णयोग्यस्य अन्यतरस्य व्यावर्त्तनार्थमेवकारो दातव्यः। एवम् 'आवर्त्त एव' इति करणे तु नाभ्यां रूपणयोग्यवापीधर्मान्तरभावेन व्यावर्त्तनीयाभावात्तादृशनियमार्थक एवकारो

---

वाक्यस्य तथाप्रयुक्तत्वेन समर्थनस्यानौचित्यात् । तथा सति युक्तत्वेन वक्तुमिष्टं वाक्यं युक्तमुक्तं स्यात्।

---

* अस्थानयुक्ततामाह—अस्थाने युक्तः सम्बन्धः। तत्र सम्बन्ध उपसंहारो विरुध्यते। सूत्रे अपदमुक्त इति पाठान्तरम्। तदा अपदे अस्थाने अर्थेन मुक्त इत्यर्थः। **आज्ञे**ति। बालरामायणे जनकं प्रति शतानन्दस्योक्तिरियम्। अत्र रावणपदेनैव अर्थान्तरसंक्रमिततया सर्वोद्वेजकत्वमुपस्थापयता नायं वरयोग्य इति विवक्षितोऽर्थः पर्य्यवस्यति । अतोऽत्रैव वाक्यसमाप्तिरुचिता। यत्तु क्व नु पुनरित्यादिदोषसमर्थनं तद् विवक्षितार्थस्य प्रातिकूल्यमावहति । ईप्सितस्यैव दोषसमर्थनमुचितं, नतु जिहासि-तस्य इति भावः।

अत्र विरुद्धप्रतीतिरेव दोषबीजम्। अतो नित्य एवायं दोषः । नच प्रकाशित-विरुद्धतान्तर्भावः। तस्य स्थानविशेषयोगमनपेक्ष्य प्रवृत्तेः । अत्र तात्पर्यविरुद्धस्यै-वाभिधानाच्च ।

§ बहुव्यापकं सामान्यम्। अल्पव्यापको विशेष इति । रत्ननिधेरिति सामान्ये वक्तव्ये हीरकनिधेरिति रत्नविशेषस्योक्तौ अविशेषे (सामान्ये) विशेषोक्तिरिति दोषः।

"[4]तरङ्गावलयस्तेन त्वं लावण्याम्बुवापिका ॥"

अत्रावृत्त एवेति नियमो न वाच्यः । (ट)

'यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः ।"

अत्र तमिस्रास्विति रजनीविशेषो वाच्यः । (ठ) †

"आपातसुरसे[3] भोगे निमग्नाः किं न कुर्वते ?"

अत्र आपात एवेति नियमो वाच्यः ॥ (ड) ×

ननु वाच्यस्यानभिधाने "व्यतिक्रमलवं" इत्यादावपेरभावः, इह चैवकारस्येति कोऽनयोर्भेदः ? अत्राह—नियमस्यावचनमेव पृथग् भूतम् नियमपरिवृत्तेर्विषय इति चेन्न । ( ढ )

तथा सत्यपि द्वयोः शब्दार्थदोषतायां नियमकाभावात् । तत्का गतिरिति चेत् "व्यतिक्रमलवम्" इत्यादौ शब्दोच्चारणानन्तरमेव दोषप्रतिभासः, इह

---

न युक्त इत्याह—**अत्रे**ति—नाभिरेवेत्येवं नाभिपदोत्तरमुचितस्यैवकारस्यावर्त्तोत्तरपातादस्थानस्थपदत्वं नाशङ्कनीयम् । नियमोक्त्विन विशेषात् तद्भेदस्य तत्र प्रवेशनीयत्वात् ।

( **वि, ठ** ) विशेषविपर्ययोक्तिमाह—**यान्ती**ति—निचोलो वस्त्रम् । **अत्रे**ति—तमिस्रायामेव नीलवस्त्रौचित्याद्रजनीविशेषरूपायास्तमिस्राया एवं वक्तुमौचित्येन ज्योत्स्नासाधारणरजन्युक्त्याऽनौचित्यमित्यर्थः ।

( **वि, ड** ) नियमविपर्ययोक्तिमाह—**आपाते**ति—ननु भोः किं न कुर्वते—अकार्यमेव कुर्वत एवेत्यर्थः । **अत्रे**ति—सर्वकालसुरसत्वे तन्निमज्जनं नाकार्यम्, अतः सर्वकालव्यावर्त्तनाय आपातत एवेति नियमो वाच्य इत्यर्थः ।

( **वि, ढ** ) अस्य वाच्यानभिधानाद् भेदमाशङ्कते—**नन्वि**ति—इह त्वेवकारस्येत्यत्राभाव इत्यन्वयः । अत्र समाधानसम्भवं दर्शयित्वा दोषान्तरं दर्शयितुमाह—**अत्र नियमस्ये**ति—अत्र नियमस्यावचनमेव पृथग् भूतं विशेषभूतं नियमपरिवृत्तेर्विषय इत्यर्थः । तथा च विशेषविषयपरिहारेणैव सामान्यं प्रवर्त्तते इति न्यायान्नित्यमभिन्नवाच्यानभिधानं तदर्थ इत्यर्थः । एतत्समाधानस्य सोढव्यत्वेन दोषान्तरमाह—**इति चेदि**ति—**द्वयोः शब्दार्थे**ति—एकः शब्ददोषोऽन्योऽर्थदोष इत्यत्रेत्यर्थः । नियामकाभावादित्यत्र नियामकाभाव एव दोषः इति पूरणीयम् । तत्का गतिरिति

---

(**लो, ढ**) नियमस्यावचनमेवापवादरूपमित्यर्थः । गमकाभावादेकजातित्वादिति भावः ।

---

† येन रूपेण न शक्तिस्तेन रूपेण बोधस्य कविविवक्षितत्वेऽवाचकत्वम् । अत्र च सामान्यरूपेणैव बोधः कविविवक्षितः, अतस्तस्माद्भेदः ।

× न्यूनपदत्वानभिहितवाच्यत्वयोः पदनिष्ठत्वात्ततोऽस्य भेदः । नियमो हि तदितरव्यपोहरूपः, स चार्थनिष्ठ एवेत्ययमर्थदोषः ।

1 'भङ्गश्च' ( क. ट. पु ) 2 'स्वरस' ( घ. च. पु. )

त्वर्थप्रत्ययानन्तरमिति भेदः । ( ढ )

एवञ्च शब्दपरिवृत्तिसहत्वासहत्वाभ्यां पूर्वैरादृतोऽपि शब्दार्थदोषविभाग एवं पर्य्यवस्यति । यो दोषः शब्दपरिवृत्त्यसहः सः शब्ददोष एव । यश्च पदार्थान्वय-प्रतीतिबोध्यः सोऽपि शब्ददोषः । यश्चार्थप्रतीत्यनन्तरबोध्यः सोऽर्थाश्रय इति । एवञ्चानियमपरिवृत्त[1]त्वादेरप्यधिकपदत्वादेर्भेदो बोद्धव्यः । अमतपरार्थत्वे तु "राममन्मथशरेण"इत्यादौ नियमेन वाक्यव्यापित्वाभिप्रायाद् वाक्यदोषता । अश्लीलत्वादौ तु न नियमेन वाक्यव्यापित्वम् । ( ण, ऊ )

---

तस्मात्क उपाय, इत्यर्थः । समाधत्ते—**व्यतिक्रमलवमित्यादाविति** । **शब्दोच्चारणा-नन्तरमेवेति** । व्यतिक्रमस्य लवमपि इत्येवमाकाङ्क्षया उच्चारणानन्तरमेव उदयति इति भावः । **इह त्विति** । आपातसुरस इत्यादिनियमविपर्ययोक्ताविल्यर्थः । **अर्थप्रत्यया-नन्तरमिति** । आपातसुरसत्वं प्रथमं प्रतीयते एव तदनन्तरमेव सर्वदा सुरसत्वव्यावृत्ति-रित्यर्थप्रतिसंधानमित्यर्थः ।

( **वि, ण** ) इदं चानुभवादुक्तम् । वस्तुतस्तु क्वाचित्कचिच्छब्दार्थदोषतायां शास्त्रकर्तुरिच्छैव नियामिकाऽन्यथा वाक्यगताविमृष्टविधेयांशे दुष्क्रमे च द्वयोरपि शब्दरचनावैपरीत्याधीनत्वेऽपि एकः शब्ददोषोऽन्योऽर्थदोष इत्यत्र का विनिगमना ? इत्थं स्वयमुक्तः शब्दार्थदोषतानियामकोऽपि क्वचित् व्यभिचरति । अप्रयुक्तत्वादिशब्द-दोषाणामर्थप्रतीत्यनन्तरमेव बोधात्, कष्टार्थत्वरूपार्थदोषस्य प्रथममर्थाप्रत्ययाच्छब्द एवार्थप्रत्यायक इति ज्ञानोदयाच्छब्दप्रतीत्यनन्तरमेव बोधाच्च । अतः प्राचीनैरुक्तो नियामकः क्वचिच्चास्मदुक्तो नियामक इति द्विविध एव नियामक इति वक्तुमाह—**एवञ्चेति** । पूर्वैरादृतस्य नियामकस्य पर्य्यवसाने एवं पर्य्यवस्यतीति । वक्ष्यमाणं तदेवाह—**शब्द-वृत्तिसह** इति । अत्रार्थसाम्ये इति शेषः । यथा 'पल्लवाकृतिरक्तोष्ठी' इत्यत्र पल्लवाका-रेति करणेऽपि शब्ददोष एव । निरर्थकश्रुतिकटवादिवर्णानां त्वर्थसाम्याभावान्नैतन्नियम-विषयत्वं, किन्तु शब्दोच्चारणानन्तरप्रतीयमानरूपस्योक्तनियमविषयत्वमेव । एवं हन्तीत्यस्यासमर्थेऽप्येष एव नियमः तमेव स्वोक्तनियमं दर्शयति—**यश्चार्थप्रतीत्यन-न्तरमिति** । अनियमपरिवृत्त्यादेरर्थदोषताऽधिकपदत्वादेः शब्ददोषता । इत्यत्राप्य-स्मदुक्तभेदकादेव देवभेदो बोध्य इत्याह—**एवञ्चेति** । अमतपदार्थत्वस्य वाक्यदो-षतानियामकमन्यदेवाह—**अमतेति** । वाक्यव्यापित्वं समस्तपद्यरूपवाक्यव्यापित्वम् ।

---

( **लो, ऊ** ) सहत्वासहत्वाभ्यामित्यनन्तरमेवेति शेषः । शब्दपरिवृत्तिसहत्वे यथा श्रुतिकटुन्यूनत्व-प्रतिकूलवर्णत्वादिः । पदार्थान्वयप्रतीतिपूर्वबोध्यो यथा न्यूनाधिकप-दत्वादिः । राममन्मथशरेण, इत्यादावित्यनन्तरमर्थप्रतीत्यनन्तरबोद्धव्यत्वेऽपि इति शेषः । **अश्लीलत्वादाविति**—हन्तुमेवेत्यादौ क्वचिद् वाक्यव्यापित्वेऽपि क्वचिद् विवरे-

---

1 'परिवृत्त्यादेः' ( ख. पु. )

"आनन्दितस्वपक्षोऽसौ परपक्षान् हनिष्यति।"

अत्र परपक्षं हत्वा स्वपक्षमानन्दयिष्यतीति विधेयम्। (त) ×

"चण्डीशचूडाभरण! चन्द्र! लोकतमोऽपह!
विरहिप्राणहरण! कदर्थय न मां वृथा॥"

अत्र विरहिण उक्तौ तृतीयपादस्यार्थो नानुवाद्यः। (थ) *

"लग्नं रागावृताङ्ग्या सुदृढमिह[1] ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।

---

अश्लीलार्थत्वे तु वाक्यव्यापित्वेऽप्यर्थान्वयव्यतिरेकानुविधानादर्थदोषत्वमिति हृदयेन वाक्यव्यापित्वं दर्शयति—**अश्लीलत्वादावि**ति। अर्थाश्लीलत्वादावित्यर्थः।

**(वि, त)** विध्ययुक्तत्वमाह—**आनन्दिते**ति। विधेयतात्पर्य्याप्त्ययोग्ये तात्पर्य्यार्पणं तत्त्वम्। अत्र परपक्षहननानन्तरमेव स्वपक्षानन्ददानविधावेव विधेयतात्पर्य्याप्त्यौचित्यं नतु परपक्षहननविधौ इत्यर्थः। न चात्र विधेयाविमर्श इति वाच्यम्। तत्र विधेयता न प्रतीयते अत्र तु प्रतीतिविधेयताके, तात्पर्य्याप्त्यनौचित्यमिति भेदात्।

**(वि, थ)** अनुवादायुक्ततामाह—**चण्डीशे**ति। अनुवाद्यविशेषणस्य विधिविरोधित्वं तत्त्वम्। चन्द्रं प्रति विरहिण्या उक्तिरियम्। हे चन्द्र मां वृथा न कदर्थय इत्यन्वयः। चण्डीशेत्यादिकमपि सम्बोधनत्रयं तदीयैककालायास्तथात्वात् स एव तथात्वेन सम्बोधितः। प्रथमविशेषणद्वयं तस्य महत्त्वप्रतिपादनाय। प्राणेत्यादितृतीयपदार्थस्तदनुपकारकरूपोऽयुक्त इत्यर्थः।

**(वि, द)** निर्मुक्तपुनरुक्तत्वमाह—**लग्नमि**ति—निर्मुक्तस्य समापितस्य कारकस्य पुनरुक्तिस्तत्त्वम्। समाप्तपुनरात्तता तु विशेषणस्याऽऽवृत्तिरूपैवेति भावः। **लग्न**मित्यादि। यस्य राज्ञः कीर्त्तिरम्बुधिं गता तत्पर्यन्तगामिनी तस्य कीर्त्तिरित्यर्थः।

---

षिण इत्यादौ पदनिष्ठत्वेऽपि सम्भवान्न वाक्यदोषतेत्यर्थः।

**(लो, ऋ) लग्नमि**ति—रागो रक्तः शोणिमा, अनुरागश्च। मातङ्गा गजाश्चाण्डालाश्च। पर उत्कृष्टः अन्य इति।

---

× विधेरयुक्तत्वम्, अविधेयस्यैव विधेयत्वेन कथनं तत्त्वम्। उदाहरणे तु परपक्षहननं स्वपक्षानन्दे हेतुः। अतः परपक्षं हत्वा स्वपक्षमानन्दयिष्यतीति प्राधान्येन बोधनीयमिति तस्यैव विधेयत्वं युक्तं नतु परपक्षहननस्येति। विवक्षितार्थस्याऽनिर्वाह एवाऽत्र दूषकताबीजम्। अविमृष्टविधेयांशे तु युक्तस्यैव विधिः, परं त्वविमर्शमात्रम्। अत्र तु अयुक्तस्यैव विधिरिति ततो भेदः।

* अनुवादः सिद्धस्य कथनम्। तस्य अयुक्तत्वं विधेयविरोधित्वम्। अत्र विरहिणः प्रार्थनायां विरहिप्राणदमनेति सम्बोधनम् अकदर्थनविधेर्विरोधि।

---

1 'मथ' (ख. ग. पु.)

तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद् गदितुमिति[1] [2]गतेवाम्बुधिं यस्य कीर्त्तिः ॥

अत्र विदितं तेऽस्तु इत्यनेन समापितमपि वचनं तेनेत्यादिना पुनरुपात्तम्।

अथ रसदोषानाह— (द, ऋ) *

**रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि ।**
**परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः ॥**
**आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः ।**
**अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः ॥**
**अङ्गिनोऽननुसन्धानमनङ्गस्य च कीर्त्तनम् ।**
**अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्य्ययः ॥**
**[3]अर्थानौचित्यमन्यच्चा[4] दोषा रसगता मताः ॥ ६ ॥ (ध) †**

---

अत्रोत्प्रेक्ष्यते—**श्रीनियोगाद्**इति । गदितुमिवेति समुद्रपुत्र्याः श्रियः स्वपितरि स्वभर्त्तुरपचारं गदितुं प्रेष्यायां कीर्त्तौ नियोगः । नियोगमाह—**लग्नमि**ति । ययासियष्ट्या स्त्रीलिङ्गशब्दार्थत्वेन उपस्त्रीत्वेनाऽध्यासितया अरिकण्ठ एव लग्नं कीदृश्या ? रागो रक्तिमा एव अनुरागस्तयाऽऽवृताङ्गया, तथा याऽसियष्टिरिह जगति मातङ्गानां हस्तिनामेव मातङ्गानां षिड्गानां उपरि पतन्ती परपुरुषैः शत्रुपुरुषैरेव प्रकृष्टपुरुषैर्दृष्टा । अनेन साक्षित्वं दर्शितम् । तत्सक्तस्तादृश्यामसन्नायिकायां सक्तोऽयं मम भर्त्ता राजा न किञ्चिद् भद्राभद्रं गणयति इति मे मम पितुः समुद्रस्य विदितमस्तु । तेन भद्राभद्राऽगणनेन भृत्येभ्योऽहं दत्तास्मीति गदितुमिवेत्यर्थः । असियष्टिसाहाय्येन शत्रुभ्यो भीत्यगणनेनाश्रितत्वाद् भृत्या अपि श्रीमन्तः कृता इति स्तुतिः । अत्रेतिवचनं कर्मकारकवचनं न किञ्चिद्गणयति इत्यन्तं हि वेदनीयं कर्मकारकम् । तच्च विदितं तेऽस्तु इत्यनेन समापितम् । तेनास्मि दत्ता इत्यपि वेदनीयकर्मकारकं पुनरुपात्तम् ।

(वि, ध) रसदोषानाह—**रसस्ये**ति । स्थायिसंचारिणोरपीत्यत्रापि स्वशब्देन उक्तिरित्यस्यान्वयः । **परिपन्थी**ति—प्रतिकूलरसाङ्गविभावाद्युक्तिरित्यर्थः । **आक्षेप** इति । अनुभावविभावयोः कृच्छ्रादत्यन्तप्रणिधानाद् आक्षेपः प्रत्यायनं दोषः कथित इत्यर्थः । अकाण्डे अनुचितकाले प्रथनच्छेदौ विस्तारत्यागौ रसस्य इति

---

* आदौ निर्मुक्तः (समाप्तः) पश्चात् पुनरात्तः पुनर्गृहीतः, तस्य भावः, समाप्तऽपि वाक्ये पुनः कारकान्तराभिधानम् । लोके हि त्यक्तस्य भक्ष्यादेः पुनरुपादानं वैरस्यमावहति तद्वदत्रैव । नित्योऽयं दोषः । समाप्तपुनरात्तस्तु विशेषणमात्रविषय इत्यनयोर्भेदः ।

† रसानां "शृङ्गार"इत्यादिना प्रोक्तानां शृङ्गारादीनां रसशब्देन शृङ्गारादिशब्देन

1 मिव (ख. ग. पु.) 2 'त्य' (ख. ग. पु.) 3 'अथा' (ङ. पु.) 4 'च' (ङ. पु.)

**रसस्य स्वशब्दो रसशब्दः शृङ्गारादिशब्दश्च । क्रमेण यथा—**

**"तामुदीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत ।**
**चन्द्रमण्डलमालोक्य शृङ्गारे मग्नमन्तरम् ॥"**

**स्थायिभावस्य स्वशब्दवाच्यत्वं यथा—**

**"अजायत रतिस्तस्यास्त्वयि लोचनगोचरे ।" (न)**

---

शेषः । अनङ्गस्य प्रकृतरसस्याऽनुपकारकस्य । **अर्थानौचित्यमि**ति—अन्यद्वा उक्ता-दन्यद्वा अर्थानौचित्यमित्यर्थः ।

( वि, न ) **तामुदीक्ष्ये**ति—अत्र पूर्वार्द्धे रसशब्दः परार्द्धे शृङ्गारशब्दो वाचकः । ननु श्रोतुरेव काव्यश्रवणाद् रसो जायते न तु स्वीयरत्यादिवक्तुः तत्कथमत्र स्वीयरतिवक्तूरसो वाच्य इति चेन्न । रसस्य इत्यत्र स्थायिभावस्येत्यर्थात् । न चैवं स्थायिनः स्वशब्दवाच्यतायाः पृथगुक्त्यनुपपत्तिरिति वाच्यम् । स्थायिभावस्यैव रसा-दिवाचकरसशब्देन स्थायिभावशब्देन उक्तिरित्येवं वाचकशब्दभेदादेव पृथगुक्तेः । अत एव रसशब्देनात्र स्थायिभाव एव उक्त इति । "रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः" इति च काव्यप्रकाशकृता लिखितम । स्थायिभाववाचकशब्देन वाच्यता-माह—**अजायते**ति ।

---

कथने, तथैव "रतिर्हास" श्चेत्यादिना प्रोक्तानां स्थायिभावानां स्थायिभावशब्देन रत्यादि-शब्देन वा कथने, तथैव "निर्वेदग्लानी" त्यादिना कथितानां व्यभिचारिणां व्यभिचा-रिशब्देन निर्वेदादिशब्देन वा कथने त्रयो दोषाः । वाच्यत्वाभिसन्धानेन शब्दप्रयोग एव दोषः । तदनभिसन्धाने तु न दोषः । यथा—"शृङ्गारः सखि मूर्त्तिमानिव मधौ मुग्धो हरिः क्रीडति ।" इत्यादौ । अन्वयव्यतिरेकाभ्यामनुभावादिद्वारैवोपस्थितिः एतेषां चमत्कारिणी नतु स्वशब्देनेति भावः । परिपन्थिनः व्यङ्ग्यरसापेक्षया प्रति-कूलस्य प्रतिग्रहः उपनिबन्धः । यथा शृङ्गाररसे शान्तरसस्य विभावादेरुपनिबन्धः । कृच्छ्रात् कष्टानुसन्धेयप्रकरणादिपर्यालोचनया । अकाण्डे अनवसरे । प्रथनं विस्तारः: अस्य प्रस्तुततिरोधायकतया दूषकता । छेदः विच्छेदकरणम्, अन्तरे त्याग इत्यर्थः । तथा रसस्य पुनः पुनः दीप्तिः वर्णनम् । अनङ्गस्य प्रकृतरसस्य अनुपकारिणः अङ्गिनः अधिकारिणः प्रसङ्गत्यागः । अङ्गस्य अनधिकारिणो विस्तारः । अस्य अङ्गिप्रकर्षकत्वे पुनरदोषता तथा च दण्डी—"वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि । तज्जयान्नाय-कोत्कर्षकथनं च धिनोति नः॥" प्रकृतीनां धीरोदात्तादीनाम् । अर्थानौचित्यमन्यद् तदुक्तं ध्वनिकृता—

"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत् परा ॥"

---

1 '०मुद्वीक्ष्य' ( ख. पु. )

व्यभिचारिणः स्वशब्दवाच्यत्वं यथा—

"जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने।"

अत्र प्रथमे पादे "आसीन्मुकुलिताक्षी सा" इति लज्जाया अनुभावमुखेन कथने युक्तः पाठः। (प, ऋ)

"मानं मा कुरु तन्वङ्गि! ज्ञात्वा यौवनमस्थिरम्।"

अत्र यौवनास्थैर्य्यनिवेदनं शृङ्गाररसस्य परिपन्थिनः शान्तरसस्याङ्गं शान्तस्यैव च विभाव इति शृङ्गारे तत्परिग्रहो न युक्तः। (फ, लृ)

---

(वि, न) **व्यभिचारिण** इति—भावताप्राप्तियोग्यस्येति शेषः। तत्प्राप्तिश्च निराकाङ्क्षवाक्यव्यङ्ग्यत्वे सत्येव जायते। अत्र लज्जावत्त्वस्य विधेयस्य निराकाङ्क्षवाक्यबोध्यत्वेन भावताप्राप्तियोग्यता अस्त्येव। तस्य स्वशब्दवाच्यत्वात्तु दोषः। साकाङ्क्षवाक्यबोध्यत्वे भावताप्राप्तियोग्यतामनापन्नस्य तस्य स्वशब्दवाच्यत्वं न दोषः। यथा—'लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता' इत्यत्र चुम्बने विधेयेऽनुवाद्यविशेषणस्य लज्जाया भावताप्राप्तियोग्यतामनापन्नायाः स्वशब्देनोक्तिर्न दोषः।

(वि, फ) परिपन्थिरसाङ्गविभावपरिग्रहमाह—**मानमि**ति। यन्निष्ठः स्थायिभावः सामाजिके रसतामापद्यते प्रकृतरसपरिपन्थिरसविभावस्य तदुक्त्यैव प्रत्यायनं दोष इत्यर्थः। **मानं मा कुरु** इति—अत्र सामाजिके रसतामापद्यमाना रतिः स्थायिभावो वक्तृनिष्ठस्तत्प्रतिकूलशान्तरसविभावो यौवनास्थैर्यमिदं तेनैवोक्तमित्याह—**अत्रे**ति। एवं च "त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं च तुरं वयः। परभृताभिरितीव निवेदिते स्मरमतेऽरमतेष्टसखीजनः"। इति रघौ यौवनास्थैर्यकथनं न दोषः। अत्रेष्टसखजननिष्ठरतिभाव एव सामाजिके रसतामापद्यते। नत्विष्टसखजनेन यौवनास्थैर्यमुक्तं किन्तु परभृताभिरित्यदोषः अत्रैव यौवनास्थैर्योक्तिरेव परिपन्थ्यनुभावो ग्रन्थकृदनुक्तोऽपि बोध्यः।

---

(लो, ऋ) **अनुभावमुखेन कथन** इति—व्यभिचारिणो हि स्वस्वानुभावव्यक्ता एव सहृदयानामास्वाद्याः। इह च यत्रैकत्र व्यभिचारिणामनुभावमुखेन वर्णनं स्वशब्देन त्वभिधानं; तत्र न रसादिमात्रदोषः। किन्तु अधिकपदाख्यो वाक्यदोषोऽपि। यथा—

"लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता" इति।

(लो, लृ) शृङ्गारे प्रतिकूल इत्यर्थः। विभावादेरित्यादिशब्दादनुभावसञ्चारिणौ। तत्र प्रतिकूलानुभावपरिग्रहो यथा—

"सुरतोत्सुकमालोक्य मृगाक्षी पथिकं पथि।
निर्मुक्तसर्वविषया प्रययौ विपिनान्तरम्॥"

"धवलयति शिशिररोचिषि भुवनतलं लोकलोचनानन्दे ।
ईषत्क्षिप्तकटाक्षा स्मेरमुखी सा निरीक्षिता[1] तन्वी ॥"

अत्र [2]रसस्योद्दीपनालम्बनविभावावनुभावपर्य्यवसायिनौ स्थिताविति कष्टकल्पना । ( ब, ए ) *

"परिहरति रतिं, मतिं लुनीते,
स्खलतितरां, परिवर्त्तते च भूयः ।
इति बत विषमा दशास्य देहं
परिभवति प्रसभं किमत्र कुर्मः ॥"

अत्र रतिपरिहारादीनां करुणादावपि सम्भवात् कामिनीरूपो विभावः कृच्छ्रा-

---

**( वि, ब )** अनुभावस्य कष्टकल्पनयाप्रकाशमाह—**धवलयती**ति । **निरीक्षिते**ति । अर्थात् पुंसा । उद्दीपनं चन्द्रः । आलम्बनं नायिका । अनुभावस्य„सहर्षचक्षुःप्रसारणस्य पर्यवसायिनौ प्रणिधानातिशयेनैव बोधकौ इत्यर्थः । द्रष्टुः शान्तत्वे वैराग्येण चक्षुर्निमीलनस्यापि सम्भवात् । प्रकरणप्रतिसन्धानकृच्छ्रेण तु उक्तानुभावप्रकाशः ।

**( वि, भ )** विभावस्य कृच्छ्रात् कल्पनमाह—**परिहरती**ति । परिहरतीत्यादौ सर्वत्र पुमान् कर्त्ता । बत खेदे इत्यस्य विषमा दशा अस्य देहमित्यन्वयः । प्रसभं बलात् । **अत्रे**ति—अत्रापि प्रकरणप्रतिसन्धानकृच्छ्रगम्यम् ।

---

अत्र निर्मुक्तसर्वविषयतया वनगमनं शान्तरसानुभावः । अन्यथा तु वनगमनं क्वचित् क्वचिदभिसारादिना गुणः । एवं व्यभिचारिणोऽपि ।

**(लो, ए) अनुभावपर्यवसायिनौ** इति । रसपर्यवसायित्वे कटाक्षक्षेपणादेरनुभावत्वं सुव्यक्तं भवेत् । इह च कटाक्षक्षेपणादीनि तस्या नायकविषयत्वरत्युद्बोधकार्याणि अत्रान्येन केन सहोपपन्नानि झटित्यनिश्चितप्रतीतिकारणत्वात् । यद्वा कस्यचिन्नायकस्य निरीक्ष्यमाणो रूपानुभावः तस्या रत्युद्बोधको न जात इति कटाक्षाक्षेपविक्षेपविभावयोः शृङ्गाररसपर्यवसानाऽभावादित्यर्थः ।

---

* अत्र सेति प्रक्रान्तपरामर्शिना तच्छब्देन यदि तयोस्तादृशमभिलाषादि प्रकरणमासूचितं स्यात्तदा प्रत्येतुं शक्यते इत्यनुभावानां कल्पना क्लिष्टा, यतः सत्स्वपि विभावेषु अनुभावं विना स्थायिनो न प्रतिपत्तिः । कार्येण हि अविनाभावबलात् झटिति कारणमाक्षिप्यते न तु कारणेन कार्यम् । ईषत्क्षिप्तेत्यादिरूपवर्णनमात्रं नत्वनुभावः । वस्तुतोऽत्र नायकनिष्ठ एव शृङ्गारो व्यञ्जनीयः । न च नायकनिष्ठः कश्चिदनुभाव उपात्तः न वा विभावेन झटित्याक्षेपगम्यः ।

1 '–क्ष्यतां' इति ( क. ख. पु. ) 2 'शृङ्गारस्य' ( च. पु. )

दाक्षेप्यः । ( भ ) ¶

अकाण्डे प्रथनं यथा—वेणीसंहारे द्वितीयेऽङ्के प्रवर्त्तमानानेकवीरसङ्क्षये काले दुर्योधनस्य भानुमत्या सह शृङ्गारप्रथनम् । *

छेदो यथा—वीरचरिते राघवभार्गवयोर्धाराधिरूढे[1] संग्रामे "कङ्कणमोचनाय गच्छामि" इति राघवस्योक्तिः । ( म ) ×

पुनः पुनर्दीप्तिर्यथा—कुमारसम्भवे रतिविलापे । ( य, ऐ ) †

---

( **वि, म** ) कङ्कणमोचनं विवाहोत्तरमाङ्गल्यक्रियाविशेषः ।

( **वि, य** ) **रतिविलाप** इति—

"अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्द्धजा समदुःखामिव कुर्वती स्थलीम् ॥"

इत्युपक्रम्य प्रवर्त्तिते धारावाहिके करुणरसे मधौ दृष्टे—

"तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।"

इति विशिष्य पुनर्दीप्तिः ।

---

( **लो, ऐ** ) **रतिविलापे**ति—अथ मोहपरायणा सतीत्यादिना परिपुष्टिमागतस्यापि करुणस्य "अथ सा पुनरेव विह्वला" इत्यनेन कण्ठपरिपूर्णभोज्यस्य पुनर्भोज्यदानेन वैरस्यम् ।

---

¶ रतिं वस्तुनि स्पृहाम् । मतिम् अर्थनिर्द्धारणम् । अत्र नायकनिष्ठविप्रलम्भशृङ्गारस्य आलम्बनविभावो कामिनीरूपस्तु न वर्णितः । अत्र वर्णितानामनुभावानां रसान्तरे सम्भवात्प्रकरणाद्यनुसन्धानेन कष्टेन कल्पनीयः । करुणादावित्यादिपदेन व्याधिपरिग्रहः । कामवशात् शोकवशाद् वेति प्रकरणानुसन्धानरूपयत्नप्रतिपाद्यः ।

* यद्यपि शृङ्गारो न वीररसविरोधी, तथाप्यनवसरे तद्वर्णनं वीराननुगुणत्वादनुचितमिति दोषः । वीराणां विनाशसमये करुणवीरादिरेवास्वाद्यते नतु शृङ्गारः ।

× धाराधिरूढे—अनवच्छिन्नप्रसारितया प्रवृत्ते । संग्रामे इति पदं स्थायिभावपरम् । सामाजिकनिष्ठ एव रसो न त्वभिनयनिष्ठः । ईदृशावसरे महावीरस्य रामचन्द्रस्य विषयान्तरसञ्चारो न युक्तः । तादृशोक्तिव्याजेन गमनं रामचन्द्रस्य नायकस्य अवीरत्वं प्रकाशयति ।

† तथा चोक्तं ध्वनिकृता—"उपयुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनः पुनः परामृश्यमानः परिम्लानकुसुमकल्पः कल्प्यते । परिपाकं गतस्यापि पौनःपुन्येन दीपनम्; रसस्य स्याद् विरोधाय ।" इति

1 '–ढेऽन्योन्यसंरम्भे' ( क. ग. पु. )

अङ्गिनोऽननुसन्धानं यथा—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः। (र) *

अनङ्गस्य कीर्त्तनं यथा—कर्पूरमञ्जर्यां राजनायिकयोः स्वयं कृतं वसन्तस्य वर्णनमनादृत्य वन्दिवर्णितस्य प्रशंसा।

अङ्गस्यातिविस्तृतिर्यथा—किरातार्जुनीये सुराङ्गनाविलासादिः। (ल) +

प्रकृतयो दिव्या, अदिव्या, दिव्यादिव्याश्चेति। तेषां धीरोदात्तादिता, तेषामप्युत्तमाधममध्यमत्वम्। (ओ)

तेषु च यो यथाभूतस्तस्यायथावर्णने प्रकृतिविपर्ययो दोषः। यथा—धीरोदात्तस्य रामस्य धीरोद्धतवत् छद्मना वालिवधः। यथा वा—कुमारसम्भवे उत्तमदेवतयोः पार्वतीपरमेश्वरयोः सम्भोगशृङ्गारवर्णनम्। "इदं पित्रोः सम्भो-

---

(वि, र) **सागरिकाया विस्मृतिरि**ति—सागरिका रत्नावली। तन्नाटकेऽङ्गिनी।

(वि, ल) **अनङ्गस्ये**ति—प्रकान्तरसानुपकारकस्येत्यर्थः। **वन्दिवर्णितस्ये**ति। राज्ञा इति शेषः। किरातार्जुनीये भारवौ।

(वि, व) दिव्या इत्यादिषु दिव्यादिर्नायिकाया इत्यर्थः। दिव्या-देवाः अदिव्या मनुष्याः। दिव्यादिव्या देवावतारा मानुषाः तदीयाः प्रकृतय इत्यर्थः। अर्थानौचित्यमन्यद्वेति यदुक्तं तद्दर्शयति—

---

(लो, ओ) प्रकृतिविपर्ययाख्यं दोषं च व्याचष्टे—**प्रकृतय** इत्यादि। दिव्या महेन्द्रादयः श्रीकृष्णादयश्च। अदिव्या दुष्म(ष्य)न्तादयः। दिव्यादिव्याः श्रीरामचन्द्रादयः इत्यादि प्रागेव उक्तम्। धीरोदात्तादीनाम् अन्यतमाश्रयत्वस्य सम्भवेऽपि प्रायेण वीरादिप्रधानत्वमेव। तेषां लक्षणानि उक्तानि।

(लो, औ) उत्तमदेवतयोः शृङ्गाररसवर्णनमनुचितमिति यदुक्तं तत्रायमेवाशयः। ये ये शृङ्गारव्यञ्जकाः रहस्यार्थाः पित्रोर्वर्णयितुमनुचितास्ते उत्तमदेवतानिष्ठा न वर्णनीयाः अन्यथा रघुवंशे रावणवधानन्तरं स्वराज्यमभिनिवृत्तस्य रामचन्द्रस्य

---

* अङ्गिनः प्रधानस्य नायकस्य नायिकाया वा। बाभ्रव्यस्य कञ्चुकिनः आगमने विजयचूडाकर्णने सागरिकाया नायिकाया नाममात्रस्याऽग्रहणम्। यदा अङ्गी नोपादीयते तदा वैचित्र्यं नानुभूयते।

+ अङ्गस्य—अप्रधानस्य प्रतिनायकादेः। यद्यपि

"वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि।
तज्जयान्नायकोत्कर्षकथनं च धिनोति नः॥"

इत्युक्तं तथापि यावता वर्णितेन नायकोत्कर्षविश्रान्तिरासाद्यते तावदेव वर्णनीयं न तु प्रतिनायकस्य मधुपानजलविहारादिकमपि। तद्वर्णनस्य प्रधाननायकतिरोधानतया दोषत्वमिति भावः।

गवर्णनमिवात्यन्तमनुचितम्" इत्याहुः[1]। (व, औ)

**अन्यदनौचित्यं देशकालादीनामन्यथा यद्वर्णनम्। तथा सति हि काव्यस्यासत्यताप्रतिभासेन विनेयानामुन्मुखीकारासम्भवः।** (श, अ) *

**एभ्यः पृथगलङ्कारदोषाणां नैव सम्भवः॥ ७॥**

(**वि, श**) **अन्यदनौचित्यमि**ति—**देशकाले**ति। दिवि मानुषभाषावर्णनं देशानुचितम्। एकर्तौ अन्यर्तुधर्मवर्णनं कालानुचितम्।

(**वि, ष**) इति दोषानुक्त्वाऽलङ्कारदोषा अपि एष्वेवान्तर्भवन्ति इत्याह-**एभ्यः पृथगि**ति।

---

गीतासम्वादवर्णनं तादृशं वान्यन्महाकविनिष्ठत्वमनुचितं स्यात्। अनुचितमेव सकलमहाकवीनां प्रबन्धेषु तथा तथा वर्णनमसमञ्जसं स्यात्। एवमदिव्यानां स्वःपातालगमनसमुद्रलङ्घनादिः। एतद्वस्तु महानुभावकुवलयाश्वादेर्यद् वृत्तमितिहासादिप्रसिद्धं वर्णनीयमेव। अन्यथा वर्णनस्यैव दोषावहत्वात्। एवमन्यस्यापि कृत्यानौचित्यस्य वर्णने प्रकृतिविपर्य्ययाख्यो दोषो बोद्धव्यः।

(**लो, अ**) अन्यदनौचित्यं दर्शयति–**अन्यदि**ति–देशकालादिरित्यादिशब्देन नायिकायाः पादप्रहारादिः। नायकस्य कोपः। बालाया धाष्ट्र्यम्। प्रौढाया वेश्यायाश्चातिलज्जा। प्रतिनायकस्य अन्वयत्वम्। तथा चाह—

> वंशवीर्य्यश्रुतादीनि वर्णयित्वा रिपोरपि।
> तज्जयान्नायकोत्कर्षकथनं हि धिनोति नः॥ इति।

एवं देवतानामवयवानां शिर आरभ्य वर्णनम्। तेषां शिर आराध्यत्वे पादारब्धवर्णनम् एव इष्यते। मनुष्याणां न पादारब्धवर्णनं तेषां शिर आरभ्य वर्णनस्यैव इष्टेः। एवमनयैव दिशा सकलमनौचित्यं रसभङ्गकारणं प्रयत्नेन सुकविभिः परिहार्य्यम्। यदुक्तं ध्वनिकृता—

> अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
> औचित्योपनिबन्धस्तु रसस्योपनिषत्परा॥

(**लो, आ**) ननु यद्येत एव दोषास्तदा प्राचीनोक्ताः पुनरलङ्कारदोषा इत्याह। **एभ्यः** इत्यादिभ्य इति। कथं तेभ्योऽपृथगित्याह—

---

* "यत्तत्रानुचितं किञ्चिन्नायकस्य रसस्य च।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्॥"

1 'इत्याहुः', इत्यनन्तरम्, "ध्वनिकारादयः। तस्मादभिनेयार्थे च काव्ये यदुत्तमप्रकृते राजादेरुत्तमप्रकृतिभिर्नायिकाभिः सह ग्राम्यसम्भोगवर्णनं तत्पित्रोः सम्भोगवर्णनमिव सुतरामसह्यम्। तथैवोत्तमदेवताविषयम्। (ध्वन्यालोके (३. १४ इत्यत्र)" इत्याधिकः पाठः।

एभ्य उक्तदोषेभ्यः। ( ष, आ ) तथा हि—उपमायामसादृश्यासम्भवयोरुपमानस्य जातिप्रमाणगतन्यूनत्वाधिकत्वयोरर्थान्तरन्यासे उत्प्रेक्षितार्थसमर्थने चानुचितार्थत्वम्। ( स )

**क्रमेण यथा—**

"ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्।" (इ)

"प्रज्वलज्जलधारावन्निपतन्ति शरास्तव।" (ह) (ई)

"चण्डाल इव राजासौ संग्रामेऽधिकसाहसः।"

---

**( वि, स )** अत्र यो यदलङ्कारदोषो यत्रान्तर्भवति तदाह—**उपमायामि**ति। असादृश्यम्—उपमानोपमेययोः सादृश्याभावः। असम्भवश्चोपमानाप्रसिद्धिः। **जातिप्रमाणे**ति। प्रमाणं परिमाणम्। उपमेयजात्यपेक्षया उपमानजातेरुपमेयपरिमाणापेक्षयोपमानपरिमाणस्य चात्यन्तन्यूनाधिकत्वयोरनुचितार्थत्वमित्यर्थः। एवमुत्प्रेक्षितार्थस्यार्थान्तरन्यासेन समर्थने च तदैव दोषस्तस्यानुचितार्थत्वमित्यर्थः। ननु पशुभूतः रणाध्वरे इत्यत्र शूराणां कातरत्वव्यञ्जनया तेषां निन्दाव्यञ्जनमेवानुचितार्थत्वं दर्शितम्। असादृश्यासम्भवयोरुत्प्रेक्षितार्थसमर्थने न एतादृशमनौचित्यं किन्तु प्रतिपाद्यमानार्थालीकत्वमेवानौचित्यं वाच्यं तथा च कथमुभयसाधारणमनौचित्यम्। यदि च औचित्याभाव एव तर्हि इत्युच्यते तदा समस्तदोषाणामेव अनुचितत्वेनैतस्य दोषविशेषत्वानुपपत्तिरिति चेत्सत्यम्। दोषान्तरलक्षणानाघ्रातत्वे सति औचित्याभाव एव तल्लक्षणम्।

**( वि, ह )** **क्रमेणे**ति—ग्रथ्नामीत्यत्र असादृश्यम्। काव्यं शशीव इत्युपमा। अत्र रूपकत्वेऽपि स एव दोषस्तस्यापि सादृश्यमूलत्वाद् उपमानासम्भवे—**प्रज्वलदि**ति—प्रज्वलन्त्यो जलधारा ह्यप्रसिद्धाः। नन्वत्राभूतोपमा स्यादिति चेन्न, सम्भावनयाऽपि यत्रोपमानप्रसिद्धिस्तत्रैवाभूतोपमात्वात्। यथा—

सर्वपद्मप्रभासारः समाहृत इव क्वचित्।
त्वदाननं विभातीति तामभूतोपमां विदुः॥

इत्यत्र दण्डिना क्वचित्पदेन स्रष्टुर्विधेः क्वचित् सर्वपद्मप्रभाहरणसम्भावनां प्रदर्श्य तादृशोपमानेनाऽभूतोपमा दर्शिता। अत एव बालप्रवालविटपप्रभवा लतेव इत्यत्रापि वटादिविटपे लतादर्शनात् प्रवालविटपे लतां सम्भाव्य तदुपमा कृता। प्रकृते तु जले ज्वलनस्य सर्वथा बाधात् प्रज्वलज्जलधारायाः सम्भावनाऽशक्यत्वात्।

**( वि,क)** उपमेयजात्यपेक्षयोपमानजातेरत्यन्तन्यूनत्वमाह—**चण्डाल इवे**ति।

---

**( लो, इ )** **तथा ही**ति—अत्र काव्यस्य शशिना न सादृश्यम्।

**( लो, ई )** जलधाराणां प्रज्वलनम् असम्भवि।

---

यथा—छद्मना वालिवधो मायुराजेनोदात्तराघवे नाटके परित्यक्तः। वीरचरितनाटके भवभूतिना तु रावणसौहार्दाद् रामवधार्थमागतो वाली रामेण हत इत्यन्यथाकृतः

"कर्पूरखण्ड इव राजति चन्द्रबिम्बम्।" (क)
"हरवन्नीलकण्ठोऽयं विराजति शिखाबलः।"
"स्तनावद्रिसमानौ ते।" (ख, उ)
"दिवाकराद्रक्षति यो गुहासु
लीनं दिवा भीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैःशिरसां सतीव॥"

एवमादिषूत्प्रेक्षितार्थस्यासद्भूततयैव[1] प्रतिभासनं स्वरूपमित्यनुचितमेव तत्समर्थनम्। (ग, ऊ)

यमकस्य पादत्रयगतस्याप्रयुक्तत्वं दोषः। यथा—

सहसालिजनैः[2] स्निग्धैः सहसा कुञ्जमन्दिरम्।
उदिते रजनीनाथे सहसा याति सुन्दरी॥ (घ, ऋ) +

अत्र राजजात्यपेक्षया चण्डालजातेरत्यन्तन्यूनत्वम्। उपमानपरिमाणापेक्षयोपमानपरिमाणस्यात्यन्तन्यूनत्वमुदाहरति—**कर्पूर** इति।

(वि, ख) एवं जातिपरिमाणयोराधिक्यमप्याह—**हरवदि**ति। **स्तनावि**ति च। शिखाबलो मयूरः। अवस्थाभेदेन हरशरीरस्यानेकव्यक्तित्वात् हरत्वमपि जातिः शिखाबलत्वापेक्षयाधिका।

(वि, ग) अर्थान्तरन्यासेनोत्प्रेक्षितार्थसमर्थनमाह—**दिवाकरादि**ति। यो हिमालयो गुहासु लीनमन्धकारं दिवाकराद् रक्षति। अत्रोत्प्रेक्षते—**भीतमिवे**ति। अत्रार्थान्तरन्यासमाह—**क्षुद्रोऽपी**ति। उच्चैः शिरसां महिम्ना उच्चमौलीनामर्थान्महताम् उच्चैः शिखराणां च। अत्र दोषं दर्शयति—**एवमादिष्वि**ति। समर्थनम्—सत्यत्वेन प्रतिपादनम्। तमसो भयं च सर्वथैवालीकमुत्प्रेक्षितम्। कथं तस्यार्थान्तरन्यासेन सत्यतया प्रतिपादनमित्यर्थः।

(वि, घ) **सहसे**ति—सा सुन्दरी नायिका स्निग्धैरालिजनैः सह सहसा

(लो, उ) राज्ञश्चण्डालेन, चन्द्रस्य कर्पूरखण्डेन, हरस्य नीलकण्ठेन, स्तनयोश्चाद्रिणा च साम्यम्।

(लो, ऊ) दिवाकरादौ चोत्प्रेक्षितार्थस्य समर्थनेऽनौचित्यं दर्शयति—**उत्प्रेक्षितार्थस्ये**त्यादि। असद्भूततयैव प्रतिभासनम्, सम्भावनविषयत्वादित्यर्थः। दिवाभीत उल्लूकः। अथ वा—दिवा दिवसाद्भीतमित्यन्धकारविशेषणम्। यो हिमालयः, शिरः शृङ्गं मूर्धा वा।

+ "यमकं तु विधातव्यं न कदाचिदपि त्रिपात्" इति निषेधात्।

1 '०स्यासम्भूततयैव–' (क. ख. पु.) 2 '–०भिजनैः–' (क. ख. पु.)

उत्प्रेक्षायां यथाशब्दस्योत्प्रेक्षाद्योतकत्वेऽवाचकत्वम् । ( ऋ ) यथा—

"एष मूर्तो यथा धर्मः क्षितिपो रक्षति क्षितिम् ।" ( ङ )

एवमनुप्रासे वृत्तिविरुद्धस्य प्रतिकूलवर्णत्वम् । यथा—'ओवट्टइ उल्लट्टइ' इत्यादौ । ( च, लृ )

उपमायाञ्च साधारणधर्मस्याधिकन्यूनत्वयोरधिकपदत्वं न्यूनपदत्वञ्च । (छ) क्रमेणोदाहरणम् ।

"नयनज्योतिषा भाति शम्भुर्भूतिसितद्युतिः ।
विद्युतेव शरन्मेघो नीलवारिदखण्डधृक् ॥"

अत्र भगवतो नीलकण्ठत्वस्याप्रतिपादनाच्चतुर्थपादोऽधिकः । (ज, ए )

"कमलालिङ्गितस्तारहारहारी मुरं द्विषन् ।
विद्युद्विभूषितो नीलजीमूत इव राजते ॥"

अत्रोपमानस्य सबलाकत्वं वाच्यम् । ( झ, ऐ ) अस्यामेवोपमानोपमेययो-

---

गस्मिता उदिते रजनीनाथे सहसा तत्क्षणं कुञ्जमन्दिरं यातीत्यर्थः ।

( वि, ङ ) **उत्प्रेक्षाद्योतकत्व** इति—उत्प्रेक्षाभिधानार्थ प्रयुक्तत्व इत्यर्थः । **एष** इति । धर्मः पुण्यं तस्य मूर्त्यभावात्तदुत्प्रेक्षा न तु धर्मरूपदेवतोपमा, तदा मूर्तित्वविशेषणवैयर्थ्यापातात् ।

( वि, च ) **एवमि**ति । वृत्तिविरोधस्तद्रसप्रतिकूलवर्णानां स्थितिः । 'ओवट्ट' इत्यादिकं प्राग् व्याख्यातम् ।

( वि, छ ) **साधारणधर्मस्ये**ति । उपमेयेऽनिर्दिष्टधर्मसमानधर्मस्योपमाने निर्देशोऽधिकत्वम् । उपमेये निर्दिष्टधर्मसमानधर्मस्योपमानेनुपादानं न्यूनत्वम् ।

( वि, ज ) **नयनज्योतिषे**ति—अत्र शम्भुरुपमेयः । शरन्मेघ उपमानम्, नयनज्योतिर्विद्युत् । भूतिसितत्वशारदीयलब्धशुभ्रत्वयोश्च समानधर्मयोरस्त्येव निर्देशः । किन्तु शम्भोरुपमेयस्य नीलकण्ठत्वानुपादानात्तत्समानधर्मनीलवारिदो-त्वादेरुपमाने शरन्मेघे आधिक्यमाह—**अत्रे**ति । समानधर्म एवायं नियमः । धर्मान्तरोपादाने तु नाधिक्यम्: यथात्रैव नभोमण्डलमध्यम इति चतुर्थपादकरणे ।

( वि, झ ) न्यूनत्वमाह—**कमले**ति । कमलया लक्ष्म्या आलिङ्गितः, उज्ज्वलहारवांश्च मुरं द्विषन् मुरारी राजते । विद्युद्विभूषितो नीलजीमूत इव इत्यर्थः । अत्र

---

( लो, ऋ ) आलिजनैः सह सार्धं सहसा वेगेन सहसा हसेन सह वर्तमाना ।

( लो, ॠ ) यथाशब्दो हि इवादिशब्दवन्नोत्प्रेक्षाया वाचकः ।

( लो, लृ ) वृत्तिः नियतवर्णगतो यो रसविषयो व्यापारः ।

( लो, ए ) सबलाकत्वं वाच्यम् ।

( लो, ऐ ) उपमेयस्य तारहारत्वस्य वचनात् ।

लिङ्गवचनभेदस्य कालपुरुषविध्यादिभेदस्य च भग्नप्रक्रमत्वम् । ×

क्रमेणोदाहरणम्-"सुधेव विमलश्चन्द्रः"। "ज्योत्स्ना इव सिता कीर्त्तिः।" (ञ)

काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेशयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥"

अत्र तथाभूतचित्राचन्द्रमसोः शोभा न खल्वासीत् अपि तु सर्वदापि भवति। ( ओ )

"लतेव राजसे तन्वि !"

अत्र लता राजते त्वं तु राजसे । ( ट )

" चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा । "

अत्र मार्कण्डेयमुनिर्जीवत्येव न खल्वेतदस्य जीवत्वित्यनेन विधेयम् । (ठ)

इह तु यत्र लिङ्गवचनभेदेऽपि न साधारणधर्मस्यान्यथाभावस्तत्र न दोषः।

---

लक्ष्मीस्थानीया विद्युत् हारस्थानीयाया बलाकाया न्यूनत्वमिति भङ्गया प्रतिपादयति—**अत्रे**ति ।

( वि, ञ ) **अस्यामेवे**ति । उपमायामेवेत्यर्थः । **भग्नप्रक्रमत्वमि**ति । यल्लिङ्गेन एकद्व्यादियद्वचनेन चोपमेयोक्त्युपक्रम उपमानस्यापि तल्लिङ्गकत्वेन तद्वचनेन चोक्तिराकाङ्क्षिता तथात्वानुक्तौ क्रमभङ्ग इत्यर्थः । एवं वर्त्तमानादिकालभेदस्य च भग्नप्रक्रमत्वमित्यर्थः । आकाङ्क्षितरूपेणानभिधानात् । सुधेव इत्यत्र स्त्रीपुंलिङ्गभेदः । ज्योत्स्ना इव इत्यत्र वचनभेदः ।

( वि, ट ) कालभेदे त्वाह—**काप्यभिख्ये**ति । तयोर्दिलीपसुदक्षिणयोरभिख्या शोभा चित्राचन्द्रमसोः चैत्रे योगः । न खलु आसीत् इति सार्वदिकशोभासत्त्वे अतीतत्वेन तद्विवक्षाभावात्। लतेवेत्यत्र पुरुषभेदः, लता राजते इत्येव सम्भवात्।

( वि, ठ ) चिरं जीवत्वित्यत्र विधिभेदः । अयं च स्वल्प एव दोषः व्यत्ययेन अन्वयसम्भवात् । अत एव सर्वत्र काव्ये ईदृश एव प्रयोगः ।

---

(लो, ओ ) अस्यामुपमायां सर्वदापि भवतीत्यनेन उपमानोपमेययोः कालभेदः।

(लो, औ) **इह त्वि**ति—अयमर्थः—यत्र लिङ्गादिभेदे हि साधारणधर्मोऽभिन्न उपमानोपमेययोर्द्वयोरपि सम्बन्धमापाद्यते तत्र न प्रतीतिं स्थगयति ।

---

× उपमानोपमेययोर्लिङ्गवचनादिभेदे सति साधारणधर्मवाचकं पदं यस्य ( उपमानस्य उपमेयस्य वा ) लिङ्गवचनानुसारि स्यात् तेनैव तस्यान्वयो नतूभाभ्याम् । अत उभयत्र उपमानोपमेययोरन्वयाभावे साधारणधर्मत्वमेव व्याहन्यते । साधारणधर्माभावे कथमुपमाया अवकाशः । उपात्तस्य साधारणधर्मस्य एकत्र अन्वयबलेन अपरत्र प्रतीतिबलेन सम्बन्धाङ्गीकारे उपमानिर्वाहस्तु विलम्बेनैव भवति । अतोऽत्र दोषः ।

क्रमेणोदाहरणम्—"मुखं चन्द्र इवाभाति।" ( औ ) †

"तद्वेशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधते स्म परां शोभां तदीया विभ्रमा इव॥" ( ड, अ )

**पूर्वोदाहरणेषूपमानोपमेययोरेकस्यैव साधारणधर्म्मेणान्वयप्रसिद्धेः**[1] **प्रक्रान्तस्यार्थस्य स्फुटोऽनिर्वाहः।** ( ढ )

**एवमनुप्रासे वैफल्यस्यापुष्टार्थत्वम्**[2]**।** यथा—

---

**( वि, ड )** लिङ्गवचनभेदे साधारणधर्मस्य निर्दिष्टरूपेणोभयत्राऽनन्वयो दोषबीजम्। यदि तु निर्दिष्टरूपेणैवोभयत्राऽन्वयसम्भवस्तदा न दोष इत्याह—**अत्र च लिङ्गवचने**ति। **मुखं चन्द्र इवे**ति। अत्राभातिसाधारणधर्म उभयत्रैकरूप एव लिङ्गद्वयं तु भिन्नम्। वचनभेदे त्वाह—**तद्वेश** इति। मधुरतया रम्यतया भृतः पूर्णस्तस्यावेशः परां शोभां दधते धत्त इत्यर्थः। दध धारणे इत्यस्यैकवचने रूपम्। कीदृशः अन्याभिः स्त्रीभिरसदृशः अन्यस्त्र्यसाधारणः। टक्प्रत्ययान्तस्य दृशो रूपमिदम्। 'तदीया विभ्रमा इव—तेऽपि हि परां शोभां दधते। धाञो बहुवचने रूपमिदम्। एवं मधुरताभृतः मधुरतां बिभ्रतः। भृञः क्विपि रूपमिदम्। एवमसदृश इत्यत्रापि क्विपि रूपम्। लिङ्गादिभेदेषु प्रक्रमभङ्गं दोषान्तर्भाव उक्तस्तं ग्राहयति—**पूर्वोदाहरणेष्वि**ति। सुधेव विमलश्चन्द्र इत्यादिष्वित्यर्थः।

**( वि, ढ ) एकस्यैवे**ति। साधारणधर्म्मेण विमलत्वादिना एकस्योपमेयस्यैव समानलिङ्गत्वादिनाऽन्वयसिद्धेरसमानलिङ्गकेनोपमानेनाऽन्वयासिद्धेरित्यर्थः। **प्रक्रान्तस्ये**ति—उभयान्वयित्वाकाङ्क्षया उपक्रान्तस्येत्यर्थः।

**( वि, ण ) एवमि**ति—वैफल्यस्याऽनुप्रासार्थमुपात्तस्य विशेषणस्य यद्वैफल्यं तस्येत्यर्थः।

---

**मुखमि**ति—अत्र भातीति साधारणमुखचन्द्ररूपोऽर्थः साध्यः। एवमुत्तरत्रापि।

**( लो, अ )** सदृश इत्यस्योद्देश्यविशेषणत्वे एकवचनान्तः सदृशशब्दः। पक्षे मधुरतया भृत इति एकवचनम्। विभ्रमविशेषणत्वे बहुवचनान्तः सदृक्शब्दः। दधतीति दधधातोरेकवचनान्तं, धाधातोर्बहुवचनान्तं च तिङन्तं च पदम्।

**( लो, आ )** वैफल्यस्याऽपुष्टार्थत्वं च चित्रवर्णारब्धत्वभावेन प्रकृतानुपयोगादित्यर्थः।

---

† साधारणधर्मस्य स्वस्वरूपेण उभयत्र अन्वयान्न दोषस्यावकाशः। अत उक्तं दण्डिना—

"न लिङ्गवचने भिन्ने न हीनाधिकतापि वा।
उपमा दूषणायालं यत्रोद्वेगो न धीमताम्॥"

1 '०धर्मेणैवान्वयसिद्धेः' (क. ख. पु.) 2 'स्यार्थत्वम्'

"अनणुरणन्मणिमेखलमविरलशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे ! रणरणकमकारणं कुरुते ॥" ( ण, आ )

एवं समासोक्तौ साधारणविशेषणवशात्परार्थस्य प्रतीतावपि पुनस्तस्य शब्देनोपादानस्याप्रस्तुतप्रशंसायां व्यञ्जनयैव प्रस्तुतार्थावगतेः शब्देन तदभिधानस्य च पुनरुक्तत्वम् । ( त )

क्रमेणोदाहरणम्—

"अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥"

अत्रापरदिगित्येतावतैव तस्या गणिकात्वं प्रतीयते । ( थ, इ )

---

**अनण** इति । सविलासं गच्छन्तीं वेश्यां दृष्ट्वा शान्तस्य पुरुषस्योक्तिरियम् । हे अरुणचरणे ! तव परिसरणे गमनं कर्तृ । अकारणम् अर्थात् पुंसां रणरणकं कामचिन्तां कुरुते जनयतीत्यर्थः । परिसरणं कीदृशम् ? अनणु अनल्पं रणन्ती मणियुक्ता मेखला यत्र तादृशम् । अविरतं शिञ्जानं मञ्जु मञ्जीरं नूपुरं यत्र तादृशम् । अत्र वक्तुः शान्तत्वेन कामोद्दीपकपरिसरणविशेषणानामपुष्टार्थत्वं केवलमनुप्रासार्थमेव तदुपादानम् । अत्र च वैयर्थ्यप्रतियोगिकामचिन्तोपयोगित्वेऽपि तद्विशेषणानां प्रकृतशान्तरसानुपयोगित्वादपुष्टार्थता ।

**( वि, त ) एवं समासोक्ताविति** । प्राकरणिककथनेनाऽप्राकरणिकव्यञ्जनं समासोक्तिः । अप्राकरणिककथनेन प्राकरणिकव्यञ्जनमप्रस्तुतप्रशंसा । अस्मिन्नलङ्कारद्वयेऽप्राकरणिकप्राकरणिकार्थयोः व्यङ्ग्यत्वेऽपि शब्देन तदुपादानं पुनरुक्तत्वमेवेत्यर्थः ।

**( वि, थ )** तत्र समासोक्तौ पुनरुक्तत्वमाह—**अनुरागेति** । अपरदिक् पश्चिमादिगेव गणिका वेश्या वियद्रूपादालयाद् आश्रयात् रविं निरकासयत् निष्कासयामास । किंभूतम् अपेतवसुम् अपगतरश्मिम् । अनिष्कासनोपयोगिविशेषणसत्त्वेऽपि अपेतरश्मित्वात् निरकासयदित्याह—**अनुरागेति** । अनु दिवसस्य पश्चाद् रागवन्तं रक्तिमावन्तमपि । अत एव लोचनयोः सुखं सुखजनकम् अतापकरं च वपुर्दधतमपीत्यर्थः । अत्र श्लिष्टविशेषणवशादनुरागवतो लोचनसुखजनकसुशीतलवपुष्मतो नायकस्य वसुना धनेन रहितत्वात् स्वगृहरूपादालयाद् वेश्यया निष्कासनं व्यञ्जनया प्रतीयते । तत्र च निर्धननायकस्य यथाश्लिष्टविशेषणमहिम्ना व्यङ्ग्यत्वं, तथा वेश्याया अपि व्यङ्ग्यत्वमेवोचितम् । वाच्यत्वे तु पुनरुक्तिरित्याह—**अत्रापरदिगेवेति** ।

---

**( लो, इ )** अनुगतो रागः शोणिमा, प्रेमा च । वसुपदेन रश्मयः धनानि च । आलयः आश्रयः गृहं च । गणिकात्वं प्रतीयते । पुनः स्वशब्देनोपादानेन च पुनरुक्तत्वमावहति इत्यर्थः ।

"आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्य्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम्[1]।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतनं[2] प्रभुमिवानामृष्टतत्त्वान्तरम् ॥" (ई)

अत्राचेतसः प्रभोरभिधानमनुचितम्। (द)

एवमनुप्रासे प्रसिद्ध्यभावस्य ख्यातविरुद्धत्वं यथा—

"चक्राधिष्ठिततां चक्री गोत्रं गोत्रभिदुच्छ्रितम्।

---

(वि, द) अप्रस्तुतप्रशंसायाः पुनरुक्तिमाह—**आहूतेष्विति**—सामान्यं जन धिक्। यतोऽचेतनं भद्राभद्रादिचेतनरहितम्। अनामृष्टम् अपरिभावितं तत्त्वं येन तादृशमन्तरं मनो यस्य तादृशं प्रभुमिव। सामान्यस्य अचेतनत्वं दर्शयति—आहूतेषु विहङ्गमेषु विहायसा गच्छत्सु जनेषु प्राणिषु आहतेषु विहायोगामित्वात् पुर आयान् आगच्छन मशकोऽपि न वार्यते, वारणा एव निवर्त्तते। गमनमेवात्र विधेयं बोध्यं तदेव सामान्ये चेतनत्वप्रतिपादनसम्भवात्। तथा तृणमणिस्तु तृणाकर्षकोऽल्पमूल्यो मणिः धुरि वा मध्ये वा वसन् रथशोभाकारकमहामूल्यमणीनां धुरं रथशोभाकरणरूपं धुरं भारं विधत्ते। "धूः स्त्री क्लीबे यानमुखम्"इति कोषः। यानं रथम्। मध्ये इत्यत्रोपस्थितत्वात् यानस्येति लभ्यते। मध्ये वसन् इत्यत्र मध्येवारिधि वा वसन् इति क्वचित् पाठः। तदा च मध्ये वारिधेः मध्ये वा वसन् पुनः पुनर्वसन्नित्यर्थः। मणीनां वारिधिवाससाधर्म्यान्महामूल्यमणीनां धुरं मणित्वेन गणयत्वरूपां धुरं भारम् इत्यर्थः। मध्येऽपि इति अपिकारस्य तेजस्विषु अन्वयः। अत एतादृशाऽयुक्तकारित्वात्सामान्यं धिक इत्यर्थः। **अत्रे**ति। अचेताः प्रभुः प्राकरणिकः। मशकादयोऽप्राकरणिकाः। तेषाम् अभिधानवशादेव अचेतसः प्रभोः व्यञ्जनया लाभे तदभिधानं पुनरुक्तमित्यर्थः।

(वि, ध) **प्रसिद्ध्यभावस्ये**ति—अनुप्रासितपदार्थस्य निर्दिष्टकर्मणि प्रसिद्ध्यभाव इत्यर्थः। **चक्रे**ति। अस्य भूभुजः चक्राधिष्ठिततां राजमण्डलाक्रमणं चक्री विष्णुः प्रायच्छत् दत्तवान्। एवम् उच्छ्रितं गोत्रं गोत्रभित् इन्द्रः, वृषं धर्मं वृषभकेतुः महेशः। अत्र इष्टकर्मसु एषां कर्तृत्वप्रसिद्धिर्नास्ति किन्तु अनुप्रासार्थमेव तथोक्तम्।

---

(लो, ई) तृणमणिः तृणापकर्षको मणिविशेषः। अनामृष्टं तत्त्वान्तरं येन महीयसामल्पीयसां च पदार्थानां भेदो न प्रकाश्यते। सामान्यं जातिः सामान्यस्य सर्वासु विभक्तिषु एकरूपेणैवावस्थितेरित्यर्थः। अनुचितं च व्यञ्जनयैव प्रत्युत चमत्कारातिशयदायित्वेन गतार्थत्वात्।

(लो, उ) **चक्रे**ति—अयमाशयः, चक्रप्रभृतीनां च चक्राधिष्ठितताद्दिमात्रेण

---

1 'रुचम्' (ख. पु.) 2 'सं' (ख. पु.)

वृषं वृषभकेतुश्च प्रायच्छद्यस्य भूभुजः ॥" ( ध, उ )

उक्तदोषाणां च क्वचिददोषत्वं क्वचिद्गुणत्वमाह–( न )

**वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।**
**रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥ ८ ॥ ( ऊ )**

एषु चास्वादस्वरूपविशेषात्मकतया मुख्यगुणप्रकर्षोपकारित्वाद्गुण इति व्यपदेशो भाक्तः । ( प, ऋ ) क्रमेण यथा—

"तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं
क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन् मनो निर्भरम् ।
शम्भोर्भूतकृपाविधेयमनसः प्रोद्दामनेत्रानल–
ज्वालाजालकरालितः पुनरसावास्तां समस्तात्मना ॥" *

अत्र शृङ्गारे कुपितो वक्ता । ( फ)

---

( वि, न ) **उक्तदोषाणा**मिति दुःश्रवत्वप्रभृतीनाम् इत्यर्थः ।

( वि, प ) **वक्तरी**ति—समुद्धते प्रचण्डे भीषणे इति यावत् । रौद्रादौ रसे अत्यन्तं गुण इत्यन्वयः । ननु माधुर्यादय एव गुणास्तत्कथं दुःश्रवत्वादेर्गुणत्वम् इत्यत्राह—**एषु चे**ति । माधुर्यादय आस्वादस्वरूपविशेषात्मका गुणा मुख्याः । तेषां प्रकर्षरूपो य उपचारः तत्कारित्वाद् औपचारिको गुणव्यपदेशो युक्त इत्यर्थः ।

(वि,फ) अत्र क्रोधसंयुक्ते वक्तरि दुःश्रवत्वगुणमाह—**तद्विच्छेदे**ति । तस्या विच्छेदेन कृशस्य कण्ठलुलितप्राणस्य च मे मनः, क्रूरः पञ्चशरः अतिशितैः शरैर्निर्दयं भिन्दन्, शम्भोः प्रोद्दामनेत्रानलज्वालेन समस्तात्मना करालित आस्ताम् । शम्भुः कथमिदं करिष्यतीत्यत्राह—**भूतकृपे**ति । भूते प्रार्थिनि मयि कृपया एवं करिष्यति । **अत्रे**ति । विच्छेदकण्ठलुठितादौ च्छकारठकारादयो वर्णा दुःश्रवाः कुपितवक्तृका गुणाः ।

---

प्रशंसनं न खलु प्रसिद्धम् । किन्त्वनुप्रासार्थमेवोपनिबद्धम् ।

( लो, ऊ ) अधुना पदनिष्ठत्वेन पञ्चधा विभक्तानामेषां दोषाणां क्वचित् केषांचिदन्यथात्वमित्याह । क्रोधोऽत्र रौद्ररसतामनापद्यमानो विवक्षितः, तस्य पृथगुक्तत्वात् । समुद्धते सम्यगौद्धत्यगुणयुक्ते वस्तुनि । आदिशब्देन बीभत्सः ।

( लो, ऋ ) मुख्यो गुणो यदादित्यस्वरूपात्मको माधुर्यादिः । भाक्तः औपचारिकः।

---

* कण्ठे लुठिता उपस्थिताः प्राणा यस्य तस्य मम मनः अतिशितैः तीक्ष्णैः शरैः निर्दयं निर्भरमत्यन्तं च भिन्दन् विदारयन् क्रूरः पञ्चशरः कामः समस्तात्मना भूते प्रार्थिनि मयि या कृपा तस्या विधेयं वशीभूतं मनो यस्य तस्य शम्भोः शिवस्य, प्रोद्दामः अत्युत्कटो यो नेत्रानलः तृतीयनेत्राग्निः, तस्य ज्वालानां शिखानां जालेन समूहेन समस्तात्मना नतु एकदेशेन करालितदाहेन भीषणभूत आस्ताम् ।

"मूर्द्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालो-
द्धूताम्भःक्षोददम्भात् प्रसभमभिनभः क्षिप्तनक्षत्रलक्षम् ।
ऊर्द्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभररभसोद्यन्नभस्वत्प्रवेग-
भ्रान्तब्रह्माण्डखण्डं प्रवितरतु शुभं शाम्भवं ताण्डवं वः ॥"×

अत्रोद्धतं ताण्डवं वाच्यम् । इमे पद्ये मम । रौद्रादिरसे तु एतद् द्वितयापेक्षयापि दुःश्रवत्वमत्यन्तं गुणः । यथा—"उत्कृत्योत्कृत्य कृत्तिमित्यादि" । अत्र बीभत्सो रसः । ( व, ऋ )

**सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः ॥ ६ ॥**

तथा पुनरिति गुण एव । यथा—

"करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते ।

---

**(वि, व)** उद्धते वाच्ये चाह—**मूर्द्ध** इति । शाम्भवं ताण्डवं नृत्यं वो युष्माकं शुभं प्रवितरतु । ताण्डवं कीदृशम् । मूर्द्धव्याधूयमानाया ध्वनन्त्या अमरधुन्या गङ्गाया लोलेन कल्लोलजालेन तरङ्गसमूहेन उद्धूतानां क्षिप्तानाम् अम्भःक्षोदानां जलकणानां दम्भात् छलात् प्रसभं सहसा अभिनभो नभसि क्षिप्तानि नक्षत्राणां लक्षाणि येन तादृशम् । पुनः कीदृशम् । ऊर्द्ध्वन्यस्तयोरङ्घ्रिदण्डयोर्भ्रमिभरेण भ्रम्याधिक्येन रभसोद्यतः सहसोद्गच्छतः नभस्वतः वायोः प्रवेगेण भ्रान्तं ब्रह्माण्डखण्डं यत्र तादृशम् । **अत्रे**ति । उद्धतं भीषणं उत्कृत्य इत्यादौ बीभत्सो रसः ।

**( वि, भ ) सुरते**ति—सुरतस्यारम्भो यस्यां तादृशगोष्ठ्यादौ इत्यर्थः । **करिहस्तेने**ति । बालिकायाः सुरतोपायस्य द्व्यर्थपदेन सूचनमिदम् । तथाहि पुंसो ध्वजः पताका साधनस्य सैन्यस्यान्तर्मध्ये प्रविश्योपसर्पन् गच्छन् विराजते । साधनान्तः कीदृशे सम्बाधे निबिडत्वादावृते । तर्हि कथं प्रवेश इत्यत्राह—**करिहस्तेने**ति ।

---

**( लो, ऋ )** उद्धतं हरताण्डवम् । रौद्रे दुःश्रवत्वं यथा मम तातपादानां—

स्फुटविकटचपेटाघातनेनायमष्टौ
सपदि कुलगिरीन् वा खण्डशश्चूर्णयित्वा ।
प्रलयमरुदुदारस्फीतिकृतो धूतवातः
प्रसृतिभिरथ पारावारमुत्क्षेपयामि ॥

**( लो, लृ )** करिणो गजस्य हस्तः स्थूलहस्तः । 'तर्जन्यनामिके श्लिष्टे मध्यमा स्याद्बहिर्यदि ।' इति शृङ्गारशास्त्रप्रसिद्धिरूपः स्त्रीयोनिविद्रावणः पुंध्वजस्याकारः करिक-

---

अत्र प्रकरणाद् विप्रलम्भोऽवगम्यते । तत्र क्रोधस्य प्रकर्षकत्वाद् दीर्घसमासविकटवर्णयोर्गुणत्वम् । तेनाङ्गस्य क्रोधस्य प्रकर्षादङ्गिनो विप्रलम्भस्यापि प्रकर्ष इति भावः ।

× अत्र ताण्डवे ओजस्विनि वाच्ये ओजोगुणप्रकाशका दीर्घसमासविकटवर्णा अनुगुणाः । अतोऽत्र दुःश्रवत्वं गुणो रसानुकूलत्वात् ।

उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥"

अत्र हि सुरतारम्भगोष्ठयां "द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु" इति कामशास्त्रस्थितिः। आदिशब्दात् शमकथाप्रभृतिषु बोद्धव्यम्। (भ, लृ) §

**स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते॥ १०॥**

यथा—

"पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम्।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत॥"

---

करिणां हस्तिनां हस्तेन शुण्डया विलोडिते। बालिकासुरतोपायस्यात्र द्व्यर्थपदेन सूचनम्। तथाहि सम्बाधे संकुचिते साधनस्य योनेरन्तः प्रविश्य उपसर्पन् गतागतं कुर्वन् पुंसो ध्वजः लिङ्गं विराजते। प्रवेशोपायमाह—**करिहस्तेने**ति।

"तर्जन्यनामिकायुक्ते मध्यमा स्याद्बहिर्यदि।
करिहस्त इति ख्यातः कामशास्त्रविशारदैः॥" इति।

तादृशाङ्गुलित्रयेण विलोडिते इत्यर्थः। **अत्रे**ति। रहस्यवस्तु गोप्यवस्तु तत् पिशुनयेत् सूचयेदित्यर्थः। गोष्ठ्यादावित्यादि पदग्राह्यमाह—**शमकथे**ति। यथा—"उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे। क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते॥" अत्र जुगुप्साश्लीलम्। प्रभृतिपदग्राह्यं चामङ्गलाभिप्रायवद्वक्तृबोध्यम्। यथा—

निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥

अत्र कुरूणां भाव्यमङ्गलकाश्लीलसूचनम्।

**(वि, म) स्याताम**िति—आदिपदाद् यमकचित्रपरिग्रहः। तत्र निहतार्थाप्रयुक्तत्वयोर्द्वयोरदोषत्वे श्लेषे एकमुदाहरणमाह—**पर्वतभेदि पवित्रम्** इति। पतत् प्रवहत् सुरसरितो गङ्गाया अम्भो नमत्। तत्र विशेषणभेदात् दृष्टान्तत्रयं ददद् विशेषणान्याह—**पर्वते**ति। अम्भः कीदृशं पर्वतभेदि पवित्रं च। अत्र हरिमिन्द्रमिवेति दृष्टान्तः। सोऽ

---

राख्यश्च। संबाधे संकटे। ध्वजश्च साधनम् अश्वादि स्त्रीवराङ्गं च पिशुनयेत् सूचयेत् शमकथायामश्लीलो यथा—

"उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते॥" इति।

**(लो, ए) पर्वते**ति—गङ्गाजलपक्षे पर्वतं भेत्तुं शीलं यस्य। पवित्रं पूतं चेति पदद्वयम्। इन्द्रपक्षे पर्वतभेदिना पविना वज्रेण त्रायत इति। जलपक्षे बहूनां मतं सम्मतम्। गहनं चेति पदद्वयम्। सिंहपक्षे बहूनां मातङ्गानां हन्तारम् इत्येकपदम्।

---

§ शमाय वैराग्योत्पादनाय कथाः तासु। शान्तरसे विषयाणां हेयत्वमेवाभिमतम्। अत्र जुगुप्सितोऽश्लीलार्थस्तमेवार्थं पुष्णातीति गुण इत्यर्थः।

अत्रेन्द्रपक्षे पवित्रशब्दो निहतार्थः। सिंहपक्षे मतङ्गशब्दो मातङ्गार्थेऽप्रयुक्तः। (म, ए) *

**गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः ॥ ११ ॥**

यथा—

"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम्।
तद्दर्शनमुदासीनं त्वामेव पुरुषं विदुः॥" (य, ऐ) ×

---

पि हि पर्वतभेदिना पविना वज्रेण त्रायते अर्थात् देवान्। अम्भः कीदृशं नरकस्य पापजन्ययातनाया जैत्रं नाशकमित्यर्थः। अत्र हरिं श्रीकृष्णरूपं विष्णुमिवेति दृष्टान्तः सोऽपि नरकस्य नरकासुरस्य जैत्रः। अम्भः कीदृशम्—बहुमतं बहुजनसम्मतं गहनं निबिडं च प्रवाहातिशयाद् अत्र हरिं सिंहमिवेति दृष्टान्तः। सोऽपि बहूनां मतङ्गानां हन्ता। दोषद्वयं दर्शयति—**अत्रे**ति। न चात्र हरिमिवेत्यत्राऽनवीकृतत्वं कथितपदत्वं वा दोष इति वाच्यम्। एकपदवाच्यानेकेषां दृष्टान्तकरणस्य वैचित्र्यविशेषत्वेन तदाधायकत्वेनाऽदोषत्वात्।

(वि, य) **गुणः स्यादि**ति। ज्ञत्वं पण्डितत्वम्। **त्वामामनन्ती**ति—त्वां ब्रह्माणं पुरुषार्थानां धर्म्मार्थकाममोक्षाणां प्रवर्त्तिनीं प्रवर्त्तिकां प्रकृतिमामनन्ति वदन्ति सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः तत एव समस्तपदार्थोत्पत्तिरिति सांख्यसिद्धान्तात्। तादृशावस्थास्वरूपं त्वामित्यर्थः। तथा च त्वामेव पुरुषं सर्वकर्त्तृपुरुषं विदुः। तत्र किं प्रमाणमित्यत आह—**तद्दर्शन**मिति—तत एव दर्शनं ज्ञानं यस्य तादृशम्। तत्प्रणीतवेदेन तन्निर्मितगिरिसागरादिभ्योऽनुमानेन च तज्ज्ञानात्। उदासीनं समस्तकार्य्योत्पादने स्वार्थत्वाऽभावात्। अत्र ब्रह्मा वाच्यः, वक्तार इन्द्रादयः। सर्व एव पण्डिताः। प्रकृत्यादयोऽप्रतीताः पाण्डित्यप्रकाशनाद् गुणत्वम्।

---

(लो, ऐ) त्वां तदेकदर्शनमात्रप्रतीतरूपां प्रतीतशब्दाभिव्यञ्जकत्वम्। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः। कूटस्थः चित्स्वरूपः पुरुषः। तदर्थे प्रवर्त्तयितुं शीलं यस्याः। यदुक्तम्—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते॥

तस्या दर्शनं प्रकाशनं—प्रकृतेर्जडरूपायाश्चित्संक्रमणादेव कार्य्यकारित्वात्। अत्र प्रकृत्यादिशब्दः सांख्यशास्त्रप्रसिद्धः।

---

* पवित्रशब्दस्य पूतार्थे प्रसिद्धतया पविना त्रायते इत्यर्थे निहतार्थत्वम्। मतङ्गशब्दस्य मातङ्गार्थे कविभिरनादृतत्वादप्रयुक्तत्वम्। प्रकृते तु श्लिष्टपदोपादानेन कवेरर्थद्वये तात्पर्य्यान्न दोषः।

× ज्ञत्वं तच्छास्त्रव्युत्पन्नत्वम्। प्रतीतिस्थगनस्य दोषबीजतया विज्ञे श्रोतरि तद-

**स्वयं वापि परामर्शे ॥ १२ ॥** *

अप्रतीतत्वं गुण इत्यनुषज्यते । यथा—

युक्तः कलाभिस्तमसां विवृद्ध्यै क्षीणश्च ताभिः क्षतये य एषाम् ।
शुद्धं निरालम्बपदावलम्बं तमात्मचन्द्रं परिशीलयामि ॥ (र, ओ)

**कथितं च पदं पुनः ।**
**विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ।**
**दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने ।**
**अर्थान्तरसंक्रमितवाच्ये हर्षेऽवधारणे ॥ १३ ॥**

गुण इत्येव । यथा—"उदेति सविता ताम्रः" इत्यादि । अत्र विहितानुवादः । (ल)†

**(वि, र)** स्वयं वापि परामर्शे इति कारिकापादस्तत्राप्रतीतत्वं गुण इति पूर्वोक्तमनुसञ्जयति—**अप्रतीतत्वमि**ति । **युक्तः कलाभिरि**ति—तं परमात्मस्वरूपं चन्द्रं परिशीलयामि सततं भावयामि इत्यर्थः । विलक्षणचन्द्रत्वादिति भावः । अन्यचन्द्रतो वैलक्षण्यमाह—**युक्त** इति । कलाभिः शरीरपरिग्रहेच्छारूपाभिः कलाभिः धर्मैः विशिष्टः सन् यस्तमसां शरीरात्मनोरभेदाबोधरूपाणां मोहानां विवृद्धयै भवति यथा रामशरीरपरिग्रहे । अन्यचन्द्रस्तु स्वीयषोडशांशरूपाभिः कलाभियुक्तः सन् तमसामन्धकाराणां क्षतये एव भवति । तथा ताभिः कलाभिः हीनः सन्नेषां तमसां क्षतये भवति । अगृहीतशरीरत्वेन तादृशमोहाऽभावात्, अन्यचन्द्रस्तु कलाहीनः सन् तमोविवृद्धये एव भवति । तमोनाशककलाभावेन तस्य तमो वृद्धिं प्रति यत्सत्त्वेऽग्रिमक्षणे यस्य सत्त्वं यदसत्त्वेऽग्रिमक्षणे यदसत्त्वं तत्तस्य कारणमित्येवंरूपकारणत्वात् । तथा तं कीदृशं शुद्धं, चन्द्रस्तु कलङ्की । तथा निरालम्बशून्ये पदेऽवलम्बमानं चन्द्रस्तु ज्योतिश्चक्रावलम्बी। अत्र कलातमःपदार्थौ अप्रतीतावपि स्वयं परामर्शे गुणौ पराऽप्रतीतेरुद्देश्यत्वात्।

**(वि, ल) विहितस्ये**ति । तत्र विहितानुवादे उदाहरति—**उदेती**ति । **अत्रे**ति । उदयसवितुरुद्देशे विहितस्य ताम्रत्वस्य अस्तमयसवितुरुद्देशेनापि विधेयतया प्रतिनिर्देशरूपोऽनुवाद इत्यर्थः ।

---

**(लो, ओ)** कलाभिः षोडशभिः, ताश्च एकादशेन्द्रियाणि, पञ्च तन्मात्राणि । चन्द्रपक्षे—कला अवयवाः । तमांसि अज्ञानानि, अन्धकाराणि च । ताभिः कलाभिरेषां तमसाम् । निरालम्बपदम् आत्मपक्षे एतस्याश्रयाभावात् । चन्द्रपक्षे गगनम् । अत्र कलाशब्दार्थः योगशास्त्रमात्रप्रसिद्धः यदुक्तं—"षोडशकलः पुरुष" इति ।

---

भावात् । एवं वक्तुरविज्ञत्वे तादृक्पदोपनिबन्धेऽनौचित्यमेव दूषकताबीजमिति । उभयोर्विज्ञत्वे अप्रतीतत्वं न दोषः किन्तु गुण एवेत्यर्थः ।

* यत्र स्वत एव पर्य्यालोचनं स्वस्य च विज्ञत्वं तत्राप्रतीत्वं गुणः ।

† तेनैव पदेन सर्वनाम्ना वा विहितस्यानुवादेऽभेदप्रत्यभिज्ञानात्सम्भवति गुणत्वम्।

"हन्त ! हन्त ! गतः कान्तो वसन्ते सखि ! नागतः ।"

अत्र विषादः ।

"चित्रं चित्रमनाकाशे कथं सुमुखि ! चन्द्रमाः ।"

अत्र विस्मयः। (व)

"सुनयने ! नयने निधेहि ।"

इत्यत्रलाटानुप्रासः ।

"नयने तस्यैव नयने च ।"

इत्यादौ अर्थान्तरसंक्रमितवाच्यो ध्वनिः । एवमन्यत्र । (श)

**सन्दिग्धत्वं तथा व्याजस्तुतिपर्य्यवसायि चेत् ॥ १४ ॥**

गुण इत्येव । यथा—

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव !

---

**( वि, व ) अनाकाश** इति—आकाशभिन्नायां त्वयि इत्यर्थः ।

**( वि, श )** लाटानुप्रासः समासासमासगतः । एकार्थत्वेन यमकम् । **नयने तस्यैवे**ति—अत्र द्वितीयनयनपदमुत्कृष्टरूपार्थान्तरे संक्रमितवाच्यम्। **एवमन्यद्**िति—तत्र "गच्छ गच्छ न तिष्ठात्र" इति क्रुधि । "हा हतोऽस्मि" इति दैन्ये । "एहि एहि वत्स !" इत्यनुकम्पायाम् । "मुञ्च मुञ्च रुषम्" इति प्रसादने। "कथय कथय वार्ताम्" इति हर्षे । "अयमयं वीर" इत्यवधारणे ।

**( वि, ष ) सन्दिग्धत्वमि**ति—सन्देहयोग्यमित्यर्थः । द्व्यर्थत्वेन तद्योग्यता—विशेष्यद्वयेऽर्थद्वयात्तु निश्चय एव तथा पदार्थमाह—**गुण एवे**ति । निश्चयवशात् गुण- इत्यर्थः । **पृथुकार्त्ते**ति—राज्ञि दरिद्रस्योक्तिरियम् । आवयोः सदनं सम्प्रति समं, त्वत्तो धनलाभे तु पश्चात् समं न भविष्यति इति भावः । पृथूनि कार्त्तस्वरस्य सुवर्णस्य पात्राणि यत्र राजसदनं तादृशम् । पृथुकानां शिशूनाम् आर्त्तस्वरस्य पात्रं दरिद्रसदनं भक्ष्याभावात् । भूषिताः सुवर्णादिमण्डिताः निःशेषपरिजनाः यत्र राजसदनं तादृशम् । भुवि उषिताः सुप्ताः निःशेषपरिजना यत्र दरिद्रसदनं तादृशं शय्याविरहात् । बिल- सद्भिः करेणुभिः हस्तिभिर्गहनं व्याप्तं राजसदनम्; बिलसत्का बिले तिष्ठन्तो मूषिकपि- पीलिकादयस्तेषां रेणुभिः गहनं दरिद्रसदनम् । अत्र स्वगृहसाम्यव्याजेन राज्ञः सम्पदा-

---

**( लो, औ ) पृथ्वि**ति—पृथुकानां बलानाम् आर्त्तस्वरस्य पात्रं स्थानम् । पृथु बहुलं कार्त्तस्वरपात्रं सुवर्णभाजनं यत्र । भूषिताः भुवि पृथिव्याम् उषिता मण्डिताश्च । विलसन्तः तिष्ठन्त एव विलसत्का रेणवो धूलयः । विलसन्तः करे- णवो गजाश्च ।

---

पदान्तरेणानुवादे भिन्नतयावभासात् प्रतीतिविलम्बो दोष इति भावः । अत उक्तम्—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।"

विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥" (प, औ) +

**वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि ।**
**कष्टत्वं दुःश्रवत्वं वा ॥ १५ ॥**

गुण इत्येव । यथा—

"दीधीवेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम् ।
क्विप्प्रत्ययनिभः कश्चिद् यत्र सन्निहिते न ते ॥"

अत्रार्थः कष्टः, वैयाकरणश्च वक्ता । ( अ, स ) एवमस्य प्रतिपाद्यत्वेऽपि ।

"अत्रातार्प्सम्पुपाध्याय ! त्वामहं न कदाचन ।"

अत्र दुःश्रवत्वम् । वैयाकरणो वाच्यः । एवमस्य वक्तृत्वेऽपि । (ह)

**ग्राम्यत्वमधमोक्तिषु ॥ १६ ॥**

गुण इत्येव ।

यथा मैम—"एसो ससहरबिंबो दीसइ हेअंगवीणपिंडो व्व

---

भिक्यकथनात् व्याजस्तुतिः । व्याजस्तुतीत्युपलक्षणम् । पर्वतभेदि पवित्रमित्यादौ उपमाश्लेषादावपि तथात्वं बोध्यम् ।

( वि, स ) **वैयाकरणमुख्य** इति । अतिशयवैयाकरणमित्यर्थः । कष्टत्वं कष्टार्थत्वम् । दीधीवेवीङ् इति कश्चिज्जनो गुणवृद्ध्योरभाजनं गुणवृद्ध्या च हीन इत्यर्थः । दीधीवेवीङ् धात्वोरिडागमस्य च समस्तयोरपि गुणस्य तद्बाधिकाया वृद्धेश्चाभावात् । तथा कश्चिज्जनः क्विप् प्रत्ययनिभः, यत्र जने सन्निहिते सति तत्सन्निहितस्यापि न ते गुणवृद्धी, क्विप्प्रत्ययसन्निहितधातोरपि गुणवृद्ध्यभावात् ।

(वि, ह) **एवमि**ति । अस्य वैयाकरणस्य तद्दर्शयति—[illegible] उपाध्याय ! अत्र लोके त्वामहं कदाचन न अतार्प्सम् । **एवमि**ति । अस्य वैयाकरणस्य वक्तृत्वे कष्टत्वं दुःश्रवत्वमपि गुण इत्यर्थः । तस्य वक्तृत्वे कष्टत्वस्य च उदाहृतत्वात् ।

( वि, क ) **अधमोक्तिष्वि**ति । गुण इत्यनुषङ्गः । **एसो** इति ।

---

( लो, अ ) **दीधीवेवीङ्** इति । कश्चिद्रिपुः । गुणः शौर्यादिः । पक्षे ईकारादीनामेत्वादिः । वृद्धिः समृद्धिः । पक्षे ईकारादीनामैत्वादिश्च दीधीवेवीधात्वोर्गुण-वृद्धिनिषेधात् । क्विप्प्रत्ययनिभः क्विपः सर्वापहारीति लोपाद् रिपोः सर्वनाशः । अत्र न केवलं दुःश्रवत्वं कष्टत्वं च ।

---

§ सन्दिग्धत्वमत्र आपाततः । अत्र राजगृहे बालकार्त्तनादादीनामनुचितत्वात् । दरिद्रगृहे पृथुकनकपात्रादीनां चासम्भवत्वात् योऽर्थः संगच्छते तदेव तस्य प्रतीतिः । सन्दिग्धत्वे चात्र मुखे निन्दा, नियतार्थप्रतिपत्तौ व्याजस्तुतिः ।

एए अअस्स मोहा पडन्ति आसासु दुद्धधारव्व ॥"

इयं विदूषकोक्तिः। (क, आ)

**निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति ॥ १७ ॥**

यथा—"सम्प्रति सन्ध्यासमयश्चक्रद्वन्द्वानि विघटयति"

**कवीनां समये ख्याते गुणः ख्यातविरुद्धता ॥ १८ ॥ ***

कविसमयख्यातानि च—

**मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्योः।**
**रक्तौ च क्रोधरागौ, सरिदुदधिगतं पङ्कजेन्दीवरादि।**
**तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घो**
**ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः। (ख)**
**पादाघातादशोकं विकसति, वकुलं योषितामास्यमद्यैः।**

---

"एष शशधरविम्बो दृश्यते हैयङ्गवीनपिण्ड इव।
एते चास्य मयूखाः पतन्ति आशासु दुग्धधारा इव॥"

(इति संस्कृतानुवादः)

(वि, क) ह्यो गोदोहोद्भवं घृतं हैयङ्गवीनं भक्ष्यलम्पटस्योक्तौ भक्ष्यद्रव्य-दृष्टान्तोऽत्र ग्राम्यो गुणः।

(वि, ख) **सम्प्रती**ति—सन्ध्यासमयस्य चक्रवाकद्वन्द्वविघटकत्वे तेषां ख्यातिसत्त्वान्नात्र हेत्वाकाङ्क्षा। कविसमयख्यातादिं दर्शयति—**मालिन्यमि**ति। पापे इत्यर्थः। सत्कर्मणा कीर्तिः, दाने च यश इति यशकीर्त्योर्भेदः, मरालो हंसः।

---

(लो, आ) अधमा विदूषकादयः। **एसो** इति—
"एषः शशधरबिम्बो दृश्यते हैयङ्गवीनपिण्ड इव।
एते चास्य मयूखाः पतन्त्याशासु दुग्धधारा इव॥"

---

* तथा हि—

असतोऽपि निबन्धेन (१)
सतामप्यनिबन्धनात्। (२)
नियमस्य पुरस्कारात् (३)
सम्प्रदायस्त्रिधा कवेः॥

असतोऽपीति—वस्तुगत्या यन्न भवति तदपि कविभिः निबध्यते।
यथा—मालिन्यं व्योम्नि पापे।
सतामपीति—पारमार्थिकमपि न निबध्यते। यथा—
न स्याज्जाती वसन्ते इत्यादि।
नियमस्येति यथा—हिमवत्येव भुर्जत्वक् चन्दनं मलये परम्॥

यूनामङ्गेषु हाराः स्फुटति च हृदयं विप्रयोगस्य तापैः।
मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतोः
भिन्नं स्यादस्य बाणैर्युवजनहृदयं, स्त्रीकटाक्षेण तद्वत्। (ग,इ)
अह्न्यम्भोजं निशायां विकसति कुमुदं, चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात्।
न स्याज्जाती वसन्ते, नच कुसुमफले गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत्कविसमयगतं सत्कवीनां प्रबन्धे ॥ १९ ॥

एषामुदाहरणानि आकरेषु स्पष्टानि।

**धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः।**
**आरूढत्वादिबोधाय ॥ २० ॥**

यथा—"पूरिते[1] रोदसीध्वानैर्धनुर्ज्यास्फालनोद्भवैः।"

अत्र ज्याशब्देनापि गतार्थत्वे धनुःशब्देन ज्याया धनुष्याततीकरणं बोध्यते। आदिशब्दात् "भाति कर्णावतंसस्ते।" अत्र कर्णस्थितत्वबोधनाय कर्णशब्दः। (ई) *

एवं श्रवणकुण्डलशिरःशेखरप्रभृतिः। (घ)

**(वि, ग)** योषितामास्यमध्ये वकुलं विकसतीत्यन्वयः।

**(वि, घ) धनुरि**ति। **आरूढत्वे**ति। तद्बोधश्च धनुःशब्दादौ धनुरारूढत्वं लक्षणया रूढिहेतुकया लुप्तषष्ठ्यर्थो वा आरूढत्वम्। **गतार्थत्वेऽपी**ति—न च ज्याशब्दार्थः कथं धनुर्ज्यात्वस्य संस्थानविशेषव्यङ्ग्यजातिविशेष इति वाच्यम्। ज्यात्वस्य जातित्वेऽपि तत्सम्बन्धिनो धनुषो नमयतः स्मारकत्वेन तद्वशादेव धनुर्लाभे, धनुःपदस्याधिक्यप्रसक्तेरारूढत्वप्रतिपादनेन निरवासितत्वात्। अत्र कर्णस्थितत्वेऽपि—अत्र पुनरुक्तिप्रसक्तिवारणमेव कर्णावतंसस्यापि अवतंसपदार्थत्वात् न चैवं कर्णस्थितलक्षणायामपि कर्णस्थितकर्णभूषा इति बोधनेनैव पुनरुक्तिरिति वाच्यम्। अवतंसपदस्य

---

**(लो, इ)** हारो हृदयं च स्फुटतीति सम्बन्धः। युवजना युवानो युवतयश्च। स्त्रीकटाक्षैर्यून एव।

**(लो, ई)** एष्ववतंसादिपदप्रतिपादनेनापि कर्णार्थप्रतिपत्तेः पौनरुक्त्यम्। तथा हि—कर्णपदान्यन्यकर्णादिव्यवच्छेदेन प्रकृतस्यैव कर्णादीन् बोधयन्ति। तैश्च तेषां शोभादिः स्वहेतुकः। किन्तु प्रकृतनायिकाहेतुक एव पर्यवस्यतीति भावः।

---

* "पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे" इति कोषात्। अत्रावतंसस्य कर्णभूषणे संकीर्तितत्वात् कर्णशब्दोपादाने पुनरुक्तिः। एवमन्यत्र। केचित्तु धनुर्ज्यादिषु अपुष्टार्थदोषस्य परिहारोऽयमित्याहुः। एवं मयूरकेकाकरिकलभगजबृंहिताश्वहेषाशैलोपत्यकादिशब्देषु बोध्यम्। सर्वत्र लक्षणा एव स्वीकार्या।

एवं निरुपपदो मालाशब्दः पुष्पस्रजमेवाभिधत्त इति स्थितावपि "पुष्पमाला विभाति ते" अत्र पुष्पशब्द उत्कृष्टपुष्पप्रसिद्ध्यै। एवं मुक्ताहार इत्यत्र मुक्ताशब्देनान्यरत्नामिश्रितत्वम्। (ङ)

**प्रयोक्तव्याः स्थिता अमी ॥ २१ ॥**

धनुर्ज्यादयः सत्काव्यस्थिता एव निबद्धव्या नत्वस्थिता जघनकाञ्चीकरकङ्कणादयः (च) *

**उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः ॥ २२ ॥**

यथा—"गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।

---

कर्णयोग्यभूषार्थकत्वेन कर्णस्थितकर्णयोग्यभूषा इति पुनरुक्त्यभावात्। **एवं श्रवणे**ति—एतद्द्वये पदाधिक्यस्यैव प्रसक्तिः कुण्डलत्वकिरीटत्वयोः संस्थानव्यङ्ग्यजातित्वादेव।

(वि, ङ) **पुष्पस्रजमेवाभिधत्ते** इति। तथा चात्रापि पुनरुक्तेरेव प्रसक्तिः। उत्कृष्टपुष्पप्रसिद्ध्यै इति पुष्पांशो मालाशब्दार्थ एव पुष्पशब्दस्य तु उत्कृष्टे लक्षणेत्यर्थः। **एवं मुक्ताहार इत्यत्रे**ति। मुक्ताग्रैवेयकं हार इति कोशात्। मुक्तांशोऽपि हारशब्दार्थ एव इत्यतोऽत्रापि पुनरुक्तेरेव प्रसक्तिः। अन्यरत्नामिश्रितत्वं तु मुक्ताशब्दलक्षणागम्यम्।

(वि, च) **सत्काव्यस्थिता एवे**ति—यतः सत्काव्ये स्थिता अतो निबद्धव्या एवेत्यन्वयः। तथा चात्र लक्षणाया रूढिहेतुकत्वं दर्शितम्। जघनकाञ्च्यादौ तु न रूढिरिति भावः।

(वि, छ) **उक्तावि**ति—आनन्दमग्नादेर्वचनस्योक्तावित्यर्थः। **गाढालिङ्गने**ति—सख्यौ सख्युरुक्तिरियम्। गाढालिङ्गनेन वामनीकृतकुचा चासौ प्रोद्भिन्नरोमोद्गमा चेति समासः। कुचे रोमवर्णनानौचित्यान्नास्य समासः। सान्द्रस्नेहरसातिरेकेण विगलत् श्रीमतो नितम्बादम्बरं यस्यास्तादृशविशेषणद्वयवती सा मम नायिका पीडये-

---

(लो, उ) **गाढे**ति—अत्र सुप्तेत्यादिना उत्तरोत्तरं निश्चलाधिक्यम्। किम्? उक्तरूपा प्रिया मम मनसि सुप्ता नु? स्थिरतया वर्त्तमानत्वात्। सुप्तापि पुनरुत्थाय यातीत्याशङ्कयाह मृता नु किम्? सापि परैर्बहिष्कर्तुं शक्या इत्यत आह—**लीने**ति। जतुकाष्ठादिवदिति विशेषः। तथाभूतापि केनचिद् व्यावर्त्तयितुं शक्येतेत्यत आह—

---

* एवं निर्बीजलक्षणायामतिप्रसङ्गः स्यादित्याशङ्कयाह—**प्रयोक्तव्या** इति। महाकविप्रबन्धस्थितेष्वेव कर्णावतंसादिपदेषु एतदुक्तप्रकारं समर्थनम्। महाकविप्रयुक्तान्येवान्यैःप्रयोज्यानि जघनकाञ्चीत्यादिपदानि प्रयुक्तानि पौनरुक्त्यमेवावहन्ति कविभिरप्रयुक्तत्वात्। अतो रूढितोऽनादिलक्षणायामेव प्रयोजनाभावो न दोष इति भावः।

मामा मानद ! माऽतिमामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किन्नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥
अत्र पीडयेति न्यूनम् । ( छ, उ )

**क्वचिन्न दोषो न गुणः ॥ २५ ॥**

न्यूनपदत्वमित्येव । यथा—

"तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥" (ज)

अत्र "प्रभावपिहिता" इति "भवेत्" इति च इत्यनन्तरम् "नैतद्यतः" इति पदानि न्यूनानि । एषां पदानां न्यूनतायामप्येतद्वाक्यव्यङ्ग्यस्य वितर्कव्यभिचारिभावस्योत्कर्षाकरणान्न गुणः । "दीर्घं न सा" इत्यादिवाक्यजन्यया च प्रतिपत्त्या तिष्ठेदित्यादिवाक्यप्रतिपत्तेर्बाधः स्फुटमेवावभासत इति न दोषः । ( झ, ऊ ) *

---

त्युक्तिवशात्, हे मानद ! मां मा मा मा इत्यलमित्येवमल्पाक्षरोल्लापिनी सती सुप्तेत्यादिवितर्कचतुष्टयविषयोऽभूदित्यर्थः । सुप्ता निद्रिता निष्पन्दत्वात् अतिनिष्पन्दत्वेन मरणवितर्कः । मनोगतत्वेन मनसि लयवितर्कः मनसोरप्यापि अबहिर्भावात् अत्यन्तलयरूपस्य विलयस्य वितर्कः ।

( वि, ज ) **तिष्ठेत्कोपे**ति—उर्वशीमनासाद्य पुरुरवसोऽयं वितर्कः । सा उर्वशी स्वप्रभावेन पिहिता अदृश्या तिष्ठेदिति वितर्क्याह—**दीर्घं न सा** इति । एवं स्वर्गाय इति वितर्क्याह—**मयि पुनरि**ति । अस्या असुरेण हरणकोटिस्तु असम्भव्या इत्याह—**तां हर्तुमि**ति । मे पुरोवर्त्तिनीम् इति तत्र हेतुः । अतोऽदर्शने हेत्वभावेन विस्मयादाह—**सा चे**ति—अगोचरम् अगोचरत्वं याता प्राप्ता ।

( वि, झ ) **अत्रे**ति—पूर्वोक्तस्य निषेधं प्रत्येव दीर्घं न सा इत्यनयोः हेतुत्वात् नतु पूर्वप्रतीतिं प्रति इति भावः । ननूत्कर्षस्याकरणात् मा भवतु गुणत्वं, दोषत्वं तु स्यादित्यत आह—**दीर्घं न से**त्यादीति । **बाधः स्फुटमेवे**ति—विरोधिनः

---

**विलीने**ति—दुग्धे जलवत् सर्वथा भेदोपलम्भाभाव इति भावः । ततो मामेति सामान्यतः प्रकृतनिराकरणम् । माऽति मामित्यत्र पीडयेति क्रियापदं न्यूनम् । एतत्प्रतिपादिकाया नायिकायाः सान्द्रानन्दजडीभूततया सङ्कीर्णवाक्योच्चारणेऽप्यसामर्थ्यं व्यनक्तीति न्यूनपदत्वं गुणः ।

( लो, ऊ ) **तिष्ठेदि**त्यादि । प्रभावेन दिव्येन पिहिता, अदृश्या सा उर्वशी । प्रतिपत्त्या ज्ञानेन । उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधते ।

---

* यथा गाढालिङ्गनेत्यत्र न्यूनपदत्वे रसावेशातिशयप्रतीतिर्न तथात्र इति न गुणः । तिष्ठेदित्यत्र सन्देहः । दीर्घमित्यनेन उत्तरज्ञानेन पूर्वज्ञानस्य संदेहस्य बाधि-

**गुणः क्वाप्यधिकं पदम् ॥ २४ ॥**

यथा—"आचरति दुर्जनो यत्सहसा मनसोऽप्यगोचरानर्थान् ।
तत्र न जाने जाने स्पृशति मनः किन्तु नैव निष्ठुरताम् ॥"

❀ अत्र "न न जाने" इत्यनेनाऽयोगव्यवच्छेदः । (ऋ) द्वितीये जाने इत्यनेनाहमेव जाने इत्यन्ययोगव्यवच्छेदाद्विच्छित्तिविशेषः । ❀ ( ज ) +

**समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित् ॥ २५ ॥** ×

यथा—"अन्यास्ता गुणरत्न" इत्यादि । अत्र प्रथमार्द्धेन वाक्यसमाप्तावपि द्वितीयार्द्धवाक्यं पुनरुपात्तम् । एवञ्च विशेषणमात्रस्य पुनरुपादाने समाप्तपुनरा-

---

परवाक्यस्य तथात्वनियमात् । तथा च "नैतद्यतः" इत्यस्याकाङ्क्षावशादभ्याहारोऽपि न दोषाय इति भावः ।

**( वि, ञ ) गुणः क्वापी**ति—यत्राधिकपदस्य रूढिलक्षणाया अर्थान्तरं तत्रेत्यर्थः । **आचरती**ति—मनसोऽप्यगोचरानर्थान् असदर्थान् सहसा यत् दुर्जन आचरति तदहं न न जाने । अपि त्वहमेव जाने इत्यर्थः, किन्तु मम मनः निष्ठुरतां नैव स्पृशति इत्यर्थः । विच्छित्तिर्बोधविशेषरूपा भङ्गिः । **अत्रे**ति—आकाङ्क्षोत्थानानुत्थान-द्वयमत्र अदोषदोषतयोर्बीजम् ।

**( वि, ट )** अन्यास्ता इत्यत्र पूर्वार्द्धेन वाक्यसमाप्तावपि कथमत्र निष्पादक-गुणरत्नादीनां वैलक्षण्यमित्याकाङ्क्षोत्थानाददोषता । समाप्तपुनरात्तत्वस्य दोषत्वादोषत्वे विनिगमयति—**एवञ्चे**ति । विशेषणमात्रस्य इत्यत्रापि अनाकाङ्क्षितस्येति बोध्यं. विशेषणे आकाङ्क्षासत्त्वे तु न दोष इति प्रागेव दर्शितम् । तथा चाकाङ्क्षाया एव

---

**( लो, ऋ )** अयोगव्यवच्छेदोऽहं जानामीत्येवंरूपः ।

**( लो, ऋ )** द्वितीयार्द्धवाक्यं श्रीमत्कान्तीत्यादि । **एवञ्चे**ति—विशेषण-

---

त्वात् नञर्थोपस्थितिरिति न दोषः । नैतदित्यादेरनुपादानेऽपि "दीर्घं न सा कुप्यति" इत्यादेरुक्त्यैव निषेधो वाच्यवत्प्रतीयते अतस्तदनुपादानं न दोषाय इति भावः ।

+ अयोगस्य आत्मनि ज्ञानासंबन्धस्य व्यवच्छेदान्निराकरणात्—अहं न जाने इति न परं जाने एव । द्वितीये जाने इत्यनेन अन्यस्य मद्भिन्नस्य योगः ज्ञान-संबन्धः तस्य व्यवच्छेदः निराकरणं तस्मात्—अहमेव जानामि नत्वन्य इत्यर्थः । "द्वौ नञौ प्रकृतमर्थं सातिशयं बोधयतः" इति न्यायात् । "न न जाने" इत्यनेन ज्ञानातिशये लब्धे पुनर्जाने इति पदम् "अहमेव जाने नतु अन्यं ज्ञापयामि" इति विशेषकत्वाद् गुण इति भावः ।

× न गुणः प्रकर्षप्रधानस्याभावात् । न दोषः प्रकृतं प्रति प्रातिकूल्याभावात् ।

1 तारकान्तर्गतपाठस्थाने, "अत न न जान इत्यन्ययोगव्यवच्छेदाद् विच्छित्ति-विशेषः" इत्येव पाठः ( ख. पु. )

त्वम्, न वाक्यान्तरस्येति विज्ञेयम्। ( ट, ऋ ) +

**गर्भितत्वं गुणः क्वापि ॥ २६ ॥**

यथा—"दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मात्प्रादुरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥"

अत्र "वदन्त एवम्" इत्यादिवाक्यं वाक्यान्तरप्रवेशात् चमत्कारातिशयं पुष्णाति। (ठ, ऌ)

**पतत्प्रकर्षता तथा ॥ २७ ॥**

तथेति क्वचिद्गुणः। यथा—"चञ्चद्भुज" इत्यादि। अत्र चतुर्थपादे सुकुमारार्थतया शब्दाडम्बरत्यागो गुणः। ( ड )

**क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः।**
**अनुभावविभावाभ्यां रचना यत्र नोचिता ॥ २८ ॥ (ढ)**

---

नियामकत्वं; न वाक्यत्वविशेषणत्वयोरिति स्थितेन वाक्यान्तरस्येति यदुक्तं तद्वाक्यान्तरे आकाङ्क्षा अवश्यं तिष्ठतीत्यभिप्रायेणैव।

**( वि, ट ) दिङ्मातङ्गघटे**ति। आघाटः पर्यन्तः। तथा च दिङ्मातङ्गघटाभिर्विभक्ताश्चत्वारः पर्यन्ताः यस्याः तादृशी मही येन रामेण साध्यते। सिद्धा व्याघातशून्यसाधनेन स्ववशीकृता साऽपि मही विप्राय प्रतिपाद्यते। किमपरं ब्रूम इति शेषः। तस्मै रामाय नम इदं कथाद्भुतं यस्मात् प्रादुरभूत् अन्यैरतथाकरणात् यस्मादेव प्रादुरभूदित्यर्थः। यत्रैव चास्तं गतं, केनाप्युत्तरकालं तथाकरणादस्तं गतमित्येवं वदन्त एव वयं रोमाञ्चिता एव इदं पश्यतेत्यर्थः। हिरवधारणे। **अत्रे**ति। चमत्कारस्य वाक्याऽसमाप्तावेव विस्मयोद्बोधात्।

**( वि, ड ) अत्र चतुर्थपाद** इति। उत्तंसयिष्यति कचांस्तव देवि! भीम इत्यत्र सुकुमारतया वर्णानामसमासेन च सुकुमारतयेत्यर्थः।

**( वि, ढ ) क्वचिदुक्तावि**ति। व्यभिचारिणः स्वशब्देनोक्तौ क्वचिन्न दोष इत्यर्थः। कुत्र न दोष इत्यत्राह—**अनुभावे**ति। रचना प्रतिपादनम्। अनौचित्यमेव द्विविधं तद्द्वयं व्याचष्टे यत्रेत्यादिभ्याम्।

---

मात्रस्येत्युपलक्षणम्। तेन कर्तृकर्मादीनामन्येषां पदानामपि वाक्यसमाप्तावुक्तौ। यथोदाहृतं दिवाकरो हरिरित्यादि।

**( लो, ऌ )** दिङ्मातङ्गेत्यादिपदस्य चतुःसमुद्रसीमा इत्यर्थः।

---

+ अत उक्तम्—"स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥"

यत्र विभावानुभावमुखेन प्रतिपादने विशदप्रतीतिर्नास्ति[1], यत्र च विभावानुभावकृतपुष्टिराहित्यमेवानुगुणं (ण) तत्र व्यभिचारिणः स्वशब्देनोक्तौ न दोषः। यथा—

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः॥"(त, ए)

अत्रौत्सुक्यस्य त्वरारूपानुभावमुखेन प्रतिपादने[2] न झटिति प्रतीतिः। त्वराया भयादिनापि सम्भवात् ह्रियोऽनुभावस्य च व्यावर्त्तनस्य[3] कोपादिनापि सम्भवात्।

साध्वसहासयोस्तु विभावादिपरिपोषस्य प्रकृतरसप्रतिकूलप्रायत्वादित्येषां

(वि, ण) **विभावानुभावकृते**ति—व्यभिचारिभावस्य यौ विभावानुभावौ ताभ्यां व्यङ्ग्यत्वरूपायाः व्यभिचारिभावस्य पुष्टिस्तद्राहित्यमेवेत्यर्थः।

(वि, त) द्वयोरेकमेवोदाहरणमाह—**औत्सुक्येन** इति। गौरी नवे संगमे प्रथमदिने हरसान्निध्यनिमित्तमौत्सुक्येन कृतत्वरानन्तरं च सहभुवा साहजिकया ह्रिया व्यावर्त्तमाना ततश्च तैस्तैरित्यादि। ततश्च वरं स्वामिनं हरम् अग्रे दृष्ट्वा आत्तसाध्वसरूपरसा, ततश्च हसता हरेण श्लिष्टा सती संरोहत्पुलका ईदृशी वः शिवायास्तु।

(वि, थ) **अत्रे**ति। औत्सुक्यस्य त्वरारूपो योऽनुभावस्तन्मुखेनेत्यर्थः। झटित्यप्रतीतौ बीजमाह—**त्वराया भयादिनाऽपी**ति। एवं ह्रियोऽप्यनुभावव्यावर्त्तनात् न झटिति तत्प्रतीतिः इत्यतः तस्यापि ह्रियेति शब्दस्य वाच्यत्वं न दोष इत्याह—**ह्रियोऽनुभावस्य चे**ति। विभावानुभावकृतपुष्टिराहित्यं दर्शयति—**साध्वसहासयोस्तु** इति। साध्वसं भयं हासश्च हास्यहेतुश्चेतोविकासः स्थायिभावलक्षणे दर्शितः। तद्द्वयं च भयानकहास्यरसयोः स्थायिभावावपि गौरीमहेशयोः शृङ्गारेऽत्र व्यभिचारिभावौ। तयोः स्वस्वविभावादिना परिपोषस्य प्रकृतशृङ्गाररसप्रतिकूलप्रायत्वात् इत्यर्थः। विभावादीत्यादिपदात् अनुभावपरिग्रहः। तथा हि कम्पस्तावद् गौरी-

(लो, ए) कुतो न दोष इत्याह—**अनुभावे**ति। **औत्सुक्येने**ति। सहभुवा त्वरासमनन्तरकालोत्पन्नया त्वरयेति। भयेन त्वरां कृतवतीति सम्भ्रान्तिसम्भावनत्वादित्यर्थः। एवमन्यत्र एषामौत्सुक्यादीनां "दूरादुत्सुकमागते विवलितम्" इत्यादौ विवलनादिरूपानुभावमुखेन यथा लज्जादिप्रतिपादनं तथा सहसा प्रसारणरूपानुभावमुखेन औत्सुक्यस्य प्रतिपादने न विशदप्रतीतिरिति व्यभिचारिणः स्वशब्दप्रतिपादनमेवोचितमिति भावः।

1 विशेष (क-ख.पु.) 2 –'ने सङ्गमे' (क. ख. पु.) 3 व्यावर्तमानश्च (क.ख.पु.)

स्वशब्दाभिधानमेव न्याय्यम् । ( थ )

**सञ्चार्य्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः ॥ २९ ॥ ( ऐ )**

" क्वाकार्यं शशलक्ष्मणः क्व च कुलम्," इत्यादि ।

अत्र प्रशमाङ्गानां वितर्क-मति-शङ्का-धृतीनामभिलाषाङ्गौत्सुक्यस्मृतिदैन्य-चिन्ताभिस्तिरस्कारः पर्यन्ते चिन्ताप्रधानमास्वादप्रकर्षमाविर्भावयति । (द)

**विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा ।**
**भवेद्विरोधो नान्योन्यमङ्गिन्यङ्गत्वमाप्तयोः ॥ ३० ॥ ( ध )**

क्रमेण यथा—

"अयं स रसनोत्कर्षी" इत्यादि । अत्रालम्बनाविच्छेदेन रतेररसात्मतया स्मर्यमाणानां तदङ्गानां शोकोद्दीपकतया करुणानुकूलता । ( न, ओ ) ॐ

---

साध्वसस्यानुभावः । महेशहासश्चोद्दीपनविभावस्ततश्च साध्वसहासावनुपादाय यदि सकम्पा इति क्रियेत तदा तदङ्गसर्पदर्शनात् भयेन, आर्द्रगजचर्मकपालदर्शनात् जुगुप्सया च शृङ्गारप्रतिकूलाभ्यां तत्कम्पसम्भवात् न शृङ्गारव्यभिचारिणोः साध्वसहासयोरेव व्यञ्जना स्यात्, भयजुगुप्सयोश्च व्यञ्जनासम्भवादित्यत एषाम् औत्सुक्यहासाध्वसहासानां स्वशब्देनाभिधानमित्यर्थः । साध्वसहासयोरपि व्यञ्जनसम्भवात् नात्यन्तं प्रातिकूल्यमित्यतः प्रायत्वादित्युक्तम् ।

**( वि, द ) सञ्चार्य्यादेरि**ति—सञ्चारी व्यभिचारी । आदिपदादनुभावविभावौ च । विरुद्धरसीयस्यापि तस्य बलवता बाध्यस्य बाध्यत्वेन कथनं विरोधिनो जये यथातथा गुणः । **प्रशमाङ्गानामि**ति । शान्तरसस्थायीभावः प्रशमः । तदङ्गानां तदीयानामित्यर्थः । **अभिलाषाङ्गे**ति । अभिलाषो रतिस्तदीयौत्सुक्यादिभिरित्यर्थः । **पर्य्यन्त** इति । कः खलु युवा धन्योऽधरं पास्यत्यनेन व्यङ्ग्येत्यर्थः ।

**( वि, ध ) विरोधिनोऽपि** इति—विरोधिरसस्यापि सञ्चार्य्यादेः स्मरणे स्मर्य्यमाणत्वेन व्यञ्जितस्य वचने साम्येन कथनेऽपि प्रकृतरसेन सह न विरोधो भवेत् । एवमङ्गिन्यङ्गत्वमाप्तयोश्च नान्योन्यविरोध इत्यर्थः । अङ्गिन्यङ्गत्वमाप्तयोरित्यत्र चार्थः पूरणीयः ।

**( वि, न )** अयं स इत्यादिकं स्पष्टम् । अत्र रसनोत्कर्षणादयः उद्दीपनविभावाः स्मर्य्यमाणास्तद्व्यङ्ग्याः । शृङ्गारोऽपि स्मर्य्यमाणो व्यङ्ग्यस्यापि अतीतत्वेन स्मर्य्यमाणता ।

---

**( लो, ऐ )** विरुद्धस्य प्रकृतरसादिप्रतिकूलस्य ।

**( लो, ओ )** आलम्बनं, संग्रामनिग्रहः ।

---

ॐ अत्र आलम्बनस्य ( शृङ्गाररसस्य ) पत्युः विच्छेदेन मरणात् रतिः (शृङ्गार-

"सरागया स्रुतघनघर्मतोयया
कराहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविलङ्घितोष्ठया
रुषा नृपाः प्रियतमयेव भेजिरे ॥" (प, औ)

**अत्र सम्भोगश्रृङ्गारो वर्णनीयस्य वीरव्यभिचारिणः क्रोधस्यानुभावसाम्येन विवक्षितः । (फ)** *

---

(वि, प) साम्येन वचने आह—**सरागये**ति । पीठोपविष्टानां राज्ञां युद्धोद्यमार्थं क्रोधस्य वर्णनमिदम् । नृपा रुषा भेजिरे प्रपेदिरे प्रियतमया इव । अर्थात् क्रुद्धाया रुषः क्रुद्धप्रियतमायाः विशेषणान्याह—**सरागये**ति । रुषो रक्तवर्णनं कविसम्प्रदायसिद्धम्, पक्षे तु प्रियतमत्वेन अनुरागयुक्तयाः क्रोधाधीनलौहित्यभाजा । स्रुतं चरितं घनं घर्मतोयं राज्ञां यतः, रुषा तादृश्या, स्रुतं निःसृतं घनं घर्मतोयं गात्रात् यस्यास्तादृश्या प्रियतमया । **कराहती**ति । राज्ञां कराहत्या पीठध्वननं रुषा प्रयुक्तम् । पीठस्य पृथुत्वं विस्तारः, उरुत्वं उच्चत्वं, प्रियतमया तु स्वीयकराहत्या पृथोः स्वोरुदेशरूपस्य पीठस्य ध्वननम् । **मुहुरि**ति । दशनोष्ठलङ्घनं नृपकर्तृकं रुषा प्रयुक्तम् । प्रियतमायास्तु स्वकर्तृकम् ।

(वि, फ) **अत्रे**ति । एकरसस्थायिभावोऽपि अन्यरसे व्यभिचारिभाव इत्यतो रौद्ररसस्थायिभावः क्रोधोऽत्र प्रकान्तवीररसस्य व्यभिचारिभावस्तद्व्यङ्ग्यस्य प्रकृतवीररसस्य साम्येनात्र सरागत्वादिव्यङ्ग्यः सम्भोगश्रृङ्गारो विवक्षित इत्यर्थः । ननु प्रियतमया इव इत्युक्त्या प्रियतमैव साम्येन विवक्षिता, न तु शृङ्गार इत्यत आह—**अनुभावसाम्येने**ति । वीरशृङ्गारयोर्द्वयोरपि सरागत्वादयोऽनुभावाः । तेषामेकशब्दवाच्यत्वरूपरससाम्ये तु तद्व्यङ्ग्ययोर्वीरश्रृङ्गारयोरपि साम्यमित्यर्थः । यद्यपि "अनुकूलौ निषेवेते यत्रान्योऽन्यं विलासिनौ । दर्शनस्पर्शनादीनि स सम्भोग उदाहृतः ॥"

---

(लो, औ) रागो लौहित्यं प्रेमा च ।

---

रसस्य स्थायिभावः) स्थायितामाप्तुमक्षमा । अतः श्रृङ्गारो नात्र रसः । ततः पूर्वकालीनविलासस्मरणेन श्रृङ्गारस्यापि स्मरणम् । पूर्वानुभूतैः स्मर्यमाणैर्विलासैः हस्तस्यातीव स्पृहणीयता प्रतिपाद्यते, तेन च शोकावेशः प्रचुरीकृतो भवति ।

* यथा कामिनः सानुरागां प्रकाशितमान्मथविकारां कान्तामत्यन्तोपादेयतयाऽनुरागातिशयादङ्गीकुर्वन्ति तथात्र राजानः प्रकाशितस्वलक्षणां रुषमङ्गीचक्रुः इत्यर्थबोधात् सरागादिसाधारणानुभावरूपयोरङ्गयोः साम्यविवक्षया अङ्गिनोरपि वीरश्रृङ्गारयोः रसयोः साम्यं विवक्षितम् । अतः श्रृङ्गाररसोऽत्र उपमानत्वेन वीररसस्याङ्गम् । अतस्तयो रसयोर्न विरोधः ।

"एकं ध्याननिमीलनेन[1] मुकुलप्रायं द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनभरे सम्भोगभावालसम् ।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥"

अत्र शान्तशृङ्गाररौद्रपरिपुष्टा भगवद्विषया रतिः । ( ब, अ ) +

*यथा वा—*

"क्षिप्तो हस्तावलग्नः, प्रसभमभिहतोऽप्याददानोऽशुकान्तं,
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।

---

इत्येवं सम्भोगलक्षणमुक्तम्। तथापि प्रेमार्धानक्रोधदर्शनादावानुकूल्यमस्त्येव, इत्यतोऽयं सम्भोगशृङ्गार एव ।

(वि, ब) अङ्गिनि अङ्गत्वमाप्तयोरविरोधमाह—**एकमिति** । समाधिसमये विभिन्नरसं शम्भोः नेत्रत्रयं वः पातु । तत्र भिन्नरसत्वं दर्शयति—**ध्याननिमीलनेन मुकुलप्रायमिति** । क्वचित्तु ध्याननिर्मीलनात् मुकुलितप्रायमिति पाठः, तदा मुकुलितं मुकुलशब्दात् क्तप्रत्ययेन मुकुलतुल्यम् । प्रायःपदात्तु अल्पमुकुलम् । अयं शान्तानुभावः । **द्वितीयमिति** । वदनाम्बुजस्तनभरे इत्यत्र प्राण्यङ्गत्वात् समाहारद्वन्द्वः । अयं शृङ्गारानुभावः । **अन्यदिति** । दूरे विकृष्टचापो यो मदनः तद्विषये क्रोधानलेनोद्दीपितमित्यर्थः । अत्र रौद्ररसस्थायिभावस्य क्रोधस्य वाच्यत्वेऽप्युद्दीपनेन तदनुभावेन पुनर्व्यञ्जना अपराङ्गतेत्याह—**अत्रेति** । शान्तादिपदमत्र स्थायिपरम् । तेषां विरोधिनामुक्तानुभावैर्व्यङ्ग्यानामपराङ्गत्वेनाविरोध इत्याह—**अत्रेति** ।

(वि, भ) इत्थमङ्गिनि विरोधिनां साक्षादविरोधं दर्शयित्वा साक्षात् परम्पराभ्यां तादृशानामविरोधमाह—**यथा वा—क्षिप्त** इति । त्रिपुरदाहे स प्रसिद्धः शाम्भवः शराग्निर्वो दुरितं दहतु । कीदृशः हस्तावलग्नः सन् साश्रुनेत्रोत्पलाभिस्त्रिपुर-

---

(लो, अ) **अत्र शान्तेति**—अङ्गिनो भगवद्विषयरतिभावस्य अङ्गभावेन विरुद्धानामपि शान्तादीनां नान्योऽन्यविरोध इति भावः ।

---

+ अङ्गिनीति तृतीयप्रकारे एकत्राङ्गिनि विरुद्धयोरङ्गत्वं द्विधा भवति (१) राज्ञि विरुद्धसेनापतिद्वयवत् तुल्यकक्षतया, (२) राज्ञि सेनापतितद्भृत्यवत् परस्याऽङ्गत्वमासाद्य वा । तत्राद्येनाविरोधमाह—**एकमिति** । अत्र भगवद्विषयरतिभावकवेस्तात्पर्यात् स एव प्रधानम् । उपश्लोक्यमानस्य माहात्म्यवर्णना युक्तेति तत्र शान्तशृङ्गाररौद्ररसानां वर्णनमुपकारायेति शान्तादयस्तत्राङ्गम् । एवं चैककार्य्यव्यग्राणां राज्ञः सेनापतीनामिव सामन्तानामिव वा स्वभावतो विरुद्धानामपि नात्र विरोधः सम्भवति इति भावः ।

1 'निमीलनान्मुकुलितप्रायम्' ( ख. पु. )

आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥"(भ)†

**अत्र कविगता भगवद्विषया रतिः प्रधानम् । तस्याश्च परिपोषकतया भगवतस्त्रिपुरविध्वंसं प्रत्युत्साहः, तस्य चापरिपुष्टतया रसपदवीमप्राप्ततया भावमात्रस्य करुणोऽङ्गम्, तस्य च कामी वेति साम्यबलादायातः शृङ्गारः । एवं चाविश्रान्तिधामतया करुणस्याप्यङ्गतैवेति । द्वयोरपि करुणशृङ्गारयोर्भगवदुत्साह-**

युवतिभिरार्द्रापराधः कामीव क्षिप्तः, एवमंशुकस्यान्तमाददानोऽपि अभिहतः । अपिकारो ह्यत्र भिन्नक्रमे । तथा केशेषु गृह्णन् अपास्तः । कामिपक्षे—चुम्बनार्थं केशग्रहणं तथा चरणनिपाततोऽग्निः सम्भ्रमेण भयेन नेक्षितः । कामी तु चरणनिपतितः संभ्रमेणादरेण यत् ईक्षणं तद्विषयो न कृतः । आलिङ्गन् इति स्पष्टम् । अग्निपक्षे—भयात् कामिपक्षे क्रोधादश्रु ।

**( वि, म )** कविगता कविनिष्ठा प्रधानम्, स दहतु इत्यादि निराकाङ्क्षवाक्यव्यङ्ग्यत्वात् । **तस्याश्चे**ति । तस्याः प्रधानस्य भगवदुत्साहस्त्रिपुरं प्रत्याग्नेयास्त्रप्रयोगाद् व्यङ्ग्यः । स च तन्महत्त्वसूचकत्वेन तद्विषयरतिभावस्याधिक्यरूपपुष्टिकारक इत्याह—**परिपोषकतये**ति । उत्साहो रतिभावस्याङ्गमित्यर्थः । तस्योत्साहस्य करुणोऽङ्गमित्यन्वयः । ननु उत्साहो वीररसस्थायिभावः । स चात्र व्यङ्ग्य इत्यतो वीररस एवात्र प्रधानम् । तत् कथं रतिभावस्य प्राधान्यमुक्तम् इत्यत आह—**तस्य चापरिपुष्टतया** इति । तस्योत्साहस्य साकाङ्क्षवाक्यव्यङ्ग्यत्वेन दहत्विति निराकाङ्क्षवाक्यव्यङ्ग्यकविभावाङ्गत्वेनाऽप्राधान्यरूपया अपरिपुष्टतया रसपदवीमनाप्ततया भावमात्रस्य स्थायिभावस्येत्यर्थः । **करुण** इति । त्रिपुरयुवतीनां शोच्यावस्थाव्यङ्ग्यः करुण इत्यर्थः । भगवदुत्साहेन एव तासां शोच्यावस्थाप्रापणात् तद्व्यङ्ग्यः करुणः तत्पुष्टिकारकोऽङ्गमित्यर्थः । **तस्य चे**ति । अस्य करुणस्य इत्यर्थः । शृङ्गारोऽङ्गमित्यन्वयः । तस्याङ्गता च उपमानोपमेयप्रकर्षणात् । इत्थं भगवदुत्साहपुष्टस्य भगवद्विषयकविभावस्य साक्षात्परम्पराभ्यामङ्गभूतौ करणशृङ्गारौ विरोधिस्वरूपौ अपि अविरुद्धौ इति दर्शयति—**एवं चाविश्रान्ती**ति । अविश्रान्तिधामतया साकाङ्क्षताऽऽश्रयतया, अङ्गिसाका-

**( लो, इ )** अपरिपुष्टतया विभावादिभिरित्यर्थः । भावमात्रस्य इत्यत्र हेतुः । रसपदवीमप्राप्तत्वमङ्गत्वादित्यर्थः । साम्यबलादायातः सदृशविशेषणमहिम्ना प्राप्तः । **करुणस्ये**ति । करुणस्य शृङ्गारापेक्षयाऽङ्गित्वेऽपि भगवदुत्युत्साहस्याङ्गत्वादेवेत्यर्थः । किञ्चात्र शृङ्गाररसस्य "अयं स रसनोत्कर्षी"त्यादि पूर्वोक्तदिशा स्मर्यमाणतयांशभूतत्वेनापि व्यक्तीकरणेन न विरोधः । तथा हि यासां त्रिपुरयुवतीनां प्रणयरोषनिवारणार्थं

† तृतीयप्रकारस्य द्वितीयभेदं—साक्षात् प्रधानाङ्गस्य परम्परया ( अङ्गाङ्गिभावेन ) तदङ्गेनाप्यविरोधं दर्शयति—**क्षिप्त** इति । आर्द्रापराधः तत्कालकृतापराधः ।

परिपुष्टतद्विषयरतिभावास्वादाप्रकर्षकतया यौगपद्यसद्भावादङ्गत्वेन न विरोधः।
( म, आ ) ×

ननु समूहालम्बनात्मकपूर्णघनानन्दरूपस्य रसस्य च तादृशेनेतररसेन कथं विरोधः सम्भावनीयः, एकवाक्ये निवेशप्रादुर्भावयौगपद्यविरहेण परस्परोपमर्दकत्वानुपपत्तेः। ( य )

---

ङ्गतयेति यावत्। भगवदुत्साहस्तु अङ्गमपि भावस्याविरोधित्वात् तद्विरोधो न दर्शितः। ननु स्मर्यमाणविभावादिव्यङ्ग्यस्य रसस्यापि, स्मर्यमाणस्य विभावादिसाम्यस्य विवक्षाधीनाविवक्षितसाम्यस्य अङ्गिरसेन सह विरोधप्रसक्तावपि न विरोध इत्युक्तम्, अङ्गिरसेन सह विरोधप्रसक्तिरेव नास्तीत्याशङ्कते—

**(वि, य) ननु** इति। **समूहालम्बने**ति—प्रपानकरसन्यायाच्चर्व्यमाणो रसो भवेदित्यनेनोक्तस्य विभावादिसमूहालम्बनात्मकस्य निराकाङ्क्षवाक्यव्यङ्ग्यत्वेनाकाङ्क्षापूर्त्या पूर्णस्य घनस्य विषयान्तराऽग्रहणे निबिडस्याऽऽनन्दरूपस्य रसस्य अङ्गिरसस्य तादृशेन स्मर्यमाणेन विवक्षितसाम्येन वा रसेन सह कथं विरोधः सम्भावनीय इत्यर्थः। असम्भावनायां हेतुमाह—**एकवाक्ये** इति। अङ्गिरसस्तावन्निराकाङ्क्षविधेयवाक्यात् प्रादुर्भवति। स्मर्यमाणोपमानयोस्तु साकाङ्क्षोद्देश्यवाक्ययोरेव प्रादुर्भावेण एकवाक्यप्रादुर्भावरूपयौगपद्यविरहेण परस्परोपमर्दकत्वानुपपत्तेरित्यर्थः। तुल्यबलत्वाभावेन प्रधानभूतेन निराकाङ्क्षविधेयवाक्येन व्यङ्ग्यतया प्रधानेन अङ्गिरसेन बलवता स्मर्यमाणोपमान-

---

कामी निराकृतहस्तग्रहणानि कृतवान्। तास्वेव निष्करुणासु शाम्भवः शराग्निस्तथा चेष्टितवानिति सादृश्यसंदर्शनात् स्मर्यमाणेनेर्ष्याविप्रलम्भेन करुणः प्रत्युत पुष्टिं नीतः। तेन च त्रिपुररिपुप्रभावातिशयपरिपुष्टस्तद्विषयरतिभावः परिपोषं नीयते।

**( लो, इ ) ननु समूहे**त्यादि—यदि रसयोर्विरोधः स्यात्, यदि वा अङ्गाङ्गिभावः स्यात्। नत्वेतत्प्रकारद्वितयमपि रसयोः सम्भवति। कथं विरोधो न सम्भवतीत्याह—परस्परोपमर्दकत्वानुपपत्तेः। परस्परोपमर्दकत्वं कथमनुपपन्नमित्याह—**एकवाक्ये**ति—एकवाक्यनिर्देशे च प्रादुर्भावस्यैकवाक्यनिर्देशहेतुकस्य यौगपद्यस्य

---

* **करुणोऽङ्गमि**ति—करुणोद्दीपनविभावस्य त्रिपुरस्त्रीवैक्लव्यस्य त्रिपुररिपुप्रभावातिशयाधीनत्वादिति भावः। एवं च त्रिपुररिपुप्रभावातिशयस्य त्रिपुररिपुविषयकरतिभावोद्दीपनविभावत्वात् अङ्गिनि त्रिपुररिपुविषयकरतिभावे करुणोऽङ्गमिति भावः। शृङ्गारापेक्षया करुणस्य प्रधानत्वेऽपि तत्र पर्य्यवसानं नास्ति—तेनाऽपि भावप्रकर्षणादिति करुणोऽङ्गम्। पूर्वं प्रणयी यथा करावलम्बनादिकमकार्षीत्तदेदानीं शम्भुशराग्निरित्युपमानभावेन पूर्वावस्थाप्रतीतिरुद्दीपकत्वेन च शृङ्गारः करुणस्याङ्गं सन् परम्परया प्रधानस्य भावस्याङ्गमिति विरोधिनोरप्यनयोः शृङ्गारकरुणयो राज्ञि सेनापतितद्भृत्ययोरिव प्रधानेऽङ्गभावेन विरोधो नैव सम्भवतीत्यर्थः।

**नाप्यङ्गाङ्गिभावः, द्वयोरपि पूर्णतया स्वातन्त्र्येण विश्रान्तेः । (र, इ) सत्यमुक्तम् ।**

**अतएवात्र प्रधानेतरेषु रसेषु स्वातन्त्र्यविश्रामराहित्यात् पूर्णरसभावमात्राच्च विलक्षणतया सञ्चारिरसनाम्ना व्यपदेशः प्राच्यानाम् । अस्मत्पितामहानुजकविपण्डितमुख्यश्रीचण्डीदासपादानां खण्डरसनाम्ना । ( ल, ई )**

**यदाहुः—**

---

यैरेव उपमर्दनादिति भावः । न चायं स रसनोत्कर्षीत्यादौ निराकाङ्क्षवाक्यैरेव स्मर्यमाणश्रृङ्गार इति वाच्यम् । रसनोत्कर्ष्यादिकरोऽयं हस्तः पतित इत्येवं विधेयपातित्यसाकाङ्क्षत्वादेव । तेषां विधेयपातित्यं तु करुणव्यञ्जकमेव श्रृङ्गारस्य व्यङ्ग्यत्वेऽपि परोक्षत्वादेव स्मर्यमाणतोपचार इति बोध्यम् ।

**( वि, र )** इत्थं स्मर्यमाणोपमानयोर्विरोधाप्रसक्तिं दर्शयित्वा अङ्गिन्यङ्गत्वमाप्तयोरङ्गाङ्गिभावासम्भवमेवाशङ्कते—**नाप्यङ्गाङ्गिभाव** इति । **द्वयोरपि** इति । श्रृङ्गारकरुणयोर्विरोधिनोरित्यर्थः । **स्वातन्त्र्येणे**ति । क्षिप्त इत्यादिवाक्यानां कामीव इत्यादिवाक्यस्य च निराकाङ्क्षत्वेन तद्व्यङ्ग्यत्वादित्यर्थः । स्वातन्त्र्यमेव च पूर्णता, आकाङ्क्षायाः पूर्णत्वात्

**( वि, ल )** समाधत्ते—**सत्यमि**ति । एकवाक्यव्यङ्ग्यत्वाभावेऽपि द्वयोर्निराकाङ्क्षवाक्यव्यङ्ग्यत्वेऽपि च श्रृङ्गारवति करुणाऽप्रतीत्या विरोधाप्रसक्तिरस्त्येव । किन्तु स्मर्यमाणश्रृङ्गारापेक्षया अनुभूयमानस्योपमानश्रृङ्गारापेक्षया उपमेयस्य च करुणस्य पार्यन्तिकप्रतीतिविषयतया प्राधान्यम् । एवं करुणापेक्षया भगवति कविभावस्य च पार्यन्तिकप्रतीतिविषयत्वेन प्राधान्यम् । इत्यतः तादृशप्रधानेतरेषु करुणेतरत्र श्रृङ्गारे भावेतरत्र करुणे श्लोकान्तरे चान्येतरत्र अन्यस्मिन् रसे च पार्यन्तिकप्रतीतिविषयतारूपस्वतन्त्रविश्रान्तिराहित्यात् तद्वशेन पूर्णरसभावमात्रान्मुख्यरसात् विलक्षणतया व्यपदेशविशेष इत्यर्थः । खण्डरसनाम्नेत्यत्रापि व्यपदेश इत्यन्वयः ।

---

विरहात् । अयमर्थः—यौगपद्यं हि एकवाक्यनिर्देशेनैव सम्भवति । स तु रसयोर्न सम्भवति, अत्र हेतुः—**समूहे**ति । अयमर्थः द्विरुक्तप्रकारेण विभावादिसमूहालम्बनत्वात् । विभावादिसामग्री खलु एकवाक्यस्यार्थः । एका च सामग्री कथं विरोधिनोर्द्वयोरपि स्यात् । कथमेकवाक्यहेतुकं परिपूर्णत्वं स्यात् । घनशब्दो हि विजातीयानवच्छिन्नप्रवाहत्वम् । अङ्गाङ्गिभावासम्भवे हेतुमाह—**नापी**ति । अङ्गाङ्गिभाव उपकार्योपकारित्वम् ।

**( लो, इ )** सिद्धान्तमाह—**सत्यमुक्तमि**ति । अत एव विरोधस्य अङ्गाङ्गिभावस्य चासम्भवात् । भावमात्रवैलक्षण्यं चापाततः स्वसामग्रीपरिपुष्टतया ।

"अङ्गं बाध्योथ संसर्गाद् यद्यङ्गी स्याद्रसान्तरे।
नास्वाद्यते समग्रं यत्ततः खण्डरसः स्मृतः ॥" इति। (व, उ)

ननु—

"आद्यः करुणबीभत्सरौद्रवीरभयानकैः"

इत्युक्तनयेन विरोधिनोर्वीरशृङ्गारयोः कथमेकत्र (श, ऊ)

"कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलम्।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥"

इत्यादौ समावेशः। (ष)

---

(वि, व) चण्डीदासोक्ते खण्डरसव्यपदेशे योगार्थवशात् संवादमाह—**अङ्गमि**ति। बाध्यो यो रसः सोऽङ्गबाध्यत्वमेव। कीदृशमित्यत्राह—**अथ संसर्गादि**ति। अथ सम्बोधने। एकपद्यबोध्यतारूपात् संसर्गात् यदि रसान्तरे अङ्गप्रकर्षकं स्यात्तदा बाध्य इत्यर्थः। योगार्थविशेषवशात् खण्डरसव्यपदेश इत्याह—**नास्वाद्यत** इति। पार्यन्तिकप्रतीतिविषये एव समग्रास्वाद इति भावः। इत्थं पार्यन्तिकप्रतीतिविषयस्य बाधकत्वम्। अतथाभूतस्य च बाध्यत्वं खण्डरसत्वं च इत्युक्तम्।

(वि, श) यत्र तु कपोले जानक्या इत्यत्र विरोधिनोः शृङ्गारवीररसयोर्नैदृशो बाध्यबाधकभावस्तत्र तयोः कथं सन्निवेश इत्याशङ्क्य तु वीरशृङ्गारयोर्विरोधं परोक्तं दर्शयति—**नन्वाद्य** इति। आद्यः शृङ्गारः करुणादिभयानकान्तैर्विरुध्यते इति वाक्यान्तरे। इत्युक्तनयेन विरुद्धयोः कथमेकत्र वीरशृङ्गारयोः सन्निवेश इत्यन्वयः।

(वि, ष) **कपोल** इत्यादि। श्लोकार्थस्तु रघूणां परिवृढः प्रभुः रामः जानक्या वक्त्रकमलं मुहुः पश्यन् खरदूषणादिरजनिचरसेनाकलकलं शृण्वन् जटाजूटस्य जटासमूहस्य ग्रन्थिं द्रढयति। वक्त्रकमलं कीदृशं करिकलभदन्तद्युतिमुषि कपोले स्मरेण जानकीनिष्ठेन रामविषयकस्मरेण स्मेरः हर्षप्रायः स्फारो विस्तृतः उड्डामरो बाहुल्यात् उद्भटः पुलको यस्य तादृशं वक्त्रकमलम् इत्यर्थः। अत्र जानकीमुखदर्शनव्यङ्ग्यः शृङ्गारः। जटाजूटद्रढनव्यङ्ग्यो वीररसश्च परस्परमबाध्यताम् अनङ्गतां चापन्नौ स्वातन्त्र्येण उपलभ्येते। तत् कथमनयोरेकत्र समावेश इत्यन्वयः।

---

(लो, उ) यद्यङ्गी रसः अपरिपुष्टतया भावमात्रवैलक्षण्येनापाततमात्रतः प्राधान्येनाभिव्यक्तः समग्रं नास्वाद्यत इति परतन्त्रत्वात्, न्यूनाङ्गसामग्रीकत्वात्, समग्रापुष्टत्वाच्च।

(लो, ऊ) आद्यः शृङ्गारः। कथमेकत्रेत्यस्य उपरितनेनेत्यादौ सन्निवेश इत्यनेन सम्बन्धः।

अत्रोच्यते—इह खलु रसानां विरोधिताया अविरोधितायाश्च त्रिधाप्यवस्था। कयोश्चिदालम्बनैक्येन कयोश्चिदाश्रयैक्येन कयोश्चिन्नैरन्तर्य्येण इति। तत्र वीरशृङ्गारयोरालम्बनैक्येन विरोधः। तथा हास्यरौद्रबीभत्सैः सम्भोगस्य। वीरकरुणरौद्रादिभिर्विप्रलम्भस्य। आलम्बनैक्येन आश्रयैक्येन च वीरभयानकयोः। नैरन्तर्य्यविभावैक्याभ्यां शान्तशृङ्गारयोः। त्रिधाप्यविरोधो वीरस्याद्भुतरौद्राभ्यां शृङ्गारस्याद्भुतेन भयानकस्य बीभत्सेनेति। तेनात्र वीरशृङ्गारयोर्भिन्नालम्बनत्वान्न विरोधः। ( ऋ )

एवं च वीरस्य नायकनिष्ठत्वेन भयानकस्य प्रतिनायकनिष्ठत्वेन निबन्धे भिन्नाश्रयत्वेन विरोधः। ( स, ऋ ) ×

यत्तु नागानन्दे प्रशमाश्रयस्यापि जीमूतवाहनस्य मलयवत्यनुरागो दर्शितः तत्र "अहो गीतमहो वादित्रम्" तस्यान्तरानिवेशनान्नैरन्तर्य्याभावान्न

---

( वि, स ) स्वतन्त्रयोरनेकयोरेकावलम्बनकत्वे एव विरोधः। प्रकृते तु जानक्यालम्बनकः शृङ्गारो, रजनीचरालम्बनकस्तु वीररस इत्यविरोध इति समाधास्यन्नाह—**अत्रोच्यते। इह खल्विति**। नैरन्तर्य्येण अव्यवधानेन। तत्र यस्य येन सह विरोधस्तं दर्शयति—**तत्र वीरशृङ्गारयोरि**ति। एतानि स्पष्टानि।

( वि, ह ) ननु शान्तशृङ्गारयोर्नैरन्तर्य्ये विरोधश्चेत् कथं नागानन्दे न तथा निबद्धमित्यत आह—**यत्त्विति। अद्भुतस्ये**ति। रसनामनापन्नोऽद्भुतो अहोशब्दवाच्योऽपि अन्तरास्थितो नैरन्तर्य्यविघटक इत्यर्थः।

---

( लो, ऋ ) स्फारो बहुलः उड्डामर उत्कटः। परिवृढः प्रभुः। त्रिधाप्यालम्बनेत्यादिना कपोले जानक्या इत्यादौ भिन्ने आलम्बने वीरस्य रजनीचरसेना, शृङ्गारस्य जानकीति।

( लो ऋ ) नायकनिष्ठत्वं भयानकस्य प्रतिनायकनिष्ठत्वम्।

यथा मम—प्रौढामादाय भीतिं मनसि सरभसं प्राप्य लोकापकीर्त्तिं
नैव स्तोकाऽप्यपेक्षाऽक्रियत पथि पथि प्राक्तनासु प्रियासु।
श्रीमन्निःशङ्कभानोः समरपरिसरद्भीमनिःसीमसेना-
निःशाणस्वानशङ्काकुलमपसरतां पञ्चगौडेश्वरेण।

अत्र वीरभयानकयोरेकाश्रयाभावान्न विरोधः।

---

× प्रबन्धे यस्य नायकस्याऽङ्गितया वीररसो वर्णितस्तस्य कालान्तरेऽपि भयानकवर्णने दोषप्रसङ्गः अतोऽनयोराश्रयैक्ये विरोधः।

शान्तश्शृङ्गारयोर्विरोधः । एवमन्यदपि विज्ञेयम् । ( ह, लृ ) *

"पाण्डु क्षामं वदनम्" इत्यादौ च पाण्डुतादीनामङ्गभावः करुण-[1] विप्रलम्भेऽपीति न विरोधः । ( क, ए ) ×

---

( वि, क ) ननु परिपन्थिरसाङ्गस्य विभावादेः परिग्रहो दोष इत्युक्तम्, तत्कथम्

"पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥"

इत्यादौ शृङ्गाररसीये मालतीमाधवीये श्लोके शृङ्गारपरिपन्थिकरुणानुभावस्य वदनपाण्डुतादेः सत्त्वेऽपि अदुष्टतानुभव इत्यत आह—**पाण्डु क्षामम्** इति। मालतीं प्रति लवङ्गिकाया इयं पृच्छा । हे सखि ! तव पाण्डुक्षामवदनादिकं तव हृदन्तः क्षेत्रियरोगम् अस्मिन् क्षेत्रे शरीरेऽचिकित्स्यं रोगमावेदयतीत्यर्थः । क्षामं क्षीणं, सरसं सस्वेदद्रवम् । समाधत्ते—**पाण्डुतादीना**मिति । परिपन्थिमात्रीयत्वे एव दोषः । उभयीयत्वे तु प्रकरणसाचिव्यात् प्रकृतरसबोधात् न दोष इति भावः ।

---

( लो, लृ ) शान्तश्शृङ्गारयोर्नैरन्तर्य्यविरोधिनोर्न परं प्रबन्धे यावदेकस्मिन्नपि वाक्ये विरोधः । यथा—

भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः ।
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ।
विमानपर्य्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम्
निर्दिश्यमानान् ललनाङ्गुलिभिर्वीराः स्वदेहान् पतितानपश्यन् ।

अत्र बीभत्सशृङ्गारयोर्वीररसस्यान्तरा निवेशनान्न विरोधः । एवमन्येषामपि रसानां परिहारप्रकाराः सत्कविकाव्येषु अनुसर्त्तव्याः ।

( लो, ए ) अङ्गभावोऽनुभावतयेत्यर्थः । यदि खलु पाण्डुत्वादीनां विप्रलम्भापेक्षयाधिका करुणाङ्गता भवेत् तदैव दोषः स्यादित्यर्थः । इति उक्तप्रकारात् ।

---

* उत्कटरागलक्षणः शृङ्गारः । रागप्रशमलक्षणः शान्तः । अतोऽनयोरेकदा स्थितिर्नैव सम्भवति परस्परविरुद्धत्वात् । अतस्तयोः कालिको नैरन्तर्य्यकृतो विरोधः । भिन्नकाले तु नैरन्तर्य्याभावान्न दोषः ।

× "क्षेत्रियच् परक्षेत्रे चिकित्स्यः" इति सूत्रेण निपातनात् सिद्धम् । सख्या इयमुक्तिः । अतः क्षेत्रमन्यत् शरीरम् । तच्च सन्ततभावनया एकात्मतालाभात् तवैव शरीरान्तरम् । तत् प्राप्तौ तु चिकित्सनीयोऽयं रोग इत्यमी पाण्डुत्वादय आवेदयन्तीत्यर्थः ।

1 'णवद्विप्र (ग. पु.) ।

**अनुकारे च सर्वेषां दोषाणां नैव दोषता**[1] ॥ ३१ ॥

सर्वेषां दुःश्रवत्वप्रभृतीनाम् । यथा—

"एष दुश्च्यवनं नौमीत्यादि जल्पति कश्चन ।"

अत्र दुश्च्यवनशब्दोऽप्रयुक्तः । ( ख )

**अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः ।**
**अदोषता च गुणता ज्ञेया चानुभयात्मता ॥ ३२ ॥**

अनुभयात्मता अदोषगुणात्मता । ( ग, ऐ )

इति साहित्यदर्पणे दोषनिरूपणो नाम सप्तमः परिच्छेदः ॥

---

( **वि, ख** ) अनुकारे अनुकरणे । **एष** इति । एष कश्चन इत्यन्वयः ।

( **वि, ग** ) इत्यौचित्यात् एवम् औचित्यात्, अदोषता गुणता इति । तथाऽदोषतामात्रं पर्यवस्यति । अनुभयात्मतां व्याचष्टे—**अदोषगुणे**ति । अदोषता अगुणता च इत्यर्थः । दोषतागुणतयोर्व्यतिरेको हि न दोषता न गुणता । दोषतासहितगुणत्वसत्त्वेऽपि उभयाभावसत्त्वात् यथा—प्रहेलिकाक्रियाकर्मकर्तृगुप्त्यादौ कष्टार्थतायाः ।

इति श्रीमहेश्वरतर्कालङ्कारभट्टाचार्यकृतायां साहित्यदर्पणटीकायां दोषनिरूपणाख्यसप्तमपरिच्छेदस्य विवरणम् ।

---

( **लो, ऐ** ) अदोषता "औत्सुक्येन कृतत्वरा" इत्यादिवद् । गुणता "क्वाकार्य-"मित्यादिवत् । अदोषगुणात्मता "तिष्ठेत् कोपवशा"दित्यादिवत् ।

इति साहित्यदर्पणालोचने दोषनिरूपणो नाम सप्तमपरिच्छेदः ।

---

अत्र पाण्डुत्वादीनामनुभावानां विरोधिकरुणाङ्गतया विरुद्धत्वेऽपि विप्रलम्भे साधारणत्वादविरोध इति भावः ।

1 'सम्भवः' ( ग. घ. )

# अष्टमः परिच्छेदः

गुणानाह—

**रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा । (क, अ)**
**गुणाः ॥ १ ॥**

यथा—खल्वङ्गित्वमाप्तस्यात्मन उत्कर्षहेतुत्वात् शौर्यादयो गुणशब्दवाच्याः तथा काव्येऽङ्गित्वमाप्तस्य रसस्य धर्माः स्वरूपविशेषाः माधुर्यादयोऽपि । स्वसमर्पकपदसन्दर्भस्य काव्यव्यपदेशस्यौपयिकानुगुण्यभाज इत्यर्थः । यथा चैषां रसमात्रस्य धर्मत्वं तथा दर्शितम्[1] । ( ख, आ ) *

**(वि, क)** गुणनिरूपणमारभते—**गुणानाहे**ति । **अङ्गित्वमाप्तस्ये**ति । एतच्च काव्यम् अङ्गम् रसोऽङ्गी इत्येतत्प्रदर्शनपरमेव, नत्वङ्गिपदादङ्गरसस्य व्यावृत्तिस्तत्रापि माधुर्याद्यनुभवात् रसपदं चासंलक्ष्यक्रमपरं भावादावपि गुणाङ्गीकारात् ।

**( वि, ख )** अङ्गित्वमाप्तस्येत्यनेन शरीरिण आत्मन उपस्थितत्वात् तं दृष्टान्तयति—**यथा खल्वि**ति । **स्वरूपविशेषा** इति । वैलक्षण्यरूपत्वेन इतरव्यावर्त्तकविशेषा इत्यर्थः । **स्वसमर्पके**ति—स्वस्य गुणस्य समर्पको बोधको यः पदसमूहस्तस्य काव्यव्यपदेशस्यौपयिकं यदानुगुण्यं स्वाश्रयिणा रसेन सह काव्ये स्थितिरूपं तद्भाज इत्यर्थः । नीरसस्य काव्यशब्दवाच्यत्वाभावात् किन्तु तत्र लाक्षणिकमेव काव्यपदमित्यर्थः । यद्यपि वर्णैरेव गुणा व्यज्यन्ते न पदैरिति पदसमूहस्य गुणसमर्पकता नास्ति तथापि पदसमूहघटकवर्णैस्तत्समर्पणात् ; पदसमूहस्यापि तत्समर्पकत्वं युक्तम् । आनुगुण्यप्रदर्शनेन गुणपदार्थो विवृतः । **रसमात्रधर्मत्वं दर्शितमि**ति । शौर्यदृष्टान्तेन दर्शितमित्यर्थः । मात्रपदाद् वर्णधर्मत्वव्यवच्छेदः ।

**( लो, अ )** एवं दोषान्निरूप्य गुणनिरूपणमवतारयति । अङ्गित्वमाप्तस्य काव्यात्मभूततया ।

**( लो, आ )** यथा खल्वित्यतोऽनन्तरं लोके इति शेषः । स्वस्यात्मनो माधुर्यादेरेव समर्पकः **अर्थात्** सहृदयहृदयेषु निवेशयिता यः पदसमुदायः यदनुगुणत्वमिति; यद्यपि माधुर्यादीनां रसस्यात्मस्वरूपविशेषात्मकत्वात् उत्कर्षहेतुत्वं नास्ति, तथापि पदसन्दर्भस्य तन्मुखप्रेक्षितयैव तथाविधव्यञ्जकत्वौचित्यानुसारेण 'मूर्ध्नि वर्गान्त्यगाः स्पर्शा इत्याद्युक्तप्रकारकविनिर्माणात् तत्कारणकत्वम् । तेन पदसन्दर्भेणानुकूल्यात्तस्य

1 मेव ( ख. पु )

* अङ्गित्वमाप्तस्य—काव्यात्मभूतस्य, न तु रसवदाद्यलङ्कारवदङ्गतां प्राप्तस्य दोषव्यवच्छेदाय धर्मा इत्युक्तम् । अनुरूपं दृष्टान्तमाह—**शौर्यादयो यथे**ति—

**माधुर्य्यमोजोऽथ प्रसाद इति ते त्रिधा ॥ २ ॥ ( इ )**

ते गुणाः । तत्र—

**चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते ॥ ३ ॥ ( ग, ई ) (२)**

यत्तु केनचिदुक्तम् "माधुर्य्यं द्रुतिकारणम्" इति, तन्न । द्रवीभावस्यास्वाद-स्वरूपाह्लादाभिन्नत्वेन तत्कार्य्यत्वाभावात् । ( घ ) ?

द्रवीभावश्च स्वाभाविकानाविष्टत्वात्मककाठिन्यमन्युक्रोधादिकृतदीप्तत्व-

---

( वि, ग ) माधुर्य्यलक्षणमाह—**चित्तद्रवी**ति—मयट्प्रत्ययोऽत्र स्वार्थे आह्लाद इत्यत्र आह्लादविशेषवृत्तिः । स च आह्लादविशेषे रत्यादिज्ञानानन्दजातः स्वादनाख्यव्यापारग्राह्यो रसस्वरूपः तद्वृत्तिः न तु तादृशाह्लाद एव माधुर्य्यं, तदा तस्य रसधर्मत्वानुपपत्तेः तथा च चित्तद्रवीभावस्वरूपाह्लादवृत्तिः तादृशाह्लादताव-च्छेदको धर्मो माधुर्य्यमित्यर्थः ।

**( वि, घ )** काव्यप्रकाशकृदुक्तं दूषयितुमाह—**यत्त्वि**ति । आह्लादकत्वं माधुर्य्यं शृङ्गारे द्रुतिकारणमिति तल्लक्षणम् । स च रसस्वरूपाह्लादजनकतावच्छेदको रत्यादिनिष्ठो धर्म इत्यर्थः । रत्यादेरेव रसताप्राप्त्या तस्य रसवृत्तित्वमपि; स एव धर्मो मनसो द्रुतिकारणमित्यर्थः । तद्दूषयति—**तन्ने**ति । **द्रवीभावस्ये**ति—स्वेन स्वाश्रयाजन-नादिभावः । एतच्च द्रवीभावाह्लादयोरभेदं स्वयमभ्युपेत्य दूषितं च । तन्मते तु द्रवी-भावश्चित्तवृत्तिराह्लाद आत्मवृत्तिरित्यनयोरभेद एव नास्ति । किन्तु आह्लादस्थेन माधुर्य्येण चित्तस्य द्रवीभावो जन्यत एव रागमाधुर्य्येणेवेति

**( वि, ङ )** आस्वादरूपाह्लादाभिन्नत्वेन उक्तं द्रवीभावं दर्शयति—**द्रवीभा-वश्चे**ति । चित्तस्याविष्टत्वमेव हि द्रवीभावः । अनाविष्टता तु तस्य स्वाभाविकी तदात्मकं

---

रसोत्कर्षकत्वं माधुर्य्यादिगुणेषु उपचर्य्यत इति दर्शितं प्रथमपरिच्छेदे ।

**( लो, इ )** त्रिधा प्राचीनोक्तस्य प्रत्येकं दशप्रकारस्य निराकरिष्यमाणत्वात् ।

**(लो, ई)** ह्लादो ह्लादस्वरूपः तस्य तद्भिन्नत्वस्योक्तत्वात् । इह चास्वादस्य आनन्दपरपर्य्यायत्वेन स्वादसाधारणत्वात् चित्तद्रवीभावमय इत्यनेनाव्याप्तिपरिहारः ।

**( लो, उ ) स्वाभाविके**ति—स्वाभाविकं सहजम् अनाविष्टत्वमनावेशोऽर्थात्

---

शौर्य्यं ज्ञानविशेषः । पुरुषोत्कर्षहेतुत्वेन शौर्य्यादयो गुणा आत्मनश्चेतनस्यैव धर्मा एव नाऽचेतनस्य शरीरस्य धर्माः । तद्वत् काव्यस्य शब्दार्थौ शरीरं रसश्चात्मा । शौर्य्या-दयो यथेति रसधर्मा एव गुणाः । आत्मधर्मेष्वेव गुणव्यवहारो मुख्यः सत्यपि शरी-रसौन्दर्य्यादौ, शौर्य्यपाण्डित्यादिरहिते निर्गुणव्यवहारात् ।

* ह्लादः सुखपर्य्यायः: तत्कारित्वं यद्यपि सर्वरससाधारणं तथापि ह्लादपदे-नात्र सुखविशेष उच्यते । स च इक्षुक्षीरादिमाधुर्य्यमिव स्वरूपेण वक्तुमशक्यः । चित्तस्य द्रवीभावो नाम मनसः स्नेहमूलसुखातिशयतः कश्चिदार्द्रतारूपो विकारः ।

विस्मयहासाद्यपहितविक्षेपपरित्यागेन रत्याद्याकारानुविद्धानन्दोद्बोधेन सहृदयचित्तार्द्रप्रायत्वम्[1]। ( ङ, उ )

तच्च—

**सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ॥ ४ ॥** ( च, ऊ )

सम्भोगादिशब्दा उपलक्षणानि । तेन सम्भोगाभासादिष्वप्येतस्य स्थितिर्ज्ञेया ।

**मूर्द्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना**
**रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ।**
**अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ॥ ५ ॥** ( छ, ऋ ) ×

---

यत्काठिन्यं तज्जन्यौ यौ शत्रुमारणोत्साहरूपमन्युक्रोधौ तदादिकृत्वा ये उष्णप्रायत्वरूपदीप्तत्वविस्मयहासास्तदाद्युपहितो यश्चित्तस्य विक्षेपश्चाञ्चल्यं तत्परित्यागेन अर्थात् चित्तस्याविष्टत्वेन यो रत्याद्याकारानुविद्धो रत्यादिविषयपरिणामेन ज्ञानरूपानन्दस्तदुद्बोधेन सहृदयचित्तस्यार्द्रप्रायत्वं द्रवीभाव इत्यर्थः । एतत्सिद्धान्तस्तु आह्लादस्य मनोवृत्तित्वस्वीकारे एव सम्भवतीत्यवधेयम् । अन्यथा द्रुत्याह्लादयोरभेदोक्त्यनुपपत्तेः । रत्याद्याकारेत्यत्र आदिपदात् माधुर्य्याश्रययोः करुणशान्तयोः स्थायिभावस्यापि परिग्रहः । एवं च रत्यादिज्ञानानन्दजन्याह्लादविशेष एव रसः । स एव स्वादनाख्यव्यापारगम्यः प्रागुक्तो रस इत्युक्तं, तद्वृत्तिधर्मविशेषो माधुर्य्यमिति सिद्धान्तसिद्धः ।

( वि, च ) तच्चेति—तच्च माधुर्य्यमित्यर्थः । क्रमात्तदाधिक्यं सम्भोगादौ क्रमशश्चित्तद्रुत्याधिक्यात् ।

( वि, छ ) तद्व्यञ्जकान् वर्णानाह—**मूर्द्ध्नी**ति । वर्गान्त्यवर्णेन पञ्चमेन युक्ता इत्यन्वयः । तत्रैव टठडढान् पर्य्युदस्यति । तकारस्तु तन्मूर्द्ध्नि अपर्य्युदस्तः ।

---

चित्तस्य एव तत्स्वरूपं काठिन्यं, तथा वीरादाविव मन्युक्रोधादिजन्यं यद्दीप्तत्वम्, एवं अद्भुतादाविव विस्मयहासयुक्तो यो विक्षेपस्तेषां परित्यागेन परिहारेण । एतस्य माधुर्याख्यगुणस्य ।

( लो, ऊ ) **शान्तेऽधिकमि**ति । तस्य सहजानन्दसुन्दरतया माधुर्य्यं प्रायेणेति प्रकृष्टमेव । क्वचित्तु विषयजुगुप्साद्यनुगमे भेदः ।

( लो, ऋ ) मूर्द्ध्नि इति वर्गा कादयो मावसानाः पञ्च पञ्च भूत्वा पञ्चवर्गाः तेषामन्त्याः ङञणनमाः तैर्मूर्द्ध्नि स्थितैर्युक्ता अर्थात् निजवर्गीया एव । ट ठ ड ढाः

---

× अत्र वर्णास्त्रिविधाः, विहिताविहितनिषिद्धभेदात् । लघ्वन्तरितौ रणौ मूर्द्धस्थितनिजवर्गान्त्यगताः स्पर्शाश्च विहिताः । टवर्गो निषिद्धाः, अन्ये अविहिताः । निषिद्धानां बाहुल्येनोपादानं तु दोषः ।

1 'स्य' ( इति ख. पु. )

यथा—

"अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः ।
जनयन्ति मुहुर्यूनामन्तः सन्तापसन्ततिम् ॥" ( ज ) +

यथा वा मम—

"लताकुञ्जं गुञ्जन् मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्[1] ।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि ॥( झ, ञ )

**ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते ।**

---

तद्व्यक्तौ माधुर्य्यस्य व्यञ्जने कारणतामित्यन्वयः । अवृत्तिरसमासः । रचना सन्धिः तस्य च तदुत्पन्नवर्णमाधुर्य्यवशादेव माधुर्य्यवर्णत्वेन प्राप्तावपि सन्धौ अपि तादृशा वर्णाः न ऊहाया इति कव्युपदेशार्थं पृथगुक्तम् ।

( वि, ज ) अनङ्गेत्यादि उदाहरणे सन्ध्युत्पन्नतादृशवर्णौ, सन्तापसन्ततिमित्यत्र उपसर्गधात्वोः सन्धौ द्वावेव ।

( वि, झ ) अतो बहून् तादृशान् वर्णान् दर्शयितुमाह—**यथा वेति** । मरुत् दिशि दिशि मकरन्दं किरति, कीदृशः, गुञ्जतां मदवतामलीनां पुञ्जो यत्र तादृशं लताकुञ्जं मन्दं मन्दं चपलयन् । अङ्गम् अर्थात् नृणां समालिङ्गन् । अनङ्गं च द्रुततरं प्रबलयन् प्रकृष्टं बलवन्तं कुर्वन् । स्वेनैव दलितं विकासितमरविन्दं तरलयन् । रजोवृन्दम् अर्थात् विकसितारविन्दानां परागसमूहं विन्दन् लभमानः ( विदॢ लाभे ) अत्र सन्धावपि बहवो वर्णा उक्तरूपाः ।

( वि, ञ ) ओजोलक्षणमाह—**ओजश्चित्तस्येति** । अत्रापि दीप्तत्वजनकमित्येवार्थः । आयुर्घृतमितिवत्, तथा च रसवृत्तिना ओजसा चित्तस्य विस्ताररूपं दीप्तत्वं जन्यत इत्यर्थः । अत एव चित्तस्य विस्ताररूपदीप्तत्वजनकमोज इति काव्य-

---

न तु अन्तिमवर्णेन युक्ताः न च स्वरूपावस्थिता अपि । रणौ लघुह्रस्वान्तरितौ, तस्य माधुर्य्यस्य व्यक्तौ, एवमसमासा मन्दसमासाश्च । मधुरा पदान्तरयोगे माधुर्य्यवती ।

( लो, ञ ) लताकुञ्जमित्यादौ विधानमात्रवर्णनेऽपि शृङ्गारः प्रकरणात् ।

---

+ अनङ्गस्य कामस्य मङ्गलभुवो माङ्गलिकजन्मस्थानानि तस्या नायिकाया अपाङ्गस्य भङ्गयो व्यापाराः । यूनामन्तःकरणे मुहुः सन्तापसन्ततिं दुःखधारां जनयन्ति । अत्र प्रथमार्द्धे कवर्गान्तिमवर्णैर्ङकारैः संयुक्तास्तद्वर्गीयगकाराः । द्वितीयार्द्धे तवर्गान्तिमवर्णैर्नकारैर्युक्तास्तकाराः ।

1 प्रचलयन् ( ख. पु. )

**वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ॥ ६ ॥** ( ज )×

अस्य ओजसः । अत्रापि वीरादिशब्दा उपलक्षणानि । तेन वीराभासादावप्यस्यावस्थितिः ।

**वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ।**
**उपर्य्यधो द्वयोर्वा स-रेफष्टठडढैः सह ।**
**शकारश्च षकारश्च तस्य व्यञ्जकतां गताः ।**
**तथा समासबहुला घटनौद्धत्यशालिनी ॥ ७ ॥** ( ल )

यथा चञ्चद्भुजेत्यादि । ( ट )

**चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।**

---

प्रकाशकृताऽप्युक्तम् । विस्तारस्तु चित्तस्य उष्णप्रायत्वकारक आत्मसंयोगविशेषः । यथाश्रुते तु चित्तवृत्तेः दीप्तत्वस्य रसवृत्तित्वानुपपत्तेः । क्रमेणाधिक्यमिति दीप्तत्वरूपफलाधिक्याद् आधिक्यम् ।

( वि, ट ) तद्व्यञ्जकानाह—**वर्गस्येति** । **तदन्तिमौ** इति । आद्यतृतीययोरन्तिमौ द्वितीयचतुर्थौ इत्यर्थः । तथा चाद्येन युक्तः द्वितीयः । तृतीयेन युक्तश्चतुर्थो वर्ण इत्यर्थः । आद्यतृतीययोस्तदन्तिमयोश्च नैकवर्गीयत्वनियमः । किन्तु भिन्नवर्गीययोरपि तथात्वं बोध्यम् । तेन कख इव केच्छापि गघ इव घेच्छापि तथा बोध्या कटुत्वसाम्यात् । अत्र चानुक्तेऽपि तुल्ययोर्योगोऽपि काव्यप्रकाशकृदुक्तो ग्राह्यः कटुत्वाविशेषात् । तेन कक गग ज्ज इत्यादयोऽपि बोध्याः । उपर्यध इत्यादि । तर्क इत्यादौ उपरि । तक्रचक्रादौ अधः आर्द्रकम् इत्यादौ द्वयोः रेफौ बोध्यौ । **टठडढैः सहेति** । साहित्यं व्यञ्जकत्वकथनेन व्यञ्जनपरस्परसाहितैरपि व्यञ्जनात् । समासबहुला घटना इत्यत्र घटनापदं विन्यासमात्रपरं सन्धिपरं च । तेन समासबहुला दीर्घसमासवान् विन्यासः, औद्धत्येन कटुत्वेन युक्तः सन्धिश्चेत्यर्थः । चञ्चद्भुजेत्यादिकं नाट्यपरिच्छेदे व्याख्यातम् । अत्र दीर्घसमासः कतिपये यथोक्ता वर्णाः ।

( वि, ठ ) प्रसादगुणलक्षणमाह—**चित्तमिति** । अत्र चित्तपदं ज्ञानपरम् । तथा च यो गुणः क्षिप्रं श्लोकार्थज्ञानं व्याप्नोति आविष्करोति जनयतीति यावत् । अत एवाविष्करोतीति व्याख्यास्यति । स गुणः प्रसाद इत्यर्थः । अत्र दृष्टान्तमाह

---

( लो, ऋ ) इह चानुक्तमपि औचित्यादेव । हास्ये विकाशधर्मकत्वात् ओजश्च प्रायः शृङ्गारनिष्ठतया च माधुर्यस्योत्कृष्टत्वम् । भयानके चित्तवृत्तेर्विकाशाभावात् यद्यपि माधुर्यं, तथापि विभावौचित्यादोजःसमावेशः । अद्भुते शृङ्गारिगते द्वयोः साम्यम् । अत्र प्रकृष्टमोजः । यद्यपि बीभत्से प्रकृष्टतममोजस्तथापि माधुर्यमप्रकृष्टतरम् ।

( लो, लृ ) अयमर्थः—कचटतपैः खछठथफाः, गजडदबैः घझढधभाः युक्ताः ।

---

× अतिविक्षेपसद्भावेन विस्तारः । द्वेषसद्भावेन च दीप्तिः ।

**स प्रसादः समस्तेषु रसेषु रचनासु च ॥ ८ ॥ ( ठ, ए )**

व्याप्नोति आविष्करोति ।

**शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः ॥ ९ ॥ ( ड, ऐ )**

यथा—

"सूचिमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप ! लुठसि स्तनयोः प्रियायाः ।
बाणैः स्मरस्य शतशो विनिकृत्तमर्मा
स्वप्नेऽपि तां कथमहं न विलोकयामि ॥" ( ढ ) *

**एषां शब्दगुणत्वं च गुणवृत्त्योच्यते बुधैः ॥ १० ॥**

शरीरस्य शौर्य्यादिगुणयोग इवेति शेषः । ( ओ )

**शुष्केति** । अनलः शुष्केन्धनं यथा क्षिप्रं सुविशिष्टतयाऽऽविष्करोतीत्यर्थः । **समस्तेषु रसेषु** इति । **रचनासु** इति । सप्तम्यधिकरणतायां, रचना शब्दप्रथना तत्र सप्तमी च व्यञ्जकतायाम् । तथा च सर्वरसाश्रयः सर्वरचनाव्यङ्ग्यश्चेत्यर्थः । न चैवं प्रसाद-रहितः कोऽपि श्लोको न स्यादिति वाच्यम् । सर्वजातीयासु रचनासु, न तु सर्व-रचनाव्यक्तिषु इत्यर्थः ।

( वि, ड ) तद्व्यञ्जकरचनाव्यक्तिं दर्शयति—**शब्दा** इति । श्रुतिमात्रतोऽर्थ-बोधकाः शब्दास्तद्व्यञ्जका इत्यर्थः ।

( वि, ढ ) **सूचिमुखेने**ति—प्रियायाः स्तनन्यस्तं मुक्ताहारं परोक्षमपि भावो-पनीतं सम्बोध्य विरहिण उक्तिरियम् । श्लोकार्थस्तु प्रसादात् स्पष्ट एव ।

( वि, ण ) रसवृत्तीनामप्येषां शब्दगुणत्वव्यवहारमुपपादयति—**एषामि**ति । गुणवृत्त्या परम्परावृत्त्या गुणाश्रयरसव्यञ्जकत्वं परम्पराशब्दगुणत्वमित्युपलक्षणम् ।

---

( लो, ए ) चित्तं प्रतिपत्तॄणामित्यर्थः ।

( लो, ऐ ) इह च प्रसादगुणस्य झटित्यर्थप्रकाशनेन उक्तरूपरसनिष्ठप्रसाद-गुणाभिव्यञ्जनादौ परिचारिकमपि रचनानिष्ठत्वं प्रयत्नविधेयत्वेन रससाहचर्येण उक्तिं प्रसादातिक्रमेषु सामान्यमपि सङ्घटना करुणविप्रलम्भशृङ्गारौ व्यनक्ति । तदपि परि-त्यागे मध्यमसमासापि प्रकाशयतीति ।

( लो, ओ ) यत् पुनरेषां शब्दवृत्तित्वमुच्यते तत्र हेतुमाह—**एषामि**ति । गुणवृत्त्या पूर्वोक्तरीत्या उपचारेण ।

* हे मुक्ताकलाप ! सूच्या मुखेन सकृदेव कृतव्रणः कृतच्छिद्रस्त्वं प्रियायाः स्तनयोर्लुठसि । स्मरस्य बाणैः शतशः विनिकृत्तमर्मा छिन्नमर्मग्रन्थिः स्वप्नेऽपि तां कथं न विलोकयामि । यदि छिद्रप्राप्तिरेव प्रियाप्राप्तिहेतुस्तदा छिद्रप्राप्तोऽप्यहं कथं तां न प्राप्नोमीत्येतदेवाश्चर्यम् ।

**श्लेषः समाधिरौदार्य्यं प्रसाद इति ये पुनः।**
**गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते ॥ ११ ॥**

**ओजसि—भक्त्या ओजःपदवाच्ये शब्दार्थधर्मविशेषे।** ( ण )
**तत्र श्लेषो बहूनामपि पदानामेकपदवद्भासनात्मा।** ( औ )

यथा—

"उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
प्रायः प्रेङ्खदसंख्यशङ्खधवला वेलेयमुद्गच्छति॥"

**अयं बन्धवैकट्यात्मकत्वादोज एव।** ( त, अ )

---

अर्थगुणत्वमप्येवं बोध्यम्। इत्थं रसवृत्तय एव त्रय एव गुणाः परम्परया शब्दार्थवृत्तयः। चिरन्तनैरुक्तानां "श्लेषः प्रसादः समता माधुर्यं सुकुमारता। अर्थव्यक्तिमुदारत्वमोजः कान्तिः समाधयः" इति दशगुणानां मध्ये श्लेषादिगुणचतुष्टयमोजस्यन्तर्भवतीत्याह—**श्लेष** इत्यादि। ओजस्यन्तर्भावे प्रकारमाह—**भक्त्ये**ति। अस्मदुक्तौजोगुणव्यञ्जकवर्णेष्वेव हि ते चत्वारो गुणा वर्त्तन्ते इति तैरुच्यते। तथा च परम्परया शब्दवृत्तेरस्मदुक्तौजोगुणसमानाधिकरणा एव ते तन्मते पर्य्यवस्यन्ति। तथा तेषां तद्भिन्नत्वोक्तौ गौरवं तदात्मकत्वमेवोचितमित्येतदेवाह—**भक्त्ये**ति। ओजःपदवाच्ये रसगुणविशेषे भक्त्या परम्पराख्पया भक्त्या शब्दधर्मेऽन्तर्भवन्तीत्यर्थः। तदभिन्ना एते इत्यर्थः।

( **वि, त** ) तत्र तैरुक्तस्य श्लेषस्य लक्षणमाह—**श्लेषो बहूनामि**ति। एकपदवद्भासनं दीर्घसमासेन। **उन्मज्जदि**ति—उन्मज्जतो जलकुञ्जरेन्द्रस्य रभसा स्फालनानुबन्धेन सहसा स्फालनक्रियया उद्धतः इत्यतः अयं ध्वनिः यथा उच्चैरुच्चरति, प्रायः सम्भावने, तथा वेला समुद्रस्य नीरम् उद्गच्छति; कुञ्जरास्फालनेन तीरं प्लावयतीत्यर्थः। वेला कीदृशी—प्रेङ्खद्भिश्चलद्भिरसंख्यशङ्खैः धवला। ध्वनिः कीदृशः? श्रुतिपथोन्माथी। सर्वाः पर्वतकन्दरोदरभुवश्च प्रतिध्वानिनीः कुर्वंश्च। **अयमि**ति। बन्धवैकट्यमुद्धतबलविशिष्टशब्दत्वम्। तच्च तादृशशब्दवृत्तित्वात् परम्परया शब्दवृत्त्योजो-

---

( **लो, औ** ) कथं त्रय एव गुणा इत्यत्राह—**श्लेष** इति। भक्त्या उपचारेण। पदानां बहूनामेकपदवद्भासनम्।

( **लो, अ** ) उच्चैरुच्चरति ध्वनिरित्यादौ सुव्यक्तम्। जलकुञ्जरो हस्त्याकारमुखो जलजन्तुविशेषः। तस्य रभसेन आस्फालः अर्द्दनम् अर्थात् जलस्यैव। प्रेङ्खन्तः वल्गन्तः। वेला समुद्रवीचिः।

समाधिरारोहावरोहक्रमरूपः । आरोह उत्कर्षः । अवरोहोऽपकर्षः । तयोः क्रमो वैरस्यानावहो विन्यासः—यथा चञ्चद्भुजेत्यादि । अत्र पादत्रये क्रमेण बन्धस्य गाढता । चतुर्थपादे त्वपकर्षः । अस्यापि च तीव्रप्रयत्नोच्चार्यतया ओजस्विता । (थ)

उदारता विकटत्वलक्षणा । विकटत्वं च पदानां नृत्यत्प्रायत्वम् । (आ)

यथा—"स्वचरणविनिविष्टैर्नूपुरैर्नर्त्तकीनाम् ।
झणिति रणितमासीत्तत्र चित्रं कलञ्च ॥"

अत्र च तन्मतानुसारेण रसानुसन्धानमन्तरेणैव शब्दप्रौढोक्तिमात्रेणौजः। (द)

प्रसाद ओजोमिश्रितशैथिल्यात्मा । यथा—

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥" (ध)

---

गुण एव इत्यर्थः । समानाधिकरणधर्मद्वयकल्पने गौरवादिति भावः ।

( वि, थ ) समाधिकरणलक्षणमाह—**समाधिरि**ति । उत्कर्षः समासाधीनः अपकर्षस्तदभावाधीनः । **तयोः क्रम** इति । क्रमो यथोचितस्थाने विन्यासाद् वैरस्याऽनाधानम्, तदाह—**वैरस्यानावह** इति । **चञ्चद्भुजेत्यादि** इति ।व्याख्यातमिदं प्राक् । **बन्धगाढते**ति—दीर्घसमासात् स एव चोत्कर्षः । **चतुर्थपाद** इति । "उत्तंसयिष्यति कचांस्तव देवि भीम" इत्यत्र दीर्घसमासाभावोऽपकर्षः स चात्र द्रौपद्याश्वासनरूपेण क्रोधाभावेन दीर्घसमासाभावः योग्यस्थाने विन्यासाद् वैरस्यानाधायकः । अत एवात्र पतत्प्रकर्षत्वमपि गुणः । अस्याप्योजस्यन्तर्भावं दर्शयति—**अस्यापी**ति । तथा च पादत्रयवशादोजस्यन्तर्भाव इति भावः ।

( वि, द ) औदार्य्यलक्षणमाह—**उदारता चे**ति । नृत्यत्प्रायता च अनुभवैकगम्या वक्तुमशक्या उदाहरणे बोध्या । **स्वचरणे**ति । अयं शृङ्गारीयः श्लोकः । लघुरेफशकारालपसमासाश्च नर्दायमाधुर्य्यव्यञ्जकाः । तथापि तन्मते तादृशरसानुसन्धानात् प्रागेव शब्दानां नृत्यत्प्रायत्वरूपप्रौढोक्तिमात्रज्ञानात् ओजोगुणानुभाव इत्याह—**अत्र तन्मते** इति । तथा चात्र शृङ्गारानुगुणेऽप्येतादृशप्रौढ्या व्यज्यमाने ओजस्यस्मदुक्ते औदार्य्यस्यान्तर्भाव इति भावः ।

( वि, ध ) प्रसादगुणलक्षणमाह—**प्रसाद** इति । कठिनकोमलवर्णमिश्रणमित्यर्थः । यो य इति प्राग् व्याख्यातम् । अत्र कठिनवर्णानामपि मिश्रणादोजस्विता ।

---

(लो, आ) **नृत्यत्प्रायत्वमि**ति । पदानि नर्त्तकीकृत्य दर्शितानीवानुभूयन्ते यत्र ।

**माधुर्यव्यञ्जकत्वं यदसमासस्य दर्शितम्।**
**पृथक् पदत्वं माधुर्यं तेनैवाङ्गीकृतं पुनः ॥ १२ ॥** ( न, इ )

यथा—श्वासान् मुञ्चतीत्यादि ।

**अर्थव्यक्तेः प्रसादाख्यगुणेनैव परिग्रहः ।**
**अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम् ॥ १३ ॥**

स्पष्टमुदाहरणम् ।

**ग्राम्यदुःश्रवतात्यागात् कान्तिश्च सुकुमारता ॥ १४ ॥**

अङ्गीकृतेति सम्बन्धः । कान्तिरौज्ज्वल्यम् । तच्च हालिकादिपदन्यासवैपरीत्येनालौकिकशोभाशालित्वम् । सुकुमारता अपारुष्यम् । अनयोरुदाहरणे स्पष्टे । ( प, ई )

**क्वचिद्दोषस्तु समता मार्गाभेदस्वरूपिणी ।**
**अन्यथोक्तगुणेष्वस्या अन्तःपातो यथायथम् ॥ १५ ॥**

मसृणेन विकटेन वा मार्गेणोपक्रान्तस्य सन्दर्भस्य तेनैव परिनिष्ठानं मार्गाभेदः स च क्वचिद्दोषः । तथा हि—

"अव्यूढाङ्गमरूढपाणि जठराभोगञ्च बिभ्रद्वपुः
पारीन्द्रः शिशुरेष पाणिपुटके सम्मातु किं तावता ?

---

**( वि, न )** माधुर्यलक्षणं पृथक्पदत्वं तच्चास्माकं माधुर्यव्यञ्जकोऽसमासेनाङ्गीकृतमित्याह—**माधुर्येति** । श्वासान् मुञ्चतीत्यादावसमासः ।

**( वि, प ) स्पष्टमुदाहरणमिति** । सूचिमुखेनेत्यादि प्रसादगुणोदाहरणस्यान्येषां च बहूनां तदुदाहरणत्वात् ।

अपारुष्यम् अदुःश्रवत्वम् । **अनयोरुदाहरणे** इति । एतद्दोषद्वयरहिताः श्लोका एवेत्यर्थः ।

**( वि, फ ) क्वचिदिति** । मार्गाभेदप्रदर्शनी समता क्वचिद्दोषः । **अन्यथेति** । अत्र तादृशस्थले तु समता माधुर्यौजोगुणयोरन्यतरगुण इत्यर्थः । व्याचष्टे—**मसृणेनेति** । **अव्यूढाङ्गमिति** । शिशुरेषः पारीन्द्रः सिंहः अव्यूढाङ्गम् अप्रौढावयवं पाणिजठराणामाभोगेन परिपूर्णतया रहितं च वपुः दधत्, क्षुद्रतया पाणिपुटके

---

**( लो, इ )** असमासस्य वर्णितम्—अवृत्तिरल्पवृत्तिर्वेत्यनेन ।

**( लो, ई )** कान्तिर्यथा मम—

नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थिपाणिद्वयं
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः ।
कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्पर्द्धिनी
स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा ॥

प्रोद्यद्दुर्द्धरगन्धसिन्धुरशतप्रोद्दामदानार्णव-
स्रोतःशोषणरोषणात् पुनरितः कल्पाग्निरल्पायते ।"

अत्रोद्धतेऽर्थे वाच्ये सुकुमारबन्धत्यागो गुण एव । अनेवंविधस्थले माधुर्यादावेवान्तर्भावः । यथा—लताकुञ्जं गुञ्जदित्यादि । (फ)

**ओजः प्रसादो माधुर्यं सौकुमार्यमुदारता ।**
**तदभावस्य दोषत्वात् स्वीकृता अर्थगा गुणाः ॥ १६ ॥ (ब)**

ओजः साभिप्रायत्वरूपम् । प्रसादोऽर्थवैमल्यम् । माधुर्यमुक्तिवैचित्र्यम् । सौकुमार्यमपारुष्यम् । उदारता अग्राम्यत्वम् । एषां च पञ्चानामप्यर्थगुणानां यथाक्रममपुष्टार्थाधिकपदानवीकृतामङ्गलरूपाश्लीलग्राम्यतानां निराकरणेनैवाङ्गीकारः । स्पष्टान्युदाहरणानि । (भ)

**अर्थव्यक्तिः स्वभावोक्त्यलङ्कारेण तथा पुनः ।**
**रसध्वनिगुणीभूतव्यङ्ग्याभ्यां कान्तिनामकः ॥ १७ ॥ (म)**

अङ्गीकृत इति सम्बन्धः । अर्थव्यक्तिर्वस्तुस्वभावस्फुटत्वम् । (उ)

---

सम्मातु । एतावता किम् इतो दृश्यमानात् प्रोद्यतां दुर्द्धरगन्धानां सिन्धुरशतस्य हस्तिशतस्य प्रोद्दामदानार्णवानां शोषणात् पुनः कल्पाग्निरल्पायते । **अनेवंविधे**ति । अनुद्धते वाच्ये इत्यर्थः । दोषस्तु प्रकृतिविपर्य्ययरूपो बोध्यः ।

( **वि, ब** ) इदानीम् उक्तनाम्नां भिन्नलक्षणानां परोक्तदशार्थगुणानामप्यनङ्गीकारबीजमाह—**ओजःप्रसाद** इत्यादि । ओज आदि उदारान्ताः पञ्चार्थगुणाः तदभावस्य दोषत्वादेव स्वीकृता इत्यर्थः । तथा च दोषाभाव एव एते पञ्चगुणा इत्यर्थः।

( **वि, भ** ) ओज आदिपञ्चगुणानां लक्षणान्याह—**ओज** इति । विशेष्यपुष्ट्यभिप्रायकविशेषणत्वं साभिप्रायत्वम् । तच्चापुष्टार्थत्वदोषाभावत्वेन स्वीकृतम् । अर्थवैमल्यमधिकपदेनाऽकलुषीकरणम् । तच्चाधिकपदत्वदोषाभावत्वेन । उक्तिवैचित्र्यम् अनेकवारप्रतिपादनीयस्यार्थस्य भङ्ग्यन्तरेण कथनम्, तच्च अनवीकृतत्वदोषाभावत्वेन । अपारुष्यममङ्गलरूपपारुष्यविरहः, । तच्चामङ्गलाश्लीलत्वदोषाभावत्वेन, अग्राम्यताऽवैदग्ध्यप्रतिपादकार्थभिन्नत्वम्; तच्च ग्राम्यत्वदोषाभावत्वेन स्वीकृतमित्यर्थः। **स्पष्टानी**ति—एतद्दोषपञ्चकरहितश्लोका एवेत्यर्थः ।

( **वि, म** ) रसध्वनिः शून्यं वासगृहमित्यादि । रसगुणीभूतव्यङ्ग्यः ।

---

( **लो, उ** ) उद्धतार्थः प्रोद्यद्दुर्द्धरेत्यादौ । अर्थव्यक्तिर्यथा—

लाङ्गलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्या-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन् विक्रमेण ।
स्फूर्जत्फूत्कारघोरः प्रतिदिशमखिलान् वारयन्नेष जन्तून्
कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः ॥

कान्तिर्दीप्तरसत्वम् । स्पष्टे उदाहरणे ।

**श्लेषो विचित्रतामात्रमदोषः समतापरम् ॥ १८ ॥ (य)**

श्लेषः क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा । तत्र क्रमः क्रियासन्ततिः । विदग्धचेष्टितं कौटिल्यम् । अप्रसिद्धवर्णनाविरहोऽनुल्बणत्वम् । उपपादकयुक्तिविन्यास उपपत्तिः । एषां योगः सम्मेलनं स एव रूपं यस्या घटनायास्तद्रूपः श्लेषो वैचित्र्यमात्रम् । अनन्यसाधारणरसोपकारित्वातिशयविरहादिति भावः । (र)

यथा "दृष्ट्वैकासनसंस्थिते प्रियतमे" इत्यादि । अत्र दर्शनादयः क्रियाः । उभयसमर्थनरूपं कौटिल्यम् । (ल)

लोकव्यवहाररूपमनुल्बणत्वम् । "एकासनसंस्थिते, पश्चादुपेत्य, नयने निमील्य, ईषद्वक्रितकन्धर" इति चोपपादकानि, एषां योगः । अनेन च वाच्यो[1]पपत्तिग्रहणव्यग्रतया रसास्वादो व्यवहितप्राय इत्यस्यागुणता । समता च

" अयं स रसनोत्कर्षी"त्यादि अपराङ्गम् ।

**( वि, य ) विचित्रतामात्रमि**ति—तथा च वैचित्र्यमलङ्कार इत्यलङ्कारसामान्यलक्षणाक्रान्तत्वादलङ्कार एवासौ न गुण इत्यर्थः । **समते**ति । समता परमदोषो दोषाभावमात्रमित्यर्थः ।

**( वि, र )** तत्र श्लेषलक्षणमाह—**श्लेषक्रमे**ति । क्रमादीन् व्याचष्टे-**क्रमः क्रिये**ति—साकाङ्क्षक्रियाबाहुल्यमित्यर्थः । क्रमकौटिल्येत्यादिबहुव्रीहिसमासं विवृणोति-**स एव रूपं यस्या** इति । स एव एषां योग एव इत्यर्थः । तद्रूप इत्यत्र रूपपदमात्मपदार्थविवरणम्। **अनन्ये**ति । माधुर्य्यादयस्तदन्तर्भूतं गुणान्तरं वा यथा विलक्षणरसोपकारातिशयहेतुरस्य, तथात्वविरहान्न गुणत्वमित्यर्थः ।

**(वि, ल) दृष्ट्वैके**ति–प्रियतमे प्रियतमाद्वयम् एकासनसंस्थितं तद् द्वयं दृष्ट्वा धूर्त्तो नायकः पश्चात् पृष्ठतः उपेत्य विहितक्रीडानुबन्धच्छलः सन् एकस्या नयने नयनद्वयं पिधाय ईषद्वक्रितकन्धरः सपुलकः सन् आदरादपरां चुम्बति । अपरां कीदृशीं, प्रेम्णा उल्लसन्मनसाम् अन्तर्हासेन लसत्कपोले पुलको यस्यास्तादृशीं च । **उभयसमर्थने**ति–पिहितनयनायाः क्रोधः, चुम्बितायाः प्रीतिश्चेत्युभयं पृष्ठतो गमनेन नयनपिधानेन च विदग्धचेष्टितरूपकौटिल्येन तत्समर्थनं समर्थनरूपमित्यत्र करणे ल्युट् ।

**( वि, व ) लोकव्यवहारे**ति–अन्यलोकैरप्येवं करणात् । **उपपादकानी**ति–सपत्न्याऽदृश्यमानचुम्बनोपपादकानीत्यर्थः । अस्य गुणत्वाभावं दर्शयति—**अनेन चे**ति । वाच्यं यच्चुम्बनं पश्चाद्गमनादिना तदुपपत्तेर्ग्रहणनिष्पादने धूर्त्तस्य व्यग्रतया तद्बोधात् बोद्धृणां रसास्वादो व्यवहितप्राय इत्यर्थः । किञ्चिद्विलम्बनादिति-



1 क्य ( ख. पु. )

प्रक्रान्तप्रकृतिप्रत्ययाविपर्यासेनार्थस्य विसंवादिताविरहः[1] । स च प्रक्रमभङ्ग-रूपदोषविरह एव ।

स्पष्टमुदाहरणम् । (व)

**न गुणत्वं समाधेश्च ॥ १६ ॥**

समाधिश्चायोन्यन्यच्छायायोनिरूपद्विविधार्थदृष्टिरूपः । तत्रायोनिरर्थो यथा—

"सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारङ्गकम्" ।

अन्यच्छायायोनिर्यथा—

"निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ।"

अत्र नीलोत्पलनयनयोरतिप्रसिद्धं सादृश्यं विच्छित्तिविशेषेण निबद्धम् । अस्य चासाधारणशोभानाधायकत्वान्न गुणत्वं किन्तु काव्यशरीरमात्रनिर्वाहकत्वम् ।

( श, ऊ )

क्वचिच्चन्द्रमित्येकस्मिन् पदार्थे वक्तव्ये "अत्रेर्नयनसमुत्थं ज्योति"रिति वाक्यवचनम् । (ऋ) क्वचित् "निदाघशीतलहिमकालोष्णसुकुमारशरीरावयवा[2] योषिदि"ति वाक्यार्थे वक्तव्ये वरवर्णिनीति पदाभिधानम् । (ष)

---

भावः । **प्रक्रान्ते**ति—प्रक्रान्तयोः प्रक्रम्यमाणयोः प्रकृतिप्रत्यययोः साम्यमित्यर्थः । **स्पष्टमि**ति । प्रक्रमभङ्गदोषरहितश्लोक एवेत्यर्थः ।

**( वि, श )** अयोनिरन्यैरवर्णितार्थः । अन्यच्छायायोनिरन्यवर्णितार्थानुसारी, **सद्य** इति । हूणः पाश्चात्यदेशविशेषीययवनः, स च ताम्रवर्णः । मत्तत्वेन चातिताम्रः, नारङ्गकं नारङ्गफलम् अतिताम्रम् । अन्यैरवर्णितोऽयमर्थः । **निजनयने**ति—कापि कुसुमलावी मालाकारपत्नी जले निजनयनप्रतिबिम्बे नीलोत्पलभ्रमेण तद्धरणे प्रवर्त्त्य तदप्राप्त्या प्रतारिता वास्तवनीलोत्पलेऽपि करमर्पयितुं तद्भवति न वेति विमृशतीत्यर्थः । इयमन्यवर्णितार्थच्छाया । **अस्य चे**ति—तनुभ्रमेण रसानुपकारादिति भावः ।

**( वि, ष )** प्रौढिरोज इत्यपरः परोक्त ओजोगुणः । तत्र च पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा । प्रादिव्यासससमासौ च इति चतुर्विधा प्रौढिः परैरुक्ता । तस्य गुणत्वं नोचितम् इति वक्तुं तदीयं पदार्थे वाक्यरचनेत्यादिकं दर्शयति—**क्वचिच्चन्द्र इती**ति । वाक्यार्थे पदाभिधानं दर्शयति—**क्वचिन्निदाघे**ति ।

शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला।

---

**( लो, ऊ )** अयोनिः पूर्वकविभिरदृष्टोऽर्थः । काव्यशरीरमात्रनिर्वाहकत्वमेतत् प्रकारद्वयव्यतिरेकेण काव्यशरीरानिर्वाहात् ।

**( लो, ऋ )** वाक्यवचनमिति पदसमूहाभिधानम् ।

---

1 विच्छेदः ( ग. घ. पु. ) 2 'रा वरयोषित्' (क. ग. घ. पु.)

क्वचित् "एकस्य वाक्यार्थस्य किञ्चिद्विशेषाद्[1] नेकैर्वाक्यैरभिधानमित्येवं-रूपो व्यासः । क्वचिद् बहुवाक्यप्रतिपाद्यस्यैकवाक्येनाभिधानमित्येवंरूपः समासश्च" (ऋ) इत्येवमादीनामन्यैरुक्तानां न गुणत्वमुचितम्; (लृ) अपि तु वैचित्र्यमात्रावहत्वम् । (स)

**तेन नार्थगुणाः पृथक् ॥ २० ॥**

**तेनोक्तप्रकारेण । अर्थगुणा ओजःप्रभृतयः [2]प्रोक्ताः ।**

इति साहित्यदर्पणे गुणविवेचनो नामाष्टमः परिच्छेदः ।

---

सर्वावयवशोभाढ्या सा स्मृता वरवर्णिनी ।

इति वरवर्णिनीलक्षणं व्यासं दर्शयति ।

**( वि, स ) क्वचिदेकस्येति**—विशेषात् विच्छेदाविशेषात् खण्डखण्डवाक्येन कथनादित्यर्थः । यथा नायं पण्डित इत्येकवाक्येन वक्तव्ये नायं व्याकरणं नायं तर्कं वेत्तीत्यादिखण्डखण्डवाक्येन समस्तशास्त्राज्ञानकथनम् । समासं दर्शयति—**क्वचिद्ब-ह्विति** । बहुप्रतिपाद्यस्य बहुवाक्यप्रतिपाद्यस्य यथा दर्शितव्यासविपर्य्ययः—**एवमादीना-मिति** । ओजोगुणत्वेन अन्यैरुक्तानां चतुर्विधप्रौढीनामित्यर्थः । **वैचित्र्यमात्रेति** तथा चालङ्कार एवायमित्यर्थः ।

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्य्यविरचितायां साहित्यदर्पणटीकायां गुणविवेचनाख्यस्याष्टमपरिच्छेदस्य विवरणम्

---

**( लो, ऋ )** वाक्यार्थन्यासो यथा—

असौ नानाकारो भवति सुखदुःखव्यतिकरः
सुखं वा दुःखं वा प्रभवति भवत्येव भवतः ।
जनस्तस्मादूर्द्ध्वं भवति न च दुःखं न च सुखम् । इति

**अस्यैव समासो यथा—**

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्य्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ इति

**( लो, लृ )** न गुणत्वम्—अनन्यसाधारणरसोपकारिताभावादिति भावः । इति ।

इति श्रीसाहित्यदर्पणलोचने गुणनिरूपणो नामाष्टमः परिच्छेदः ।

---

1 'विशेषनिवेशाद्' (ग. घ. पु.) 2 परोक्ताः (ग. पु.)

# नवमः परिच्छेदः

अथोद्देशक्रमप्राप्तमप्यलङ्कारनिरूपणं बहुवक्तव्यत्वेनोल्लङ्घ्य रीतिमाह। (क, अ)

**पदसंघटना रीतिरङ्गसंस्थाविशेषवत्।** ※

**उपकर्त्री रसादीनां ॥ १ ॥** (ख)

रसादीनामर्थात् शब्दार्थशरीरस्य काव्यस्यात्मभूतानाम्। (आ)

**सा पुनः स्याच्चतुर्विधा।**

**वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा ॥ २ ॥**

सा रीतिः। तत्र—

**माधुर्यव्यञ्जकैर्वर्णैरचना ललितात्मिका।**

**अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥ ३ ॥**

यथा—"अनङ्गमङ्गलभुव" इत्यादि। रुद्रटस्त्वाह—

"असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी।

वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया।"

अत्र दशगुणास्तन्मतोक्ताः श्लेषादयः। (ग, इ)

---

**(वि, क)** **उद्देशे**ति—गुणालङ्काररीतय इत्युद्देशेऽलङ्कारस्य प्रागुद्दिष्टत्वेन तदुल्लङ्घ्यम् इत्यर्थः। तदुल्लङ्घने हेतुमाह—**बहुवक्तव्यत्वेने**ति। एतेन सूचीकटाहन्यायो दर्शितः।

**(वि, ख)** रसादीनामित्यादिपदात् समस्ताऽसंलक्ष्यक्रमपरिग्रहः।

**(वि, ग)** अनङ्गमङ्गलभुव इत्यादि व्याख्यातम्। एकपदसमस्ता न त्वनेकपदे-दीर्घसमस्ता। स्वल्पप्राणानि अक्षराणि ईषत् प्रयत्नोच्चार्याणि ककारहकारादीनि यत्र। श्लेषादिर्दशगुणाः।

---

**(लो, अ)** इदानीं रीतिं निरूपयितुकामः संगतिं करोति—**अथोद्देशे**ति। बहुवक्तव्यत्वेन उल्लङ्घ्यक्रमं सूचीकटाहन्यायादित्यर्थः।

**(लो, आ)** पदानां सङ्घटना रचना अर्थात् विशिष्टा, विशेषश्च विशेषलक्षणेष्वभिव्यक्तः। **रसादीनामि**ति। अङ्गसंस्थाविशेषो यथा लोके आत्मानमुपकरोति तथा काव्येषु।

**(लो, इ)** ललितात्मिका सुकुमारस्वरूपा। वृत्तिः समासः। अत्र रुद्रटाचार्य्यमतप्रकटनम्। एकसमस्ता एकपदसमासयुक्ता, स्वल्पप्राणाक्षरा मूर्द्धा मृद्वृत्तेत्यादिवत् न कष्टोच्चारणीयवर्णा।

---

※ अङ्गसंस्थाविशेषोऽङ्गविन्यासविशेषः।

**ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ।**
**समासबहुला गौडी ॥ ४ ॥**

यथा—चञ्चद्भुजेत्यादि । पुरुषोत्तमस्त्वाह—

"बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौडीया ।
रीतिरनुप्रासमहिमपरतन्त्राऽस्तोभ[1]वाक्या च ॥" (घ, ई)

**वर्णैः शेषैः पुनर्द्वयोः ।**
**समस्तपञ्चमपदो बन्धः पाञ्चालिका मता ॥ ५ ॥** (ङ)

द्वयोर्वैदर्भीगौड्योर्यथा—

"मधुरया मधुबोधितमाधवी-
मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मद-
ध्वनिभृता निभृताक्षरमुज्जगे ।" (च)

भोजस्त्वाह—

"समस्तपञ्चमपदामोजःकान्तिसमन्विताम् ।
मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः ॥" (छ, उ)

---

(वि, घ) आडम्बर उद्धतवर्णघटितः । **पुरुषोत्तमस्त्वि**ति । अन्यापेक्षया प्राक्लिखितबन्ध आडम्बरः; एतन्मते उक्तवर्णानामनुप्रासितत्वानियम इति विशेषस्तदाह-**अनुप्रासमहिमपरतन्त्रे**ति । पारतन्त्र्यं व्याप्तिः । अस्तोभवाक्या यतिरहितवाक्या ।

(वि, ङ) पाञ्चालिकां रीतिमाह—**वर्णैरि**ति । द्वयोः शेषैरवशिष्टैर्वर्णैरित्यर्थः । **समस्तपञ्चमपद** इति अत्र पदपदम् अक्षरपरम् । तेन समासगतपञ्चमाक्षर इत्यर्थः ।

(वि, च) **मधुरये**ति । मधुकराङ्गनया भ्रमर्या निभृताक्षरं गुप्ताक्षरमस्फुटाक्षरं यथा स्यात्तथा मुहुरुज्जगेऽगीयत । कीदृश्या मधुरया ध्वनिमधुरतयैव तस्या मधुरता, तथा मधुना वसन्तेन बोधिताया उद्बोधिताया माधवीलताया मधुनो मकरन्दस्य समृद्ध्या सम्पत्त्या समेधिता दीपिता मेधा बुद्धिर्यस्यास्तादृश्या । तथोन्मदध्वनिभृता उच्चत्वमेवोन्मदत्वम् । अत्र मकारनकारौ पञ्चमवर्णौ समासगतौ ।

(वि, छ) कण्ठाभरणकृतो भोजस्य सम्मतलक्षणमाह—**भोजस्त्वि**ति । **ओजःकान्ती**ति । साभिप्रायत्वरूपेण ओजसा औज्ज्वल्यरूपया कान्त्या च समन्विताम् इत्यर्थः । **मधुरां सुकुमारां चे**ति । पृथक् पदत्वरूपेण माधुर्येण सौकुमार्येण च युक्ता-

---

(लो, ई) अनुप्रासमहिमपरतन्त्राऽनुप्रासबहुला ।
(लो, उ) ओजः—कान्ती तन्मतोक्तौ गुणविशेषौ ।

---

1 'न्त्रा स्तोक' (क. ख. पु.)

**लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरा स्थिता ॥ ६ ॥ (ऊ)**

यथा--

"अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥" (ज)

कश्चिदाह--

"मृदुपदसमाससुभगा युक्तैर्वर्णैर्नचातिभूयिष्ठा । (ऋ)
उचितविशेषणपूरित[1]वस्तुन्यासा भवेल्लाटी ॥" (झ)

अन्ये त्वाहुः—

"गौडी डम्बरबद्धा स्याद् वैदर्भी ललितक्रमा ।
पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः ॥"

---

मित्यर्थः । अनङ्गमङ्गलभुव इति वैदर्भ्युदाहरणे पञ्चममूर्द्धान एव वर्णा इति । न तत्र समस्तपञ्चमवर्णघटितपाञ्चालीत्वप्रसक्तिः । मधुरयेत्यादिपाञ्चाल्युदाहरणे समासगता एव पञ्चमवर्णा इति न तत्र पञ्चममूर्द्धवर्णघटितवैदर्भीत्वप्रसक्तिः । तत्र माधुर्य्यव्यञ्जकैरित्यत्र बहुवचनादत्र मधुकराङ्गनया इत्यत्र तद्व्यञ्जकैकवर्णमात्रसत्त्वेन तत्प्रसक्त्यभावात् ।

( वि, ज ) **अयमुदयती**ति । लाटयुदाहरणे तदुभयमिश्रणं दर्शयिष्यते । तदर्थस्तु अयम् अर्थात् सूर्य्य उदयति । कीदृशः । पद्मिनीनां मुद्रायाः सङ्कोचस्य भञ्जनः तत्पुष्पविकाशकरत्वात् । तथा उदयगिरिस्थाया वनश्रेण्या नवीनमन्दारपुष्पस्वरूपः । विरहदुःखितस्य चक्रवाकमिथुनस्य बन्धुर्मित्रं तद्विरहनाशकत्वात् । तमांसि भिन्दन् च कुपितस्य वानरस्य कपोलक्रोडोभयवन् ताम्रश्च । कोपवशात् कपोलस्य ताम्रता क्रोडस्य तु स्वाभाविकी। अत्र भञ्जनेति, मन्दारेति, द्वन्द्वबन्धुरिति, भिन्दन्निति पञ्चममूर्द्धवर्णानां वैदर्भीघटकत्वं तच्छेषवर्णानां बहूनामेवं पाञ्चालीघटकत्वमित्युभयमिश्रणम् ।

( वि, झ ) **कश्चिदाहे**ति—लाटीलक्षणमिति शेषः । **मृदुपदे**ति—पदसमासयोरुभयत्र मृदुत्वान्वयः । युक्तैः संयुक्तैर्वर्णैर्नचातिभूयिष्ठा, भूयिष्ठसंयुक्तवर्णरहितेत्यर्थः । **उचिते**ति—उचितम् उक्तदोषरहितं विशेषणं पूरितम् प्रतिपालितं येन तादृशस्य वस्तुनो न्यासयुक्ता लाटी भवेदित्यर्थः । एतदप्युक्तोदाहरणे एव सम्भवति । तत्तद्गुणव्यञ्जकानां वर्णादीनां तत्तद्गुणव्यञ्जनार्थमुपादेयत्वेनोक्तत्वात् ।

---

( लो, ऊ ) अन्तरा स्थितेत्यनेन नात्यल्पसमासा न बहुलसमासा, एवमन्यत्र ।

( लो, ऋ ) युक्तैः संयुक्तैः ।

1 'सूचित' ( क. ट. पु. )

**क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनादयः ॥ ७ ॥ ( ञ, ऋ )**

**वक्त्रादीत्यादिशब्दाद् वाच्यप्रबन्धौ । रचनादीत्यादिशब्दाद् वृत्तिवर्णौ ।**

**तत्र वक्त्रौचित्याद् यथा—**

**"मन्थायस्तार्णवाम्भःप्लुत[1]कुहरचलन्मन्दरध्वानधीरः[2]**

**कोणाघातेषु गर्ज्जत्प्रलयघनघटाऽन्योऽन्यसंघट्टचण्डः ।**

**कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः**

**केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥"**

**अत्र वाच्यस्य क्रोधाद्यव्यञ्जकत्वेऽपि भीमसेनवक्तृत्वेनोद्धता रचनादयः ।**

**( ञ ) ( ट, ऌ )**

---

**( वि, ञ )** क्वचित्तत्तद्रसाभावेन तद्गुणव्यञ्जनार्थमनुपादेयत्वेऽपि वक्त्राद्यौचित्याद् अन्यथा रचनादय इत्याह—**क्वचिद्वक्त्रादी**ति । तद्गुणव्यञ्जनाभावेऽपि तन्निबन्ध एवान्यथात्वम् ।

**(वि, ट) मन्थायस्ते**त्यादि—रणस्थले दुन्दुभिशब्दं श्रुत्वा भीमस्येयं पृच्छा । केनायं दुन्दुभिस्ताडितः—ताडनेन जनितः । यथा श्रुते विशेषणानां दुन्दुभौ अन्वयः । शब्दः कीदृशः । मन्थनेन मथनेन आयस्तस्य प्राप्तायामस्यार्णवस्याम्भसा प्लुतं व्याप्तं कुहरं गुहा यस्य तादृशस्य चलतः मन्दरस्य ध्वानवत् धीरः । कोणस्य वादनदण्डस्याघातेषु ताडनेषु सत्सु । गर्ज्जन्त्याः प्रलयघनघटाया अन्योऽन्यसंघट्टनेन चण्डः । यद्वा—

"ढक्काशतसहस्राणि भेरीशतशतानि च ।

एकदा यत्र वाद्यन्ते कोणाघातः स उच्यते ॥"

यत्रेति निमित्तसप्तम्यां यादृशशब्दनिमित्तं ढक्कादय एकदा ताड्यन्ते स शब्दः कोणाघात इत्यर्थः । तथा च तादृशशब्देषु मध्ये अयं गर्ज्जत् इत्यादि चण्ड इत्यर्थः । कृष्णाया द्रौपद्याः क्रोधस्य अग्रदूतः तत्प्रवर्त्तकत्वात् कुरुकुलनिधनसूचक उत्पातभूतो निर्घातवातश्च इत्यर्थः । अत्रेति वाच्यपदमत्र प्रतिपाद्यपरं तथा च लक्ष्यस्य दुन्दुभिशब्दस्य इत्यर्थः ।

---

**( लो, ऋ )** इह सङ्घटनादीनां गुणपरतन्त्रत्वेऽपि विशेषमाह—**क्वचिदि**ति । यदाह सर्वत्रैव रसाश्रिता रचनादयो वक्त्राद्यपेक्षायां तु किञ्चित्तारतम्यमिति ।

**(लो, ऌ)** मन्थायस्तेत्यादौ क्रोधाव्यञ्जकत्वं वाक्यस्य च नाटकरूपस्याभिनेयदुःखावहत्वात् । अनुचितमपि दीर्घसमासान्तत्वेऽपि विशेषमाह—धीरोद्धतो भीमसेनो वक्तेति नानौचित्यमिति भावः ।

---

1 'प्लुति' ( च. छ. पु. )

2 'दीर्घः' ( च. ज. पु. )

**वाच्यौचित्याद् यथा उदाहृते मूर्द्धन्व्याधूयमानेत्यादौ । (ए)**

**प्रबन्धौचित्याद् यथा नाटकादौ । रौद्रेऽप्यभिनयप्रातिकूलत्वेन न दीर्घसमासादयः । एवमाख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः । कथायां रौद्रेऽपि नात्यन्तमुद्धताः । (ठ)**

**एवमन्यदपि ज्ञेयम् (ऐ)**

इति साहित्यदर्पणे रीतिविवेको नाम नवमः परिच्छेदः ।



(**वि, ठ**) आख्यायिकाकथे प्रबन्धविशेषौ ।

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्य्यकृतायां साहित्यदर्पणटीकायां रीतिनिरूपणाख्यस्य नवमपरिच्छेदस्य विवरणम् ।

---

(**लो, ए**) मूर्द्धन्व्याधूयमानेत्यादौ च न वक्त्रौचित्यम्, नाटकान्तःपातित्वाच्च उक्तप्रकारेण प्रबन्धौचित्यमपि । किन्तु काव्यस्य उद्धतार्थप्रकाशकत्वादुद्धतरचना ।

(**लो, ऐ**) आख्यायिकादिलक्षणमुक्तमेव । आख्यायिकाया गद्यमयप्रबन्धत्वेन गद्यस्य च विकटबन्धदीर्घसमासबहुलप्राचुर्य्यौचित्यात् तत्र शृङ्गारेऽपि न प्रायेण सुकुमाररचनादिः । यदुक्तं ध्वनिकृता—

"रसबद्धोक्तमौचित्यं भाति सर्वत्र संश्रिता ।
रचनाविषयापेक्षं तत्तु किञ्चिद् विभेदवत् ॥" इति

कथाप्रबन्धस्य गद्यमयत्वेऽपि शृङ्गाररसमयत्वाद्रौद्रादिरसप्रवेशेऽपि नात्यन्तमुद्धतरचनादयो विधेयाः । एवमन्यदपि । यदुक्तं ध्वनिकृता—"सन्दानिकादिषु विकटबन्धौचित्याद् मध्यमसमासदीर्घसमासे एव सङ्घटने ।"

इति श्रीसाहित्यदर्पणलोचने रीतिविवेको नाम नवमः परिच्छेदः ।

# दशमः परिच्छेदः ।

अथावसरप्राप्तानलङ्कारानाह—( क, अ )

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ॥ १ ॥**

यथा—अङ्गदादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्वन्ति, तथाऽनुप्रासोपमादयः शब्दार्थशोभातिशायिनो रसादेरुपकारका ये तेऽलङ्काराः । (आ)

---

**(वि, क) अथावसरे**ति । उद्देश्यक्रमलङ्घनात्, न तु तत्क्रमप्राप्तानिति भावः ।

---

•**(लो, अ)** इदानीमलङ्कारं निरूपयितुकामोऽवतारयति—**अथे**ति । **अलङ्कारानाह**—स्वरूपतो विशेषतश्चेत्यर्थः ।

**(लो, आ) यथे**ति । शब्दार्थशोभातिशायित्वमात्रेणालङ्कारत्वम् । तथाहि रसाध्यवसायपृथक्यत्ननिवर्त्त्यस्य यमकादेरेकरूपानुबन्धनवतोऽनुप्रासस्याऽसमीक्ष्य विनिवेशितस्य रूपकादेश्च रसानुपकारित्वादलङ्कारता । यदुक्तं ध्वनिकृता—

"यमकादिनिबन्धेषु पृथक् यत्नोऽस्य जायते ।
शक्तस्यापि रसाङ्गत्वं तस्मादेषां न विद्यते ॥"

शक्तस्याप्यस्य कवेः । यमकदुष्करादीनां यथा—

"शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धनात् ।
सर्वेष्वेव प्रबन्धेषु नानुप्रासः प्रकाशकः ॥" इति

रूपकादेः समीक्ष्य निवेशनं च तेनैवोक्तम्—

"विवक्षातत्परत्वेन नाङ्गित्वेन कथञ्चन ।
काले च ग्रहणत्यागौ नाति निर्वहणैषिता ॥
निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम् ।
रूपकादेरलङ्कारवर्गस्याङ्गत्वसाधनम् ॥ इति ॥"

"कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नः तरलयति बाष्पः स्तनतटं
प्रियो मन्युर्जातस्तव निरनुरोधे ! न तु वयम् ॥"

कपोले गण्डस्थले, पत्राली पत्ररचना, करतलनिरोधेन पाणितलपीडनेन, मृदिता प्रमृष्टा । निश्वासैरमृतहृद्योऽमृतवन्मधुरोऽधररसः, निपीतः आहृतः । बाष्पः अश्रु, कण्ठे लग्नः सक्तः सन्, स्तनतटं; कुचप्रान्तं, मुहुः पुनः पुनः तरलयति कम्प-

**अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः । ( ख, इ )** *

यति । एवमनेन प्रकारेण नायको नायिकामुपालभते । मन्युः क्रोधः, तव प्रियो जातः अयि निरनुरोधे ! अनङ्गीकृतानुवर्त्तने ! वयं प्रिया हिताः न भवामः इति सम्बन्धः । अत्र पत्रालीमर्द्दनव्यापारेण सौभाग्यहारी मन्युः तव प्रियो जात इत्यनेन त्वदनुरोध-कारिणो वयं तव हिता न भवाम इत्यनेन च उपालम्भो गम्यते । नायिका, स्वीया मध्या, नायकस्तु शठः । मानकृतो विप्रलम्भशृङ्गारः । अत्र सोपालम्भवचनं नर्म । आक्षेपोऽलङ्कारः" इत्यादौ । मम तातपादानां प्रभावतीपरिणये प्रभावतीवर्णनं यथा—

कलाकुलगृहं मनः—पतगपञ्जरं कामिनां
वशीकरणभेषजं, परमकौशलं वेधसः ।
जगद्विजयकर्मणि स्मरमहीभुजः कार्मणं
दृशोर्निगडबन्धनं त्रिजगतां परं भूषणम् ॥

इत्यादौ अलङ्काराणां निर्वाहकरससम्बन्धाक्षिप्तचेतसः कवेरपृथक्-यत्ननिवर्त्त्य-त्वात् न दोषः, इत्यतोऽतीवरसपरिपोषकत्वम् । यदुक्तं ध्वनिकृता—

रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।
अपृथक्यत्ननिर्वर्त्त्यः सोऽलङ्कारो ध्वनेर्मतः ।

तथालङ्कारान्तराणि निरूप्यमाणदुर्घटनान्यपि रससमाहितचेतसः प्रतिभानवतः कवेरहंपूर्विकया परापतन्ति । यथा—

"इयमम्लपित्तशमनी त्रिदोषदमनी बुभुक्षुकमनीया ।
मर्त्यानाममृतवटी रसगन्धकपर्पटी जयति ॥" इत्यादौ ।

सत्यपि रसे तमपि नोपकुर्वन्ति अनुप्रासादयः । यथा—" ओवट्टइ उल्लट्टइ " इत्यत्र अनुप्रासः ।

"मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयिता सन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥"

इत्यत्र चोद्दीपनरूपाया बिसलतायाः प्रयत्नजीवहरणावसानोपकारकत्वात् जीवन-निरोधार्गलरूपोत्प्रेक्षायां विप्रलम्भशृङ्गारतदाभासयोरननुगुणत्वान्नालङ्कारः रसस्योप-कारकः । इह नोपमेति उत्प्रेक्षानिरूपणे वक्ष्यते । तदेव सुष्ठूक्तं शब्दार्थशोभातिशय-द्वारेण रसादेरुपकारका अलङ्कारा इति ।

**(लो, इ) अस्थिरा** इति—कारिकापदमनूद्य विवृणोति । **नैषामिति**–गुणादीनां

* 'अलङ्कारा रसं विनाऽवतिष्ठन्ते । सन्तमपि रसं परम्परया शब्दार्थद्वारेणोप-कुर्वन्ति न तु साक्षात् । गुणास्तावत् रसं विना नावतिष्ठन्ते, अवस्थिताश्चावश्यं रसं

सम्प्रति शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वात् शब्दालङ्कारेषु वक्तव्येषु शब्दार्थालङ्कारस्यापि पुनरुक्तवदाभासस्य चिरन्तनैः शब्दालङ्कारमध्ये लक्षितत्वात् प्रथमं तमेवाह। ( ग, ई )

**आपाततो यदर्थस्य पौनरुक्त्या[1]वभासनम्।**

**पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ॥ २ ॥ (घ, उ) ×**

उदाहरणम्—"भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः।

---

**(वि, ख) नैषां गुणवदि**ति—माधुर्य्यादीनां शृङ्गारादिव्यापकत्वात् तत्र तेषामवश्यस्थितेः।

**(वि, ग)** तत्रादौ पुनरुक्तवदाभासस्य शब्दार्थोभयालङ्कारत्वे शब्दालङ्कारतया कथनबीजं प्रदर्शयंस्तमाह—**शब्दालङ्कारस्यापी**ति।

**( वि, घ ) आपाततो यदर्थस्ये**ति। आपातत एव न तु प्रणिधानेऽप्यर्थपौनरुक्त्यम्। भिन्नाकारशब्दत्वेन पौनरुक्त्यप्रसक्तिस्तु नास्त्येव।

**( वि, ङ ) भुजङ्गकुण्डली**ति। शिवो जगन्त्यपि सदाऽपायादव्याद् अवतु।

---

वाक्येष्वन्वयव्यतिरेकानुविधायिनो रसस्य धर्मत्वेन अवस्थितिः। अलङ्काराणां च क्वचिदभावेऽपि न काव्यत्वहानिरित्यर्थः। यथा गुणा रसस्य स्थिरधर्मास्तथा नैते शब्दार्थयोः। एवं शब्दार्थयोरनुपचरितधर्मत्वेनास्थिरत्वेन शब्दार्थशोभाधानद्वारेण रसोपकारकत्वेन च गुणव्यतिरिक्तत्वमलङ्काराणां दर्शितम्।

**(लो, ई)** सम्प्रतीत्यवताय्यर्य तद्भेदानाह—**शब्दार्थयोरि**ति। आह लक्षयतीत्यर्थः।

**( लो, उ )** आपाततः पौनरुक्त्यावभासनं, पुनरुक्तिवत् प्रत्ययः, पर्य्यवसाने तु न तथा। अतः पुनरुक्तवदाभास इत्यर्थवन्नामालङ्कारः। भिन्नाकारशब्दग इत्यनेन यमकव्यवच्छेदः। अत्र " नवपलाशपलाशवनं पुरः " इत्यादावपि आपाततः पौनरुक्त्यावभासनं; किन्तु तदेकरूपशब्दगतम्।

**( लो, ऊ )** कुण्डली सर्पः; कुण्डलवांश्च। शशिशुभ्रांशुशीतगुशब्दास्त्रय एव आपाततश्चन्द्रार्थाः। पर्य्यवसाने तु शशिनः शुभ्रा उज्ज्वला येंऽशवः तद्वत् शीता

---

साक्षादुपकुर्वन्ति" इति गुणालङ्कारयोर्भेदः।

**अस्थिरा** इति—यथा माधुर्य्यं शृङ्गारादिनियतमोजो वीरादिनियतं प्रसादः सर्वरसनियतस्तथालङ्काराणां सर्वत्र स्वेच्छया प्रयोगादिति भावः। अथवा रसे तेषां स्थितिर्न नियतेति भावः।

× पुनरुक्तस्येव पुनरुक्तवत् आभासो ज्ञानं पुनरुक्तवदाभासः आपाततः तात्पर्य्यानुसन्धानं विना एकार्थतया प्रतीतौ पुनरुक्तिवत् प्रत्ययः। पर्य्यवसाने तात्पर्य्यानुसन्धाने तु न पौनरुक्त्यमिति भावः। भिन्नाकारो यः शब्दः तद्विषयः।

1 'पौनरुक्त्येन भासनम्' ( क. पु. )

जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः ॥" (ङ, ऊ)

अत्र भुजङ्गकुण्डल्यादिशब्दानामापातमात्रेण सर्पाद्यर्थतया पौनरुक्त्य-प्रतिभासनम् । पर्य्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्य इत्याद्यन्यार्थत्वम् । पायादव्यादित्यत्र क्रियागतोऽयमलङ्कारः । पायादित्यस्याऽपायादित्यत्र पर्य्यव-सानात् । ( च )

'भुजङ्गकुण्डली'तिशब्दयोः प्रथमस्यैव परिवृत्तिसहत्वम् । 'हरः शिवः' इति द्वितीयस्यैव । 'शशिशुभ्रांशु' इति द्वयोरपि । ( छ, ऋ )

"भाति सदानत्याग" इति न द्वयोरपि । इति शब्दपरिवृत्तिसहत्वासहत्वाभ्या-मस्योभयालङ्कारत्वम् । ( ज, ऋ )

---

कीदृशः, भुजङ्गरूपकुण्डलवान् ; तथा व्यक्तेन शशिनः शुभ्रांशुना शीतः शीतलः गौर्वृषः यस्य तादृशः । चेतोहरः मनोहरः ।

( वि, च ) अपायादित्यत्र **पर्य्यवसानादि**ति । प्रश्लिष्टाकारप्रतिसन्धानात् तत्र पर्य्यवसानम् ।

( वि, छ ) **प्रथमस्यैवे**ति । सर्पकुण्डलीत्युक्तेऽपि पौनरुक्त्यस्य भानात् । **द्वितीयस्यैवे**ति । परिवृत्तिसहत्वमित्यन्वयः । मृडो भव इत्युक्तावपि तथात्वात् । **द्वयोरपी**ति । परिवृत्तिसहत्वमित्यन्वयः । चन्द्रशीतांशुपददानेऽपि तथात्वात् ।

( वि, ज ) **भाती**ति । भाति सदानत्यागः स्थिरतायामिति काव्यप्रकाशोक्त्यै-कदेशप्रदर्शनमिदम् । तत्र भवान् सदा अनत्या परनतिराहित्येन भातीति । स्थिरताया-मगः पर्वतश्चेत्यर्थः । तत्र दानत्यागपदपौनरुक्त्यावभासः । अत्र न द्वयोरपि परिवृत्ति-सहत्वम् ।

---

गावः कान्तयो यस्य इति । अपायात् अपायतः अव्यात् रक्षतात् । हरः सदाशिवः मनोहरश्च । अत्र पायादिति पाधातोः, अव्यादिति अवधातोः रक्षणार्थस्य लिङन्तत्वे पौनरुक्त्यावभासः । पर्य्यवसाने तु सन्धिहेतुकं लुप्तमकारमादायापायशब्दस्य सुबन्त-त्वमित्यर्थः ।

( लो, ऋ ) अस्य च शब्दार्थालङ्कारत्वे हेतुमाह—**भुजङ्गे**ति । परिवृत्ति-सहत्वम्; अहि—कुण्डली, सर्पकुण्डलीत्याद्युक्तावपि पौनरुक्त्यावभासता । तेनात्र कुण्डलीति पदस्य न परिवृत्तिसहत्वम् । एवं 'हरः शिवः' इत्यादावपि बोद्धव्यम् ।

( लो, ऋ ) तृतीयादौ च दानत्यागाभ्यां सह वर्त्तते इति पौनरुक्त्यावभासः । सदा सर्वदा अनत्या, अनमनेन, अगः पर्वत इति पर्य्यवसानम् । न द्वयोर्दानत्यागयोः । परिवृत्तिसहत्वासहत्वाभ्यां क्वचित् परिवृत्तिसहत्वादर्थालङ्कारत्वं, क्वचित्तदसहत्वाच्छब्दा-लङ्कारत्वं, दोषगुणालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेरन्वयव्यतिरेकाभ्यां नियम-नादित्यर्थः ।

**अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् ॥ ३ ॥**

**स्वरमात्रसादृश्यं तु वैचित्र्याभावान्न गणितम् । रसाद्यनुगतत्वेन प्रकर्षेण**[1] **न्यासोऽनुप्रासः ( भ, लृ )**

**छेको व्यञ्जनसङ्घस्य सकृत् साम्यमनेकधा ॥ ४ ॥ ( अ, ए )**

---

**(वि, भ)** अनुप्रासालङ्कारमाह—**अनुप्रास** इति। **स्वरमात्रसादृश्यमि**ति-मात्रपदात् व्यञ्जनसाम्यव्युदासः। तेन "के वाते सेवया देशे गेहे च लेभिरे यश" इत्यत्र नानुप्रासः। व्यञ्जनमात्रसाम्ये तु कुपितकपिकपोलेत्यादौ अनुप्रास एव। क्वचिदु-भयसाम्येऽपि यथा—" धूतचूतप्रसून " इति। यथा वा—"गुणसिन्धुः सतां बन्धु-स्त्वबन्धुस्त्वपरो जनः।" केवलं स्वरमात्रसाम्यं व्युदस्तं बोध्यम्। अनुप्रासपदव्युत्पत्ति-माह—**रसाद्ये**ति। अनुगमश्च व्यञ्जना। अनुप्रासविशिष्टपदवाक्याभ्यां रसादिव्यञ्ज-नात्। आदिपदाद् वक्तुर्वैदग्ध्यपरिग्रहः।

**(वि, अ)** तत्र छेकानुप्रासलक्षणमाह—**छेक** इति। व्यञ्जनसङ्घत्वमत्र एकव्यञ्जनभिन्नत्वमात्रं विवक्षितम्। तेन द्वयोस्त्र्यादीनां च तथात्वम्।

---

**(लो, लृ) अनुप्रास** इति—स्वरवैषम्येऽपि शब्दसाम्यमित्यत्र शब्दा व्य-ञ्जनान्येव। स्वराणां स्वरानाधारत्वात्। तेनैषा जालायातीत्यादौ स्वरमात्रस्य अस-कृदावृत्तावपि व्यञ्जनवैसादृश्ये चारुत्वाभावस्य सहृदयसंवेद्यत्वान्नालङ्कारः। एतदेवोक्तं वृत्तौ स्वरमात्र इत्यादिना। किञ्च स्वरस्य वैषम्येऽपि इत्यनेन "कावेरी वारी"त्यादे-रेतदवाच्यत्वम्। अपिशब्दात् "दर्दुरदुरध्यवसाय सायम्" इत्यादौ दुरशब्दसाम्ये स्वर-साम्येऽप्यनुप्रासत्वम्। "नवपलाशपलाशवनं पुर" इत्यादौ यमकस्यापवादत्वेनानु-प्रासबाधकता। दर्दुरदुर इत्यादौ प्रथमदुरशब्ददकारस्य मूर्ध्नि रेफयोगान्न यमकम्। दुरध्यवसाय सायमित्यादौ चानुस्वारयोगादनुप्रास एव न यमकम्। "आकर्ण्य कर्ण-मधुराणी"त्यादौ च प्रथमकर्णशब्दस्य स्वतः स्वरायोगेऽपि द्वितीयकर्णशब्दनिष्ठस्व-भावात् स्वरवैषम्यम्। नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृतेत्यादौ नकाररेफयुक्तदका-रयोर्दूरावस्थानाद् अनुप्रासाभावबुद्धिर्न कार्य्या, संस्कारविच्छेदाभावाद् यदुक्तं—"पूर्वानुभव-संस्कारबोधनीयेत्यदूरते"ति।

**( लो, ए )** तद् भेदानाह। सङ्घशब्देनात्र नैकस्य व्यञ्जनस्यासकृदेकवारमने-कधा स्वरूपतः क्रमतश्च। एतदेवोक्तं वृत्तावनेकधेत्यादिना।

---

† स्वरस्य वैषम्येऽपि असाम्येऽपि यत् शब्दसाम्यं व्यञ्जनस्य (एकस्य द्वयोर्बहूनां वा) सारूप्यं सोऽनुप्रास इत्यर्थः। अत्र शब्दपदं व्यञ्जनपरम्। यमकेऽतिव्याप्तिवार-णाय वैषम्येऽपि स्वरस्येत्युक्तम्। अपिना स्वरसादृश्ये च अनुप्रासः। यमके तु स्वर-सादृश्यनियमः। अनुप्रासे तु न तथा। उदाहरणं लोचन्यां द्रष्टव्यम्।

1 'प्रकृष्टो' ( ग. पु. )

छेकश्छेकानुप्रासः। अनेकधेति स्वरूपतः क्रमतश्च। "रसः सर" इत्यादेः क्रमभेदेन सादृश्यं नास्यालङ्कारस्य विषयः। (ट, ऐ)

उदाहरणं मम तातपादानाम्—

"आदाय बकुलगन्धानन्धीकुर्वन् पदे पदे भ्रमरान्।
अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः॥" (ठ)

अत्र "गन्धानन्धी" इति संयुक्तयोः "कावेरीवारि" इत्यसंयुक्तयोः "पावनः पवन" इति बहूनां व्यञ्जनानां सकृदावृत्तिः। (छेको विदग्धः। तत्प्रयोज्यत्वादेष छेकानुप्रासः।) (ड, ओ)

**अनेकस्यैकधा साम्यमसकृद् वाप्यनेकधा।**
**एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते॥ ५॥ (औ) ***

एकधा स्वरूपत एव, न तु क्रमतोऽपि। अनेकधा स्वरूपतः क्रमतश्च

---

**(वि, ट) अनेकधे**ति। वर्णानामानुपूर्व्याश्च साम्यमित्यनेकधात्वम्। ईदृशैकधात्वं तु साम्यानुप्रासस्य विषय इत्याह—**सरो रस** इति। न चैवं वर्णैरानुपूर्व्याच्च साम्येऽनुप्रासाद् यमकाभेदप्रसक्तिरिति वाच्यम्: तत्र स्वरस्याऽपि साम्येन एतद् भेदात्।

**(वि, ठ) आदाये**ति—भ्रमराणामन्धीकरणं गन्धलोभेन तदनुसरणमात्रेण विषयाऽन्तरादर्शनम्।

**(वि, ड)** वर्णद्वयस्यापि संघपदार्थत्वेनात्र विवक्षणात्तयोरनेकवर्णानां चात्र सकृत्त्वं दर्शयति—**अत्रे**ति। **तत्प्रयोज्यत्वादेवे**ति। तथा च छेकपदं तत्प्रयोज्ये निरूढलाक्षणिकम्। एवं च वृत्त्यनुप्रासस्यापि विदग्धप्रयोज्यत्वेऽपि तत्र रूढ्यभावात् न छेकपदप्रयोगः।

**(वि, ढ)** वृत्त्यनुप्रासमाह—**अनेकस्यैकधे**ति। तत्रैकधा पदार्थं व्याचष्टे—**स्वरूपत एवे**ति। व्यञ्जनवर्णस्वरूपत इत्यर्थः। असकृद् वाप्यनेकधेत्यत्राऽनेकधात्वं

---

**(लो, ऐ)** रस रस इत्यत्र रसयोः स्वरूपत एव साम्यं, न तु क्रमतः। कावेरी वारीत्यादौ वरयोरिव क्रमतोऽपि।

**(लो, ओ)** संयुक्तयोर्नकारधकारयोः। छेक इत्यादिना पूर्वप्रसिद्धस्य नाम्नः कथञ्चिन्निरुक्तिः।

**(लो, औ) अनेकस्ये**ति। अनेकस्यार्थाद् व्यञ्जनस्य एकधा साम्यम् एकः। अनेकधापि वाऽसकृत् साम्यं द्वितीयः, असकृदित्यनेन छेकानुप्रासव्यवच्छेदः। एकस्य व्यञ्जनस्य सकृदसकृद् वा साम्यमिति द्वाविति चतुर्द्धा वृत्त्यनुप्रासः।

---

* (१) अनेकस्य व्यञ्जनसङ्घस्य एकधा स्वरूपतः साम्ये। (२) अनेकव्यञ्जनसङ्घस्य अनेकधा स्वरूपक्रमाभ्यामसकृत् साम्ये। (३) एकस्य व्यञ्जनस्य सकृत् साम्ये। (४) एकस्यासकृत् साम्ये वृत्त्यनुप्रासश्चतुर्विधः स्यादित्यर्थः।

सकृदपीत्यपिशब्दादसकृदपि । ( ढ ) उदाहरणम्—

"उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर—
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण—
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥" ( ण ) +

अत्र "रसोल्लासैरमी" इति रसयोरेकधैव साम्यम् । न तु तेनैव क्रमेणापि । द्वितीये पादे तु कलयोरसकृत् तेनैव क्रमेण च ।

प्रथमे एकस्य [1]तकारस्य सकृत् धकारस्य चासकृत् । रसविषयव्यापारवती

---

व्याचष्टे—**अनेकधे**ति । अत्र अनेकस्येत्यस्यान्वयः, तथा चानेकस्यानेकधा सकृत्त्वे छेकः। असकृत्त्वे तु वृत्त्यनुप्रासः । 'एकस्य सकृदपि" इत्यत्राऽपिकारसमुचितं दर्शयति— **सकृदपीत्यपिशब्दादि**ति । एकस्य सकृत्त्वे अनुप्रासस्तु न काव्यप्रकाशसम्मतः । जातच्युतेत्यत्र वैचित्र्याननुभवात् । स्वरसादृश्यसत्त्वे तु तस्यापि सम्मतो यथा "धूत-चूतप्रसून" इत्यत्र ।

**(वि, ण) उन्मीलदि**त्यादि । "काकली तु कलौ सूक्ष्मे ध्वनौ तु मधुरा स्फुटे" इत्यमरः । तद्रूपैः कलकलैः ।

**( वि, त )** अत्र अनेकस्यैकधासकृत्त्वं दर्शयति—**रसोल्लासैरमी** इति । **रसयोरि**ति—रसेति रेफसकारयोरानुपूर्वीराहित्यादेकधा । **कलयोरि**ति—कोकिल-काकलीकलकलैरित्यत्रेत्यर्थः । एकस्य सकृत्त्वमसकृत्त्वं दर्शयति—**प्रथमे** इति । धूतचूतेत्यत्र तकारस्य । मधुगन्धलुब्धमधुपेत्यत्र धकारस्येत्यर्थः । समासमेत्यत्र तु अनेकधानेकस्य सकृत्त्वाच्छेक एवेत्यतस्तन्न दर्शितम् । वृत्त्यनुप्रास इत्यत्र वृत्तिपदार्थं

---

**( लो, अ )** प्राणसमासमागमेत्यत्र च यमकत्वं वक्ष्यते । यद्यपि ल्लासैरमी वासरा इत्यत्र च सरयोरनेकधा साम्यहेतुकेन छेकानुप्रासेन सहैकधासाम्यभेदस्य वृत्त्यनुप्रासभेदस्य एकवाचकानुप्रवेशरूपः सङ्करो वक्ष्यते; तथापि वासरशब्दमगण-यित्वा वृत्त्यनुप्रासभेदकथनम् । एवमन्यत्र । **रसविषये**ति । रसविषयः स्वादानुप्राणको व्यापारो वृत्तिः । वृत्यतेऽनया शब्दो रसव्यञ्जनयेति व्युत्पत्त्या । तेन तद्वर्ती उक्त-

---

+ पथिकैः पान्थैः कथंकथमपि कष्टसृष्ट्या अमी वसन्तकालीना वासरा नीयन्ते समाप्यन्ते । वासराः कीदृशाः—उन्मीलत् प्रकाशत् यन्मधु, तस्य गन्धेन लुब्धो यो मधुपो भ्रमरस्तेन व्याधूताः कम्पिता ये चूताङ्कुराः, तेषु क्रीडन्तो ये कोकिलाः तेषां काकल्यः मधुरास्फुटध्वनयः, त एव कलकलास्तैरुद्गीर्णाः प्रादुर्भूताः कर्णज्वराः कर्णपीडा येषु । पथिकैः कीदृशैः—ध्यानावधानक्षणो ध्यानावलम्बनकालः, तत्र प्राप्तायाः प्राण-समायाः कान्तायाः समागमरसेन उल्लास आनन्दो येषां तथाभूतैः । हेतौ तृतीया वा ।

[1] 'म' ( इति क. पु. )

वर्णरचना वृत्तिः । तदनुगतत्वेन प्रकर्षेण न्यसनाद् वृत्त्यनुप्रासः । ( त, श्र )

**उच्चार्य्यत्वाद् यदेकत्र स्थाने तालुरदादिके ।**

**सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥ ६ ॥** ( थ, आ )

उदाहरणम्—

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे[1] वामलोचनाः ॥" (द) ×

अत्र "जीवयन्ती"ति "या" इति "जायिनी"रिति । अत्र जकारयकारयोरेकत्र स्थाने तालौ उच्चार्य्यत्वात् सादृश्यम् । एवं दन्त्यकण्ठ्यानामप्युदाहार्य्यम् । एष च सहृदयानामतीव श्रुतिसुखावहत्वाच्छ्रुत्यनुप्रासः ।

**व्यञ्जनं चेद् यथावस्थं सहाद्येन स्वरेण तु ।**

---

व्याचष्टे—**रसविषये**ति । रसविषयो व्यापारः व्यञ्जना, तद्वत्यां वस्तुरचनायां वस्तुनोऽर्थस्य शब्देन रचनायां वृत्तिसंज्ञा इत्यर्थः । तत्रानुप्रासशब्दार्थं योजयति—**तदनुगतत्वेने**ति । तादृशरचनासम्बन्धत्वेनेत्यर्थः । प्रकर्षश्च वर्णसाम्यम् ।

**(वि,थ)** श्रुत्यनुप्रासाख्यमनुप्रासान्तरमाह—**उच्चार्य्यत्वादि**ति । वर्णसाम्याभावेऽपि एकस्थानोच्चार्य्यत्वसादृश्यादित्यर्थः ।

**(वि, द) दृशा दग्धमि**ति—विरूपाक्षस्य जायनीस्ता वामलोचना अहं स्तुवे । लोचनस्य विरूपत्वसुन्दरत्वात्मकवामत्वाभ्यां जयपराजयावुक्त्वा क्रियाभ्यामप्याह—**दृशा दग्धमि**ति । हरेण मनसिजस्य दृशा दाहस्ताभिस्तु कटाक्षरूपया दृशा जीवनमतोऽपि जयः ।

**( वि, ध )** अन्त्यानुप्रासाख्यमनुप्रासान्तरमाह—**व्यञ्जनं चेदि**ति । **यथावस्थमि**ति । अनुस्वारेण विसर्गेण वा विशिष्टोऽविशिष्टो वा यः स्वरः केवलो वा

---

रीत्या शृङ्गारादिरसौपयिककोमलपरुषमध्यमवर्णारब्धा वापि रचना वृत्तिरुपचारादिति भावः । तदनुगतत्वेन तया वृत्त्योपलक्षितत्वेन ।

**(लो, आ) उच्चार्य्यत्वादि**ति—द्वयोर्बहूनां वा व्यञ्जनानां तालव्यत्वेन दन्त्यत्वेनादिशब्दात् कण्ठ्यत्वादिना साम्यं श्रुत्यनुप्रास इत्यर्थः । इमं च श्रुत्यनुप्रासं "निवेशयति वाग्देवी कस्यचित् प्रतिभावतः' इत्यादिना प्रशंसन्ति प्राच्याः ।

**(लो, इ) व्यञ्जनमि**ति । केश इत्यत्र यथासम्भवमिति वचनात् संयुक्ताक्षररहितो विकाश इत्यत्र शकारः स्वरविसर्गयुक्तः ककारास्थतेनाऽऽकारेण सह । विलास

---

× विरूपे विषमे अक्षिणी यस्य तादृशस्य विरूपाक्षस्य शिवस्य जयिनीस्ता वामलोचनाः सुनयनाः ( वामानि रम्याणि लोचनानि यासाम् ) स्तुवे स्तौमीत्यर्थः । याः कर्त्र्यः दृशा दग्धं मनसिजं दृशैव जीवयन्ति । शिवेन चक्षुषा कामो नाशितः । स्त्रीभिस्त्वहङ्कारेण चक्षुषा कामो जीवित इति कामशत्रोः शिवस्य जय इति तात्पर्य्यार्थः ।

1 "स्तुमो" ( धपुस्तके )

**आवर्त्यते ऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत् ॥ ७ ॥** ( ध )

यथावस्थमिति यथासम्भवमनुस्वारविसर्गस्वरसंयुक्ताक्षरविशिष्टः[1] । एष च प्रायेण पादस्य पदस्य चान्ते प्रयोज्यः । पादान्तगो यथा मम । (न)

"केशः काशस्तबकाविकासः कायः प्रकटितकरभविलासः ।
चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम् ॥" ( प, इ )

पदान्तगो यथा—

"मन्दं हसन्तः पुलकं वहन्तः" इत्यादि ।

**शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्य्यमात्रतः ।** *

---

पूर्वपादस्य पूर्वपदस्य वा अन्ते उच्चरितस्तादृशस्वरविशिष्टाऽवस्थं व्यञ्जनं चेदाद्येन स्वरेण स्वपूर्वभूतस्वरेण सह आवर्त्यते तदाऽन्त्यानुप्रास इत्यर्थः । तत् संज्ञाव्युत्पत्तिमाह—**अन्तयोज्यत्वादि**ति । यथा एकपादान्ते धीरः अन्यपादान्ते वीरः इति, यथा वा एकपादान्ते सारमन्यपादान्ते हारमिति । एवं कारी हारीति स्वरमात्रे ।

**( वि, न )** यथावस्थमिति व्याचष्टे—**यथासम्भवमि**ति । अनुस्वारविसर्गस्वराणामन्यतरसम्भवो यथासम्भवपदार्थः । अक्षरविशिष्टमित्यत्र यथावस्थं बोध्यम् । अन्त्ययोज्यत्वं व्याचष्टे—**एष चे**ति । प्रायेण इत्यनेन पज्झटिकादिच्छन्दःस्वेवाऽस्य सम्भवो नानुष्टुबादाविति दर्शितम् ।

**(वि, प) केशः काशे**ति—जरत उक्तिरियम् । काशपुष्पस्तबकवद् धवलः केशः प्रकटितस्य वक्रस्य कुब्जस्य करभस्य करिशावकस्यैव विलासो यस्य कायस्तादृशः । तथापि चेतोऽनल्पं बहु काममभिलाषं न त्यजतीत्यर्थः । तथापीत्याकाङ्क्षाबललभ्यम् । अत्र काशलासशब्दौ स्वविसर्गान्त्यस्वरविशिष्टान्त्यव्यञ्जनौ । कल्पानल्पशब्दौ सानुस्वारान्त्यस्वरविशिष्टान्त्यव्यञ्जनौ । तच्चान्त्यव्यञ्जनं तत्पूर्वस्वरेण सहावृत्तम् ।

**(वि, फ)** लाटानुप्रासाख्यमनुप्रासमाह—**शब्दार्थयोरि**ति । शब्दद्वयार्थयो-

---

इत्यत्र लकारस्थितेनाऽऽकारेण सह वर्त्तते । कल्पमित्यत्र लकाररूपं व्यञ्जनं पकारानुस्वारयुक्तं, ककारस्थितेनाऽकारेण सह । अनल्पेत्यत्र नकारस्थितेनाऽकारेण सहेत्यर्थः । प्रायेण इति वचनात् मम तातपदानां लक्ष्मीस्तवे यथा—

"श्रुताधीता गीता श्रुतिभिरविगीताखिलगुणा
गुणातीता भीताऽभयकृदविनीताऽपचयदा ।
नतिप्रीता पीताम्बरसुपरिणीताऽमरवधू-
दृशा पीता स्फीता मलरुचिपरीता विजयताम् ॥"

इत्यादौ क्वचिदन्त्ययोज्यत्वाभावेऽप्ययमनुप्रासो दृश्यते । अस्य च प्राचीनोक्त-

---

1 युक्त ( च पुस्तके )

* तात्पर्य्यमन्वयः । उद्देश्यविधेयभावादिः । कर्त्तृकर्मत्वादिरूपश्च सम्बन्धा-

**लाटानुप्रास इत्युक्तः** ॥ ८ ॥ ( फ, ई )

उदाहरणम्—

"स्मेरराजीवनयने ! नयने किं निमीलिते ।
पश्य निर्जितकन्दर्पं कन्दर्पवशगं प्रियम् ॥" ( ब ) †

अत्र विभक्त्यर्थस्यापौनरुक्त्येऽपि मुख्यतरस्य प्रातिपदिकांशद्योत्यधर्मिरूपस्याभिन्नार्थत्वाल्लाटानुप्रासत्वमेव । ( भ )

" नयने तस्यैव नयने च ।" अत्र द्वितीयनयनशब्दो भाग्यवत्तादिगुण-

---

रित्यर्थः । पौनरुक्त्यं पुनः पुनः कथनम् । ततश्च पुनरुक्तिदोषप्रसक्तावाह—**भेदे** इति । तात्पर्य्यमुद्देश्यविधेयताविषयम् । मात्रपदादर्थभेदो व्यावर्त्यते ।

**(वि, ब) स्मेरराजीवे**ति—नायकं दृष्ट्वा क्रोधान्निमीलिताक्षीं मानिनीं प्रति सख्या उक्तिरियम् । रूपेण कन्दर्पनिर्जितोऽपि त्वदनुरागात् त्वद्वशगस्तथा चात्र मानाऽनौचित्यमिति भावः । अत्र आद्ये नयनकन्दर्पपदे उद्देश्यतात्पर्य्यकेऽन्त्ये तत्पदे तु विधेयतात्पर्य्यके इत्यतो भेदः । पदार्थौ तु अभिन्नौ मात्रपदात् प्रकृत्यर्थस्य एव भेदव्यावृत्तिर्न तु प्रत्ययार्थस्य ।

**(वि, भ)** इत्यतो विभक्त्यर्थभेदं दर्शयति—**अत्र विभक्त्यर्थस्ये**ति । **मुख्यतरस्ये**ति । प्रातिपदिकांशौ नयनकन्दर्पपदे, तद्द्योत्यस्य, तद्बोध्यस्य धर्मिरूपस्य नयनकन्दर्पात्मकस्य अर्थस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वेन अस्वतन्त्रप्रत्ययापेक्षया स्वातन्त्र्याद् मुख्यतरस्याऽभिन्नत्वाद् इत्यर्थः ।

**( वि, भ )** यत्र तु प्रकृत्यर्थस्यापि भेदस्तत्र न लाटानुप्रासत्वमित्याह—**नयने** इति । अत्र द्वितीयनयनशब्दस्य भाग्यवत्तादीत्यर्थे तात्पर्यात् तात्पर्य्यस्यैव प्रातिपदिकार्थस्यापि भेद इति दर्शयति—**अत्र ही**ति । तथा च अर्थान्तरसंक्रमित-

---

लङ्कारेभ्यः पृथगनुभवसिद्धश्चमत्कारविशेष इति पृथगलङ्कारत्वम् ।

**(लो, ई) शब्दार्थयो**रिति । तात्पर्य्यमन्यपरत्वं, तच्चार्थान्तरसंक्रमितस्वरूपं तच्छब्देन विधेयतया प्रकृतोपयोगार्थविवक्षणात् तन्मात्रेण, न तु स्वरूपेण भेदो विशेषः ।

**( लो, उ ) अत्रे**ति । विभक्त्योः सुपोः । धर्मिरूपस्य चक्षुरादिरूपस्य । विभक्तीत्युपलक्षणं; तेन लिङ्गवचनयोरपि । एवं सुप्रतिपत्तयेऽसन्दिग्धमुदाहरणं दर्शयित्वा सन्दिग्धं दर्शयति-**नयने** इति । तात्पर्य्यमात्रेण न तु स्वरूपेण । इह च

---

न्वयः । अन्वयमात्रतो भेदे सति न त्वर्थतो भेदे । एतेन यमकवैलक्षण्यं दर्शितम् । अन्वयमात्रभेदादेवार्थपुनरुक्तिर्न दोषः ।

† हे स्मेरराजीवनयने विकसितपद्मनेत्रि नयने चक्षुषी त्वया किं निमीलिते सङ्कोचिते । सुन्दरत्वात् निर्जितः कन्दर्पो येन तादृशं प्रियं कन्दर्पवशगं कामायत्तं पश्य । अतोऽत्र मानं मा कुरु ।

विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः ॥ ८६ ॥ (ह, ओ)

क्रमेण यथा—

"तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः।
हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः॥" (क) †

"सन्ततमुसलासङ्गाद् बहुतरगृहकर्मघटनया नृपते ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥" (ख)+

---

गुणेन सह विरोधरूप एवेति पूर्वगणनाप्रविष्टत्वान्नोक्तः । एवमुत्तरद्वयेऽपि । द्रव्यं त्वेकव्यक्तिकं बोध्यम् ।

**(वि, क)** तत्र जातेश्चतुर्भिश्च सह विरोधमेकश्लोके एव दर्शयति—**तव विरह** इति । तव विरहेऽस्या इति मलयपवनादौ सर्वत्रान्वयः । अत्र दवदहनत्वमलयपवनत्वजात्योर्विरोधः । न चात्र रूपकम्, दाहकत्वशीतलत्वधर्मव्याप्ययोर्जात्योर्विरोधस्यैव पुरःस्फूर्त्तिकत्वात् । शशिरुचोऽपीत्यत्र शशिरुचित्वजातेश्च सोष्मत्वगुणविरोधः । हृदयमित्यत्रालिरुतत्वजातेर्भेदेन क्रियया विरोधः । नलिनीदलमपीत्यत्र नलिनीदलत्वजातेर्निदाघरविणा द्रव्येण सह तादात्म्येन विरोधः । अत्रापि विरुद्धधर्मव्याप्यत्वाद् विरोधस्यैव पुरःस्फूर्त्तिकत्वादपिकारेण विरोधबोधनाच्च न रूपकम् । रवेरुष्मत्वव्याप्यता तु तादात्म्येन । रवीणां द्वादशत्वेऽपि नात्र जातिविरोधः, निदाघीयविशेषणादृतुषट्कप्रवर्त्तकरवेरेवात्र रविपदार्थत्वात् तस्यैकत्वादेव ।

**(वि, ख)** गुणस्य गुणविरोधमाह—**सन्ततेति** । हे नृप ! ते पूर्वं सन्ततेत्यादिना कठिना द्विजपत्नीनां करा भवन्ति सरोजसुकुमाराः । त्वया सम्पद्दानेन दासीभिरेव कर्मकरणात् करसौकुमार्यम् । अत्र कठिनत्वसौकुमार्यगुणयोर्विरोधः ।

---

विरोध एवेति गुणविरुद्धस्य त्रैविध्यमेव । एवमेव क्रियाविरुद्धस्य चैक्यविध्यमेवेति दशाकृतिर्दशप्रकारो विरोधः ।

---

† तव विरहे मलयमरुदपि मलयपवनोऽपि दवानलः दवाग्निः, दाहजनकत्वात् । तथा शशिरुचोऽपि चन्द्रकिरणा अपि सोष्माणः उष्णाः, तापकत्वात् । अलिरुतमपि हृदयं भिन्ते विदारयति उद्दीपकत्वात् । नलिनीदलमपि निदाघरविः ग्रीष्मकालीनः सूर्यः, दाहकत्वात् । अत्र विरहातिशयाद् विरोधस्याभासतैव ।

+ हे नृपते ! भवति सति त्वयि विद्यमाने सन्ततं मुसलासङ्गात् तण्डुलाद्यर्थं मुसलधारणात् तथा बहुतरं यत् कर्म तस्य घटनायाः सम्पादनेन (काठिन्यहेतुद्वयं) कठिना द्विजपत्नीनां कराः सरोजवत् सुकुमारा जाता इत्यर्थः । कालभेदेन कार्यनिवृत्त्या विरोधः परिहृतः ।

**गुणौ क्रिये वा यत्स्यातां विरुद्धे हेतुकार्ययोः ।**
**यदारब्धस्य वैफल्य[1]मनर्थस्य च सम्भवः ।**
**विरूपयोः सङ्घटना या च तद्विषमं मतम् ॥ ६१ ॥ ( ट, इ )**

**क्रमेण यथा—**

"सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु-
यशस्त्रिलोकाभरणं प्रसूते ॥"

**अत्र कारणरूपासिलतायाः "कारणगुणा हि कार्यगुणमारभन्ते" इति स्थिते विरुद्धशुक्लयशस उत्पत्तिः । ( ठ )**

---

सा स्त्रीति कातर्यस्य स्त्रीधर्मत्वात् । गमनाशक्तिरपि दौर्बल्यात् । विरोधालङ्कारबोधकतामस्या आह—**अस्या** इति । विरोधालङ्कारो भिन्नैकदेशता नियमेनाऽनुक्तत्वादुत्सर्गः । अस्याश्च भिन्नदेशतानियमेनोक्तत्वेनाऽपवादत्वादेतद्विषयपरिहारेणैकदेशस्थयोरेव विरोध इत्यर्थः ।

( **वि, ट** ) चतुर्विधं विषमालङ्कारमाह—**गुणौ क्रिये** वेति । हेतुकार्ययोर्गुणौ क्रिये वा यद् यदि विरुद्धे परस्परविपरीते स्यातां तदा एतौ द्वे च विषमे । तृतीयमाह—**यदारब्धस्ये**ति । वैफल्यमुद्देश्यफलाभावः; प्रत्युताऽनर्थस्योत्पत्तिरित्यर्थः । चतुर्थं विषममाह—**विरूपयो**रिति । विरूपत्वेन परस्परसम्बन्धायोग्यत्वेनोक्तयोर्यः सम्बन्धः प्रतीयत इत्यर्थः । एतच्च कद्वयप्रयोगे बोध्यम् ।

( **वि, ठ** ) तत्र कार्यकारणयोर्गुणविरोधमाह—**सद्य** इति । तमालवन्नीला कृपाणलेखा लेखाकारः कृपाणो खड्गो रणे रणे यस्य राज्ञः करस्पर्शमवाप्य शरदिन्दुवत्पाण्डु यशः सद्यः प्रसूते इदं चित्रम् । त्रिलोकेति यशोविशेषणम् । अत्र कारणासिलताकार्ययशसो नीलत्वपाण्डुत्वे विपरीते इत्याह—**अत्रे**ति । गुणस्य विरुद्धा इत्यन्वयः । **शुक्लयशस उत्पत्ति**रिति । उत्पद्यमानयशः शुक्लमिति पर्यवसि-

---

( **लो, इ** ) विरूपयोरन्यरूपयोः स घटनायोगः ।

---

वचनत्वं युज्यते । सा स्त्री वयं कातराः, तदप्राप्तेः । अथ च स्त्रीषु एव कातरत्वमुचितम् । सा पीनं चोन्नतिमत् च स्तनयुगलं बिभर्त्ति वयं तु सखेदाः, तदप्राप्तेः । अथ च यस्यैव भारो गुरुर्भवति स एव सखेदो दृश्यते । सा गुरुणा महता जघनस्थलेन नितम्बभरेण आक्रान्ता वयं गन्तुं न शक्ताः । अथ च य एव गुरुणा भारेणाक्रान्तो भवति स एव गन्तुं न शक्नोति । अन्यजनाश्रितैः अन्यजनावलम्बिभिर्दोषैर्वयमपटवः असमर्था जाताः स्म इत्यद्भुतम् ।

1 'वैकल्यम्' ( क. पु. )

"आनन्दममन्दामिमं कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥"

अत्रानन्दजनकस्त्रीरूपकारणात्तापजनकविरहोत्पत्तिः । ( ड )

"अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥" ( ढ )

अत्र केवलं काङ्क्षितधनलाभो नाभूत् प्रत्युत क्षारवारिभिर्वदनपूरणम् ।

"क्व वनं तरुवल्कभूषणं
नृपलक्ष्मीः क्व महेन्द्रवन्दिता ।
नियतं प्रतिकूलवर्त्तिनो
बत धातुश्चरितं सुदुःसहम् ॥"

अत्र वनराजिश्रियोर्विरूपयोः सङ्घटना । इदं मम । ( ण ) *

---

तार्थः । ननु विरुद्धत्वे किं वैचित्र्यमित्यत आह—**कारणगुणा** इति । स्थितेरिति नियमादित्यर्थः । तथा च विरुद्धयोर्विरोधप्रदर्शनं वैचित्र्यमित्यर्थः । यद्यप्ययं नियमः समवायिकारणकार्ययोरेव तथापि तद्दर्शनात्कविना अन्यत्रापि तन्नियममध्यास्येदं वर्णितम् ।

( वि, ड ) कारणकार्ययोर्विरोधमाह—**आनन्दममन्दमि**ति । कुवलयेत्यादिकं सम्बोधनम् । **अत्रे**ति । तापजनकविरहोत्पत्तिः स्त्रोत्पाद्यविरहजन्यतापक्रियोत्पत्तिरिति पर्यवसितार्थः । तथा च स्त्रीतज्जन्यविरहयोः कारणकार्ययोरानन्ददानतापक्रिये च विरुद्धे इत्यर्थः । एतज्जन्यस्य तत्क्रियासमानक्रियाया एव वैचित्र्यं सम्भाव्य वर्णितम् ।

( वि, ढ ) आरब्धकार्यवैफल्यानर्थोत्पत्तिद्वयमुदाहरति—**अयमि**ति । अयमम्भोधिः रत्नाकर इति कृत्वा मया धनाशया असेवि सेवितः । धनं दूरेऽस्तु प्राप्त्यविषयोऽस्तु । क्षारवारीभिस्तु वदनमपूरि इत्यर्थः ।

(वि, ण) विरूपयोर्घटनामाह—**क्व वनमि**ति । रामं शोचन्त्याः कौशल्याया उक्तिरियम् । तरुवल्कलमेव भूषणं यत्र तादृशं वनं क्व नृपेत्यादिकं क्व । परस्परासम्बन्धायोग्यतया क्वद्वयेनोक्तयोरनयोरेकत्र रामे घटना । एवं 'क्व सूर्यप्रभव' इत्यादावपि बोध्यम् ।

---

(लो, ई) तदिति । विषमालङ्काराणामेषां सूत्रोक्तप्रकाराणामुपलक्षणतया सम्ब-

---

* तरोः वल्कं वल्कलं भूषणं यस्मिन् तादृशं वनं क्व ? महेन्द्रेण नन्दिता इन्द्रेणापि पूजिता नृपलक्ष्मीः क्व ? अनयोरत्यन्तवैषम्यादेकत्र सम्भवो न युक्तः । बत खेदे । प्रतिकूलवर्त्तिनो धातुर्विधेश्चेष्टितं सुदुःसहम् । विधातरि प्रतिकूले सर्वं सम्भवति ।

यथा वा—

> "विपुलेन सागरशयस्य कुक्षिणा
> भुवनानि यस्य पपिरे युगक्षये।
> मदविभ्रमासकलया पपे पुनः
> स पुरस्त्रियैकतमयैकया दृशा॥" ( त, ई )

**समं स्यादानुरूप्येण श्लाघा या योग्यवस्तुनोः॥ ९२॥** (थ)

---

**(वि, त)** क्द्वयाभावेऽप्याह—**विपुलेने**ति। सागरशयस्य विष्णोर्विपुलेन कुक्षिणा उदरेण युगक्षयकाले भुवनानि पपिरे। स पुनर्विष्णुः श्रीकृष्णः एकतमया पुरस्त्रिया कर्त्र्या मदविभ्रमेणाऽसकलया एकदेशरूपया एकया दृशा पपे इत्यर्थः। अत्र भुवनपानसमर्थकुक्षिमत एकस्त्रीकटाक्षेण पेयत्वयोगो विरुद्ध इत्यर्थः। काव्यप्रकाशकृन्मते तु क्द्वयेन विनैवात्र विरुद्धतयाऽप्रतीतेः केनाप्यनुक्ततया नेदं चतुर्थविषमालङ्कारोदाहरणम्। अतः कारणकार्ययोः क्रियाविरोधरूपद्वितीयविषमोदाहरणतयैवायं श्लोकस्तेन दर्शितः। कुक्षिस्तु अवयवः कारणम्। कुक्षिमानवयवी श्रीकृष्णस्तु कार्यम्। तयोर्भुवनपानस्त्रीकटाक्षपेयत्वक्रिये विरुद्धे। *

**( वि, थ )** समसंज्ञकमलङ्कारमाह—**सममि**ति। योग्ययोः परस्परोचितयोः वस्तुनोरानुरूप्येणौचित्येन या श्लाघा सा समनामालङ्कार इत्यर्थः।

---

न्धिनोरननुरूपतया लक्ष्यानुसारेणान्येऽपि प्रकारा उदाहर्तव्या इत्यर्थः। तत्र दिङ्मात्रमुदाहृत्य दर्शयति—**विपुलेने**ति। असकलया असमग्रपातिन्या।

**(लो, उ)** अत्रावयवावयविनोर्वैषम्यम्। क्वचित् सजातीययोः—

> "असितभेकसुराशितमप्यभू-
> न्न पुनरेष पुनर्विषदं विषम्।
> अपि निपीय सुरैर्जनितक्षयं
> स्वयमुदेति पुनर्नवमार्णवम्॥"

अत्र व्यतिरेकयोगेऽपि द्वयोः सङ्करो, नतु विषमालङ्काराभावः।

---

* 'जगत्पानकर्त्तुरवयवस्य कुक्षिणः असकलस्त्रीदृष्टिपीतेनाऽवयविना श्रीकृष्णेन अवयवावयविभावः सम्बन्धोऽनुपपद्यमान इति प्रथमप्रकारोऽत्र विषम' इति (प्रदीपः) काव्यप्रकाशे प्रथमप्रकारविषमस्तु विरुद्धयोः संघटनम्। यस्य कुक्षिरेव सकलभुवनपानसमर्था तस्य सम्पूर्णस्यावयविनः स्त्रिया एकदृशा पानं चापरं विषमम् (उद्योतः) स्वमतानुसारेणैव विज्ञप्रियायां काव्यप्रकाशस्योद्धारः कृतः। परं काव्यप्रकाशे तादृगर्थो न विद्यते।

यथा—

"शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥" ( द, ऊ )

**विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् ॥ ६३ ॥** *

यथा—

"प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥" ( ध, ऋ )

**आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते ॥ ६४ ॥** (ॠ)

---

**( वि, द ) शशिनमि**त्यादि । अजे इन्दुमत्या स्वयंवृते पौराणां श्लाघोक्तिरियम् । समगुणयोर्योगेन प्रीतिर्येषां तादृशाः पौरा इत्येकवाक्यमेकस्य जनस्य प्राथमिकं वाक्यं विवव्रुः । तदर्थकशब्दान्तरैर्विवृतवन्त इत्यर्थः । शशिनमित्याद्येकस्य वाक्यम् । शशिजलनिधित्वेन अजः । कौमुदीजह्नुकन्यात्वेनेन्दुमती । पृथक्सिद्धस्यैव प्राप्तिः । कौमुदी तु शशिनो न पृथक् सिद्धा, अतः पृथक्सिद्धसम्पादनाय मेघमुक्तत्वविशेषणम् । मेघेन पृथक्कृतायास्तदपगमे प्राप्तिरित्यर्थः ।

**( वि, ध ) प्रणमती**ति । प्रणामो हि नम्रीभावः स उन्नतिविपरीतः । प्राणान् विमुञ्चति, युद्धे इति शेषः । यद्यपि प्राणविमोको न जीवितस्य हेतुस्तथापि प्राणविमोकक्रियापरमत्र विमुञ्चतिपदम् । दुःखीयति दुःखमिच्छति, दुःखजनकक्रियाप्रवृत्तत्वात् ।

---

**( लो, ऊ )** विषमाद् वैपरीत्येन समस्य लक्षणम् । वस्तुनोर्दर्शनयियोः । जह्नुकन्या गङ्गा ।

**( लो, ऋ )** इष्टफलस्य प्रकृतोदाहरणादौ उन्नत्यादेः प्राप्त्यर्थं तद्विरुद्धस्य प्रणामादेः करणं विचित्रालङ्कारबीजफलम् ।

**( लो, ॠ )** आधिक्यं क्वचिदाश्रयाश्रयिणोर्महत्त्वमिति द्विविधोऽधिकाख्यालङ्कारः इत्यर्थः। यत् पुनः कैश्चिदुक्तं वस्तुतः तनुत्वेऽपि यदेकस्याधिक्यं तदधिकमुच्यते इति तन्न ।

---

* "यस्य हेतोर्यत् फलं ( कार्यं ) तस्य ( हेतोः ) यदा तत् ( कार्यं ) विपरीतं भवति तदा तद् विपरीतफलनिष्पत्त्यर्थं कस्यचित् प्रयत्नो विचित्रालङ्कारः ।" ( अलं स० )

विषमे विरूपस्य कार्यस्य स्वयमेवोत्पत्तिः । इह च तन्निष्पत्तये प्रयत्न इत्यनयोर्भेदः । "विषमे पुरुषकृतेरनपेक्षणात् । कार्यकारणगुणवैलक्षण्येण तद् भेदनिरूपणाच्च" । ( रस० । )

आश्रयाधिक्ये यथा—

"किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र।
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि॥" (न)

आश्रिताधिक्ये यथा—

"युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकाशमासत।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भवा मुदः॥ (प)

**अन्योन्यमुभयोरेकक्रियायाः करणं मिथः॥ ६५॥ क॰**

यथा—

"त्वया सा शोभते तन्वी तया त्वमपि शोभसे।
रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी॥" (फ)

**यदाधेयमनाधारमेकञ्चानेकगोचरम्।**

---

(वि, न) अधिकसंज्ञकमलङ्कारमाह—**आश्रयेति**। आधिक्यम् अधिकतया वर्णनमित्यर्थः। **किमधिकमिति**। भुवनानि कुक्षौ निक्षिप्य हरिर्यत्राज्ञात एव शेते। जलनिधेः किञ्चिदवच्छेदेनैव शयनाज्जलनिधिद्रष्टृभिरज्ञात एव शेत इत्यर्थः। अस्य जलनिधेर्महिमानं किमधिकं वदाम इत्यर्थः। अत्र कुक्षिनिक्षिप्तभुवनस्यापि हरेस्तु किञ्चिदवच्छेदेनैव शयनादाश्रयस्य जलनिधेराधिक्यं वर्णितम्।

(वि, प) आश्रिताधिक्यवर्णनमाह—**युगान्तेति**। नारदागमने श्रीकृष्णस्य हर्षाधिक्यवर्णनमिदम्। युगान्तकाले प्रतिसंहृताः स्वकुक्षौ प्रवेशिता आत्मानः प्राणिनो येन तादृशस्य कैटभद्विषो विष्णोर्यस्यां तनौ जगन्ति सविकाशमयन्त्रणमासत तत्र तस्यां तनौ तपोधनस्य नारदस्याभ्यागमसम्भवा मुदो न ममुः न स्थातुमवकाशं लेभिरे इत्यर्थः। तनुभेदेऽपि विष्णुतनुत्वेनैकत्वाध्यासादेकत्वं बोध्यम्। अत्राश्रितानां मुदामधिकत्वम्।

(वि, फ) अन्योन्यसंज्ञकमलङ्कारमाह—**अन्योन्यमिति**। एका क्रिया एकजातीया क्रिया। उभयोर्मिथः करणमित्यर्थः। **त्वया सेति**। परार्द्धे दृष्टान्तालङ्कारेऽपि।

---

"द्यौरत्र क्वचिदाश्रिता प्रविततं पातालमत्र क्वचित्
क्वाप्यत्रैव धराधराधरजला धारावलिर्वर्त्तते।
स्फीतस्फीतमहो नभः कियदिदं यस्येत्थमेवंविधै-
र्दूरे पूरणमस्तु शून्यमिति यन्नामाऽपि नास्तं गतम्॥"

इत्यादावव्याप्तेः। अत्र हि नभसो न तनुत्वम्। अस्य चालङ्कारस्याश्रयाश्रयिरूपविलक्षणाश्रयतयाऽपवादत्वेन विषमालङ्कारबाधकता।

किञ्चित्प्रकुर्वतः कार्यमशक्यस्येतरस्य वा।
कार्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः ॥ ६६ ॥ ( ब )

क्रमेण यथा—

"दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्।
रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥" ( भ ) *

"कानने सरिदुद्देशे गिरीणामपि कन्दरे।
पश्यन्त्यन्तकसङ्काशं त्वामेकं रिपवः पुरा ॥" ( म ) +

"गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥" (य) ×

व्याघातः स तु केनाऽपि वस्तु येन यथाकृतम्।

---

(वि, ब) त्रिविधं विशेषालङ्कारमाह—**यदाधेयमि**ति। यदिति त्रिष्वन्वितम्। अनाधारमाधारं विना स्थितं वर्णितमित्यर्थः। अनेकगोचरमित्यत्र एकदेति शेषः, क्रमिकस्थितौ तु पर्यायालङ्कारस्य वक्ष्यमाणत्वात्। किञ्चित्प्रकुर्वतः कर्त्तुर्दैवादितरस्याऽशक्यस्य कार्यस्य करणं वा यदित्यर्थः।

(वि, भ) **दिवमि**ति। दिवमुपयातानामपि येषां कवीनामनल्पगुणगणा गिरः जगन्ति रमयन्ति ते कवयः कथमिह न वन्द्या इत्यर्थः। अत्र कर्त्तृतासम्बन्धेनाधाराणां कवीनामसत्त्वेऽपि तदाधेयानां गिरां स्थितिः।

(वि, म) **कानन** इति। काननादौ पलायिता रिपवस्त्वामेकं तत्रतत्रैवान्तकसंकाशं पश्यन्तीत्यर्थः।

अत्र दर्शनस्य न क्रमविवक्षा।

( वि, य ) **गृहिणी**ति। मृतामिन्दुमतीं शोचतोऽजस्योक्तिरियम्। त्वां हरता करुणाविमुखेन मृत्युना मम किं न हृतं वद। किं किं हृतमित्यत्राह—**गृहिणी**त्यादि। ललिते कामकलाविधौ मिथो रहसि प्रियशिष्येत्यन्वयः। अत्रेन्दुमतीहर्त्तुर्मृत्योर्गृहिण्यादिहरणरूपस्य कार्यस्य दैवात्करणं वर्णितम्।

(वि, र) व्याघातालङ्कारमाह—**व्याघात** इति। केनापि कर्त्रा यद् वस्तु येनो-

---

* दिवं स्वर्गम् उपयातानां गतानामपि येषां कवीनामनल्पा बहुला गुणगणा यासु तादृशा गिरः काव्यरूपा वाण्यः आकल्पं कल्पपर्यन्तं जगन्ति भुवनं रमयन्ति ते कवय इह संसारे कथं न वन्द्याः। कवयस्तावदाधाराः, गिर आधेयाः।

+ अत्रैकस्य युगपदनेकत्र काननादौ स्थितेर्वर्णनादपरो विशेषालङ्कारः।

× अत्र इन्दुमतीहरणरूपमेकं कार्यं कुर्वता मृत्युना तेनैव यत्नेन अशक्यस्य सचिवादिहरणरूपस्य कार्यान्तरस्य करणात् तृतीयो विशेषालङ्कारः।

**तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ॥ ६७ ॥**

यथा—दृशा दग्धं मनसिजमित्यादि । ( र )

**सौकर्येण च कार्यस्य विरुद्धं क्रियते यदि ॥ ६८ ॥**

व्याघात इत्येव । ( ल )

"इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः
समागन्ता कान्ते मृदुरसि न चायाससहना ।
मृदुत्वं मे हेतुः सुभग ! भवता गन्तुमधिकं
न मृद्वी सोढा यद्विरहकृतमायासमसमम् ॥"

अत्र नायकेन नायिकाया मृदुत्वं सहागमनहेतुत्वेनोक्तम् । नायिकया च प्रत्युत सहगमने ततोऽपि सौकर्येण हेतुतयोपन्यस्तम् । ( व, लृ )

---

पायेन यथाकृतं तेनैवोपायेनाऽन्यश्चेत्तदन्यथा कुरुते तदा तदन्यथाकरणं स व्याघात इत्यर्थः ।

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥"

इत्युदाहरणम् । दृशा हरस्य याः कटाक्षरूपया दृशा जीवयन्तीत्यर्थः । नारीकटाक्षेण कामोद्दीपनात् । न केवलं क्रियया जयः, किन्तु रूपेणापीत्याह—**विरूपाक्षस्ये**ति । जेतव्यस्याऽक्षिवैरूप्यम् । जेत्रीणामक्षिषु मनोज्ञत्वरूपं वामत्वमित्येव तत्रापि जय इति भावः । अत्र येन दृगुपायेन दाहस्तेनैव दृगुपायेन जीवनरूपं दाहान्यथाकरणं स्त्रीभिः ।

**(वि, ल)** अन्यविधं व्याघातालङ्कारमाह—**सौकर्येण चे**ति । चकारो व्याघातान्तरसमुच्चये । अन्योक्तकार्यस्य विरुद्धं कार्यमन्येन यदि तदुक्तकारणस्य सौकर्येण विशिष्टं क्रियते प्रतिपाद्यते इत्यर्थः। चकारेण व्याघातमनुवर्त्तयति—**व्याघात इत्येवे**ति ।

**(वि, व) इहैवे**ति । विदेशं जिगमिषुणा पत्या सह जिगमिषुं पत्नीं प्रति नायकस्योक्तिः पूर्वार्द्धम् । त्वमिहैव तिष्ठ न मया सह गच्छ । अहं कतिपयैरहोभिर्द्रुतं समागन्ता समागमिष्यामि, भविष्यदर्थे तृन् । यतो मृदुरसि । नच गमनायाससहनाऽसीत्यर्थः । पत्न्या उक्तिः परार्द्धं—हे सुभग ! भवता सह गन्तुं सहगमने एव मम मृदुत्वं हेतुः । यद् यस्मान् मृद्वी असमं विरहायासं न सोढा न सहिष्यते । अत्रापि तृन् । अत्र नायकोक्तकार्यस्य नायिकाया विरुद्धप्रतिपादनं ग्राहयति—**अत्रे**ति । **सहा-**

---

**(लो, लृ )** इह तु किञ्चिन्निष्पादयितुं सम्भाव्यमानस्य कारणस्य तद्विरुद्धनिष्पादकत्वेन समर्थनम् ।

इहैव त्वमित्युदाहरणे नहि मृदुत्वस्य नायकसहगमनस्य कार्यत्वं प्रतीयते किन्तु सहगमनस्य निर्वाहः । विषमालङ्कारे तु 'अयं रत्नाकर' इत्यादौ धनलाभरूपकार्यानु-

**परंपरं प्रति यदा पूर्वपूर्वस्य हेतुता**

**तदा कारणमाला स्यात्॥ ९९ ॥**

यथा— (ए)

"श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात्।

लोकानुरागो विनयान्न किं लोकानुरागतः॥" *

**तन्मालादीपकं पुनः।**

**धर्मिणामेकधर्मेण सम्बन्धो यद्यथोत्तरम्॥ १०० ॥** (ऐ) +

यथा—

"त्वयि संगरसंप्राप्ते धनुषाऽऽसादिताः शराः।

शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः॥" ×

अत्रासादनक्रियाधर्मः। (श)

**पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम्।**

---

**गमनहेतुत्वेने**ति। स्थितिहेतुः सहागमनहेतुत्वेनेत्यर्थः। **सौकर्ये**णेति। सहगमनमेव स्थितिहेतुत्वेनोक्तस्य मृदुत्वस्य सुकरं, स्थितिस्तु मृदुत्वस्य दुष्करेत्यर्थः। स्थितौ मृदुत्वेन विरहासहत्वजननात्।

**(वि, श)** कारणमालालङ्कारमाह—**परंपर**मिति। सोदाहरणं स्पष्टम्। मालादीपकालङ्कारमाह—**तन्माले**ति। इदमपि सोदाहरणं स्पष्टम्।

एकावल्यलङ्कारमाह—**पूर्वं पूर्व**मिति। पूर्वत्र पूर्वत्र यद्विशेषणं तस्य तस्य

---

त्पत्तिः, अनर्थस्य चोत्पत्तिरिति भावः। एवं विरोधमूलालङ्कारान् निर्णीय शृङ्खलाबन्धेन विचित्रता अलङ्कारा लक्ष्यन्ते।

**(लो, ए) पर**मिति। कारणमालाख्यमलङ्करणम्।

**(लो, ऐ)** यथोत्तरमुत्तरोत्तरं गुणावहत्वेनेत्यर्थः।

---

* यदा परं परं प्रति पूर्वपूर्वस्य कारणता तदा कारणमाला। कृतधियां, पण्डितानां, श्रुतं शास्त्रम्। अत्र पण्डितसङ्गश्च शास्त्रज्ञानं प्रति कारणम्। विनयं प्रति शास्त्रज्ञानं कारणमित्यादि। 'इह यद्यादौ कारणोक्तिरेव प्रस्तूयते तदा पुनस्तस्य कारणं तस्यापि कारणमिति तत्कस्यचित् कारणं तदपि कस्यचिदिति वा कारणमाला युक्ता।' (रसगङ्गाधरे)

+ गुणावहत्वेन उत्कर्षाय यदि धर्मिणामेकधर्माभिसम्बन्धस्तदा मालादीपकम्। पूर्ववस्तुना यदि उत्तरमुत्तरं वस्तु प्रकृतोत्कर्षायोन्मुखीक्रियते तदा मालादीपकम्।

× अत्र धनुषा अरिशिरः प्रापयता शरा उपक्रियन्ते। शरैरपि भुवं प्रापयद्भिररिशिर उपक्रियते। शिरसापि त्वां प्रापयता भूः उपक्रियते इत्यादि। अत्र पूर्वपूर्वेभ्यः परपरस्योपकारः। एकस्या आसादनक्रियायाः सर्वत्र सम्बन्धाद् दीपकता।

**स्थाप्यतेऽपोह्यते वा चेत्स्यात्तदैकावली द्विधा ॥ १०१ ॥ (ष) ***

**क्रमेणोदाहरणम् ।**

**"सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् ।**
**भृङ्गा यत्र ससंगीताः सङ्गीतं सस्मरोदयम् ॥" +**

**"न तज्जलं यन्न सुचारुपङ्कजं**
**न पङ्कजं तद् यदलीनषट्पदम् ।**
**न षट्पदोसौ न जुगुञ्ज यः कलं**
**न गुञ्जितं तन्न जहार यन्मनः ॥" ( स, ओ ) †**

**क्वचिद् विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितञ्च ।**

**"वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु ।**
**कमलेषु पतन्त्यलयः करोति संगीतमलिषु पदम् ।"**

**एवमपोहनेपि । ( ह )**

---

विशेषणतया यदि परं परं स्थाप्यते, अपोह्यते वा तद्विशेषणाभावप्रतियोगितया निर्दिश्यते वेत्यर्थः । तेन पूर्वं पूर्वं विशेषणं यद्युत्तरोत्तरस्य उत्तरोत्तराभावस्य वा विशेष्यं भवतीत्यर्थः ।

**( वि, स ) सरो विकसिते**ति । अत्र सरोजराजे यानि विकसिताम्भोजादीनि तदेकदेशानामम्भोजादीनां विशेषणानि परंपराणि । अपोहे तु आह— **न तज्जलमि**ति । सुचारुपङ्कजं यत्रेति बहुव्रीहिः । एवमलीनेत्यादावपि। अत्र जलविशेषणीभूतानामभावानां प्रतियोगितया सुचारुपङ्कजत्वादीनि निर्दिष्टानि ।

**( वि, ह )** अनयोः पूर्वपूर्वोक्तविशेषणानां परत्र परत्र विशेषणे विशेष्यतापोहश्च दर्शित इत्याह-**क्वचिद् विशेष्यमपी**ति । **वाप्यो भवन्ती**ति । अत्रापि शरदीति बोध्यम् । **करोती**ति । सङ्गीतं कर्तृ, अलिषु पदं सुसम्बन्धरूपतया व्यवसायं करोतीत्यर्थः । अत्र विमलत्वादौ विशेष्यभूता वाप्यादयः स्फुटत्कमलादौ भेदेन

---

**( लो, ओ )** अम्भोजं सरसो, भृङ्गा अम्भोजस्य; संगीतानि भृङ्गाणां विशेषणत्वेन । न तज्जलमित्यादौ जलस्य सुचारुपङ्कजं निषेधत्वेन निबद्धम् । एवमन्यत्र ।

---

* स्थाप्यते विधीयते, अपोह्यते निषिध्यते ।

+ विकसितानि अम्भोजानि पद्मानि यस्मिन् तत् । भृङ्गैर्भ्रमरैः सङ्गतं युक्तम् । स्मरस्य उदयः, तेन सहितं सस्मरोदयम् ।

† यत् सुचारुपङ्कजं न तद् जलम् । प्रशस्तजलं न । तत्पङ्कजं न यद् अलीना अस्थिराः षट्पदा भ्रमरा यत्र तादृशं न, यः कलं मधुरं न जुगुञ्ज तद् गुञ्जितं न, यन्मनः न जहार । अत्र जले पङ्कजस्य, तत्र षट्पदानां, तत्र गुञ्जितस्य । तत्र मनोहारिताया विशेषणतया निषेधः ।

**उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते ॥ १०२ ॥** ( औ )

यथा—

"राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥" ( क ) †

**यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत् ॥ १०३ ॥** ( ख, अ )

यथा—

"उन्मीलन्ति नखैर्लुनीहि वहति चेलाञ्चलेनावृणु
क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय ।

---

विशेषणानि । **एवमपोहनेपी**ति । यथा—"न ता वाप्यः स्फुटन्ति यासु पद्मानि सम्प्रति । नच पद्मान्यन्यत्र न यत्र चालयोऽपतन् ॥"(?) इत्यादिके तद्बोध्यम् ।

( वि, क ) मारालङ्कारमाह—**उत्तरोत्तर**मिति । **राज्ये सार**मिति । नपुंसकलिङ्गस्य सारपदस्य जहदजहल्लिङ्गद्वयमपीत्यतोत्राजहल्लिङ्गता । तत् किं त्रिभुवनसारा बालाऽऽराधिता भवतेत्यत्र तु जहल्लिङ्गता । **वराङ्गनानङ्गे**ति— अनङ्गसर्वस्वभूता वराङ्गनेत्यर्थः । नन्वत्र राज्ये इत्यादौ यद्यधिकरणसप्तमी तदा राजाद्यपेक्षया सारत्वाऽप्रतीत्या निष्प्रयोजकसारत्वानुपपत्तिः । राज्यवसुधयोः सौधतल्पयोस्तल्पवराङ्गनयोश्च सामान्यविशेषभावाभावेन निर्धारणाऽनुपपत्तिः, पुरुषेषु क्षत्रियः शूर इत्यादिषु सामान्यविशेषभावसत्त्वे एव निर्धारणात् । उच्यते— राज्ये राजत्वविषये यद् यद् वस्तु तेषु वसुधा सारम् । वसुधायां यद् यद् वस्तु तेषु पुरं सारमित्यादिरीत्या यद् यद् वस्तु तेष्वित्यध्याहारेण निर्धारणात् तेषु इत्यत्र निर्धारणसप्तमी । राज्ये इत्यत्र विषयसप्तमी, वसुधायामित्यादिष्वधिकरणसप्तमी ।

( वि, ख ) यथासंख्यालङ्कारमाह-**यथासंख्य**मिति । प्रथमोद्दिष्टानां यः प्रथमद्वितीयादिक्रमस्तेन क्रमेण तदान्वितानामनु पश्चाद् उद्देश इत्यर्थः ।

( वि, ग ) **उन्मीलन्ती**ति । नायके नायिकाविरहकालीन तत्सखीनां साङ्केतिकव्यवहारान् कथयन्त्याः कस्याश्चिदुक्तिरियम् । हे सुभग ! त्वदीयविरहे तस्याः सखीनां तत्तत्क्रियया वञ्जुलादित्रये सङ्केतिता मिथः इत्थं व्यवहारा इत्यर्थः । कीदृशा

---

( लो औ ) सारो नामालङ्कारः ।

( लो, अ ) सम्प्रति वाक्यन्यायाश्रिता अलङ्कारा उच्यन्ते । यथासंख्यनामाऽलङ्करणम् । अनूद्देशः अनु पश्चात् निर्देशः । उद्दिष्टानामुन्मीलनादिक्रियाणां वञ्जुलादिभिः क्रमेण सम्बन्धः ।

---

† वेदेप्ययमलङ्कारो दृश्यते यथा—

"महतः परमव्यक्तमव्यक्तात्पुरुषः परः
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥"

इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठेषु सांकेतिक-
व्याहाराः सुभग ! त्वदीयविरहे तस्याः सखीनां मिथः॥''(ग)

**क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् ।**
**भवति क्रियते वा चेत्तदा पर्याय इष्यते ॥ १०४ ॥ ( घ )**

क्रमेण यथा—

''स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः ॥'' ( ङ, आ )

''विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः ।
वृककाकशिवास्तत्र धावन्त्यरिपुरे तव ॥'' ( च, इ )

---

व्यवहारा इत्यत्राह । **उन्मीलन्ती**ति । विकशन्तीत्यर्थः । इयमेकस्याः सख्याः प्रथमोक्तवञ्जुलपुष्पकर्तृके उन्मीलने सङ्केतिता प्राथमिकी उक्तिः । अपरसख्याश्च नखैरित्यादिका प्राथमिकी प्रत्युक्तिः । वहतीति द्वितीयोक्तदक्षिणानिलकर्तृके वहने सङ्केतिता इयं सख्या द्वितीयोक्तिः । अपरसख्याश्च चेलाञ्चलेनेत्यादि द्वितीया प्रत्युक्तिः । क्रीडेत्यादिना तृतीयोक्तकुहूकण्ठकर्तृके क्रीडाकाननप्रवेशे संकेतिता सख्यास्तृतीयोक्तिः, वलयेत्यादिका अपरसख्या तृतीयप्रत्युक्तिः । इत्थं प्रथमादिक्रमेणोक्तानां पश्चात् तत्क्रमेणैव तदन्वितानामुद्देशः ।

**(वि, घ)** पर्यायालङ्कारमाह—**क्वचिदेकमि**ति । क्वचित् श्लोके एकमनेकस्मिन् क्रमात् भवेत् कारणक्रमात् क्रियते वा चेत् तथा अनेकमेकगमेकगामि वा क्रमात् भवति क्रियते वा चेत् तदा पर्याय इष्यते इत्यर्थः ।

**(वि, ङ)** तत्रैकस्या अनेकत्र भवनमाह—**स्थिता** इति । तपस्यन्त्याः पार्वत्याः अङ्गेषु नवमेघजलपतनक्रमवर्णनमिदम् । प्रथमोदबिन्दवः क्रमेण तस्या नाभिं प्रपेदिरे । तत्क्रममाह—**स्थिता** इति । पक्ष्मणां निबिडत्वेन तत्र क्षणं स्थिताः ततस्ते ताडिताधराः । अधरस्य कोमलत्वेन जलबिन्दुभिरपि ताडनम् । पयोधरोत्सेधः कृद्विहितभावत्वेनोच्छूनौ पयोधरौ । तयोः कठिनत्वेन तत्र निपातेन ततः चूर्णिताः । तत्र वलीषु स्खलिताः तासामुच्चनीचत्वान्नाभेर्गभीरत्वेन ततो नान्यत्र गमनम् । अत्र स्वयंभवनम् ।

**(वि, च)** अनेकेषामेकत्र भवनं त्वाह—**विचरन्ती**ति । यत्र तवारिपुरे इत्यन्वयः । अत्र विलासिनी वृकादीमेकत्रारिपुरे भवनम् ।

---

**(लो, आ)** स्थिताः क्षणमित्यादावेके प्रथमोदबिन्दवोऽनेकेषु पक्ष्मादिषु क्रमेणाभवन् ।

"विसृष्टरागादधरान्निवर्तितः
स्तनाङ्गरागादरुणाच्च कन्दुकात्।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः ॥" (छ, इ) *

"ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः।
निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः ॥" (ज, ई) +

एषु क्वचिदाधारः संहतरूपोऽसंहतरूपः। क्वचिदाधेयमपि। (उ)

यथा—

"स्थिताः क्षण"मित्यत्र उदबिन्दवः पक्ष्मादावसंहतरूपे आधारे क्रमेणा-

---

(वि, छ) एकस्यानेकत्र परेण क्रियमाणत्वमाह—**विसृष्टेति**। पार्वत्यास्तपस्यारम्भवर्णनमिदम्। तया करोऽक्षसूत्रे प्रणयीकृतः, व्यापृतः। कुशाङ्कुरेत्यादि विशिष्टश्च कृत इत्यर्थः। तथा चात्र विधेयद्वयम्। चार्थस्तु गम्यः। कीदृशः—अधरान्निवर्तितः। यतो विसृष्टरागाद् अधरे रागदानार्थमेव प्रागधरे करदानाद् कन्दुकक्रीडाभावाच्च ततो निवर्तनम्। स्तनाङ्गेत्यादिविशेषणं च स्वरूपकथनमात्रम्। स्तनेऽङ्गरागोपीदानीं च न दीयते इत्येतत्सूचनार्थं वा। अत्र तयोः क्रियमाणत्वम्।

(वि, ज) अनेकस्यैकत्र क्रियमाणत्वमाह—**ययोरिति**। अत्र हाराश्रुबिन्दूनामनेकेषामेकत्र स्तने अरिवधूभिः।

(वि, झ) एष्वाधाराऽऽधेयानां संहतत्वासंहतत्वे सम्भवतस्तद् भेदाभेदो न विवक्षितः इत्यभिप्रायेण तद्दर्शयति—**एष्विति**। संहतरूपो मिलितानेकरूपोऽसंहतरूपोऽमिलितप्रत्येकरूपः। क्वचित् क्वचिदाधेयस्यापि एवं द्वैरूप्यमित्याह—**क्वचिदाधेयमपीति**। अत्राधारस्यासंहतत्वं दर्शयति—**यथा स्थिताः क्षणमित्यत्रेति**। अत्राधेयानामुदबिन्दूनां तु संहतत्वरूपत्वं नात्र विशेषकम्। येषामनेकत्वघटितोऽयमलङ्कारस्तेषामेव संहतत्वासंहतत्वयोर्विशेषकत्वाद् बिन्दूनां चनेकाश्रयेषु एकस्यैव

---

एवं विलासिन्यो वृक्षादयश्चानेकविधा अरिपुरे।

(लो, इ) विसृष्टेत्यादावेकः करोऽधरादौ।

(लो, ई) ययोरित्यादौ हारोऽश्रुबिन्दवश्च पयोधरे कृताः।

(लो, उ) संहतरूपो मिलितस्वरूपः। तद्विपरीत एकाकीभूतः।

---

* विसृष्टः रागः लाक्षादिरूपः यस्य तस्मात्। स्तनयोर्निहितः अङ्गरागोऽनुलेपनादिः तस्मात्। कुशाङ्कुराणामादानेन परिक्षता अङ्गुलयो यस्य तादृशः।

+ तव अरिवधूजनैः शत्रुस्त्रीभिः ययोः स्तनयोः तारः शुद्धमुक्ताघटितः 'मुक्ताशुद्धौ तु तारः स्यात्' इत्यमरः। हारः आरोपितः तयोः स्तनयोः स्थूला अश्रुबिन्दवः निधीयन्ते स्थाप्यन्ते।

ऽभवन्। "विचरन्ति" इत्यत्राधेयभूता वृकादयः संहतरूपारिपुरे क्रमेणाभवन्। एवमन्यत्र। ( ऋ )

अत्र चैकस्यानेकत्र क्रमेणैव वृत्तेविशेषालङ्काराद्भेदः। विनिमयाभावात् परिवृत्तेः। ( ञ )

**परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत्॥ १०५॥" ( ट ) ***

क्रमेणोदाहरणम्—

"दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम।
मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः॥" ( ठ ) +

अत्र प्रथमेऽर्धे समेन, द्वितीये न्यूनेन।

"तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना।
येन जर्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः॥ ( ड, ) ×

---

घटितत्वात्। आधाराणां संहतत्वं यथा "स्वयंवरे सा मिलितेषु राजसु क्रमेण चक्षुर्निदधे पतिंवरा" इति। आधेयानामसंहतत्वं तु।

"पूर्वं पूर्वं यदा त्यक्षीन्नृपकन्या पतिंवरा।
परः परस्तदा तस्यां विशेषादाकुलो नृपः॥"

इत्यत्र बोध्यम्। एकत्राधारेऽनेकेषामाधेयानां संहतत्वं दर्शयति—**विचरन्ती**ति। वृकादयाः संहतरूपा इति बहुवचनेन मिलनबोधनात् क्रमस्तु विलासिनीचरणापेक्षया। **एवमन्यत्रे**ति। ययोरारोपित इत्यत्रापि अश्रुबिन्दवोऽनेकसंहतरूपाः।

**( वि, ञ )** ननु क्वचिदेकमनेकस्मिन्नित्युक्तरूपस्य पर्यायस्यैकं चानेकगोचरामित्युक्तरूपाद् विशेषालङ्कारात् को विशेष इत्यत आह—**अत्र चे**ति। क्रमयुगपद्वृत्तिभ्यां द्वयोर्भेद इत्यर्थः। वक्ष्यमाणपरिवृत्त्यलङ्कारतो विशेषमाह—**विनिमयाभावाच्चे**ति। परस्परधर्मस्य परस्परेण ग्रहणरूपो विनिमयः परिवृत्तावेव। अत्र त्वनेकाश्रयगतमेवैकं, नतु तादृशाश्रयधर्मसामान्येन ग्रहणमित्यर्थः।

**( वि, ट )** परिवृत्त्यलङ्कारमाह—**परिवृत्ति**रिति। समाभ्यां न्यूनाधिकाभ्यां च विनिमय इत्यर्थः। न्यूनाधिकविनिमयश्च न्यूनं दत्त्वाऽधिकग्रहणमधिकं दत्त्वा न्यूनग्रहणमिति द्विधा।

**( वि, ठ )** तत्र समाभ्यामधिकं दत्त्वा न्यूनग्रहणाच्च विनिमये एकमुदाहरणमाह—**दत्त्वा कटाक्षमि**ति। स्पष्टम्।

**( वि, ड )** न्यूनं दत्त्वा अधिकग्रहणमाह—**तस्य चे**ति। रामस्योक्तिरियम्। प्रवयसोऽतिवृद्धस्य।

---

* किंचिद् दत्त्वा कस्यचिदादानं विनिमयः।
+ अत्र मदनज्वरस्य पीडाकरत्वान्न्यूनत्वम्।
× प्रवयसः वृद्धस्य, स्वर्गिणः स्वर्गं गतस्य तस्य जटायुषः अधुना किमिव

अत्राधिक्येन—

प्रश्नादप्रश्नतो वापि कथिताद् वस्तुनो भवेत् ।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥
परिसंख्या ॥ १०६ ॥ (ढ) *

क्रमेणोदाहरणम्—

'किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः[1] सदसद्विवेकम् ॥"

---

शोच्यते । नैव किमपि शोचनीयम् । येन जर्जरस्य जराजीर्णस्य कलेवरस्य शरीरस्य व्ययाद् इन्दुकिरणोज्ज्वलं चन्द्रकिरणवत् शुभ्रं यशः क्रीतम् । अत्र जर्जरस्य शरीरस्य दानेन उज्ज्वलस्य यशसः क्रयः । अतोत्र आधिक्यम् ।

**(वि, ढ)** चतुर्विधं परिसंख्यालङ्कारमाह—**प्रश्नादप्रश्नतो वापी**ति । प्रश्न-वशात् तदभावाद्वा कथितं यद् यद् प्रष्टव्यस्य विशेषणस्य विशेष्यभूतं वस्तु परेण कथितात् तस्माद् हेतोः कथितसदृशस्यान्यस्य प्रष्टव्याविशेषणान्वयव्यवच्छेदः शाब्द आर्थो वा प्रतीयते चेत्तदा स व्यवच्छेदः परिसंख्यालङ्कार इत्यर्थः ।

**(वि, ण)** अत्र प्रश्नपूर्वकथिताच्छाब्दं व्यवच्छेदमाहुः—**किं भूषणमि**ति । अत्र लोके किं सुदृढं भूषणमिति प्रश्नः, यश इत्युत्तरम् । **न रत्नमि**ति । उपादेयत्वेन यशःसदृशस्यान्यस्य रत्नस्य प्रष्टव्यविशेषणभूतभूषणत्वान्वयव्यवच्छेदः । एवं सर्वत्र बोध्यम् । आर्यैर्वशिष्टादिभिश्चरितमाचरितं किं वस्तु कार्यमिति प्रश्नः । सुकृतमित्यु-

---

* यदि कथिताद् वस्तुनः तादृगन्यस्य स्वतुल्यस्य वस्तुनो व्यपोहः व्यवच्छेदः निराकरणं भवति तदा परिसंख्यालङ्कारः । तत्कथनं तु द्विविधम् । प्रश्नपूर्वकमप्रश्नपूर्वकं च । व्यपोहोऽपि द्विविधः—शाब्द आर्थश्च । शाब्दो नञादिशब्देन प्रतिपाद्यः । आर्थः अर्थपर्यालोचनया गम्यः । 'अत्र च नियमपरिसंख्ययोर्वाक्यवित् प्रसिद्धं लक्षणं नादरणीयमिति ख्यापनाय नियमनं परिसंख्येति सामानाधिकरण्येनोक्तिः । अत एव पाक्षिक्यपि प्राप्तिरत्र स्वीक्रियते इति युगपत् सम्भावनं प्रायिकम् । 'कस्यचित् परिवर्जनेन कुत्रचित् संख्यानं वर्णनीयत्वेन गणनं परिसंख्या' (अलं० ९०) । वाक्यवित्प्रसिद्धं लक्षणं तु—

'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते ॥'

1 ०स्तदपरः (घपुस्तके) ।

अत्र व्यवच्छेद्यं रत्नादि शाब्दम् । ( ण )

"किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः ।
को ध्येयो भगवान् विष्णुः किं काम्यं परमं पदम् ॥"

अत्र व्यवच्छेद्यं पापाद्यार्थम् । अनयोः प्रश्नपूर्वकत्वम् । (त)
अप्रश्नपूर्वकत्वे यथा—

"भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥" ( थ )

"बलमार्तभयोपशान्तये
विदुषां सम्मतये बहु श्रुतम् ।
वसु तस्य न केवलं प्रभो-
र्गुणवत्तापि परप्रयोजनम् ॥"

श्लेषमूलत्वे चास्य वैचित्र्यविशेषो यथा—

"यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसङ्कराश्चापेषु गुणच्छेदाः" इत्यादि । ( द )

---

त्तरम् । तदीयचाण्डालीगमनरूपदोषस्य तदा चरणीयत्वेन सुकृतसदृशस्य व्यवच्छेदो न दोष इति शाब्दः । एवमुत्तरत्र । अप्रतिहतं चक्षुः किं, धिषणा बुद्धिः, न नेत्रम् । जानातीति त्वदपर इति पाठे प्रत्युत्तरपरितुष्टस्य प्रष्टुरुत्तरकर्तृजनप्रशंसावाक्यमिदम् । तदपर इति पाठे धिषणापर इत्यर्थः । **अत्र व्यवच्छेद्यमि**ति । व्यवच्छेद इत्यर्थः । सूत्रे व्यवच्छेदस्यैव शाब्दतया उक्तत्वान्नतु व्यवच्छेद्यस्य । एवमुत्तरत्रापि ।

**(वि, त)** अन्यव्यपोहस्यार्थत्वं दर्शयति—**किमाराध्यमि**ति । यद्यपि आराध्यत्वमाराधनाविषयत्वमाराधना च देवताप्रीतिहेतुः क्रिया तथापि आराध्यत्वमत्र पुरुषप्रवृत्तिविषयत्वमित्यर्थः । तेन आराध्यमुपार्जनीयं पुण्यमिति उत्तरस्य नान्यादिति व्यवच्छेदः । सदागमः सतामागमः सत्सङ्गः, परमपदं मुक्तिः ।

**(वि, थ)** अप्रश्नपूर्वकत्वे व्यवच्छेदस्य शाब्दत्वे आह—**भक्तिर्भव** इति । युवतिरूपे कामास्त्रे । भक्तिरित्यादौ सर्वत्र प्रायो महतां परिदृश्यत इत्यस्यान्वयः ।

**(वि, द)** अप्रश्नपूर्वकत्वे व्यवच्छेदस्यार्थत्वं दर्शयति—**बलमि**ति । बलं विक्रमः आर्तानां पीडितानां भयनाशाय, सम्मतये प्रीतये इत्यर्थः, श्रुतं विद्या । अतो न केवलं तस्य राज्ञो वसु धनमेव परप्रयोजनम्, परप्रयोजनस्यार्थिदारिद्र्यनाशरूपस्य जनकमपितु बलादिगुणवत्तापि तथेत्यर्थः । प्रयोजनजनके प्रयोजनपदमायुर्घृतमितिवत् सारोपलाक्षणिकम् । अत्र न स्वार्थमिति व्यपोहप्रतीतिः । चित्रकर्मसु इत्यादि । अनयोर्वर्णगुणपदश्लेषः न ब्राह्मणादिषु न प्रजासु इति व्यपोहप्रतीतिः ।

**उत्तरं प्रश्नस्योत्तरादुन्नयो यदि ।**
**यच्चासकृदसम्भाव्यं सत्यपि प्रश्न उत्तरम् ॥ १०७ ॥ (घ, ऊ)**

यथा मम—

"वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः ।
अहमेकाकिनी बाला तवेह वसतिः कुतः ॥" ( न )

अत्र पथिकस्य वसतियाचनं प्रतीयते ।

"का विसमा देव्वगई किं लद्धव्वं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुग्गेज्झं खलो लोओ ॥" ( प, ऋ )

अत्रान्यव्यपोहे तात्पर्याभावात् परिसंख्यातो भेदः । नचेदमनुमानम् । साध्यसाधनयोर्द्वयोर्निर्देशे एव तस्याङ्गीकारात् । नच काव्यलिङ्गम्, उत्तरस्य प्रश्नं प्रत्यजनकत्वात् । ( फ, ॠ ) *

---

**(वि, घ)** द्विविधोत्तरालङ्कारमाह—**उत्तरमि**ति । उन्नय उन्नयनं व्यञ्जना । **यच्चे**ति । असकृदित्यस्योभयत्रान्वयः । सत्यप्यसकृत् प्रश्नेऽसम्भाव्यं विलक्षणत्वेन सहसा अप्रतीयमानमसकृदुत्तरमित्यर्थः ।

**(वि, न) वीक्षितुमि**ति । स्वयं दूत्या उक्तिरियम् । वाच्यार्थे श्वश्र्वाः वीक्षणा-सामर्थ्यप्रदर्शनं तव रन्धनभोजनस्थलेऽपि गमनासम्भावनाप्रदर्शनार्थम् । अत्र निषे-धाभावादाक्षेपालङ्कारोऽपि बोध्यः ।

**(वि, प)** द्वितीयमुत्तरमाह—**विषमे**ति ।

'का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही ।
कि सौख्यं, सुकलत्रं, कि दुर्ग्राह्यं खलो लोकः ॥'

इति सं० । दैवगत्यादिवैषम्यादीनां वैलक्षण्येन सहसार्थतोऽप्रतीयमानत्वात्तत्रैव प्रतीतिविश्रान्तेरिति भावः ।

**(वि, फ) प्रश्नं प्रत्यजनकत्वादि**ति । इदं च ज्ञापकहेतोः काव्यलिङ्गत्वाभावत्व-कथनं प्रागेवार्थान्तरन्यासविचारे स्मर्तव्यम् । परं प्रश्नज्ञापकत्वे उत्तरालङ्कारेण बाध-नान्न तत्र काव्यलिङ्गत्वावकाशः ।

---

**(लो, ऊ)** उत्तरम् उत्तराख्यमलङ्करणम् । असकृदित्यनेन प्रश्नपूर्वस्यासम्भवो-त्तरस्य सकृद् निर्देशे न चारुत्वम् ।

**(लो, ऋ) के**ति ।

"का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही ।
कि सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥"

**(लो, ॠ)** अन्यव्यपोहे तात्पर्य्याभावात्, किन्तु पूर्वजनाभिसम्बन्धस्य दैव-

---

* दैवगत्यादेर्विषमत्वविधाने एव तात्पर्य्यं नान्वितरनिषेध इति भावः ।

"दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते ॥" १०८ ॥ (ब)

'मूषिकेण दण्डो भक्षित' इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीति नियतसमानन्यायादर्थान्तरमापततीत्येष न्यायो दण्डापूपिका। (भ, लृ)

अत्र च क्वचित्प्राकरणिकादर्थादप्राकरणिकस्यार्थस्यापतनं क्वचिदप्राकरणिकार्थात् प्राकरणिकार्थस्येति द्वौ भेदौ। क्रमेणोदाहरणम्।

"हारोयं हरिणाक्षीणां लुठति स्तनमण्डले।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः ॥" (म, ए)

---

(वि, ब) अर्थापत्त्यलङ्कारमाह—**दण्डापूपिकये**ति। दण्डापूपिका न्यायविशेषः। तच्च स्वयमेव दर्शयिष्यति। तन्न्यायेनान्यार्थस्यानुक्तापरार्थस्यागमो व्यञ्जनेत्यर्थः। तन्न्यायश्च शब्दश्लेषाल्लभ्यो बोध्यः। अन्यथा समासोक्त्यप्रस्तुतप्रशंसादावपि तत्प्रसक्तेः।

(वि, भ) तन्न्यायं दर्शयति—**मूषिकेणे**ति। दण्डोऽत्र तत्तत्स्थलीतोऽपूपस्याकर्षणदण्डः। अपूपः पिष्टकम्। तद्दण्डभक्षणं तत् पिष्टकगन्धात्। तथा तत् सहचरितपिष्टकभक्षणमावश्यकमतो मूषिकेण दण्डो भक्षित इत्यनेनार्थात् केनाप्युक्तेनेति शेषः। **इति नियतसमाने**ति। इति यत् नियतं तस्य समानन्यायादर्थान्तरमुक्तभिन्नोऽर्थ आपतति प्रतीयत इत्यर्थः। तन्न्यायलभ्यत्वे द्वैविध्यं दर्शयति—**क्वचिदि**ति।

(वि, म) तत्र प्राकरणिकादप्राकरणिकार्थस्य तन्न्यायगम्यत्वं दर्शयति—**हारोयमि**ति। **लुठती**ति। स्तनमण्डलावज्ञाधीनाङ्गपरावृत्तिरूपगतिविशेषेण तिष्ठतीत्यर्थः। इयमवस्थाऽवज्ञास्थितिरूपा। **के वयमि**ति। स्मराकिङ्कराणामियमवस्था। स्मरकिङ्कराणामस्माकमित्येवं ज्ञेयत्वात् सुतरां लुठनमित्यर्थः। अत्रालङ्काराधीनसौन्दर्यवर्णनस्य प्रक्रान्तत्वान्मुक्ताः प्राकरणिक्यः। अत्र के वयमित्यनेन तन्न्यायलाभः।

---

गत्यादेर्विषमत्वस्य ख्यापनमात्रस्य परिगतत्वादित्यर्थः। एवमुत्तरालङ्कारस्य विषयप्रकारस्यालङ्कारान्तरविवेकलाघवात् पश्चाद् भिनत्ति—**नचे**ति।

(लो, लृ) कन् प्रत्ययेन दण्डापूपवत् दण्डापूपिका, तथाविधन्यायोपि दण्डापूपिका। येन केन विधिना च वस्त्वन्तरस्यागमोऽर्थादापतनं सिद्धिरिति यावत्। एतदेव दर्शयति—**मूषिकेणे**ति। अर्थादापतति। तथाहि येन खलु मूषिकेणापूपसहचरितो दण्डो भक्षितस्तेन कथमपूपः परित्यक्त इति तथेहापि बोद्धव्यम्। तस्मात् यत्र प्रतिसदृशन्यायाद् अर्थान्तरानुगमस्तत्रायमलङ्कार इत्यर्थः।

(लो, ए) मुक्ता मौक्तिकानि प्राप्तनिःश्रेयसश्च। एवं मुक्तानां नारीणां स्तनमण्डललुठनेन च पूर्वन्यायात् स्मरकिङ्कराणामपीत्यर्थः।

"विललाप स बाष्पगद्गदं
सहजामप्यपहाय धीरताम् ।
अभि[1]तप्तमयोपि मार्दवं
भजते कैव कथा शरीरिणाम् ॥" ( य )

अत्र च समानन्यायस्य श्लेषमूलत्वे वैचित्र्यविशेषो यथोदाहृते हारोयमित्यादौ । नचेदमनुमानम् । समानन्यायस्य सम्बन्धरूपत्वाभावात् । (र, ऐ)

**विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः ॥ १०९ ॥ ( ल )**

यथा—"नमयन्तु[2] शिरांसि धनूषि वाकर्णपूरीक्रियन्तामाज्ञा मौर्व्यो वा । अत्र शिरसां धनुषां च नमनयोः सन्धिविग्रहोपलक्षणत्वात् सन्धिविग्रहयोश्चैकदा

---

( वि, य ) अप्राकरणिकात् प्राकरणिकार्थलाभमाह—**विललापे**ति । स राजा अजः सहजां स्वाभाविकीम्, अत्रायोऽप्राकरणिकम् । ततः प्राकरणिकाजस्य मार्दवलाभः । कैव कथेत्यादिशब्दाच्च तन्न्यायलाभः ।

( वि, र ) **श्लेषमूलत्वे** इति । हारोयमित्यादौ मुक्तापदं स्मरस्याकिङ्करमुक्तरूपेऽर्थे मौक्तिके च श्लिष्टम् । लुठतीति पदं च सावज्ञस्थितिरूपे आलिङ्गने चार्थे श्लिष्टम् । विललापेत्यादौ च तप्तपदमग्निसंयोगे विरहदुःखे च श्लिष्टम् । मार्दवपदं च कोमलत्वे कातरत्वे च श्लिष्टम् । यथा हारोयमित्यादिपदाद् विललापेत्यादिश्लोकस्यापि परिग्रहः । **नचेदमि**ति । हारोयमित्यत्र स्तनसङ्गिहारलुठनेन स्तनसङ्गिकामुकलुठनस्य विललापेत्यादौ चाभितापेन मार्दवस्यानुमेयत्वप्रसक्तेः । **समानन्यायस्ये**ति । दण्डापूपिकान्यायस्येत्यर्थः । सम्बन्धरूपत्वाभावात् व्याप्तिरूपसम्बन्धरूपत्वाभावात् । यद्यपि स्तनसङ्गित्वतल्लुठनयोरभितप्तत्वमार्दवयोश्च व्याप्तिरस्ति, तथा न्यायस्य पुरःस्फूर्तिकत्वात् साध्यहेतुभावेन निर्देशाभावाच्च नानुमानमित्यभिप्रायः ।

( वि, ल ) विकल्पालङ्कारमाह—**विकल्प** इति । कोटिद्वये समानत्वं तुल्यबलता । चातुरी चालङ्कारान्तरघटितरूपा । अत एव अस्याः सर्गविधौ इत्यत्र चन्द्रमदनयोः प्रजापतित्वविकल्पेऽप्यलङ्कारान्तराघटितत्वान्न विकलपालङ्कारः ।

( वि, व ) नमयन्त्वित्यादिकं न श्लोकः, किन्तु जेतृनृपतेर्जेतव्यनृपतिषु जिज्ञासावाक्यमात्रमिदम् । प्रणिपातार्थं ते राजानः शिरांसि वा नमयन्तु युद्धार्थं

---

( लो, ऐ ) सम्बन्धोऽविनाभावः । नचेयं शास्त्रीयार्थापत्तिः । तत्र हि पीनो देवदत्तो दिवा न भुङ्क्ते पीनत्वभोजनादिकयोरविनाभाव इति भावः ।

( लो, ओ ) तुल्यबलयोरेकस्मिन् कार्ये नियोजितुमर्हयोः, विरोधः एकदा निर्वाहयितुमशक्यत्वात् । स एककक्षाश्रयणपर्यवसानादविरोध एव ।

---

1 'अति' ( क. पु. )
2 'नम्यन्ताम्' ( ग. पु. )

कर्त्तुमशक्यत्वाद्[1] विरोधः । स चैकपक्षाश्रयणपर्यवसानः । तुल्यबलत्वं चात्र धनुःशिरोनमनयोर्द्वयोरपि स्पर्द्धया सम्भाव्यमानत्वात् । चातुर्यं चात्रौपम्यगर्भत्वेन । एवं कर्णपूरीक्रियन्तामित्यत्रापि ॥ ( व, श्रो )

एवम्—

"युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ।" +

अत्र श्लेषावष्टम्भेन चारुत्वम् । ( औ )

'दीयतामर्जितं वित्तं देवाय ब्राह्मणाय वा ।' (श)

---

धनुर्वा नमयन्तु इत्यर्थः । तथा च ममाज्ञा चाकर्णपूरीक्रियतां कर्णं पूरयित्वा श्रूयतां युद्धार्थं मौर्वी वा कर्णपर्यन्तं नीयतामित्यर्थः । अत्र विरोधं ग्राहयितुमाह—**अत्र धनुषामि**ति । सन्धिविग्रहोपलक्षणत्वात्तद्बोधकत्वादित्थं विरोधं दर्शयित्वा अत्रेच्छाविकल्पत्वं दर्शयति—**स चे**ति । इच्छाया एकपक्षग्रहणे पर्याप्तिः । तुल्यबलत्वे एव इच्छाविकल्पसम्भवात्। **तुल्यबलत्वं चात्रे**ति । **द्वयोरि**ति । द्वयोः सकाशादित्यर्थः । तद्द्वयहेतुकयोः सन्धिविग्रहयोरपि स्पर्द्धया इच्छया वा सम्भाव्यमानत्वादित्यर्थः एव चात्महितकारित्वेन द्वयोस्तुल्यबलत्वम् । चातुरीयुतत्वं दर्शयति—**चातुर्यं चे**ति । औपम्यमुपमा । शिरो धनुषोर्नमनसादृश्यादाज्ञामौर्व्योश्च कर्णपूरीकरणसादृश्यादुपमा । इदमुपलक्षणं द्वयोरेकक्रियान्वयेन तुल्ययोग्यता बोध्या ।

( वि, ध ) चातुरीयुतस्य व्यावृत्तिं दर्शयति—**दीयतामि**ति । अत्र विरोधप्रसक्तिरनवधानमूलिकैवेति मन्यामहे—एकदैव देवब्राह्मणेभ्यो वित्तदानसम्भवेन

---

( लो, श्रौ ) श्लेषश्च कुरुतामित्यत्र द्विवचनैकवचनयोरेकरूपत्वात् । अत्र नेत्रवर्ष्मणोर्द्वयोरपि चार्तिशमने समर्थत्वात् ।

---

+ संपूर्णश्लोको यथा—

"भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ।
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधिरसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥"

नचात्र समुच्चये वाशब्दः । तनुमध्ये नेत्रयोः प्रविष्टत्वात् तयोः पृथगभिधानमेव न कार्य्यम् । कृतं च सत् स्पर्धाभावं गमयति स्पर्धाभावाच्च विरुद्धत्वम् । नेत्रे अथवा समस्तमेव शरीरमित्यर्थे विकल्पस्तु सुप्रत्ययः ।

अनयैव युक्त्या परश्लोके विज्ञप्रियायां दर्शिता कवेरनवधानता स्वाश्रयैव प्रतीयते ।

[1] 'कर्त्तव्यतासम्भवात्' ( ग. घ. पु )

इत्यत्र चातुर्याभावान्नायमलङ्कारः ।

समुच्चयोयमेकस्मिन् सति कार्यस्य साधके ।
खले कपोतिकान्यायात्तत्करः स्यात् परोऽपि चेत् ।
गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये ॥ ११० ॥ (ष, श्र)

यथा मम—

"हंहो धीर ! समीर ! हन्त जननं ते चन्दनक्ष्माभृतो
दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः ।
प्रत्यङ्गं दहसीह मे त्वमपि चेदुद्दामदावाग्निव-
न्मत्तोयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः ॥" (स, आ)

अत्रादाहकत्वे[1] एकस्मिंश्चन्दनक्ष्माभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानम् । अत्र सर्वेषामपि हेतूनां शोभनत्वात् सद्योगः । अत्रैव चतुर्थपादे मत्तादीनामशोभनानां योगादसद्योगः । ( ह )

---

विरोधाभावात् । दवायैवेत्यादिनियमगर्भत्वेन एकव्यक्तिकवित्ताभिप्रायेण वा विरोधो दर्शित इति वा ।

( वि, ष ) चतुर्विधं समुच्चयालङ्कारमाह—**समुच्चयोयमि**ति । धान्यमर्दनखले कपोतानामेकदापतनं तन्न्यायस्तन्न्यायादित्यर्थः । अन्यद् भेदत्रयमाह—**गुणावि**ति । गुणद्वयं वा क्रियाद्वयं वा गुणक्रियाद्वयं वा यदि युगपद् वर्णितं स्यादित्यर्थः ।

( वि, स ) **हंहो धीरे**ति । मन्दस्यैव धैर्यवत्त्वेनाऽकार्यनिवृत्तिरूपेण सम्बोधनम् । **चन्दने**ति । चन्दनसम्बन्धात् सुगन्धेरेव महाजनजन्यत्वेन सम्बोधनम् । **दाक्षिण्यमि**ति । दक्षिणादिग्भवस्यैव जगद्विलक्षणाविचक्षणत्वमुक्तम् । **परिचय** इति । जलसम्बन्धेन शीतलस्यैव पुण्यनदीसम्बन्धेन महत्त्वमुक्तम् । ईदृशस्त्वमिह विरहे मे मम प्रत्यङ्गं दावाग्निवद् दहासि चेत् तदा मत्त उन्मत्तो मलिनात्मकः कृष्णवर्ण एव कुटिलस्वभावः । वनचरत्वेन च लोकव्यवहारानभिज्ञः कोकिलः किं वक्ष्यते ? स सुतरां धक्ष्यतीत्यर्थः ।

( वि, ह ) **अत्रे**ति । अदाहकत्वे इत्येव पाठः । दाहकत्वे इति प्रामादिक एव पाठः । चन्दनक्ष्मेत्यादीनामदाहकहेतुत्वं श्लोकव्याख्यायामेव व्याख्यातम् ।

---

( लो, अ ) **समुच्चय** इति । तृतीयपादेन समाधेर्व्यवच्छेदः । तच्च वृत्तावेव सुव्यक्तम् । तत्करः तस्य कार्यस्य साधकः ।

( लो, आ ) धीरः वंशेन विधिना पाण्डित्याच्च, क्ष्माभृत्पर्वतः भूधरणक्षमः कश्चित् महापुरुषः । दाक्षिण्यं दक्षिणा दिक् जन्मसरलता च । मलिनात्मकः श्यामः कुटिलाशयश्च । हेतूनां धीरत्वादीनां सन्तः शोभनाः ।

1 'अत्र दाहे' ( ग. क. पु. ) 'अत्र दाहकत्वे' ( घ. च. पु. )

सदसद्योगो यथा—

"शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥" (क)

इह केचिदाहुः—

शशिप्रभृतीनां शोभनत्वं खलस्याशोभनत्वं चेति सदसद्योग इति । अन्ये तु शशिप्रभृतीनां स्वतः शोभनत्वं धूसरत्वादीनां त्वशोभनत्वमिति सदसद्योगः । अत्र हि शशिप्रभृतिषु धूसरत्वादेरत्यन्तमनुचितत्वमिति विच्छित्तिविशेषस्यैव चमत्कार[1]विधायित्वम्; मनसि [2]सप्तशल्यानीति सप्तानामपि शल्यत्वेनोपसंहारश्च । 'नृपाङ्गणगतः खल' इति प्रत्युत क्रमभेदाद् दुष्टत्वमावहति सर्वत्र

---

चतुर्थपाद इति । दाहं प्रति हेतूनां मत्तत्वादीनामित्यर्थः । सत्त्वासत्त्वे उपादेयत्वानुपादेयत्वे ।

(वि, क) शशीति । एते सप्त धूसरत्वविशिष्टशश्यादयः सप्त मनसि शल्यानीत्यर्थः । अनौचित्यदर्शनेन शल्यवद् दुःखदायित्वात् । तेष्वनौचित्यं दर्शयति—शशीति । उज्ज्वलमूर्तेस्तस्य दिवसधूसरत्वमनुचितम् । एवं गलितयौवनायाः कामवत्त्वं कामिन्या गलितयौवनत्वं वा अनुचितम् । एवं सरसो वारिजशून्यत्वम् । शोभनाकृतेर्मूर्खस्याऽक्षरेण विद्यया शून्यत्वम् । प्रभोर्धनपरायणत्वं, धनपरायणजनस्य प्रभुत्वं वा । सज्जनस्य सततदुर्गतत्वं सततदुर्गतस्य सज्जनत्वं वा, नृपाङ्गणगतस्य खलत्वं, खलस्य नृपाङ्गणगतत्वं वा अनुचितमित्यर्थः । अत्र शोच्यानां विधेयानां सदसत्त्ववशात् सदसद्योगः । तत्र दैवाधीनदोषेण शोच्यस्य सत्त्वं स्वाधीनदोषेण शोच्यस्यासत्त्वम् । तत्र शशिनो धूसरत्वं, कामिन्या गलितयौवनत्वस्य विधेयत्वपक्षे गलितयौवनात्वं, सरसो वारिजशून्यत्वं, स्वाकृतेरनक्षरमूर्खत्वं, सज्जनस्य दुर्गतत्वं तदैव दोषात् शोच्यत्वेन शोभनम् । गलितयौवनायां कामवत्त्वस्य विधेयत्वपक्षे विधेयस्य तस्य प्रभोर्धनपरायणस्य धनपरायणे प्रभुत्वस्य वा, विधेयस्य खले नृपाङ्गणगतत्वस्य नृपाङ्गणगते खलत्वस्य वा विधेयस्य स्वाधीनदोषेण शोच्यत्वादशोभनत्वमिति विधेयानामेव सदसत्त्वम् ।

(वि, ख) पूर्वोक्तश्लोकेपि विधेयानामेव तथात्वाद् भिन्नाभिप्रायं ग्रन्थकृन्मनसि कृत्वापरोक्तं सदसद्योगं दर्शयति—इह केचिदिति । एतन्मते उद्देश्यानां विशेष्याणामेव सदसत्त्वम् । मतान्तरमाह—अन्ये त्विति । एतन्मते उद्देश्यविधेययो-

---

1 एतच्चिह्नितपाठस्थले, 'शोभनत्वे प्रक्रमादिति' इति (क. पु.)

2 एतच्चिह्नितः पाठः क. पु. नास्ति ।

विशेष्यस्यैव शोभनत्वेन प्रक्रमादिति । *

इह च(खले कपोतवत्सर्वेषां)कारणानां साहित्येनावतारः । समाध्यलङ्कारे तु एकस्यैव[1] कार्यं प्रति साधके समग्रेप्यन्यस्य काकतालीयन्यायेनापतनमिति भेदः ( ख, इ ) †

"अरुणे च तरुणि ! नयने तव मलिनं च प्रियस्य मुखम् ।
मुखमानतं च सखि ते ज्वलितश्चास्यान्तरे स्मरज्वलनः ॥"

अत्र आद्येऽर्धे गुणयोर्यौगपद्यम् । द्वितीये क्रिययोः । ( ग )

---

विशेष्यविशेषणयोः सदसतोर्योगः । तेषां मते तथात्वमेव विच्छित्तिविशेषाच्चमत्कारस्त-द्दर्शयति—**अत्रहीति**। उद्देश्ये सत्त्वासत्त्वाभ्यां तु तेषां मतेन चमत्कार इत्यर्थः । तेषां सदसत्त्वे एव तावदलङ्कारः । प्रत्युत प्रथमपक्षे तादृशानिर्देशः क्रमभङ्गमावहतीत्यर्थः ।

( वि, ख ) तदेव ग्राहयति—**सर्वत्रेति** । शशी धूसर इत्याद्युद्देश्यविधे-यार्थकसर्ववाक्ये इत्यर्थः, अयं च दोषः, खले नृपाङ्गणगतत्वस्य विधेयता गतत्वस्य विधेयतापक्ष एव नृपाङ्गणगते खलत्वस्य विधेयता पक्षेतूद्देश्यः शोभन एवेति नैष दोष इति बोध्यम् । एककारणादेव सुकरे कार्ये दैवात् कारणान्तराऽऽगमनरूपात् समाध्यलङ्कारादस्य भेदमाह—**इह च खलेति** । **एकस्यैवेति** । कार्यं प्रति एकस्यैव समग्रे साधकत्वेऽसमग्रकारणवृत्तिर्न साधकत्वे इत्यर्थः ।

( वि, ग ) गुणयोः क्रिययोश्च यौगपद्यरूपं समुच्चयमाह—**अरुणे चेति** । अत्र चकारौ यौगपद्यबोधकौ । तौ च ययोरुत्तरभूतौ तयोर्यौगपद्यबोधकौ इत्यत आह-**अत्राद्ये** इति ।

---

( लो, इ ) द्वितीयपक्षे सुगतिं दर्शयति । विशेष्यस्य शशिकामिनीप्रभृतेः सूत्रस्य तृतीयपादं विशदयति—**इह चेति** । काकतालीयन्यायेनेति ।

---

* अत्र शशिनः स्वतः शोभनस्यापि दिवसधूसरत्वादशोभनत्वेन शोभनाशोभन-रूपस्य समुच्चयः । 'नृपाङ्गणगतः खलः' इत्यत्र तु नृपाङ्गणगतत्वेन शोभनत्वं खलत्वे-न तु अशोभनत्वमिति रीत्या सदसद्रूपतासमर्थनेऽपि तस्मिन्नंशो नायमलङ्कारः। परं तत्र स्वतोऽशोभनस्य खलस्य पाठात् प्रक्रमभङ्गदोष एव ।

† समाधौ हि एकेन कार्ये निष्पाद्यमानेऽन्येनाकस्मादापतता सौकर्य्यादि-रूपातिशयसम्पादनम् । अत्र तु एककार्यसम्पत्तौ सर्वेषां खले कपोतन्यायेन पातः कार्यस्य न कोप्यतिशय इति भावः । काव्यलिङ्गे हेतुत्वमात्रं विवक्षितं नतु हेतूनां गुणप्रधानभावस्य एकत्वानेकत्वस्य वा चिन्ता । अत्र तु एकस्यैव तत्कार्यकारित्वे अन्येषां साहाय्यमात्रमिति ततो विशेषः । ( उद्योतः )

1 'एककार्यं प्रति' ( क. पु. )

उभयोर्यौगपद्ये यथा—

"कलुषं च तवाहितेष्वकस्मा-
त्सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र तेषां
वपुषि प्रस्फुटमापदां कटाक्षैः ॥ + (घ)

"धुनोति चासिं तनुते च कीर्तिम् । इत्यादावेकाधिकरणेऽप्येष दृश्यते ॥"

नचात्र दीपकम् । एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारानियमेन कार्यकारणकालनियमाविपर्ययरूपातिशयोक्तिमूलाः । दीपकस्य चातिशयोक्ति-मूलत्वाभावः । (ङ)

**समाधिः सुकरे कार्ये दैवाद् वस्त्वन्तरागमात् ॥१११॥**

यथा—

"मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥" (च)

---

**(वि, घ) कलुषं चेति** । अहितेषु विपक्षेषु, महीपतीन्द्रेति सम्बोधनम् । अत्र पूर्वार्धे गुणोत्तरं चकारः, परार्धे तु क्रियोत्तरमित्यनयोर्यौगपद्यम् । **धुनोति चेति** । एकाधिकरणे रणस्थलरूपे । व्यधिकरणेऽप्येष दृश्यते इति काव्यप्रकाशकृत्, यथा—

"कृपाणपाणिश्च भवान् रणक्षितौ ।
ससाधुवादाश्च सुराः सुरालये ॥"

इत्यत्र रणक्षिति सुरालयरूपाधिकरणभेदः ।

**(वि, ङ)** 'धुनोति चासि' मित्युदाहरणे एकस्मिन् कर्तृकारकेऽनेकक्रियासम्बन्धादनेकक्रियास्वेककारकरूपदीपकप्रसक्तिमाशङ्क्य निषेधयति—**न चात्रेति** । एते गुणक्रियायौगपद्ये ये समुच्चयप्रकारास्ते कार्यकारणयोर्यः पौर्वापर्य्यरूपः कालनियमः तद्विपर्य्ययरूपातिशयोक्तिमूला इत्यर्थः । दर्शितोदाहरणेषु सर्वत्रैव गुणयोः क्रिययोर्वा कार्यकारणभावसत्त्वेपि यौगपद्योक्तेः । दीपके तु तथात्वं नास्तीत्याह—**दीपकस्येति** । इदमुपलक्षणम्—तत्र यौगपद्यस्याप्यविवक्षणं भेदकमिति बोध्यम् । तथा चेत् तद्द्वयाभावे सतीति विशेषणं देयमित्यभिप्रायः ।

**(वि, च)** समाध्यलङ्कारमाह—**समाधिरिति** । एककारणेनैव सुकरे कार्ये दैवात् कारणरूपवस्त्वन्तरोपस्थितेरित्यर्थः । **मानमस्या** इति । घनगर्जितस्योद्दीपकत्वेन

---

+ हे महीपतीन्द्र स्वभावतः सितपङ्केरुहसोदरा श्वेतकमलतुल्या श्रीः शोभा यस्य तादृशं तव चक्षुः अहितेषु शत्रुषु अकस्मात् कलुषं कषायं, क्रोधादीषद्रक्तमित्यर्थः । तेषां शत्रूणां वपुषि आपदां विपत्तीनां कटाक्षैः कर्तृभिः प्रस्फुटं पतितं च । अत्र

**प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि ।**
**तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः ॥ ११२ ॥ ( छ, ई )**

तस्यैवेति रिपोरेव । यथा मम

"मध्येन तनुमध्या मे मध्यं जितवतीत्ययम् ।
इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभो हरिः ॥" (ज, उ )

**प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनं**
**निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ॥ ११३ ॥ (झ)**

क्रमेण यथा—

यत्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरमित्यादि । ( ञ )

"तद्वक्त्रं यदि मुद्रिता शशिकथा, हा हेम सा चेद् द्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत् स्मितं का सुधा ।

---

मानभङ्गे तदपि कारणान्तरं दैवादुपस्थितमित्यर्थः ।

(वि, छ) प्रत्यनीकालङ्कारमाह—**प्रत्यनीकमि**ति । रिपोः प्रतीकारे प्रत्यपकारे ऽशक्तेन केनापि यदि तत्सम्बन्धिनोऽन्यस्य तिरस्कारः तस्यैव रिपोरेवोत्कर्षतासाधकः, उत्कर्षपर्य्यवसायक इत्यर्थः ।

(वि, ज) **मध्येने**ति । रिपुकुम्भभेदनार्थं सिंहस्य भावना पूर्वार्धम् । अत्र मध्येन स्वमध्यजयात् नायिका सिंहस्य रिपुः, तत्कुचसादृश्यात् करिकुम्भौ तदीयौ ।

(वि, झ) द्विविधं प्रतीपालङ्कारमाह—**प्रसिद्धस्ये**ति । प्रसिद्धस्योपमानस्य उपमेयत्वकल्पनं वा निष्फलत्वकथनं वेति द्विविधं प्रतीपमित्यर्थः ।

(वि, ञ) **यत्त्वन्नेत्र** इत्यादि । सादृश्यस्य प्रतियोगि उपमानम् । अत्र च त्वन्नेत्रस्य समानकान्तिरित्युक्त्या नेत्रकान्तेरिन्दीवरकान्तिसादृश्यप्रतियोगित्वेन निर्देशात्त्वन्नेत्रकान्तिरुपमानम् । इन्दीवरकान्तेश्चोपमानत्वेन प्रसिद्धाया उपमेयत्वकल्पनम् ।

(वि, ट) उपमानस्य वैफल्यमुदाहरति—**तद् वक्त्रं यदी**ति । तद् वक्त्रादिसत्त्वे शशिकथादीनां मुद्रितत्वादिकं वैफल्यं पर्यवसितं बोध्यम् । हा इति शोचामीत्यर्थः । हारितं पराजयः प्राप्त इत्यर्थः । **तच्चेदि**ति । तस्याः तत्स्मितं चेदित्यर्थः । का

---

(लो, ई ) एवं वाक्यन्यायाश्रयिणोऽलङ्कारान् दर्शयित्वा, लोकन्यायाश्रयिणो दर्शयति—**प्रत्यनीकमि**ति । अनेकं सैन्यं, तच्चात्र स्वसामान्यस्य सम्बन्धिमात्रस्योपलक्षकम् । तेनाभियोज्यतया प्रतिनिधिभूतोऽर्थो रिपोः सम्बन्धी वर्ण्यते इति प्रत्यनीकं नामालङ्करणम् । तदीयस्य रिपुसम्बन्धिनः ।

(लो, उ) इभकुम्भयोरत्र नायिकासम्बन्धिता । स्वसम्बन्धः कुचकुम्भसम्बन्धः । सादृश्यसम्बन्धादिदं च क्वचिदनुकूलस्य वाञ्छिताचरणेऽपि सम्भवति । यथा विरहविधुरापि सततं भवतः श्वासानुहारिणी पतति इत्यादौ ।

धिक् कन्दर्पधनुर्भ्रुवौ यदि च ते किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः ॥"

अत्र वक्त्रादिभिरेव चन्द्रादीनां शोभातिवहनात्तेषां निष्फलत्वम् । (ट)

**उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः ।**
**कल्पितेप्युपमानत्वे प्रतीपं केचिदूचिरे ॥ ११४ ॥** ( ठ ) †

"अहमेव गुरुः सुदारुणानामिति हालाहल तात मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥"(ड)

अत्र प्रथमपादेनोत्कर्षातिशय उक्तः । तदनुक्तौ तु नायमलङ्कारः । यथा 'ब्रह्मेव ब्राह्मणो वदति'इत्यादि ( ढ )

---

निकृष्टा । इत्थमुक्त्वा उपसंहरति--**किं वा बह्विति** । वेधसः सर्गक्रमः सृष्टिक्रमः पुनरुक्तवस्तुविमुखः, पुनरुक्तं यत्सदृशवस्त्वन्तरकल्पनं तद्विमुखः । तत्र वैफल्यरूपदोषदर्शनविमुख इत्यर्थः । विमुखपदस्यैवेदृशार्थपरत्वं बोध्यम् ।

( **वि, ठ** ) क्वचिदुपमानस्योपमानत्वकल्पनेपि काव्यप्रकाशकृदुक्तमिममलङ्कारं लक्षयति—**उक्त्वा चात्यन्तमि**ति । अत्युत्कृष्टस्य वस्तुनोऽत्यन्तमुत्कर्षमुक्त्वापि उपमानत्वेऽपि कल्पिते निर्दिष्ट इत्यर्थः । स च निर्देशः समभिव्याहारविशेषवशात्तन्निन्दापर्यवसायको बोध्यः । अन्यथोपमानस्योपमानत्वेन निर्देशेनानुगुणस्यैव प्रतीत्या प्रतीपत्वस्यैवाऽसम्भवात् । अतिसुन्दरश्चन्द्र इव मुखमित्युपमायामतिव्याप्तेश्च ।

( **वि, ड** ) **अहमेवे**ति । हे हालाहल, हे तात, अहमेव सुदारुणानां गुरुः प्रधानम् । इत्येवं दृप्यो मा स्म, एवं दर्पं मा कुरु इत्यर्थः । कुत इत्यत्राह—**नन्वि**ति । ननु भो अस्मिन् भुवने दुर्जनानां भूयो बहूनि वचनानि अपि भवादृशानि भवत्तुल्यानि सन्तीत्यर्थः । भूय इति सान्तक्रियाविशेषणम् । तद्भूयस्त्वेन वचनानामेव भूयस्त्वं बोध्यम् ।

( **वि, ढ** ) अत्र भवदिव दृश्यन्ते यानीत्यनेन हलाहलस्योपमानत्वेनैव निर्देशः । दर्पनिषेधसमभिव्याहाराच्च तन्निन्दापर्यवसायकः । अत्रोक्तमत्यन्तमुत्कर्षं घटयति—**प्रथमपादेने**ति । सुदारुणान्तरापेक्षया तेन गुरुत्वकथनात् तद्विशेषणफलमाह–**तदनुक्तावि**ति । नायमलङ्कारः, किन्तु उपमा एवेत्यर्थः । तद् दर्शयति-**यथा ब्रह्मे**ति । ब्रह्मा यथा वेदं वदति तथा ब्राह्मण इत्यर्थः । यद्यपि वेदस्यातिवक्ता ब्रह्मैवेति ब्राह्मणस्यात्यन्तोत्कर्षकथनेप्युपमैव नायमलङ्कारस्तथापि प्रतीपघटनार्थं समभिव्याहारविशेषादुपमानस्य निन्दापर्य्यवसायकत्वं निर्देशस्य विशेषणं दत्तमित्यतस्तद्वारणमिति प्रागेवोक्तं बोध्यम् ।

---

† उपमानप्रतिकूलत्वादुपमेयस्य प्रतीपमिति व्यपदेशः । ( अलं०, स० )

**मीलितं वस्तुनो गुप्तिः केनाचित्तुल्यलक्ष्मणा ॥ ११५ ॥**

अत्र समानलक्षणं वस्तु क्वचित्सहजं क्वचिदागन्तुकम् । ( ण )
क्रमेण यथा—

"लक्ष्मीवक्षोजकस्तूरीलक्ष्म वक्षःस्थले हरेः ।
ग्रस्तं नालक्षि भारत्या भासा नीलोत्पलाभया ॥" (त)

अत्र स्वभावतः श्यामा कान्तिः सहजा ।

"सदैव शोणोपलकुण्डलस्य
यस्यां मयूखैररुणीकृतानि ।
कोपोपरक्तान्यपि कामिनीनां
मुखानि शङ्कां विदधुर्न यूनाम् ॥" ( थ )

अत्र माणिक्यकुण्डलस्यारुणिमा मुखे आगन्तुकः ।

**सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः ॥ ११६ ॥** (द) *

यथा—

"मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः ।
अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ॥" ( ध ) ×

मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम् । इह तूभयास्तुल्यगुणतया भेदाग्रहः ।

---

( वि, ण ) मीलितालङ्कारमाह । **मीलितमि**ति । गुप्तिराच्छादनम् । तुल्यलक्ष्मणा तुल्यचिह्नेन । आगन्तुकमतदीयं, सहजं तद्वृत्ति ।

( वि, त ) **लक्ष्मीवक्षोजे**ति । हरेर्वक्षःस्थले लक्ष्मीस्तनकस्तूरीचिह्नं भारत्या नालक्षि, यतो नीलोत्पलभिया हरेरेव भासा ग्रस्तमाच्छादितमित्यर्थः ।

( वि, थ ) आगन्तुकलक्ष्मणा त्वाह—**सदैवे**ति । शोण उपलो मणिः खचितो यत्र तादृशकुण्डलस्य मयूखैः सदैवाऽरुणीकृतानि यस्यां पुरि कामिनीनां कोपोपरक्तान्यपि मुखानि यूनां कोपशङ्कां न विदधुरित्यर्थः ।

(वि, द) **सामान्यमि**ति । अन्यतादात्म्यमन्यभेदाग्रहो यदि वर्णित इत्यर्थः । रूपकभ्रान्तिमतोस्तु अभेदाग्रहादेवाहार्या वेति ततो भेदः । अत एवोदाहरणे व्याख्यास्यति-**भेदाग्रह** इति ।

( वि, ध ) **मल्लिके**ति । अविभाव्या ज्योत्स्नातोऽगृहीतभेदाः ।

---

* सदृशैर्गुणैः साधारणगुणयोगात् प्रकृतस्य उपमेयस्यान्यतादात्म्यमुपमानेनैकात्मता यदि वर्ण्यते तदा सामान्यनामालङ्कारः ।

× मल्लिकाभिः पुष्पैराचिता व्याप्ता धम्मिल्लाः केशा यासां तादृशास्तथा चारुभिश्चन्दनैश्चर्चिता अभिसारिकाश्चन्द्रिकासु अविभाव्या अलक्ष्याः सुखं यान्ति ।

**तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः ॥ ११७ ॥ ***

यथा—

"जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।
नयन् मधुलिहः श्वैत्यमुदंशु[1]दशनांशुभिः ॥" ( न )

मीलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनम् । इह तु वस्त्वन्तरगुणेनाक्रान्तता प्रतीयते इति भेदः । ( प ) †

**तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः ॥ ११८ ॥ ( फ )**

यथा—

"हन्त सान्द्रेण रागेण भृतेऽपि हृदये मम ।
गुणगौरनिषण्णोऽपि कथं नाम न रज्यसि ॥" ( ब )

यथा वा—

"गाङ्गमम्बु सितमम्बु यामुनं
कज्जलाभमुभयत्र मज्जतः ।

---

**( वि, न )** तद्गुणालङ्कारमाह—**तद्गुण** इति । अत्युत्कृष्टस्य गुणस्य ग्रहो गुणग्रहणम् । **जगादे**ति । बलभद्रवदनच्छद्मनो वदनव्याजस्य पद्मस्य पर्यन्तपातिनो मधुलिहो भ्रमरान् उदंशूनाम् उद्गतांशूनां दशनानां दन्तानामंशुभिः श्वैत्यं नयन् जगादेत्यर्थः । अत्र भ्रमराणां स्वगुणत्यागः श्वैत्यप्रापणादित्यर्थः ।

**(वि, प)** मीलितालङ्कारादस्य विशेषमाह—**मीलिते** इति । **प्रकृतस्य वस्तुन** इति । प्रकृतस्य यद्वस्तुनो गुणस्वरूपं तस्याच्छादनमग्रह इत्यर्थः । आक्रान्तता स्वाश्रयीकरणम् ।

**( वि, फ )** अतद्गुणालङ्कारमाह—**तद्रूपे**ति । अननुहारोऽग्रहणम् । हेतौ ग्रहणहेतौ ।

**( वि, ब ) हन्त सान्द्रे**ति । अननुरक्तं नायकं प्रति अनुरक्ताया नायिकाया उक्तिरियम् । **गुणगौरे**ति । गुणेन गौर इति, गुणो गौरो यस्येति समासेन च सम्बोधनम् । हृदये निषण्णोऽपीत्यन्वयः । रागपदरज्यसिपदे रक्तिमानुरागयोः श्लिष्टे । अत्र रागभृतिहृदये निषण्णत्वं रक्तहेतुः ।

---

* तत्समानगुणनिबन्धनात्सामान्यम् । (का० प्र०) तस्याप्रकृतस्य गुणोऽत्रास्तीति ( का० प्र० ) तस्योत्कृष्टस्य गुणा अस्मिन्निति ( अलं० स० )

† "मीलिते धर्मिण एवाग्रहः । सामान्ये अपरित्यक्तगुणस्यैवाऽपृथक्भासः । इह तु गुणमात्रस्यैवाऽभिभवः, धर्मिणः पृथक्भासश्चेति भेद इत्यर्थः ( उद्योतः )

1 'मुदग्र' ( क. ग. पुस्तके )

राजहंस ! तव सैव शुभ्रता
चीयते नच नचापचीयते ॥" +

पूर्वत्रातिरक्तहृदयसम्पर्कात् प्राप्तवदपि गुणगौरशब्दवाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम् । उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनापेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः सम्पर्केऽपि न तद्रूपता । अत्र च गुणाग्रहणरूपविच्छित्तिविशेषाश्रयाद् विशेषोक्तेर्भेदः वर्णान्तरोत्पत्त्यभावाच्च विषमात् । ( भ )

**संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा ।**
**कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ॥ ११६ ॥ ( म )**

सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः । अत्राकारेण यथा—

"वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥"

---

( वि, भ ) उदाहृतश्लोकद्वयेपि एतद्गुणाग्रहणमुदाहरणद्वयवैलक्षण्यं चाह—**पूर्वत्रे**ति । अतिरिक्तहृदयं रागभृतत्वेनातिरिक्तगुणं हृदयं प्राप्तवत् प्राप्तप्रायं रक्तत्वं न निष्पन्नम्, नायकस्येत्यर्थः । इत्थमत्र प्रकृतेन नायकस्य प्रकृतस्य हृदयस्य गुणाग्रहणं दर्शयित्वा प्रकृततोऽप्रकृतगुणाग्रहणरूपफलाभावमुत्तरश्लोके दर्शयति—**उत्तरत्रे**ति । यद्यपि राजहंसोऽप्यप्रकृतस्तथापि सम्बोध्यत्वेनाऽऽपेक्षिकं तस्य प्रकृतत्वं दर्शयन्नाह—**अप्रस्तुतप्रशंसाया**मिति । सति हेतौ फलाभावरूपाया विशेषोक्तेरस्य भेदमाह—**अत्र चे**ति । विशेषोक्तौ सामान्यत एव फलाभावः इह तु गुणाग्रहणरूपफलाभावरूपो भङ्गिविशेष इति भेद इत्यर्थः ।

ननु कार्यस्य कारणविरोधिगुणवशात् कार्यस्य कारणगुणाग्रहणं विषमालङ्कारेप्यस्ति चेद् यद्यपि दर्शितोदाहरणद्वये कार्यकारणभावसत्त्वात् तादृशस्याऽतद्गुणस्य विषमालङ्कारत्वाविशेष इत्याह—**वर्णान्तरे**ति । विषमालङ्कारे कारणविरोधिगुणान्तरोत्पत्तिरिति भेद इत्यर्थः ।

( वि, म) सूक्ष्मालङ्कारमाह—**संलक्षित** इति । भङ्ग्या प्रकारविशेषेण सूच्यत इत्यर्थः । आकारः संस्थानम्, इङ्गितं क्रिया इत्यर्थः ।

(वि, य) **वक्त्रस्यन्दि** इति। काचिद् वयस्या सखी कस्याश्चिन्नायिकायाः कण्ठे वक्त्रस्यन्दिभिः स्वेदबिन्दुप्रवाहैः भिन्नं द्विधाकृतं कुङ्कुमं दृष्ट्वा तस्याः नायिकायाः पुंस्त्वं रतौ पुरुषायितत्वं व्यञ्जयन्ती स्मित्वा हसित्वा तस्याः पाणौ खड्गलेखां लिले-

---

+ गाङ्गं गङ्गासम्बन्धि, अम्बु जलं, सितं शुभ्रम् । यामुनं यमुनासम्बन्धि जलं कज्जलाभं कज्जलतुल्यं कृष्णम् । हे राजहंस उभयत्र मज्जतः स्नानं शुभ्रता सैव एकैव न चीयते न वर्धते नच अपचीयते ह्रासमेति ।

अत्र कयाचित् कुङ्कुमभेदेन संलक्षितं कस्याश्चित्पुरुषायितं पाणौ पुरुषचिह्नखड्गलेखालिखनेन सूचितम्। (य)

इङ्गितेन यथा–

"संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥"

अत्र विटस्य भ्रविक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनीकालभाविना पद्मनिमीलनेन प्रकाशितः। (र)

**व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः॥ १२०॥** (ल)

यथा—

"शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद् वः शिवः॥" (व)

नेयं प्रथमापह्नुतिः, अपह्नवकारिणो विषयस्यानभिधानात्। द्वितीयापह्नुतेर्भेदश्च तत्प्रस्तावे दर्शितः। (श)

---

खेत्यर्थः। **अत्रे**ति। **संलक्षितमि**ति। प्रकृतरतौ स्वेदस्य पृष्ठगामित्वेन संलक्षणम्।

**(वि, र) संकेतकाले**ति। विटं धूर्तम् उपनायकं तद्जिज्ञासार्थं संकेतकालमनसं ज्ञात्वा विदग्धया नायिकया हसता नेत्रार्पिताकूतं यथा स्यात्तथा लीलापद्मं निमीलितमित्यर्थः। कालाभिप्रायः कालजिज्ञासा भ्रविक्षेपश्चाऽशाब्दोपि योग्यताबललभ्यमिङ्गितम्।

**(वि, ल)** व्याजोक्त्यलङ्कारमाह—**व्याजे**ति। उद्भिन्नस्य व्यक्तीभूतस्य व्याजात् कपटेन।

**(वि, व) शैलेन्द्रे**ति। शिवो वोऽवतात्। कीदृशः। शैलेन्द्रेण प्रतिपाद्यमानाया उत्सृज्यमानाया गिरिजाया हस्तस्य उपगूढेन उपगूहनेन स्पर्शेण उल्लसद्भिः रोमाञ्चादिभिः रोमाञ्चवेपथुस्वेदैः विसंष्ठुलस्य व्यस्तस्य अखिलवैवाहिकविधेः व्यासङ्गस्य व्यापारस्य भङ्गेनाकुलः सन् आः आश्चर्यं तुहिनसम्बन्धिनोऽचलस्य करयोः शैत्यम् इत्यूचिवान् सन् शैलान्तःपुरेण तद्गतस्त्रीभिः गौर्यादिमातृमण्डलेन स्वीयगणैश्च सस्मितं दृष्टः।

**(वि, श)** प्रथमोक्तापह्नुतितोऽस्य भेदमाह—**नेयमि**ति। **अपह्नवकारिण** इति। प्रकृतापह्नवकारी यो विषयो वस्तु स्थाप्यमानमप्रकृतं वस्तु, तस्याऽनभिधानादित्यर्थः। इदमुपलक्षणम्, अपह्नवार्थपदस्य नञादेरप्यनभिधानादिति बोद्धव्यम्। अपह्नवहेतोः श्वेतस्याभिधानाद् रोमाञ्चादेस्त्वनपह्नुतत्वादेव। **द्वितीयापह्नुतेरि**ति।

**स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ॥ १२१ ॥** *

**दुरूहयोः कविमात्रवेद्ययोरर्थस्य डिम्भादेः स्वयोस्तदेकाश्रययोश्चेष्टारूपयोः।**

**( ष ) यथा मम–**

**"लाङ्गूलेनाभिहत्य क्षितितलमसकृद् दारयन्नग्रपद्भ्या-**

**मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन् विक्रमेण ।**

**स्फूर्जत्[1]फुत्कारघोरः प्रतिदिशमखिलान् द्रावयन्नेष जन्तून्**

**कोपाविष्टः प्रविष्टः प्रतिबल[2]मरुणोच्छूनचक्षुस्तरक्षुः॥" ( स )**

**अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।**

---

"गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन । यदि श्लेषेणान्यथा वाऽन्यथयेत् साप्यपह्नुतिः" इत्युक्तलक्षणात् "काले वारिधराणाम्" इत्युदाहरणाद् द्वितीयापह्नवादित्यर्थः । तत्प्रस्तावे दर्शित इति । गोपनीयार्थस्य गोपनकृता प्रथममभिहितत्वाच्च व्याजोक्तेरिति लिखनेन दर्शित इत्यर्थः । इह तु गोपनीयार्थस्य रोमाञ्चादेः शिवेन प्रथममनभिधानात् ।

**( वि, ष )** स्वभावोक्त्यलङ्कारमाह–**स्वभावोक्ति**रिति । दुरूहार्थेत्यस्याऽत्यन्तदुरूहस्यार्थस्येति नार्थः । किन्त्वर्थस्य दुरूहा क्रिया इत्येवमन्वयः । अर्थश्च डिम्भादिरित्येवमेव व्याचष्टे–**दुरूहयो**रिति । दुरूहयोः स्वयोरित्यन्वयः । दुरूहपदार्थमाह—**कविमात्रे**ति । कविभिन्नाऽवेद्ययोरित्यर्थः । अर्थपदं डिम्भादिपरतया व्याचष्टे—**अर्थस्ये**ति । डिम्भः शिशुः । आदिपदादप्रकृष्टज्ञानमात्रपरिग्रहः । तदेकाश्रययोस्तन्मात्रनिष्ठयोः ।

**(वि, स) लाङ्गूलेने**ति । अरुणे उच्छूने स्फारिते चक्षुषी यस्य तादृशः एष तरक्षुः व्याघ्रः प्रतिबलं प्रतिपक्षसमूहं प्रविष्टः । कीदृशः क्षितितलमसकृद् लाङ्गूलेनाऽभिहत्य अग्रपद्भ्यां दारयन् विलिखन्। अथानन्तरं आत्मन्येवावलीय कुञ्चिताङ्गो भूत्वा द्रुतं गगनं विक्रमेण च प्रोत्पतन् तथा स्फूर्जता विस्फुरता फूत्कारेण घोरः तथाऽखिलान् जन्तून् प्रतिदिशं द्रावयन् तथा कोपाविष्टोऽरुणोत्फुल्लचक्षुश्च। अत्रारुणेत्यादे रूपस्य क्रियाणां च वर्णनम् ।

**(वि, ह)** भाविकालङ्कारमाह—**अद्भुतस्ये**ति । अथेतिवेत्यर्थः । भूतस्य

---

* स्वभावस्य वर्णनीयतत्तद्वस्तुमात्रगतस्य धर्मस्य उक्तिः स्वभावोक्तिः । जातिरिति प्राचीनानां व्यपदेशः ।

1 'स्फूर्जद्धुङ्कारघोषः' (क. ग. पु.)

2 प्रतिवन (क. घ. च. पु) ।

**यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥ १२२ ॥ * (ङ)**

**यथा—**

**"मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।**
**येनैक[1]चलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥" ( क )**

**यथा वा—**

**"आसीदञ्जनमत्रेति पश्यामि तव लोचने।**
**भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ॥" ( ख )**

**नचायं प्रसादाख्यो गुणः। भूतभाविनोः प्रत्यक्षायमाणत्वे तस्याहेतुकत्वात्। ( ग ) "नचाद्भुतो रसः। विस्मयं प्रत्यस्य हेतुत्वात्। ( घ )**

---

भविष्यतो वा अद्भुतस्य पदार्थस्य यत् प्रत्यक्षायमाणत्वं प्रत्यक्षेण दृश्यमानत्वं वर्णितं तदित्यर्थः।

**( वि, क ) मुनिरि**ति। एकचलुके पीयमानसमुद्ररूपे गण्डूषे मत्स्यकच्छपावीश्वरावतारौ भूतभाविनौ योगबलेन दृष्टौ। एतदर्थमेव योगीन्द्रपदोपादानम्।

**(वि, ख) आसीदि**ति। यौवनेऽञ्जनाभावेऽपि अञ्जनशोभासत्त्वादासीदिति। भूषणेन भविष्यन्त्याः शोभाया तद्विनापि दर्शनाद् भाविभूषणेति।

**( वि, ग )** ननु भूतभाविनोः प्रत्यक्षायोग्ययोरपि प्रत्यक्षायमाणत्वं शीघ्रप्रतीतिविषयत्वात्। तथाचेदृशार्थस्य विषयत्वेन शब्दबोधितोपि सोर्थो विशद एव। तथा चार्थवैमल्यं प्रसादो यः परोक्तः प्रसादगुणः स एवायं तद्भिन्नवैचित्र्यविशेषाभावाद् भाविकनामालङ्कारो नास्तीत्याशङ्क्ते—**न चायमि**ति। समाधत्ते—**भूतभाविनोरि**ति। तयोः प्रत्यक्षायमाणत्वे ग्राह्ये तस्य प्रत्यक्षायमाणत्वस्याहेतुकत्वादहेतुकत्वस्फुरणादित्यर्थः। तथा चाहेतुकत्वस्फुरणवैशिष्ट्यरूपवैचित्र्यमेव भाविकालङ्कार इत्युक्तम्।

**(वि, घ)** नन्वहेतुकत्वेन हेत्वनुसन्धानं विस्मय एव, तथा चाद्भुतरस एवायमित्याशङ्कते—**नचाद्भुत** इति। समाधत्ते—**विस्मयं प्रती**ति। अहेतुकत्वज्ञानविशिष्टं भाविभूतवस्तुप्रत्यक्षायमाणत्वमेवायमलङ्कारः। तस्य विस्मयं प्रति हेतुत्वादेव, नतु विस्मयरूपत्वादित्यर्थः। तथा नचात्र रसोऽद्भुतोलङ्कारस्तु भाविकमिति भावः।

---

* 'कविगतो भाव आशयः श्रोतरि प्रतिबिम्बत्वेनास्तीति' 'भावो वा भावना पुनः पुनश्चेतसि निवेशनं सोत्रास्तीति भाविकम्।'

1 'चुलुके' (क. ग. पु.)

नचातिशयोक्तिरलङ्कारः, अध्यवसायाभावात्। नच भ्रान्तिमान्; भूतभाविनोर्भूतभावितयैव प्रकाशनात्। ( ङ ) नच स्वभावोक्तिः; तस्यालौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्यैव यथावद् वर्णनं स्वरूपम्। अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति। यदि पुनर्वस्तुनः क्वचित् स्वभावोक्तावप्यस्या विच्छित्तेः सम्भवस्तदोभयोः सङ्करः। ( च )

"अनातपत्रोऽप्ययमत्र लक्ष्यते
सितातपत्रैरिव सर्वतो वृतः।
अचामरोऽप्येष सदैव वीज्यते
विलासवालव्यजनेन कोऽप्ययम्॥" ( छ )

अत्र प्रत्यक्षायमाणस्यैव वर्णनान्नायमलङ्कारः। वर्णनावशेन

---

(वि, ङ) नायिकायाः रूपातिशयप्रतीत्या उक्तचतुर्विधातिशयोक्तितोऽतिरिक्तप्रकारातिशयोक्तिरेवेयं स्यादित्याशङ्कते—**नचातिशये**ति। समाधत्ते—**अध्यवसाये**ति। सर्वविधातिशयोक्तय एवाध्यवसायघटिताः। अत्र तदभावात्तद्रूपातिशयबोधमात्रेण तदीयप्रकारान्तरकल्पनाऽनौचित्यादिति भावः। भूते भाविनि रूपे भूतभावित्वेन ज्ञापनात् भ्रान्तिमत्त्वमाशङ्कते—**न च भ्रान्ती**ति। समाधत्ते—**भूते**ति। प्रकृतस्यान्यतादात्म्यभ्रम एव भ्रान्तिमान्न चात्राभूतभाविपदार्थाः प्रकृतास्तत्र भूतभाविताविभ्रमः। किन्तु भूतभाविपदार्थं प्रकृत्य तत्रैव तथात्वप्रकाशनादित्यर्थः। रूपविशेषवन्नायिकामात्रधर्मयोरत्र नयनाकृत्योर्वर्णितत्वात्।

(वि, च) स्वभावोक्तिमाशङ्कते—**नचे**ति। समाधत्ते—**तस्या** इति। लौकिकं वस्तु डिम्भव्याघ्रादि तद्गतस्य सूक्ष्मधर्मात्मकस्वभावस्य कविभिन्नजनावेद्यतन्मात्रवृत्तिधर्मरूपस्य तत्र यथा वर्णितं तस्य स्वरूपमित्यर्थः। अत्र नूतनतेत्याह—**अस्य त्वि**ति। तदपेक्षया अत्र विलक्षणभङ्गिरस्तीत्यर्थः। ननु

"अस्फुटाक्षरवागासीदेष बालो विलोक्यते।
दरदन्ताङ्कुरश्रीकहासो भावी च दृश्यते॥"

इत्यत्र डिम्भमात्रक्रियादेर्भाविभूतस्य कोऽलङ्कारः स्यादिति मनसिकृत्य समाधत्ते—**यदि पुनरि**ति। संकरः स्वातन्त्र्येणैकत्र स्थितिरूपः।

( वि, छ ) यत्र भूतभाविवस्तुनोर्न प्रत्यक्षायमाणत्वं किन्तु तद्वस्तुन एव प्रत्यक्षायमाणत्वं वर्णितं तत्र नायमलङ्कार इत्युदाहृत्य दर्शयति—**अनातपत्रोऽपी**ति। आतपत्ररहितोऽप्ययं राजा सर्वदिक्षु सितातपत्रैः सर्वतो वेष्टित इव लक्ष्यते, वीक्ष्यत इत्यर्थः। दीप्यमानश्रीकत्वात्। एवमचामरश्चामररहितोऽप्येष सदैव विलासहेतुकव्यजनेन वीज्यमान इव लक्ष्यते इति पूर्वतोऽनुषङ्गः, शीनलाङ्गत्वात्।

( वि, ज ) **अत्रे**ति। प्रत्यक्षायमाणस्यैवेत्यत्राऽऽतपत्रवृतत्वस्य वीज्यमानत्वस्य

प्रत्यक्षायमाणत्वस्यास्य स्वरूपत्वात् । यत्र पुनरप्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्रायमलङ्कारो भवितुं युक्तः । यथोदाहृते आसीदञ्जन-मित्यादौ । ( ज )

**लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते ।**
**यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ॥ १२३ ॥ (झ) ×**

क्रमेणोदाहरणम्—

"अधःकृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम् ।
ज्योत्स्नानिपातात्क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति ॥" (ञ)

"नाभिप्ररूढाम्बुरुहासनेन, संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ॥" (ट)

नेत्यर्थः । एवकाराद् भूतभाविव्यवच्छेदान्नतु भूतभाविपदार्थस्य प्रत्यक्षायमाणत्व-मित्यर्थः । अत्र श्लोके तथात्वाभावं विशदयित्वा दर्शयति—**वर्णनावशेने**ति । अत्र स्वरूपत्वात्, एतत् श्लोकार्थस्वरूपत्वात्, ननु भूतभाविपदार्थस्य प्रत्यक्षायमाणत्व-मित्यर्थः । भाविकालङ्कारे तु भूतभावित्वघटनावशाद् विशेषान्तरमप्यस्तीत्याह—**यत्र पुनरि**ति । प्रत्यक्षायमाणत्वं पर्यवस्यतीत्यर्थः । अनातपत्रोपीत्यत्र तु तेजोविशेषा-च्छत्रत्वाद्यारोपोऽनुमानमेवेति भेद इत्यर्थः । तथा चात्र विरोधालङ्कार एव इति बोध्यम् ।

**(वि, झ)** उदात्तालङ्कारं द्विविधमाह—**लोके**ति । **यद्वे**ति । महतां चरितं वा प्रस्तुतस्याङ्गं प्रकर्षकं यदा भवेदित्यर्थः ।

**(वि, ञ) अधः कृते**ति । यस्यां पुरि अधःकृतमम्भोधराणां मेघानां मण्डलं यैस्तादृशानां चन्द्रज्योत्स्नानिपातात् क्षरतां शशाङ्कोपलकुट्टिमानां चन्द्रकान्तमणिमय-गृहाणां पयोभिः केलीवनं वृद्धिमुरीकरोति प्राप्नोतीत्यर्थः । जलसेकेन वर्धितमित्यर्थः । अधःकृतेत्यादिकं कुट्टिमविशेषणम् । मण्डलायामिति क्वचित् पाठः । कुट्टिमैरधःकरणमेव पुर्या अधःकरणं बोध्यम् । अत्रैतादृशकुट्टिमवतो नृपस्य लोकातिशयसम्पत्तिवर्णना ।

**(वि, ट) नाभिप्ररूढे**ति । युगान्तोचितयोगनिद्रः, युगान्ते उचिता योगनिद्रा यस्य सः पुरुषो विष्णुर्लोकान् संहृत्य अमुं समुद्रम् अधिशेते । कीदृशः, प्रथमेन धात्रा आदिब्रह्मणा संस्तूयमानः । धात्रा कीदृशेन नाभिप्ररूढाम्बुरुहासनेन—नाभिस्थेन अति-स्फुटपद्मस्थितेन, अत्र नयनरविणा आसनासङ्कोचनम् । लोकसंहारात् सूर्याभावेऽपि नयनरविणा पद्मविकाश इति भावः । अत्र वर्णनीयोऽम्भोधिः प्रकृतस्तस्य प्रकर्षक-मीदृशं ब्रह्म स्तूयमानेदृशविष्णुशयनरूपं तच्चरितम् ।

---

× उदात्तालङ्कारो द्विविधः । लोकानतिशेते अतिक्रामति या सम्पत्तिस्तस्या वर्णना असम्भाव्यमानायाः सम्पत्तेर्वर्णनमुदात्तमेकम् । महतां रामादीनां च चरितं यदि प्रस्तुतस्य वर्णनीयस्य अङ्गमुपकारकं भवेत्तदप्यपरमुदात्तम् ।

**रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।**
**गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ।**
**रसवत् प्रेय ऊर्जस्वि समाहितमिति क्रमात् ॥ १२४ ॥ (ठ)**

तदाभासौ रसाभासो भावाभासश्च । तत्र रसयोगाद्रसवदलङ्कारो यथा— अयं स रसनोत्कर्षीत्यादि । अत्र शृङ्गारः करुणस्याङ्गम् । एवमन्यत्रापि । प्रकृष्टप्रियत्वात् प्रेयः । यथा मम

"आमीलितालसविवर्तिततारकाक्षीं
मत्कण्ठबन्धनदरश्लथबाहुवल्लीम् ।
प्रस्वेदवारिकणिकाचितगण्डबिम्बां
संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥" (ड)

अत्र सम्भोगशृङ्गारः स्मरणाख्यभावस्याङ्गम् । स च विप्रलम्भस्य । (ढ) ऊर्जो बलम् । अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्जस्वी । यथा (ण)

---

(**वि, ठ**) इदानीं रसाद्यलङ्कारमाह—**रसभावावि**ति । रसस्याङ्गत्वे रसवान् । भावस्याङ्गत्वे प्रेयान् । आभासयोरङ्गत्वे ओजस्वी । भावप्रशमस्याङ्गत्वे समाहितमिति क्रमः ।

(**वि, ड**) प्रियशब्दात्प्रकर्षार्थे इयसुन्प्रत्ययेन साधितस्य प्रेयःशब्दार्थमाह । **प्रकृष्टप्रियत्वादि**ति । तत्र भावस्य रसाङ्गत्वे प्रेयोऽलङ्कारमुदाहरति—**आमीलिते**ति । नायिकाया रत्युत्तरावस्थां स्मृत्वा चिन्तयतो विरहिण उक्तिरियम् । तां रत्युत्तरावस्थां प्रियां संस्मृत्य तिष्ठतो ममान्तर्मानसमनिशमेव न शान्तिमेति । कीदृशावस्थां रतिप्रशमादामीलिता अलसाद् विवर्तिता च तारका यत्र तत् तादृशमक्षि यस्याः तादृशीम् । मत्कण्ठबन्धने दरश्लथा चाल्पशिथिला बाहुवल्ली यस्याः तादृशीं, प्रस्वेदवारिकणिकया आचितगण्डबिम्बां च ।

(**वि, ढ**) **अत्रे**ति । अत्र स्मरणस्य वाच्यत्वेन गुणीभूतव्यङ्ग्याभावेऽपि गुणीभूतवाच्यस्याप्यलङ्कारत्वमभिप्रेत्येदमुक्तम् । वस्तुतस्तु स्मरणपदमत्र स्मरणव्यङ्ग्यचिन्तापरम् । स्मरणस्य वाच्यत्वेन तस्य विप्रलम्भाङ्गतोक्त्यनुपपत्तेः । व्यङ्ग्यत्वे सत्येवापराङ्गत्वादपराङ्गस्यैव चालङ्कारत्वस्य काव्यप्रकाशकृदादिसर्वालङ्कारिकसम्मतत्वात् । तथाच सम्भोगश्च शृङ्गारचिन्ताया अङ्गमित्यर्थः । सम्भोगकालावस्थायाः चिन्तितत्वात् । अत्रांशे रसवदलङ्कार एव । **स चे**ति । स च चिन्ताख्यो व्यभिचारिभावो विप्रलम्भस्याङ्गमित्यर्थः । चिन्तया विप्रलम्भाधिक्यात् । अत्र प्रेयोलङ्कारः ।

(**वि, ण**) ऊर्जस्विपदार्थं व्याकुर्वाणस्तमुदाहर्तुमाह—**ऊर्जो बलमि**ति । क्वचिदनौचित्यप्रवृत्तौ तदस्तीत्याह—**अनौचित्ये**ति । तेन बलात्कारं विना परो-

"वनेखिलकलासक्ताः परिहृत्य निजस्त्रियः।
त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम् ॥"

अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गम्।

एवं भावाभासोपि। (त)

समाहितं परिहारः। यथा—

"अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥" (थ)

अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम्। (द) *

---

ढाप्रवृत्तौ तदभावेपि संज्ञाशब्दस्यास्य प्रायिकी व्युत्पत्तिर्दर्शिता। अत्र बलात्कार एव उदाहरति—**वनेऽखिले**ति।

**(वि, त)** वने त्वद्वैरिवनितावृन्दे पुलिन्दा निजास्त्रियः परिहृत्य रतिं कुर्वते। निजस्त्रीपरिहारे बीजमाह—**अखिले**ति। आसामखिलकामकलावेत्तृत्वात् तदासक्ता इत्यर्थः। **अत्रे**ति। वैरिस्त्रीविडम्बनेन राज्ञः प्रकर्षात् तत एव तद्विषयभावप्रकर्षाच्चेत्यर्थः। एवं भावाभासेपीति यथा—

"किं ब्रूमस्ते महाराज माहात्म्यमन्यदुर्लभम्।
स्तुवन्ति शत्रवस्त्वां हि कुड्मलीकृतपाणयः ॥" इति

अत्र शत्रुस्तुत्या तदीयरतिभावाभासो राजविषयरतिभावस्याङ्गम्।

**(वि, थ) परिहार** इति—प्रथमोत्पन्नभावस्य परिहारस्त्यागो नाशपर्यवसन्नः। **अविरले**ति। मदो गर्वः तद्दर्शने तेषामविरलेत्यादिकं हेतुः। तवेक्षणे तवदर्शने सति क्षणात् स मदः क्वापि गतो न दृष्ट इत्यर्थः।

**(वि, द) अत्र मदाख्यस्ये**ति। यद्यपि तत्प्रशमोपगतपदस्य लक्ष्यार्थेन मदस्य चात्यन्ताभावेन तत्प्रशमस्य लक्षणीयता तथापि गुणीभूतव्यङ्ग्यस्यैव गुणीभूतस्य लक्ष्यार्थस्याप्यलङ्कारत्वमभिप्रेत्येदमुक्तम्। वस्तुतस्तु अपराङ्गभूतव्यङ्ग्यस्यैव रसवदलङ्कारत्वं काव्यप्रकाशकृदादिसकलालङ्कारिकसम्मतं न गुणी-

---

* हे राजन् अविरलं निरन्तरं करवालस्य खड्गस्य कम्पनैः भ्रुकुटीभिः तर्जनैः गर्जनैश्च (अभेदे तृतीया) तद्रूपः तव वैरिणां यो मदः मदकार्यम् अस्माभिः मुहुर्वारं वारं ददृशे दृष्टः स मदः तवेक्षणे तव दर्शने सति क्षणात् क्वापि गत इत्यर्थः। नच मदो गत इत्यनेन स वाच्य एवेति वाच्यम्, अभेदार्थकतृतीयाभ्यां कल्पनाद्यात्मको मद इत्यर्थे गर्वाख्यभावपरत्वात् गर्वप्रशमो व्यङ्ग्य एव। गर्वकार्यकम्पनादेः प्रशमे सति गर्वस्य प्रशमो व्यङ्ग्य एव। श्लोकोयं भावप्रशमोदाहरणे काव्यप्रकाशे प्रदत्तः। अतो टीकाकृतो युक्तिर्न सङ्गता। एवमन्यत्रापि बोध्यम्।

**भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः ॥ १२५ ॥ (ध)**

तदाख्यका भावोदयभावसन्धिभावशबलनामानोऽलङ्काराः। क्रमेणोदाहरणम्।

"मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥"

अत्र त्रासोदयो राजविषयरतिभावस्याङ्गम्। ( न )

"जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥"

अत्रौत्सुक्यलज्जयोश्च सन्धिर्देवताविषयरतिभावस्याङ्गम्। (प)

"पश्येत् कश्चिच्चल चपल रे! का त्वराहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि।
इत्थं पृथ्वीपरिवृढ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या काचित्फलकिसलयान्याददानाभिधत्ते ॥"

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गम्। ( फ )

---

भूतलक्ष्यार्थस्य। तदा अत्रैव श्लोके कवेरतिरूपो भावस्तस्यैव तन्मदनाशान्नाशो व्यङ्ग्यः। स एवात्र समाहितालङ्कारो बोध्यः।

( वि, ध ) भावोदयादयस्तु गुणीभूताः स्वस्वनामान एवाऽलङ्कारा इत्याह—**भावस्य चोदये** इति। मिश्रत्वे भावशबलत्वे। बलवद्भिरुत्तरोत्तरभावैः सह पूर्वपूर्वभावस्यैकपद्यास्थितिरूपमिश्रणात्।

( वि, न ) तत्रापराङ्गभवोदयमुदाहरति—**मधुपाने**ति। **अत्रे**ति। प्रथमज्ञातस्य त्रासस्य श्लोकमध्ये उदयप्रतीत्या उदयः सराजविषयभावप्रकर्षकमङ्गम्।

(वि, प) अपराङ्गभावसन्धिमुदाहरति—**जन्मान्तरीणे**ति। **अत्रे**ति। औत्सुक्यलज्जयोरलङ्कारत्वमत्रोदाहृतम्।

"असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः।
प्रमोदं वा दिश्यात्कपटवटुवेशापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥"

इति काव्यप्रकाशकृद्दत्तोदाहरणे आवेगहर्षयोर्व्यङ्ग्ययोरपि सन्धिरलङ्कारः।

( वि, फ ) अपराङ्गभावशबलत्वमुदाहरति—**पश्येत्कश्चिदि**ति। हे पृथ्वीपरिवृढ! अरण्यपरिवृत्तेर्भवद्विद्विषः भक्षणार्थं फलकिशलयानि आददाना कश्चिदर्थादाकृष्टकामा इत्थमभिधत्ते। कीदृशमभिधत्ते इत्यत्राह—**पश्येदि**त्यादि। अत्र पश्येदित्यत्र शङ्का व्यङ्ग्या। चल चपल रे इत्यत्र धृतिः। कुमारीत्यत्र कुमारीत्वस्म-

इह केचिदाहुः—वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारका एवालङ्काराः। रसादयस्तु वाच्यवाचकाभ्यामुपकार्या एवेति न तेषामलङ्कारता भवितुं युक्तेति। अन्ये तु रसाद्युपकारमात्रेणेहालङ्कृतिव्यपदेशो भाक्तश्चिरन्तनप्रसिद्ध्याऽङ्गीकार्य एवेति। ( ब )

अपरे च रसाद्युपकारकतामात्रेणालङ्कारत्वं मुख्यतो, रूपकादौ तु वाच्याद्युपधानमजागलस्तनन्यायेनेति। (भ)

अभियुक्तास्तु स्वव्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतै रसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्वद्भिरङ्लकृतिव्यपदेशो लभ्यते। ( म )

---

रणात् कार्यत्वस्मृतिः, का त्वरेत्याश्वासना। हस्तालम्बामित्यत्र ममेदमकार्यमेवेत्यवधारणरूपा मतिरेव विबोधः। कासीत्यत्र क त्वं यासीत्यर्थः। अत्र तद्गमननिवर्तने औत्सुक्यं व्यङ्ग्यम्। अत्र दैन्यविरोधमात्रयोर्न वाध्यबाधकता। अन्येषु तु पूर्वं पूर्वं प्रत्युत्तरोत्तरस्य बाधकत्वेन बलवत्तया शबलता। राजविषयरतिभावस्याङ्गमिति राजप्रक्रान्तत्वात्तदरिकन्याया एवं भावात्।

( वि, ब ) **वाच्यवाचकरूपे**ति। वाच्यवाचकयोरूपमर्थशब्दस्वरूपं, तयोरलङ्करणं शोभनम्, उपमानुप्रासादयः। तन्मुखेन तद्द्वारेणेत्यर्थः। **रसादयस्त्वि**ति। अपराङ्गभूता रसादय इत्यर्थः। अपराङ्गानां रसादीनामलङ्कारत्वं स्वीकुर्वतामन्येषां तु मतमाह—**अन्ये त्वि**ति। वाच्यवाचकशोभनद्वारा मुख्यरसस्योपकारकत्वप्रयोजकमिति न नियमः। किन्तु मुख्यरसोपकारकत्वमेव तथात्वप्रयोजकम्। किन्त्वर्थशब्दालङ्कारकत्वेन व्यवहारवशात्तयोरलङ्कारेष्वेवालङ्कारपदं शक्तम्। अपराङ्गरसादौ त्वलङ्कारपदं भाक्तमित्यर्थः, भाक्तं लाक्षणिकम्।

( वि, भ ) अपराङ्गरसादावपि अलङ्कारपदं शक्तमेव न भाक्तमिति वदतां मतमाह—**अपरे चे**ति। रसाद्युपकारकतामात्रेणेत्यनेनोपमादीनामिवापराङ्गरसादीनामपि मुख्यतो मुख्यभावेनैवालङ्कारकत्वं न भाक्तालङ्कारपदार्थत्वेनेत्युक्तम्। तथा चोभयत्रैवालङ्कारपदं शक्तमित्यर्थः। ननु सर्वेषामेवालङ्कारपदवाच्यत्वे रूपकादाविवालङ्कारव्यवहारः कथमित्यत्राह—**रूपकादावि**ति। वाच्याद्युपधानं वाच्यतादर्शनमजागलस्तनपानमिव निष्प्रयोजनमित्यर्थः।

(वि, म) **अभियुक्तास्त्वि**ति। एतन्मतेऽपि द्वयोरप्यलङ्कारपदवाच्यत्वमेव। किन्तु पूर्वमते रसाद्युपकारकद्वारता तत्रापेक्षणीया। एतन्मते तु उपमादेरिवाङ्गभूतरसादेरपि शब्दार्थोभयोपकारकद्वारैव रसोपकारकतयाऽलङ्कारपदवाच्यतेति विशेषः। तदाह—**स्वव्यञ्जके**ति। स्वस्याङ्गभूतरसादेर्व्यञ्जकौ वाच्यवाचकौ ताभ्यामुपकृतैरङ्गभूतरसादिभिर्वाच्यवाचकोपस्कारकद्वारेणोपकुर्वद्भिरर्थादङ्गिनं रसमुपकुर्वद्भिरलङ्कृतिव्यपदेशो लभ्यत इत्यर्थः। अङ्गभूतरसादीनां शब्दार्थाभ्यामुपकारो व्यञ्जनावशादेव

समासोक्तौ तु नायकादिव्यवहारमात्रस्यैवालङ्कृतिता न त्वास्वादस्य, तस्योक्तरीतिविरहादिति मन्यन्ते। अत एव ध्वनिकारेणोक्तम्-(य)

'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥' (र) †

यदि च रसाद्युपकारमात्रेणालङ्कृतित्वं तदा वाचकादिष्वपि तथा प्रसज्येत। एवं च यच्च कैश्चिदुक्तं "रसादीनामङ्गित्वे रसवदाद्यलङ्कारः, अङ्गत्वे तु द्वितीयोदात्तालङ्कारः, तदपि परास्तम्। (ल)

**यद्येत एवालङ्काराः परस्परविमिश्रिताः।**
**तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा॥ १२६॥** (व)

---

तैः शब्दार्थयोरुपकारस्तद्व्यङ्ग्यत्ववैशिष्ट्येनेति परस्परमुपकारो दर्शितः।

**(वि, य)** समासोक्तौ तु यो नायकनायिकाव्यवहारो व्यङ्ग्यस्तस्य रसाद्युपकारनिरपेक्षमेवालङ्कारत्वमित्याह—**समासोक्ताविति**। इदमुपलक्षणमप्रस्तुतप्रशंसायामपीदृशत्वं बोध्यम्। **अत एवेति**। अङ्गभूतरसादेरप्यलङ्कारपदवाच्यत्वादेवेत्यर्थः।

**(वि, र) प्रधाने** इति। यत्र काव्ये प्रधाने अङ्गिनि अन्यत्र रसादिरूपे रसादयोऽङ्गमित्यर्थः। अङ्गत्वैक्याश्रितमेकवचनम्। तस्मिन् काव्ये रसादिरलङ्कारोऽलङ्कारपदवाच्य इति मे मतिरित्यर्थः।

**(वि, ल)** ननु कटककुण्डलादेरलङ्कारत्वमङ्गप्रकर्षकत्वेनैव, अत उक्तन्यायादङ्गरसादेरुपमादेर्वालङ्कारत्वमस्तु। समासोक्तेस्त्वङ्गिरसादिप्रकर्षकत्वाभावान्नालङ्कारत्वमित्यत आह—**यदीति**। क्वचिदङ्गिप्रकर्षकत्वेन समासोक्तौ तु स्वतो वैचित्र्येणैवालङ्कारत्वं, नतु अङ्गिप्रकर्षकत्वं तल्लक्षणम्। तथात्वे अतिव्याप्तिः स्यादित्यर्थः। केचित्तु अङ्गिरसस्यैव रसवदलङ्कारादित्वमङ्गभूतरसादेस्तु 'यद् व्यङ्ग्यं प्रस्तुतस्याङ्गं महतां चरितं भवे'दित्यनेनोक्तं द्वितीयोदात्तालङ्कारत्वमेवाहुः। एवं ध्वनिकारोक्तसम्वादेन अस्मद्दर्शितोदाहरणेऽव्याप्तेश्च तत्परास्तामित्याह। "आमीलितालसविवर्तिततारकाक्षी" इत्यत्र यः स्मरणाख्यभावो विप्रलम्भाङ्गत्वेनोक्तस्तस्य कस्यापि महतश्चरितत्वाभावेनोदात्तालङ्कारत्वस्य तत्राव्याप्तेः।

**(वि, व)** इदानीमनेकालङ्काराणामेकपदस्थितिरूपमिश्रणे क्वचित् संसृष्टिनामा क्वचिच्च सङ्करनामा पृथगलङ्कारो भवतीत्याह—**यद्येत एवेति**। पृथगलङ्कारावपीत्यर्थः। तेन मूलभूतालङ्कारव्यवच्छेदस्तथा च समासोक्तौ यदौपम्यगर्भत्वाद्यनेकालङ्कारगर्भ-

---

† यस्मिन् काव्ये ते पूर्वोक्ता रसादयोऽङ्गभूता वाक्यार्थीभूतश्चान्यः, तस्य काव्यस्य सम्बन्धिनो ये रसादयोऽङ्गभूतास्ते रसवदाद्यालङ्कारशब्दस्य विषयाः। स एवालङ्कारशब्दवाच्यो भवति। नत्वन्य इति यावत्। (लोचने)

यथा लौकिकालङ्काराणामपि परस्परमिश्रणे पृथक् चारुत्वेन पृथगलङ्कारत्वं तथोक्तरूपाणां काव्यालङ्काराणामपि परस्परमिश्रत्वे संसृष्टिसङ्कराख्यौ पृथगलङ्कारौ। तत्र—

**मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते ॥ १२७ ॥**

एतेषां शब्दार्थालङ्काराणाम्। यथा—

"देवः पायादपायान्नः स्मेरेन्दीवरलोचनः।
संसारध्वान्तविध्वंसहंसः कंसनिषूदनः ॥"

अत्र पायादपायादिति यमकम्। संसार इत्यादौ चानुप्रास इति शब्दालङ्कारयोः संसृष्टिः। द्वितीये पादे उपमा द्वितीयार्धे च रूपकमित्यर्थालङ्कारयोः संसृष्टिश्च। एवमुभयोः स्थितत्वाच्छब्दार्थालङ्कारसंसृष्टिः। (श)

**अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ।**
**सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ॥ १२८ ॥ (ष)**

अङ्गाङ्गिभावो यथा— (स)

"[1]आकृष्टवेगविगलद्भुजगेन्द्रभोग-
निर्मोकपट्टपरिवेष्टनयाम्बुराशेः।

त्वमुक्तं, यच्चान्यत्राप्यलङ्कारान्तरोत्थापितत्वे तदलङ्कारस्य शोभाधिक्यमुक्तं, तत्र सङ्करसम्भवेऽपि न समासोक्त्याद्यलङ्कारत्वव्याहतिरिति बोध्यम्।

(वि, श) तत्र संसृष्टिलक्षणमाह—**मिथोऽनपेक्षयैतेषामि**ति। देवः पायादित्यादि स्पष्टोऽर्थः। हंसः सूर्यः। अत्र शब्दालङ्कारयोः संसृष्टिमादौ दर्शयति—**अत्र पायादि**ति। **संसारेत्यादावनुप्रास** इति। ध्वान्तविध्वंसहंसेत्यत्रेत्यर्थः। अत्रैवार्थालङ्कारयोरपि संसृष्टिमाह—**द्वितीयपाद** इति। लोचने स्मेरेन्दीवरोपमा। **द्वितीयार्ध** इति। कंसनिषूदने सूर्यरूपकम्। तत्साधकं च संसारो ध्वान्तरूपकमिति परम्परितरूपकमित्यर्थः। एवं च संसृष्टिद्वयमित्याह—**उभयोरपी**ति। **संसृष्टिश्चे**ति। चकारस्य स्थितत्वाच्चेत्येवमन्वयः। तत् संसृष्टिद्वयस्यापि परस्परसंसृष्टिमित्याह—**एवं चे**ति।

(वि, ष) सङ्करश्च त्रिविधो भवतीत्याह—**अङ्गाङ्गित्वे** इति। अलङ्कृतीनामङ्गाङ्गित्वे एकविधः। अपरविधमाह—**तद्वदि**ति—एकाश्रये एकवाक्ये वा अलङ्कृतीनां स्थितावित्यर्थः। अपरविधमाह—**संदिग्धत्वे चे**ति। अलङ्कारद्वयस्य सन्देहे कोटिद्वयत्वे इत्यर्थः।

(वि, स) **अङ्गाङ्गिभावो यथे**ति। यद्यप्यङ्गाङ्गिभावो जन्यजनकभावः प्रकृष्यप्रकर्षकभावो ज्ञाप्यज्ञापकभावश्चेति त्रिविधस्तथापि ज्ञाप्यज्ञापकभावरूपमेवोदाहरति।

1 'आकृष्टि' (क. पु.)

मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमचेष्टत[1] पादमूले ॥" (ह)

**अत्र निर्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः। सा च मन्दाकिन्या वस्तुवृत्तेन यत्पादमूलवेष्टनं तच्चरणमूलवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम्। श्लेषश्च पादमूलवेष्टनमेव चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम्। अतिशयोक्तिश्च "मन्थव्यथाव्युपशमार्थमिव" इत्युत्प्रेक्षाया अङ्गम्। उत्प्रेक्षा चाम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम्। (क)**

---

**(वि, ह) आकृष्टवेगे**ति—मन्दरपर्वतवर्णनमिदम्। यस्य मन्दरपर्वतस्य पादमूलेऽधोभागरूपमूले एव श्लेषेण चरणस्य मूले प्रान्ते मन्दाकिनी अचेष्टत सेवारूपां चेष्टामकरोदित्यर्थः। किमर्थमित्यत्रोत्प्रेक्षते—**अम्बुराशेर्मन्थव्यथाव्युपशमार्थमिवे**ति। मम पत्युरम्बुराशेर्मन्थजन्याया व्यथाया आशु शीघ्रं व्युपशमाय इत्येव तदर्थमिवेत्यर्थः। मन्थतो निवृत्तस्य तेनैव पूर्वं जनिता मन्थव्यथा आशु नंक्ष्यतीत्येवंरूपा प्रार्थना। ननु मन्दाकिनी मन्थनात्पूर्वमपि मन्दरस्य पादमूले वर्तते। इदानीं किंविधया चेष्टया सेवते इत्यत्राह—**आकृष्टवेगे**ति। भावक्तान्तत्वाद् आकर्षणवेगेन विगलन् यो रज्जुभूतस्य भुजगेन्द्रस्य वासुकेर्भोगात् कायान्निर्मोकश्चर्मकञ्चुकं तद्रूपस्य पट्टस्य वस्त्रविशेषस्य परिवेष्टनया उद्वेष्टनप्रकारेणेत्यर्थः। नेदं चर्मकञ्चुकपदवेष्टनं, किन्तु मन्दाकिन्येव परितः पादमूलं सेवार्थं वेष्टितवतीत्यर्थः।

**(वि, क)** तत्र प्रथमापह्नुतिं दर्शयति—**निर्मोके**ति। **सा चे**ति। सा अपह्नुतिः **वस्तुवृत्तेन** गङ्गावस्तुस्वभावेन। वस्तुतस्तु वेष्टनस्वभावत्वात् तस्या इत्यर्थः। **श्लेषमुत्थापयती**ति। श्लेषे ज्ञापयतीत्यर्थः। निर्मोके गङ्गारोपाभावे चरणार्थकश्लेषाप्रतीतेरित्यर्थः। सच श्लेषाऽतिशयोक्तेरङ्गमित्याह—**श्लेषश्चे**ति। अतिशयोक्तिं दर्शयति—पादमूलवेष्टनमेव सेवनमितीति भेदेप्यभेदारोपरूपातिशयोक्तिरियम्। ननु रूपकं रूपकाधिकरणस्य सेवनस्यानिर्दिष्टत्वाच्चरणार्थकपादश्लेषादेव सेवाबोधात्। श्लेषस्तज्ज्ञापक इत्यर्थः। अतिशयोक्तिरपि वाच्योत्प्रेक्षाया अङ्गमित्याह—**अतिशयोक्तिरपी**ति। इयं तु प्रकर्षकमङ्गं सेवाज्ञानं विना मन्थव्यथोपशमनार्थतायाः वेष्टनमात्रस्यासम्भवेनात्प्रेक्षायास्तथा प्रकर्षणात्। ननु ज्ञापकमङ्गम्। इवशब्दादेव तस्याः प्रतीतेः, नापि जनकमङ्गमुत्कटकोटिसंशयात्मिकाया उत्प्रेक्षायाः सेवाज्ञानेन अजननात्। उत्प्रेक्षापि समासोक्तेर्ज्ञापकमङ्गमित्याह—**उत्प्रेक्षा चे**ति। समुद्रगङ्गयोर्नायकनायिकाव्यवहारज्ञानस्य मन्थव्यथोपशमार्थतोत्प्रेक्षां विनाऽचेतनयोरसम्भवात्।

---

1 'अवेष्टत' (क. पु.)

यथा वा—

"अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥"

अत्र समासोक्तिर्विशेषोक्तेरङ्गम् । (ख)

सन्देहसङ्करो यथा—

"इदमाभाति गगने भिन्दानं सन्ततं तमः ।
अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥" (ग)

अत्र किं मुखस्य चन्द्रतयाध्यवसानादतिशयोक्तिः, उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकम्, अथवा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्माभिसम्बन्धात्तुल्ययोगिता । आहोस्विच्चन्द्रस्याप्रकृतत्वाद्

---

(वि, ख) अनेकालङ्काराणामङ्गाङ्गिभावमुक्त्वाऽलङ्कारयोस्तथात्वमाह—**यथा वेति** । सायंसन्ध्यावर्णनामिदम् । अनु दिवसस्य पश्चाद्रागवती रक्तिमवती सन्ध्या, दिवसश्च तस्याः पुरःसरः पूर्ववर्ती । अहो आश्चर्यम् । चित्रा विलक्षणा दैवगतिर्यतस्तथापि न समागमः । पुरः पश्चाद्भावेन स्थितयोरेकदा मिलनरूपस्य समागमस्यैव दृष्टत्वात् । दिवससन्ध्ययोस्तु नैकदा मिलनम्: सन्ध्याकाले दिवसाभावात् । **अत्र समासोक्तिरि**ति । अत्र रागवन्नायिकापुरःसरनायकयोर्दैवात्समागमरहितयोर्वृत्तान्तप्रतीतिरूपा समासोक्तिः । पूर्वपश्चाद्भावस्थितिरूपस्य समागमहेतोः सत्त्वेपि समागमरूपफलस्याभावरूपाया विशेषोक्तेर्ज्ञापकहेतुरित्यर्थः । नायकनायिकासमागमाभावप्रतीतिर्नायके वृत्तान्तप्रतीतिं विनाऽसम्भवात् । जनकरूपाङ्गोदाहरणं तु न दर्शितम् । तत्तु यथा—

"पुलिन्दास्ते रिपुस्त्रीणां वने हारं हरन्ति नो ।
बिम्बोष्ठकान्त्या शोणं तं गुञ्जमालां हि मन्यते ॥"

अत्र हारेण बिम्बोष्ठकान्तेर्ग्रहणात् तद्गुणोऽलङ्कारः । तेन च गुञ्जाहारभ्रान्तिजननाद् भ्रान्तिमांस्तद्गुणस्य प्रकर्षकमङ्गम् ।

(वि, ग) बहूनामलङ्काराणां सन्देहसङ्करमाह—**इदमाभाती**ति । इदमैन्दवमण्डलं गगने आभाति । कीदृशं सन्ततं विस्तृतं तमः अन्धकारम् अज्ञानं च भिन्दानममन्दनयनानन्दकरं च ।

(वि, घ) अत्रालङ्काराणां संशयकोटितां दर्शयति—**अत्रे**ति । इदं गगने ऐन्दवं मण्डलमर्थान्नायिकायामाभातीत्यर्थः । एवं चारोपाधिकरणस्य मुखस्यानिर्देशादतिशयोक्तिरित्यर्थः । मुखस्येदं पदेन निर्देशे तु रूपकमित्याह **उते**ति । तुल्ययोगितां दर्शयत्य**थवे**ति । तथा च इदं निर्दिश्यमानं मुखं गगने ऐन्दवं मण्डलं चाभातीत्यर्थः । **द्वयोरपि प्रकृतयो**रिति । उभयस्यैव दीप्यमानत्ववर्णनेऽपि क्रम-

दीपकम्, किं वा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात्समासोक्तिः। यद्वा अप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा। यद्वा मन्मथोद्दीपनः कालः स्वकार्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्यायोक्तिरिति बहूनामलङ्काराणां सन्देहात्सन्देहसङ्करः। (घ)

यथा वा—"मुखचन्द्रं पश्यामी"त्यत्र किं मुखं चन्द्र इवेत्युपमा, उत चन्द्र एवेति रूपकमिति सन्देहः। साधकबाधकयोर्द्वयोरेकतरस्य सद्भावे न पुनः सन्देहः। यथा 'मुखचन्द्रं चुम्बती'त्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकम्। चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम्। "मुखचन्द्रः प्रकाशते" इत्यत्र प्रकाशाख्यो धर्मो रूपकस्य साधको मुखे उपचरितत्वेन सम्भवतीति नोपमाबाधकः। (ङ) +

"राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्।"

अत्र योषित आलिङ्गनं नायकस्य सदृशे नोचितमिति लक्ष्म्यालिङ्गनस्य राजन्यसम्भवादुपमाबाधकं, नारायणे सम्भवाद्रूपकम्। (च)

---

सत्त्वे इत्यर्थः। मुखस्यैव प्रक्रान्तत्वे तदुपमानतयैव चन्द्रनिर्देशे तु तस्याऽप्रकृतत्वात् प्रकृताप्रकृतयोरेकधर्मान्वयरूपं दीपकमित्यर्थः। समासोक्तिं दर्शयति—**किंवे**ति। चन्द्रवर्णनस्यैव प्रक्रान्तत्वेऽप्रस्तुतप्रशंसेत्याह **यद्वे**ति। **कार्यभूते**ति। चन्द्रोदयस्य सन्ध्याकालकार्यत्वात्।

(वि, ङ) अलङ्कारद्वयसन्देहं दर्शयति—**यथा वे**ति। मुखचन्द्रं चुम्बतीति· मुखस्यानुकूलं चन्द्रतुल्यमुख एव साक्षादन्वितमित्यर्थः। ननु मुखात्मके चन्द्रे सम्भोगचुम्बनासम्भवात्। **चन्द्रस्य तु प्रतिकूलमि**ति। मुखनिष्ठस्य चुम्बनस्य मुखाभिन्नत्वेन गृहीतचन्द्रेऽपि परस्परस्याऽसम्भवात्। **प्रकाशाख्य** इति। तिमिरनाशाख्य इत्यर्थः। सच धर्मश्चन्द्रे एव साक्षादस्तीत्यतो विशेष्यत्वेन प्रतीयमाने चन्द्रे साक्षादन्वितत्वाद्रूपकस्य साधक इत्यर्थः। उपमायास्तु न बाधक इत्यत आह—**मुखे उपचरितत्वेने**ति। चन्द्रतुल्यमुखेऽपि चन्द्रधर्मप्रकाशनारोपसम्भवादित्यर्थः।

(वि, च) रूपकसाधकमाह—**राजनारायणमि**ति। लक्ष्मीरत्र नारायणस्य

---

+ उपमायां सादृश्यांशे उपमानं विशेषणीकृत्य उपमेयमेव प्राधान्येन विशेष्यत्वेन निर्दिश्यते। अतो मुख्यतयोपमेये सम्भवदेव विशेषणं गृह्यते। रूपके तु अभेदेनोपमेयं तिरोधाय उपमानमेव प्राधान्येन निर्दिश्यते। अतो मुख्यतयोपमाने एवान्वययोग्यं विशेषणं गृह्यते। तच्च उपमेये कथञ्चिदुपचर्यते। अतो विशेषणांशस्य यदि उपमेये सम्भवस्तदोपमा, यद्युपमाने सम्भवस्तदा रूपकमेव।

एवम्—

"वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनम् ।"

अत्र वदने लोचनस्य सम्भवादुपमायाः साधकता । अम्बुजे चासम्भवाद्रूपकस्य बाधकता । (छ)

एवं "सुन्दरं वदनाम्बुजम्" इत्यादौ साधारणधर्मप्रयोगे "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति वचनादुपमासमासो न सम्भवतीत्युपमायाः बाधकः। एवं चात्र मयूरव्यंसकादित्वाद्रूपकसमास एव । (ज)

एकाश्रयानुप्रवेशो यथा मम ।

"कटाक्षेणापीषत्क्षणमपि निरीक्षेत यदि सा
तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः ।

---

पत्नी नतु सम्पत् । अत आह–**योषित** इति। **नारायणे च सम्भवाद्रूपकमि**ति। रूपके नारायणस्यैव विशेष्यत्वात् तत्रैवालिङ्गनान्वयात् ।

**(वि, छ)** उपमायाः साधकमाह—**वदनाम्बुजमि**ति । चञ्चलं लोचनं यत्रेति विग्रहेण चञ्चललोचनवत्त्वस्याम्बुजतुल्ये वदने एव सम्भवादुपमायाः साधकतेत्याह–**अत्रे**ति ।

**(वि, ज)** एवमनुशासनेनाऽपि यत्रोपमासमासो निषिद्धस्तत्रापि नोपमेत्याह–**एवमि**ति। सुन्दरं वदनाम्बुजमित्यादौ साधारणधर्मप्रयोगे उपमासमासो न सम्भवतीत्यत्र उपमाया बाधक इत्यन्वयः । स च धर्मोऽत्र सुन्दरत्वम्, तस्य उपमाबाधकताग्राहकपाणिन्यनुशासनं दर्शयति—**उपमितमि**ति । अनेन पाणिनिसूत्रेण साधारणधर्माप्रयोग एव पुरुषव्याघ्राद्युपमासमासः । एवं बोधनात्साधारणधर्मप्रयोग एव तत्समासो निषिद्धः । अत्रर्हाति वचनात् सुन्दरं वदनाम्बुजमिति प्रयोगे उपमासमासे सति न सम्भवतीत्यतः सुन्दरत्वरूपसाधारणधर्माप्रयोगे उपमाया बोध इत्यर्थः । ननु "मयूर इव पुरुषो व्यंसको विगतभुजमूल' इत्याद्यर्थे व्यंसकत्वादिभावाद् यत्रोपमानस्य पूर्वनिर्देशस्तत्रैव मयूरव्यंसकादित्वमुपमानस्य परनिर्देशे तु नेत्यर्थः ।

**(वि, झ)** एकाश्रयस्थितिरूपाणामलङ्काराणां सङ्करमाह—**कटाक्षेणे**ति । एकाश्रयश्च क्वचिदेकं वाक्यं क्वचिदेकं पदम् । नचैकवाक्यस्थत्वे संसृष्टिरेवेति वाच्यम्, अङ्गाङ्गिभावे अतथात्वात् । नच तदा अङ्गाङ्गिभावसङ्कर इति वाच्यम् । तदाप्येकाश्रयानुप्रवेशानपायात् ।

**कटाक्षेणे**ति । सा नायिका क्षणमर्थान्मामीषदल्पं यदि निरीक्षेत

---

* रूपकसमासस्य मयूरव्यंसकादिष्वन्तर्भावः, आकृतिगणत्वात् । मयूरो व्यंसको धूर्तः मयूरव्यंसकः (सि० कौ०) केचिद् विगतौ अंसौ यस्य स व्यंसकः, मयूर इव व्यंसक इति व्यासवाक्यं कुर्वन्ति (प्र. कौ.)

सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः
परीरम्भारम्भः क इव भवितांभोरुहदृशः ॥" ( ञ )

अत्र "कटाक्षेणापीषत्क्षणमपि" इत्यत्र छेकानुप्रासस्य 'निरीक्षेत' इत्यत्र क्षकारमादाय वृत्त्यनुप्रासस्य चैकाश्रयेऽनुप्रवेशः । एवं चात्रैवानुप्रासार्थापत्त्य-लङ्कारयोः । ( ञ )

यथा वा—"संसारध्वान्तविध्वंस इत्यत्र रूपकानुप्रासयोः ।

यथा वा—

"कुरबका रवकारणतां ययुः" इत्यत्र रबका रवका इत्येकं बकारवकार इत्येक-मिति यमकयोः । ( ट )

यथा वा—

"अहिणअपओअरसीएसु पहिअसामाइएसु दिअसेसु ।

---

तदा पिहिताशेषविषयः सान्द्र आनन्दः स्फुरति । तदा तस्या अम्बुजाक्ष्याः परीर-म्भारम्भः क इव भविता, कटाक्षेणैव कृतार्थोऽहं तत्परिरम्भं नापेक्ष इत्यर्थः । यद्वा कटाक्षपातनतोऽधिकतरः परिरम्भारम्भः क इव भविता, अनिर्वचनीय एव भविता इत्यर्थः । कीदृशः परिरम्भारम्भः । सरोमाञ्चाभ्यामत एवोदञ्चद्भ्यां कुचकलशाभ्यां निर्भिन्नं परिभ्रष्टं वसनं यत्र तादृशः ।

( वि, ञ ) अत्र वाक्यरूपैकाश्रयसत्त्वं द्विविधानुप्रासयोर्दर्शयति—**अत्रे**ति । छेकानुप्रासोऽनेकस्य व्यञ्जनस्य स्वरूपतः साम्ये सति तच्छेकानुप्रासोक्तत्वात् । संयुक्ता-नेकवर्णस्य तु आनुपूर्व्यसम्भवात्तादृशेऽनेकस्य क्षकारमात्रस्य सकृच्छेकानुप्रास इत्यर्थः । तादृशस्यैव क्षकारान्तरसाहित्यादनेकधात्वे वृत्त्यनुप्रास इत्याह—**निरीक्षेते-त्यत्रे**ति । अनेकस्याऽसकृत्त्वे वृत्त्यनुप्रासस्योक्तत्वात् । एकाश्रयानुप्रवेश एकवाक्य-प्रवेशः । एवं च क्षकारद्वयघटितच्छेकानुप्रासेन क्षकारान्तरसाहित्यवशाद् वृत्त्यनुप्रास-जननादङ्गाङ्गिभावसङ्करोऽप्यत्रास्तीत्यतः समासैकपदारूपाश्रयेऽसङ्कीर्णमुदाहरति— आपाततस्तत्रैवानुप्रासार्थापत्त्यलङ्कारयोरेकाश्रयानुप्रवेशं दर्शयति—**एवं चात्रैवे**ति । कटाक्षपातेनापि सान्द्रानन्दस्फुरणाद् दण्डापूपिकया सिद्धे स्तनपरिरम्भेऽनिर्वचनीया-नन्द इत्येवमर्थापत्त्यलङ्कार इत्यर्थः ।

( वि, ट ) समास एकपदेऽङ्गाङ्गिभावसङ्कररहितमेकाश्रयानुप्रवेशसङ्करमाह—**यथा वे**ति । **रूपकानुप्रासयोरि**ति । कंसनिपूदने सूर्यतारोपणात् । कुरबका इत्यादि । अत्र एकवाक्यगतं यमकद्वयम् । नचात्र पूर्वयमकेनोत्तरयमकनिर्वाहादनु-ग्राह्यानुग्राहकतासङ्करोपीति वाच्यम् । कारणतामित्येतदीयरेफपर्यन्तस्योत्तरयमकस्य यमकेनाऽपि निर्वाह्यत्वात् । एवं 'कलकलोलकलोलदृशे'त्यत्रापि लकलो लकलो कलोल कलोल इति यमकद्वयम् ।

( वि, ठ ) उपमारूपकयोरप्येकाश्रयानुप्रवेशं दर्शयति—**अहिणअ** इति ।

**महइ पसारिअगीआणच्चिअं मोरविन्दाणम् ॥" (ठ)** *

**अत्र "पहिअसामाइएसु" इत्येकाश्रये पथिकश्यामायितेष्वित्युपमा ।**

---

"अभिनवपयोदरसिकेषु पथिकसामाजिकेषु दिवसेषु ।

महति प्रसारितगीतानर्तितकं मयूरवृन्दानाम् ॥"

इति संस्कृतम् । प्रसारितं गीतं यत्रेति तादृशं मयूरवृन्दानामानर्तितकं नृत्य-युक्तविशेषणकेषु दिवसेषु महति पूज्यं भवति शोभते इत्यर्थः । मह पूजायामिति धातुः । नृत्योचितं दिवसविशेषणमाह—**अभिनवे**ति । अभिनवपयोद एव रसिका रसवन्त एव नृत्यदर्शनार्थं रसवन्तो यत्र तादृशेषु । तथा पथिकाः सामाजिका इव नृत्यादिदिदृक्षुसमाजप्रधानानीव यत्र तादृशेषु । अत्र रसिकसामाजिकानां समाज-प्रधानतुल्यानां च नृत्यदर्शिनामाश्रयत्वेन दिवसानां नृत्यसत्तारूपकं व्यङ्ग्यमवधेयम् ।

**( वि, ड )** अत्रोपमारूपकयोरेकाश्रयानुप्रवेशं दर्शयति—**अत्रे**ति । पथिकाः

---

* श्लोकस्य संस्कृतानुवादो द्विविधो भवितुमर्हति यथा एकविधोऽनुवादो विज्ञ-प्रियायां प्रदत्तः; अपरस्तु यथा—

"अभिनवपयोदरसितेषु पथिकश्यामायितेषु दिवसेषु ।

महति प्रसारितग्रीवाणां नृत्तं मयूरवृन्दानाम् ॥"

अभिनवं हृद्यं पयोदानां मेघानां रसितं येषु दिवसेषु तथाविधपथिकान् प्रति श्यामायितेषु मोहरूपत्वाद् रात्रिरूपतामाचरितवत्सु । यदि वा पथिकानां श्यामायितं दुःखवशेन श्यामिका येभ्यः । शोभते प्रसारितग्रीवाणां मयूरवृन्दानां नृत्तम् । अभिनवपयोधररसिकेषु पथिकसामाजिकेषु सत्सु मयूरवृन्दानां प्रसारितगीतानां प्रकृष्टसारानुसारिगीतानां तथा ग्रीवारेचकाय प्रसारितग्रीवाणां नृत्तं शोभते । पथिकान् प्रति श्यामा इवाचरन्तीति प्रत्ययेन लुप्तोपमा निर्दिष्टा । पथिकसामाजिकेष्विति कर्मधारयस्य स्पष्टत्वाद्रूपकम् । ताभ्यां ध्वनेः सङ्कर इति ग्रन्थकाराशयः । ( ध्वन्यालोकलोचने )

केचिदत्र सन्देहसङ्करमिच्छन्ति—परं नात्र सन्देहसङ्करो भवितुमर्हति, एकार्थके एकपदे एव तस्य स्वीकारात् । अत्र 'सामाइएसु' इति प्राकृतपदस्य श्लेषेणैव "श्यामायितेषु" 'सामाजिकेषु' इत्यर्थद्वयाद् उभयार्थकता । अतस्तत्रैकस्मिन् प्राकृत-पदे उपमारूपकयोः सत्त्वादेकवाचकानुप्रवेश एव । यथा—

"मुरारिनिर्गता नूनं नरकप्रतिबन्धिनी ।

तवापि मूर्ध्नि गङ्गेव चक्रधारा पतिष्यति ॥"

अत्र मुरारिनिर्गतेति साधारणविशेषणहेतुका उपमा नरकप्रतिबन्धिनीति श्लिष्ट-विशेषणसमुत्थोपमाप्रतिभोत्पत्तिहेतुः श्लेषश्चैकस्मिन् शब्देऽनुप्रविष्टो तस्योभयो-पकारित्वात् ।" ( अलङ्कारसर्वस्वे ) ।